# शुक्लयजुर्वेदसंहिता

## वाजसनेयिमाध्यन्दिनशाखीया ।

---

श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण
श्रीमन्महीधराचार्यविरचित-
वेददीपेन च सहिता ।

तस्याः

१—१० अध्यायात्मकं प्रथमं खण्डम् ।

पण्डितश्रीरामसकलमिश्रशर्मणा संशोधितम् ।

---

# VÂJASANEYI-SAMHITÂ,

of the
WHITE YAJURVEDA,
With the Commentaries of
Uvvata and Mahîdhara,
PART I,
Containing one to ten Chapters.

Edited by
PANDIT RAM SAKALA MISRA.

---

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.
BENARES CITY:
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

1912

# प्रास्ताविकं किञ्चित् ।

इह खलु जगति आकीटपतङ्गं प्राणिनां सुखदुःखप्राप्ति-परिहारार्थे प्रवृत्ती अहर्निशं दरीदृश्येते । तेच सुखदुःखे शोभ-नाशोभनकर्मानुष्ठानजन्ये इति सुप्रसिद्धमेव । तदनुष्ठानं चा-न्तरेण स्वरूपज्ञानं न भवतीति सुखमिच्छता दुःखं च परिजि-हासता पुरुषेणावश्यं प्रथमं कर्मणां स्वरूपं शोभनाशोभनत्वे च वेदनीयानि । तज्ज्ञानमृते वेदार्थज्ञानं दुःशकमिति तदर्थं वेदो-ऽध्येयस्तदर्थश्च विचार्यः ।

सच वेद ऋग्यजुःसामाथर्वभेदभिन्नः, प्रतिभेदमनेकशा-खायुतश्च । ताश्च शाखाः तत्रभवता पतञ्जलिना पस्पशायाम्— "एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यम् नवधाऽऽथर्वणो वेदः" इति सामान्येन परिगणिता-श्चरणव्यूहादिग्रन्थेषु ग्रन्थकारैर्विशदं विशेषतः समग्राहिषत । तासां च शाखानां प्रतिस्वं मन्त्रब्राह्मणभेदविभिन्नत्वम् ।

तत्र मन्त्रा वैदिकेषु तत्त्वेन प्रसिद्धाः कर्मसमवेतार्थस्मार-णैकफलकाः ।

यद्यपि उत्तमामन्त्रणादियुक्तत्वरूपम् "बर्हिर्देवसदनं दामि" "अग्ने तेजस्विन्" इत्यादिषु मन्त्रलक्षणं समन्वेति तथापि तस्य सर्वाननुगतत्वामिति अन्ततो वैदिकप्रसिद्धिरेव तदर्थं शरणी-करणीयेति पूर्वोक्तस्यैव तल्लक्षणस्यौचित्यम् ।

विधिबोधकवाक्यस्य च ब्राह्मणसञ्ज्ञा । विधेश्चाज्ञातज्ञा-पकत्वमेव सर्वत्रानुगतं स्वरूपम् ।

यत्तु विधिशब्देन प्रवर्तकं निषेधेन च निवर्तकं वाक्यमुच्यत इति पार्थसारथिमिश्राः तत्तु कर्मकाण्डीयविधिविशेषलक्षणपरम् । विधिः कर्मणामिष्टसाधनत्वबोधनमुखेनेष्टसाधने पुरुषं प्रवर्तयति, निवर्तयति चानिष्टसाधनात् निषेधः तत्त्वबोधनमुखेन । यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यं स्वर्गसाधने यागे पुरुषं प्रवर्तयति, "मा हिंस्याद्" इति वाक्यञ्च निवर्तयति अनिष्टसाधनहिंसाया इति ।

तच्च ब्राह्मणं कर्मोपासनाज्ञानपरत्वेन तत्तत्काण्डपरत्वेन व्यवहृतं त्रिविधम् । तत्र कर्मकाण्डे नित्यनैमित्तिककाम्यभेदेन त्रिविधानि कर्माण्याम्नातानि । तत्र केवलमिष्टफलसाधकानि काम्यानि, इष्टफलसाधकत्वविशिष्टाकरणप्रयुक्तप्रत्यवायसाधकानि नैमित्तिकानि । अकरणप्रयुक्तप्रत्यवायमात्रसाधकानि च नित्यानि । नित्येष्वपि प्रत्यवायपरिहारं केचित्फलमिच्छन्ति । मन्त्रभागस्यापि कर्मकाण्डोपयोगित्वात्प्रायशस्तत्रैवान्तर्भावः ।

तदेतेषां कर्मणामनुष्ठानौपयिकज्ञानसंपत्तये वेदार्थज्ञानापेक्षा । तच्च वेदार्थज्ञानं न्यायालोचनसव्यपेक्षं वेदज्ञानजन्यमिति वेदाध्ययनस्याप्युपयुक्तता ।

अर्थज्ञानोपयोगिनो न्यायाश्च तत्रभवता भगवता जैमिनिना द्वादशलक्षण्या प्रदर्शिताः । अत एव तस्य धर्मविचारशास्त्रमिति प्रथितिः । धर्मश्च वेदबोधितेष्टसाधनताकः । यथा यागादिः ।

ननु वेदस्येष्टसाधनताबोधकत्वं कथमिति चेद् । इत्थम्— "स्वर्गकामो यजेत" इत्यादौ निराकाङ्क्षवाक्यार्थप्रतीत्या सर्वस्य वाक्यस्य क्रियया परिसमाप्तेरप्राप्तत्वाच्च क्रियाया विधेयत्वं प्रतीयते ।

तथाहि अस्मिन् वाक्ये पदद्वयं विद्यते "स्वर्गकामः" इति "यजेत"इति । तत्रान्त्येंऽशद्वयम्—प्रकृतिः प्रत्ययश्चेति । प्रत्ययेऽपि आख्यातत्वलिङ्त्वोपाधिकृतं द्वैविध्यम् । आख्यातत्वेन दशलकारसाधारणेन प्रत्ययः पुरुषप्रवृत्तिरूपामर्थभावनां बोधयति, लिङ्त्वेन चासाधारणेन शब्दभावनां प्रवृत्तिजनकव्यापाररूपाम् । लिङ्घटितवाक्यश्रवणे विनेयस्याचार्यो मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानाचार्य इति नियमेन प्रतीत्या तदसत्त्वे च तदभावेनान्वयव्यतिरेकाभ्यां लिङः प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनायां शक्तिरवधार्यते । यच्च यस्मान्नियमेन प्रतीयते तत् तस्य वाच्यं गोशब्दस्य गोत्वं यथा । सच व्यापारो लोके प्रयोजकसमवेताभिप्रायविशेषः, अभिप्रायबोधने एव शब्दप्रयोगात् । वेदेतु अपौरुषेयत्वेन तदसम्भवात् उत्तरकाले प्रवृत्तिरूपकार्यदर्शनाच्चागत्या शब्दनिष्ठ एव स स्वीक्रियते । अत एव तस्य शब्दभावनात्वेन व्यवहारः ।

वेदस्यापौरुषेयत्वं तु पुरुषसम्बन्धासम्भवात् ।

तथा हि त्रेधा वाक्यस्थले पुरुषसम्बन्धो भवति पदपदार्थसम्बन्धद्वारेण, वाक्यवाक्यार्थसम्बन्धद्वारेण, अर्थानुसन्धानपूर्वकवाक्यप्रयोगद्वारेण वा भारतादिवत् ।

न च वर्णपदरचनाद्वारेणापि तत्सम्भव इति संख्यानियमोऽयुक्त इति वाच्यम् । 'स एवायं गकारः' इति अबाधितप्रत्यभिज्ञाबलाद्वर्णानां नित्यत्वावधारणात् कारणानपेक्षित्वात् । पदन्तु तत्समूहरूपमिति न तत्रापि तदपेक्षा । समूहस्य समूह्यनतिरेकात् । नचैवमेकं पदमिति व्यवहारानुपपत्तिः । एकार्थावच्छेदोपाधिना तत्सम्भवात् ।

तत्र नाद्यः । पदपदार्थसम्बन्धस्य नित्यत्वात् तत्प्रतिपादने

शब्दस्य पुरुषानपेक्षणात्। नचैवमनवगतसम्बन्धस्यापि पुरुषस्य शब्दोऽर्थं प्रत्याययेत् तस्य नित्यत्वात् । मम तु उपदेशात्पूर्वं तस्यानिष्पत्त्याऽबोधोपपत्तिरिति वाच्यम् । उपदेशेन सत एव सम्बन्धस्याभिव्यञ्जनात् । अपूर्वनिष्पादनेतु घटरूपं पटशब्दस्यार्थं प्रतिपादयतः पुरुषस्य बहुभिरन्यैः "न घटः पटशब्दस्यार्थः किन्तु पटः" इति निवारणं नोपपद्येत । नन्वेवमपि सम्बन्धनित्यताऽनुपपत्तिः । सम्बन्धिनित्यताधीनं हि सम्बन्धनित्यत्वम् । तच्चात्र घटपटादिषु प्रत्यक्षानुभूयमानविनश्वरत्वेषु दुर्घटमिति चेन्न । शब्दस्यार्थसम्बन्धित्वं हि तद्विषयकबोधजननयोग्यत्वम्। तच्च स्वत एव सर्वदैवास्तीत्यदोषः। किञ्च घटादिशब्दवाच्यताया आकृत्यधिकरणन्यायेन घटत्वादिष्वेव स्वीकारात् तेषां च नित्यत्वेनोक्तशंकाऽनवतारः । तदेवोक्तं जैमिनिना—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशः"—इत्यादिना।

नापि द्वितीयः। पदार्थानामेव प्रतीतानां पुरुषसम्बन्धानपेक्षाणां वाक्यार्थप्रतिपादकत्वात्। अत एवाभिनवकविविरचिताद् अश्रुतचरवाक्याद्वाक्यार्थप्रतीत्युपपत्तिः। नहि तत्र सम्बन्धग्रहणसम्भवः। किञ्चाशक्यमेव वाक्यार्थसम्बन्धग्रहणम् । नहि अनन्तवाक्यार्थसाधारणानां पदानां वाक्यार्थविशेषप्रतिपादनं प्रत्येकं सम्भवति । नापि पदसंघातरूपवाक्यस्य तत्सम्भवः। पौर्वापर्यविशेषेण तेषामेव पदानां समानार्थानेकसंघातरूपत्वाद्, एकार्थसिद्ध्यर्थमनेकत्र सम्बन्धकल्पनं वाक्यानामपरिमितत्वादसम्भवि।

तदुक्तं महाभाष्यकृता "संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते। तेषां यथेष्टंसम्बन्धो भवति आहर पात्र पात्रमाहरेति"इति। अ-

र्थाविशेषेऽपि न्यासविशेषेण वाक्यभेदस्यापि प्रतिपादनात् । नचैवं शब्दादज्ञातसम्बन्धान्नार्थप्रतीतिरिति नियमभङ्ग इति वाच्यम् । नहि वयं पदानि वाक्यार्थं प्रतिपादयन्तीति ब्रूमो-येनैवमुपालंभः स्यात् । किन्तु पदेभ्यः सम्बन्धज्ञानसहकारेण स्मृताः पदार्था आकाङ्क्षायोग्यताऽऽदिभिर्वाक्यार्थं स्वान्वय-रूपं प्रतिपादयन्तीति ।

अत एव विस्मृतपूर्ववर्णानामन्तिमवर्णमात्रात्पदार्थान-वगतिवत् विस्मृतेषु वाक्यावयवपूर्वपदेषु वाक्यार्थावगत्यभा-वेऽवश्यं भवनीयेऽपि जायमानाया वाक्यार्थावगतेरुपपत्तिः । तदुक्तम्—

सत्यं व्युत्पत्तिरेवं स्यात्तथाऽपि तु न वाक्यतः ।
वाक्यार्थावगतिर्युक्ता तिरोभावेऽपि दर्शनाद ॥
पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते ।
वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम् ॥ इति ।

नापि तृतीयः ।

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥ इत्युक्तेः ।

कल्पादावपीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोप-दिशतीत्येतावतैवोपपत्तौ अर्थोपलम्भपूर्वकरचयितृत्वकल्पनस्या-युक्तत्वात् । यः कल्पः स कल्पपूर्व इति न्यायेन संसारस्या-नादित्वात्सिध्यति वेदस्यानादित्वम् । अनादेश्च भावस्योत्प-त्त्यभावेन कारणानपेक्षित्वात् सिद्धमपौरुषेयत्वं वेदस्य । किञ्च यदि वेदस्य कश्चित्कर्ताऽभविष्यत् अवश्यं स गुरुपरम्पर-याऽस्मरिष्यत् बुद्धादिवत् । न च स्मर्यते । तस्मान्नास्तीत्यनुप-लब्धिप्रमाणेनैव तदभावसिद्धिः ।

यत्तु कैश्चित् वाक्यत्वादिहेतुभिः सामान्यतः कर्तारमनुमाय स्वाभिमत ईश्वरो हिरण्यगर्भो वाऽन्यो वा कश्चित्तत्र विशेषेण प्रक्षिप्यते, तत्तु सामान्यानुमानस्यैवानुपलब्धिप्रमाणविरोधेन बाधितविषयकत्वात्साध्यासाधकत्वेनायुक्तम् । प्रत्यक्षानुपलब्धिर्हि प्रमाणान्तरेभ्योऽनुमानादिभ्यो बलवती प्रत्यक्षवत् । अवश्यमेतदभ्युपगन्तव्यमन्यथा शशे चतुष्पात्त्वाद्विषाणित्वमनुमीयेत ।

एवं त्रिविधसंबन्धशून्यत्वेन वेदस्यापौरुषेयत्वेन शब्दनिष्ठत्वमुक्तभावनायाः स्वीकार्यमिति सिद्धं तस्याः शब्दधर्मत्वम् । तस्यां च शब्दभावनायामंशत्रयविशिष्टाऽर्थभावना समानाभिधानश्रुत्या साध्यत्वेन सम्बध्यते, लिङ्त्वज्ञानं करणत्वेन अर्थवादैर्लक्षणावृत्त्या समर्पितं विधेयप्राशस्त्यं चेतिकर्तव्यतात्वेन । आर्थभावनायान्तु पुरुषार्थत्वाद्भिन्नपदोपात्तोऽपि स्वर्गः साध्यतया, एकपदश्रुत्या धात्वर्थः करणतया, प्रकरणपठितोऽङ्गकलापश्चेतिकर्तव्यतयाऽन्वेति । तत्र फलस्य स्वगतसौन्दर्यवशेन पुरुषेच्छाविषयत्वादिच्छायां नियोगासम्भवादविधेयत्वम् । इतिकर्तव्यतायाश्च प्रकरणादिसहकृतकल्पितवाक्याधीनविधानकत्वात् अवशिष्टो धात्वर्थ एव "स्वर्गकामो यजेत" इत्यादौ करणत्वेन विधीयते । भावनाकरणत्वं भावनाभाव्यनिर्वर्तकत्वमिति सिद्ध्यति वेदस्येष्टसाधनताबोधकत्वम् । किञ्च स्वर्गकामपुरुषेण यागः कर्तव्य इत्युक्तावपि यागस्य तत्साधनत्वप्रतीतिः । नहि कामिन इच्छाविषयासाधके प्रवर्तनमुपपद्यते । एवं च वेदबोधितेष्टसाधनताकस्य यागादेर्धर्मत्वम् । तदपेक्षितवेदार्थज्ञानस्य व्युत्पत्तिन्यायालोचनसव्यपेक्षस्य कष्टसाध्यतया मन्दधिषणदुर्ज्ञेयत्वमालोच्य परानुग्रहबद्धपरिकरैः पु-

रुषवरैस्तत्र तत्र भाष्याण्यारच्य लोको ऽनुगृहीतः। तादृशौ चो-
व्वटमहीधरौ मन्त्रभाष्यवेददीपिकाख्यव्याख्याभ्यां शुक्लयजुर्वेदी-
यवाजसनेयिमाध्यन्दिनशाखीयं वेदभागं समलंकारयांचक्रतुः ।
स चातीवोपयुक्तः पठनेऽर्थज्ञाने चेति सव्याख्यो मुद्रयितुमारब्ध
ईश्वरकृपया समाप्तिमगात् । सचायमन्यत्र मुद्रितोऽपि सूक्ष्मा-
क्षरैः पाठकचक्षुरायासकर इति स्थूलाक्षरैरमुद्यत पुनः काशी-
निवासिना हरिदासगुप्तेन वणिग्वरेण स्वीये मुद्रणालये। अत्र
वेदाक्षरोच्चारणादिपारायणादिसौलभ्यायान्ते याज्ञवल्क्यशि-
क्षा, पारायणविधिः, सर्वानुक्रमः, अनुवाकसूत्राध्यायश्च सं-
गृहीताः। अन्तेच अपेक्षितमन्त्राणां झटित्युपलब्धये मन्त्राणा-
मकारादिवर्णानुरोधिनी सूची चोपनिबद्धा। एवं च सर्वाङ्गसु-
न्दरोऽयं ग्रन्थः विदुषामत्यर्थं मनस्तोषकरः स्याद् इत्या-
शास्यते मुद्रकवरेण। प्रस्तावे चास्मिन् समुपनता द्वयीरज्ञानतः,
अक्षरयोजकाद्यनवधानाद्वा अशुद्धीर्विदुषः क्षमापयन् समर्पयति
स्वीयकृतिं परमेश्वरचरणयोः—

विदुषां विधेयः प्रस्तावकः ।

 पत्रादिप्रेषणस्थानम्—हरिदासगुप्तः—
चौखम्बा संस्कृत पुस्तकालय—
बनारस सिटी ।

श्रीः

# शुक्लयजुर्वेदवाजसनेयिमाध्यन्दिनसंहिताध्यायविषयाः—

अन्ते परिशिष्टानि—वेदपारायणविधिः १, याज्ञवल्क्यशिक्षा २, प्रतिज्ञासूत्रम् ३, सर्वानुक्रमणिका ४, अनुवाकसूत्रम् ५, मन्त्राणामकारादिवर्णक्रमकोशश्च ६, इति ।

समाप्तेयं शुक्लयजुर्वेदसंहिताध्यायविषयानुक्रमणिका ।

ॐ श्रीगणेशाय नमः ॥
श्रीमते यजुर्वेदाय नमः ॥

अथ वाजसनेयिमाध्यन्दिनी शाखा ।

# शुक्लयजुर्वेदसंहिता ।

श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण
श्रीमन्महीधराचार्यविरचित-
वेददीपेन च संयुता ।

---

## प्रथमोऽध्यायः ॥

हरिः ॐम् । इषे त्वा । ऊर्जे त्वा । वायवं स्थ । देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागम्प्रजावतीरनमीवा अयक्ष्माः । मा वस्तेन ईशत माघशंस्सो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः । यजमानस्य पशून् पाहि ॥ १ ॥

हृदयं दक्षिणं चाक्षि मण्डलं चाऽधिरुह्य यः ॥
चेष्टते तमहं नौमि ऋग्यजुःसामविग्रहम् ॥ १ ॥
आदित्याल्लब्धवान् यस्तु शाखाः पञ्चदशापराः ॥
तं याज्ञवल्क्यं वन्देऽहं मन्त्रभाष्यप्रसिद्धये ॥ २ ॥
गुरुतस्तर्क्कतश्चैव तथा शातपथश्रुतेः ॥
ऋषीन् वक्ष्यामि मन्त्राणां देवताश्छान्दसं च यत् ॥ ३ ॥
ऋचो यजूंषि सामानि तथार्थः पदवाक्ययोः ॥
श्रुतयश्चात्र याः प्रोक्ता योऽर्थवादश्च कर्म्मणः ॥ ४ ॥

तत्र पूर्वस्मिन् कल्पे विशिष्टकर्मजनितस्मृतिसंस्कारसन्ताना-ऽनुच्छित्तिधर्माणः सुप्तप्रबुद्धन्यायेन हिरण्यगर्भप्रभृतयः कल्पादौ सह विद्ययाभिव्यज्यमानाः स्मर्तारो द्रष्टार ऋषय उच्यन्ते । सोऽयं हिरण्यगर्भपरम्परयाभिव्यक्तो नित्यो वेदः । हिरण्यगर्भ-परम्परा ब्रह्मपङ्क्तिः । ते च श्रुतौ व्यज्यमाना ज्ञायन्ते । तद्यथा । तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद् यद्दर्शपूर्णमासाविति । तत्र दर्शपूर्णमासद्रव्यदेवतामन्त्रादि परमेष्ठिना दृष्टमित्यर्थः । तथा, दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदाञ्चकारे-त्युपक्रम्य, न तदुहाश्विनोरनु श्रुतमासेत्येवमादिनेतिहासेन प्रवर्ग्यगतानां मन्त्राणां दध्यङ्ङाथर्वण ऋषिरिति गम्यते । ऋषिश्च ज्ञातव्य इति दर्शयति । प्रजापतिः प्रथमां चितिम-ऽपश्यदित्युपक्रम्य, स यो हैतदेवं चितीनामार्षेयं वेद इत्या-दिना ग्रन्थेन फलं दर्शयति । अथ देवता मन्त्रवाक्याभिधेयाः । यथा, अग्निर्मूर्द्धा दिवः ककुदित्यत्राग्निः । इषे त्वेति शाखा । नन्वग्निर्मूर्द्धेत्यत्राग्नेर्महाभाग्यत्वाद्देवतात्वमुपपद्यते, शाखादीनां तु स्थावरत्वाद्देवतात्वं दुर्लभमिति यश्चोदयेत् तं प्रति ब्रूमः । यस्य यत्र हविर्भाक्त्वं,स्तुतिभाक्त्वं वा विद्यते सा तत्र देवता, न तु रूढ्या । एवञ्च सति शाखादीनां देवतात्वमुपपद्यत एव । यदुक्तं स्थावर-त्वादिति,अत्र ब्रूमः । अधिष्ठात्र्यो देवता विद्यन्ते,प्रतिमाभूतास्तु शाखादयस्ताः फलं साधयन्तीत्यदोषः । मन्त्रस्य वाच्यं देवतेति श्रुतिर्दर्शयति । आशुः शिशानो वृषभो न भीम इत्युपक्रम्य ऐन्द्र्योऽभिरूपा इति इन्द्रस्य देवतात्वं दर्शयति।छन्दोऽपि ज्ञेयमि-त्यनेनैव दर्शयति येनैवमाह,दक्षिणतोऽसुरान् रक्षांसि अपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुबित्युपक्रम्य, ता द्वाविंशतिर्गायत्र्यः संपद्यन्ते तदाग्नेय्यो भवन्तीति । न ह्यच्छन्दोविद्देवतामाग्नेयीं संपदं वेदेति ।

ऋचो यजूँषि चात्र विद्यन्ते । तानि च ज्ञेयानीत्यत्र श्रुतिर्भवति । यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सर्क् सा देवता तद्यजुरिति । उपासनार्थमृग्यजुषयोः पृथग्ग्रहणमतो ज्ञेयं ऋग्यजुषमिति । नियताक्षरपादावसाना ऋक् । अनियताक्षरपादाऽवसानं यजुः । प्रगीतं मन्त्रवाक्यानाम् ॥ अथ पदार्थः । तत्र चत्वारि पदजातानि नामाख्यातोपसर्गनिपाता इति नैरुक्ताः पठन्ति । तत्र नाम पञ्चप्रकारं पठन्ति । धातुजं धातुजाज्जातं समऽर्थार्थजमेव च॥*वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् ॥ तत्र धातुजम् । वन्दारुः, पचमानः । धातुजाज्जातं ताद्धितपदम् । आग्नेयः, याजमानम्, दैव्याय । समर्थार्थजः समासः । स च संक्षेपतश्चतुःप्रकारः । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः । अथोदाहरणानि । उपरिनाभि, बहिष्पिण्डम् । प्रजापतिः, पशुपतिः । अग्नीषोमौ, इन्द्राग्नी । कृष्णग्रीवः; शितिकण्ठः । यथासंख्यं द्वे द्वे उदाहरणे । वाक्यजम्, क्रयस्य रूपं सोमस्य लाजा इत्यत्र सोमस्य क्रयस्य रूपं लाजा इत्येवं प्राप्ते रूपशब्देन व्यवधानं व्यत्ययश्च । व्यतिकीर्णमन्यत्र प्रसिद्धं यत्पदत्वेन तत्प्रतिरूपका ये वर्णास्तैः सहोच्चार्यते यत्तत् । पार्श्वतः श्रोणितः शितामत इत्यत्र, शितामत इति । त्वमग्नेद्युभिस्त्वमाशुशुक्षणिरित्यत्राशुशुक्षणिरिति । तत्र नाम्नां सामान्यतोऽर्थवचनं सत्त्वप्रधानानि नामानि च । सतो भावः सत्त्वमास्तिता । तद्यत्र प्रधानं तन्नाम, गुणभूता क्रिया, विभक्त्यर्थः कारकश्च । तानीमानि सत्त्वप्रधानानि नामानीति नाम्नोऽर्थः ॥ अथ भावप्रधानमाख्यातम् । भावो नाम क्रियायाः फलम् । तद्यथा ओदनं पचति देवदत्त इत्यत्र देवदत्ताश्रया ओदनाख्यस्य भावस्य गुणभूता पाकक्रिया, अतो भावप्रधानमाख्यातमित्युच्यते । यद्वा भावप्रधानं

भावनाप्रधानं, भावना च पुरुषपरिस्पन्दः, पुरुषप्रयत्नः, आत्मनो व्यापारः । परिस्पन्दस्तु भूतानां सा यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानमाख्यातम् । अथवा, भावो धात्वर्थः क्रियेति नार्थान्तरं, सा यत्र प्रधानं गुणभूतानि षट्कारकाणि तदिदम्भावप्रधानमाख्यातम् इत्याख्यातार्थः । तानि च पचति पठतीत्यादीनि । अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः । विशेषार्थस्त्वनन्त इति । ते च, प्र परा अप सम अनु अव इत्यादयः ॥ अथ निपातानामर्थः सामान्यतोऽसत्त्ववचनता । सत्त्वं द्रव्यमसत्त्वमद्रव्यम् । तद्वचनाश्चादयो निपाता असत्त्ववचनाः । अथ त्रैराश्यम् । उपमार्थीयाः, कर्मोपसंग्रहार्थीयाः, पादपूरणा इति । तत्रोपमार्थीयाः सादृश्यवचनाः, इव न इत्यादयः । तद्यथा– देव इव सविता सत्यधर्मा । इन्द्रो न ॥ कर्मोपसंग्रहार्थीयाः सहायत्ववचनाः, च वा अह इत्यादयः।तद्यथा वातो वा, मनो वा, अग्निश्च पृथिवी चेत्यादयः । पादपूरणाः पादमेव पूरयन्ति, न त्वर्थान्तरं वदन्ति । नार्थान्तरवचना इत्यर्थः । ई कम् इत्यादयः । सद्यो जज्ञानो विही, इमा नु कं भुवना । उक्तं च— क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् *
सत्त्वाभिधायकं नाम निपाताः पादपूरणा इति ॥ अथ वाक्यार्थं व्याख्यास्यामः । नामाख्यातोपसर्गनिपातसमुदायो वाक्यम् । तस्यार्थो वाक्यार्थः । ननु यदि पदान्येव संहतानि वाक्यमुच्यते एवं तर्हि य एव पदार्थः स एव वाक्यार्थस्ततः पृथग्वाक्यार्थव्याख्या नोपपद्यत इति यश्चोदयेत् तं प्रत्याह । साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः । गौरित्युक्ते किमित्याकाङ्क्षा भवति । ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । तथा गच्छतीत्युक्ते किमित्याकाङ्क्षा भवति । ततो गौरित्युक्ते निराकाङ्क्षं भवति । अथेदानीं

गौर्गच्छतीत्युक्ते यत्र गौर्वाहदोहादिभ्यो व्यावृत्य गमनेऽवतिष्ठते गमनं चान्यगन्तृभ्यो व्यावृत्य गव्येवावतिष्ठते, अयं वाक्यार्थः । स एव प्रकरणाविरोधी वाक्यार्थः पदार्थनियमे हेतुः । पदं तु पदार्थपरिज्ञानहेतुः । अयं पदार्थवाक्यार्थयोरर्थविशेषः । नन्वस्य पदचतुष्टयस्य वाक्यगतस्य कथं गुणप्रधानभाव इति । उच्यते । पदार्थद्वारकः सम्बन्धो गुणप्रधानभावश्च पदानाम् । तत्र प्रधान-माख्यातं, गुणभूतान्यन्यानि । आख्यातार्थस्य साध्यत्वाद् इतरेषां पदार्थानां स्वभावसिद्धत्वात् । तत्र सिद्धार्थसाध्यार्थयोर्यदेकस्मिन् वाक्ये समुच्चारणं तत् साध्यार्थं भवितुमर्हति, न सिद्धार्थम् । तथाच भूतं सिद्धं, भव्यं साध्यम् । भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते, न भव्यं भूतायेति न्यायविदः पठन्ति । एते च वाक्यार्था, इषे त्वादिके मन्त्रगणे प्रायशो दृश्यन्ते । विध्यर्थ-वादयाच्ञाशीःस्तुतिप्रैषप्रवह्लिकाः * प्रश्नो व्याकरणं तर्कः पूर्व-वृत्तानुकीर्त्तनम् ॥ अवधारणश्चोपनिषद्वाक्यार्थाः स्युस्त्रयोदश । मन्त्रेषु ये प्रदृश्यन्ते, व्याख्या च श्रुतिचोदिता ॥ अथैतेषामुदा-हरणानि । तत्र विधिः परमेष्ठ्यभिधीतः, अश्वस्तूपरो गोमृग इत्यादिः । अर्थवादः, देवा यज्ञमतन्वत इत्यादिः । याच्ञा, तनूपाऽअग्नेऽसि तन्वं मे पाहि । आशीः, आ वो देवास ईमहे । स्तुतिः,अग्निर्मूर्द्धा दिवः ककुत् । प्रैषः, होता यक्षत्समिधाग्निमि-त्यादिः । प्रवह्लिका, इन्द्राग्नी अपादियमित्यादि । प्रश्नः, कः स्वि-देकाकी चरतीत्यादिः । व्याकरणम्, सूर्य एकाकी चरतीत्यादिः । तर्कः, मा गृधः कस्य स्विद्धनम् । पूर्ववृत्तानुकीर्त्तनम्,ओषधय-समवदन्तेत्यादि । अवधारणम्, तमेव विदित्वातिमृत्युमेति । उपनिषत्, ईशावास्यमित्यादिः ॥ अथ व्याख्याधर्माः ॥ अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् * विप्रकृष्टं तु

संदध्यादानुपूर्व्यञ्च कल्पयेत् ॥ लिङ्गं धातुं विभक्तिं च योज्यं वाक्यानुलोमतः । यद्यत्स्याच्छान्दसं वाक्ये कुर्य्यात्तत्तु लौकिकम् ॥ अथोदाहरणानि । अतिरिक्तं पदं त्याज्यमिति । यथा, इमा नु कं भुवनासीषधामा । कमित्यनर्थको निपातः । हीनं वाक्ये निवेशयेत्, अस्मादन्नादिति भागमवेक्षते इत्यत्राधस्तनो मन्त्रशेष इहाप्यभिसन्धानीयः, अस्मादन्नान्निर्भक्त इत्यादि । विप्रकृष्टं तु संदध्यादिति, सं रेवतीर्जगतीभिः पृच्यतामित्यत्र संपृच्यतामिति व्यवहितसंबन्धः ॥

आनुपूर्व्यं च कल्पयेदिति, मानो मित्रो वरुणो अर्यमायुरित्यत्र यद्वाजिनो देवजातस्येतिद्वितीयोऽर्द्धर्च्चः प्रथमं व्याख्येयः । यतो हि यद्वृत्तं वाक्ये प्रथमं भवति । लिङ्गं धातुं विभक्तिं च यथार्थं सन्नमयेत्, लिङ्गं तु वाक्यवशात् सन्नमयेत् । पवित्रे स्थो वैष्णव्यौ। अत्र पवित्रे इति नपुंसकलिङ्गं, वैष्णव्याविति पुँल्लिङ्गम् । तत्र वैष्णव्यावित्यस्य सन्नतिराविष्टलिङ्गत्वात्पवित्रशब्दस्य । धातुं धात्वर्थं च सन्नमयेत् । अग्रेगुवो अग्रेपुव इति । अत्र अग्रेपुव इति संदेहः । किमत्र पिबतेरूपमुत पवतेः। तत्र श्रुतितो निर्णयः । तायत्प्रथमाः सोमस्य राज्ञो भक्षयन्तीति व्याख्यानात् पिबतेरत्र रूपमिति । कस्मै देवाय हविषा विधेमेति, हविषेति तृतीयाया द्वितीयासन्नतिः वाक्यसंयोगात् । अन्यदपि यत्किञ्चिच्छान्दसं तत्सर्वं लोकविदितैःशब्दैर्व्याख्येयमित्ययं सामान्यो व्याख्याक्रम उक्तः । अतः परं वैशेषिकमनुक्रमिष्यामः । अत्र, इषे त्वा द्वावध्यायौ दर्शपूर्णमासमन्त्राः । परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानाम् । तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासाविति श्रुतेः । परमेष्ठिन आर्षम् । तथा, ते देवा अकामयन्तेत्युपक्रम्य, तत एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासा-

विति देवानामार्षं कथ्यते । तत्रास्मिन्नध्याये सर्वाण्येव यजूँषि । पुरा क्रूरस्येतीयं त्रिष्टुप् । तत्र यजुषां केचिद्दैशेषिकं छन्द इच्छन्ति पिङ्गलपरिपठितं, दैव्येकमित्यादिनेति । तत्र च सर्वसंख्याया व्यवहारः, पाद इत्युपरिष्टादधिकारात् । तत्र, इषे त्वा द्विपदो मन्त्रः, त्र्यक्षरत्वाद्दैव्यनुष्टुप् । श्रुत्या शाखाच्छेदे विनियुक्तः । न चाख्यातमुपलभ्यतेऽत्र, न चाख्यातं विना वाक्यं किञ्चिद्विधत्ते इत्यध्याहारेणानुषङ्गेण वा वाक्यपरिपूर्त्तिः कर्त्तव्या। नन्वध्याहारानुषङ्गयोः को विशेषः । लौकिकोऽध्याहारः । यथा भूताय त्वा नारातये परिशेषयामि पिनष्टि, प्राणाय त्वेति प्रतिमन्त्रम् । प्राणाय त्वा पिनष्टि । अनुषङ्गस्तु मन्त्रावयव एव। यथा, अस्मादन्नान्निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । तथा, अस्यै प्रतिष्ठायै निर्भक्त इत्यादिविष्णुक्रममन्त्रेषु पठितमिहाभिसम्बद्ध्यते परिपूर्णत्वाद्वाक्यस्य । अयं विशेषोऽध्याहाराऽनुषङ्गयोः । इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रकारेण वाक्यपरिपूर्तिः कृता॥छिनद्मीति चोभयोः साकाङ्क्षत्वात्सन्नमयामीतिचोत्तर इति ॥ अथ कोऽर्थः । शाखा उच्यते । इषे अन्नाय त्वां छिनद्मीति। इषु इच्छायाम्। तस्य क्विपि, इट् इति रूपं भवति तस्य तादर्थ्ये चतुर्थी, इषे । श्रुत्युक्तमभिधेयं, वृष्ट्यै । तदाह यदाह इषे त्वेति वृष्टिः सर्वेणैवेष्यते।अतोऽभिधानगतस्य धातोरभिधेयक्रिया विद्यते इति ।इषे इत्याभिधानम्, अभिधेया वृष्टिः। न्याय्योऽभिधानाभिधेयलक्षणसंबन्धः । त्वा इति । युष्मदो द्वितीयैकवचनस्य स्थाने आदेशः । नन्वेवं तत्र यद्येषणक्रियायोगादिह वृष्टिरभिधीयते, न तु रूढ्या तदानीं यद्यद्धिरण्यादि किञ्चिदिष्यते तत्तत्सर्वमिडित्युच्येत । तथा सति संव्यवहारोच्छेद इत्येवमादीन् दोषान् केचिद्विदधति।तदसत् ।सिद्धे हि

शब्दार्थसंबन्धे पश्चादभिधानाभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिः क्रियते । सा च क्रियमाणा तस्मिन्नेवाभिधेयेऽवतिष्ठते मगधाधिपतिवत् । यथा मगधाधिपतेर्मगधेषु देशेष्वाधिपत्यमस्ति, न कान्यकुब्जेषु । एवमिहापि जात्यादिपरिच्छिन्नेष्वभिधेयेषु क्रियाप्रवृत्तिरस्ति, न सर्वत्रेत्यदोषः । व्युत्पत्तिद्वारेण च शब्दानां परिज्ञानम् अभ्युदये हेतुरिति श्रुतिर्दर्शयति । तत् प्रणीतानां प्रणीतात्वं प्रति ह प्रतिष्ठति, य एवमेतत्प्रणीतानां प्रणीतात्वं वेदेति प्रणीताशब्दस्य निर्वचनपरिज्ञानद्वारेण फलं दर्शयति । तथा पुरुषशब्दव्युत्पत्तिं प्रकृत्याह । स यत् पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन ओषत्तस्मात्पुरुषः । ओषति ह वै स तं योऽस्मात् पूर्वो बुभूषति य एवं वेद । एवं तत्र तत्र । एतच्च स्थालीपुलाकभक्तावसिक्थन्यायेन सर्वेष्वभिधेयेषु द्रष्टव्यम् ।आह च । क्रियाद्वारकसम्बन्धमभिधानाभिधेययोः * ज्ञात्वा फलमवाप्नोति श्रुतिर्वक्ति पुनः पुनः ॥ ऊर्ज्जे त्वा द्विपदस्त्र्यक्षरो मन्त्रः । दैव्यनुष्टुप्,यदि यजुषां छन्दोऽस्ति । एवं सर्वेषु यजुष्षु ऋक्षु च वक्तव्यं, ग्रन्थगौरवभयात्तु नोच्यते । उक्तं च-स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगोऽर्थ एव च * मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपदे ॥शाखासंनमने विनियुक्तः । सन्नमयामीति वाक्यशेषः । यो वृष्टादूर्क् रसो जायते तस्मै तदाहेतिश्रुतिः। ऊर्ज्ज बलप्राणनयोः । क्विप् । ऊर्जे । तादर्थ्ये चतुर्थी । व्रीह्यादेर्धान्यस्य क्षीरादेश्च सेचनस्य उत्पत्त्यर्थं त्वां सन्नमयामि । यज्ञपरिणामो हि वृष्टिरन्नादिकश्च तदभिप्रायौ मन्त्रौ । श्रुतिश्चाऽस्मिन्नर्थे भवति । अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद् वृष्टिरिति । तथा, इतः प्रदानाद् वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतैः स्तोकैरेतान् स्तोकान् वनुते त एते स्तोका वर्षन्तीति ॥ वायवः

स्थ" । वत्सं शाखयोपस्पृशति । यथा वायुर्वृष्टिद्वारेण गवामाप्यायकः एवं यूयमपि प्रस्तुतिद्वारेणाप्यायका भवथेत्यर्थः । एकस्यापि वत्सस्योपस्पर्शने सर्वेषां संस्कारो बहुवचनोपदेशात् । पूजार्थे वा बहुवचनम् ॥ "देवो वः सविता" अथ मातॄणामेकां शाखयोपस्पृशति । देवो दानादिगुणयुक्तः । देवो दानाद् द्योतनाद्दीपनाद्वेति यास्कः । बहुवचनस्य वस्नसाविति युष्मदो द्वितीयाबहुवचनस्थाने वसादेशः । युष्मान् सविता सर्वस्य प्रसविता प्राप्र्पयतु समर्प्पयतु सङ्गमयतु श्रेष्ठतमाय कर्म्मणे । "यज्ञो वै श्रेष्ठतमं कर्मे"ति श्रुतिः । प्रशस्यतमाय कर्म्मणे तादर्थ्ये चतुर्थी । यज्ञार्थमित्यर्थः । यूयमपियज्ञार्थे सवित्रा सङ्गमिताः सत्यः आप्यायध्वम् । ओप्यायी वृद्धौ णिचो लोपः । आप्याययत । हे अघ्न्याः गावः । कम् इन्द्राय भागम् । तादर्थ्ये चतुर्थी । इन्द्रार्थे यो भागस्तमिति संबन्धः । इन्द्रोऽत्र हविर्भाक् । कथंभूताः सत्यः "प्रजावतीः" । छन्दसीति दीर्घत्वम् प्रजावत्यः जीवद्वत्साः । "अनमीवाः" अम् रोगे । अमीवा व्याधिविशेषः । न विद्यते अमीवा यासां तास्तथोक्ताः । यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः । आदरार्थं पुनर्वचनम् । अथवा अयनमयः गमनं, क्ष्मा पृथिवी, अयः क्ष्मायां यासां विद्यते घासभक्षणार्थं ता अयक्ष्माः । अनिवारितगोप्रचारा इत्यर्थः । किञ्च मा वः युष्माकं स्तेनः चौर ईशत । "माङ्लिलुङ्" । मा युष्माकं चौरः ईशनं कार्षीदित्यर्थः । मा वः अघशंसः अघं पापं यः शंसति भक्षणार्थं वृको वा चाण्डालो वा मा ईशत । किञ्च "ध्रुवाः" शाश्वतिकाः । "अस्मिन्" गोपतौ यजमाने "स्यात" भवत "बह्वीः" बह्व्यः ॥ शाखामुपगूहति "यजमानस्य पशून् पाहि" । यज-

मानस्य संबन्धिनः पशून्; प्रकृतं गोवत्समभिप्रेतं दोहाङ्गभूतं पाहि गोपाय ॥ १ ॥

प्रणम्य लक्ष्मीं नृहरिं गणेशं भाष्यं विलोक्यौवटमाधवीयम् ।
यजुर्मनूनां विलिखामि चार्थं परोपकाराय निजेक्षणाय ॥ १ ॥
दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि ।
विलोक्यो वेददीपोऽयं बुद्धिमद्भिर्द्विजोत्तमैः ॥ २ ॥

तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमात् उपदिदेश ते च स्वशिष्येभ्यः । एवं परम्परया सहस्रशाखो वेदो जातः । तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत् । तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति । स योगसामर्थ्यान्मूर्त्तां विद्यां विधाय उद्ववाम् । वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंषि अभक्षयन् । तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि । ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान् । तानि च जाबालयौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदश शिष्येभ्यः पाठितवान् । तथा च श्रुतिः [ बृहदारण्य० माध्य० ५, ५, ३३ ] आदित्यानीमानि शुक्लानि यजूँषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त इति । अस्यार्थः । आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि । वाजस्यान्नस्य सनिर्दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयस्तेन याज्ञवल्क्येन शिष्येभ्य आख्यायन्ते कथ्यन्त इत्यर्थः । तत्र मध्यन्दिनेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषः माध्यन्दिनः । यद्यपि याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः तथापि ईश्वरकृपया मध्यन्दिनसम्बन्धितया लोके प्रख्यायते । तं माध्यन्दिनं वेदं येऽधीयन्ते विदन्ति वा शिष्यपरम्परया वर्त्तमानास्तेऽपि माध्यन्दिना उच्यन्ते ॥

अतएव 'स्वाध्यायोऽध्येतव्यः' इति ( शत० ब्रा० ११, ५, ६, ७) स्वशाखाध्ययनं विहितम् । तच्चाध्ययनं प्रतिमन्त्रमृषिच्छन्दोदेवताविनियोगार्थज्ञानपूर्वकं विधेयम् अन्यथा दोषश्रवणात् । 'एतान्य'

विदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यथान्तराश्वगर्त्तं वापद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति इति कात्यायनोक्तेः । ( अनुक्रम० १, १) ऋष्यादिज्ञाने फलश्रवणाच्च । अथ विज्ञायैतानि योऽधीते तस्य वीर्य्यवदथ योऽर्थवित्तस्य वीर्य्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत् फलेन युज्यते—इत्युक्तेश्च । [ अनु० १, १ ] तस्माद्वेदमन्त्राणामृष्यादिज्ञानमर्थज्ञानं चावश्यकम् अन्यथा फलवैकल्यात् । तत्र यजुर्वेदमन्त्रेषु कानिचित् यजूंषि काश्चन ऋचः । तत्र ऋचां नियताक्षरपादावसानानामावश्यकं छन्दः कात्यायनेनोक्तम् । यजुषां षड्त्तरशताक्षरावसानानामेकाक्षरादीनां पिङ्गलेन दैव्येकमित्यादिनोक्तं छन्दो बोद्धव्यम् । तदधिकानां तु होता यक्षद्वनस्पतिमभिहीत्यादीनां [ अध्या० २१, ४६ ] नास्ति छन्दःकल्पना ॥—तत्राद्याध्याये द्वितीयाध्यायाष्टाविंशतिकण्डिकाश्चेति दर्शपौर्णमासमन्त्राः । तेषां परमेष्ठी प्रजापतिर्ऋषिर्देवताः प्राजापत्या वा । द्वितीयाध्यायान्तिमकण्डिकाषट्कम्पितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः । आद्येऽध्याये सर्वाणि यजूंषि एका पुरा क्रूरस्येति [ १, २८ ] ऋक् । यजुषां पिङ्गलोक्तं छन्दो बोद्धव्यं विस्तरभयान्नोच्यते । ऋचान्तु छन्दांसि वक्तव्यानि । तत्राद्यायां कण्डिकायां पञ्च मन्त्राः । द्वौ त्र्यक्षरौ । तृतीयश्चतुरक्षरः । चतुर्थो द्विषष्ट्यक्षरः । पञ्चमो नवाक्षरः ॥—तत्र प्रकृतित्वादादौ दर्शपौर्णमासमन्त्राः । यत्र कृत्स्नाङ्गानामुपदेशः क्रियते सा प्रकृतिः । यत्र विशेषाङ्गमात्रमुपदिश्यतेऽङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते सा विकृतिः । तत्र प्रकृतिस्त्रिबिधा अग्निहोत्रमिष्टिः सोमश्चेति । तत्र यद्यपि कृताधानस्यैव दर्शपौर्णमासयोरधिकारादादौ अग्न्याधानमन्त्रा वक्तुमुचितास्तथाप्याधाने पवमानेष्ट्यो विधेयास्ता अन्तराधानस्यैवासिद्धेः । पवमानेष्टीनाञ्च दर्शपौर्णमासविकृतित्वात्सोमेऽपि दीक्षणीयप्रायणीयादिषु दर्शपौर्णमाससापेक्षत्वादादौ दर्शपौर्णमासमन्त्राः गदितुं युक्ताः । ते चेषेत्वादयः ॥—तत्रेषे त्वेति द्विपदस्त्र्यक्षरो मन्त्रः । तस्य दैव्यनुष्टुप्छन्दः । शाखा देवता । पलाशशाखाच्छेदने विनियोगः । शाखादीनामचेतनत्वेऽपि तदभिमानिनीनां देवतानां सत्वादेवतात्वम् । अभिमानिव्यपदेशस्त्विति व्याससूत्रोक्तेः । मु-

दब्रवीदापोऽब्रुवन्निति श्रुतेश्च । तस्माच्छाखोखापयः स्रुक्यूपादीनामपि देवतात्वम् । तत्र प्रतिपदि दर्शयागं चिकीर्षुरमावास्यायां प्रातरग्निहोत्रं हुत्वा दर्शयागार्थं ममाग्नेर्वर्च इति [कात्या० २, १, ३] मन्त्रेण अग्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणं कुर्यात् । दर्शयागे त्रीणि हवींषि सन्ति । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यैन्द्रम्पय इति तत्र प्रतिपदि दधि होतुं दध्नो निष्पत्त्यै रात्रावामावास्यायां गावो दोग्धव्याः । तद्दोहनार्थं प्रातर्लौकिकदोहादूर्ध्वं स्वमातृभिः सह चरन्तो वत्साः स्वमातृभ्यः पलाशशाखयापाकरणीयाः । तदर्थं पलाशशाखाच्छेदनम् । गायत्र्या पक्षिरूपं विधाय यदा दिवः सोमवल्ल्याहृता तदा तत्पत्रस्भुमावुत्तं ततः पलाशोऽभवदिति श्रुत्या ( श० ब्रा० १, ७, १-८, २, १० ) पलाशस्य प्राशस्त्यं ब्रह्मत्वञ्चोक्तं तस्मात्पलाशशाखाच्छेदनम् ॥

अथ मन्त्रार्थः—क्रियापदाध्याहारेण ॥ हे शाखे ! 'इषे' वृष्ट्यै 'त्वा' त्वां छिनद्मि । इष्यते काङ्क्ष्यते सर्वैर्व्रीह्यादिधान्यनिष्पत्तये सा इट् । श्रुत्या वृष्टिर्व्याख्याता । कर्मणि क्विप् । वृष्ट्यै तदाह यदाहेषे त्वेति श्रुतेः ( १, ७, १, २ ) । पर्णशाखाञ्छिनत्ति शमीलीं वेषे त्वेत्यूर्जे त्वेति वा छिनाद्मि इति वोभयोः साकाङ्क्षत्वात्सन्नमयामीति वोत्तर इति कात्यायनोक्तेः ( कात्या० ४, २, १—३ ) । छिनद्मीति क्रियापदमध्याहर्त्तव्यम् । कात्यायनसूत्रस्यायमर्थः—पलाशशाखा शमीशाखा वात्र विकल्पिता । तच्छेदने इषे त्वोर्जे त्वेति द्वौ मन्त्रौ विकल्पितौ । तयोः क्रियापदाकाङ्क्षत्वादर्थावबोधाय छिनद्मि इति पदमध्याहर्त्तव्यमित्येकः पक्षः । इषे त्वेति छेदनार्थो मन्त्रः । ऊर्जे त्वेति सन्नमनार्थः । सन्नमनं ऋजूकरणं शाखालग्नधूल्याद्यपनयनम् । इदं पक्षान्तरमित्यर्थः । ऊर्जे त्वा । शाखैव देवता । हे शाखे ! 'त्वा' त्वां सन्नमयामि ऋजूकरोमि । किमर्थम् 'ऊर्जे' ऊर्ज बलप्राणनयोः । ऊर्जति सर्वान्मनुष्यपश्वादीन् बलयति पानादिना दृढशरीरान् करोति । यद्वा । प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मको रस ऊर्जशब्देनोच्यते । तस्मै रसाय त्वामनुमार्ज्मि । यो वृष्टादूर्ग्रसो जायते तस्मै तदाहेति श्रुतेः ( १, ७, १, २ ) । एतन्मन्त्रद्वयपाठेनाध्वर्युरिष्यमाणमन्नं बलकरमाज्यक्षीरादिरसञ्च यजमाने सम्पादयत्येव । 'इषे त्वोर्जे त्वे'

त्याहेषमेवोर्जं, यजमाने दधाति' इति तित्तिरवचनात् । कात्यायनः ( ४, २, ७ ) मातृभिर्वत्सान् संसृज्य वत्सं शाखयोपस्पृशति वायवस्थेति' । वायुर्देवता । वा गतिगन्धनयोः । वान्ति गच्छन्ति वायवो गन्तारः । हे वत्साः ! यूयं 'वायवः स्थ' मातृभ्यः सकाशात् अन्यत्र गन्तारो भवत । मातृभिः सह गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः । यद्वा । वायुसादृश्याद् वत्सानां वायुत्वम् । यथा वायुः पादप्रक्षालननिष्ठीवनादिभिरुपहतां भूमिं शोषयित्वा पुनाति । एवं वत्सा अप्यनुलेपनहेतुभूतगोमयादिदानेन भूमिं पुनन्ति तस्माद्वायुसादृश्यम् । अथवा नृणां यथा स्वनिवासाय गृहनिर्माणसामर्थ्यमस्ति एवं पशूनां तदभावान्निरावरणेऽन्तरिक्षे सञ्चरणादन्तरिक्षमेव पशूनां देवता । तस्यान्तरिक्षस्य वायुरधिपतिः स च वायुः स्वावयवानिव पशून् पालयतीति पशूनां वायुरूपत्वम् । तथा पालनाय पशून् वायवे समर्पयितुं वायुरूपत्वमापाद्य वायव स्थेति मन्त्रः प्रवर्त्तते । तदुक्तं तित्तिरिणा वायव स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षोऽन्तरिक्षदेवत्याः खलु पशवो वायव एवैतान् परिददातीति । यद्वा तृणभक्षणायाहनि तत्र तत्रारण्ये चरित्वा सायंकाले वायुवेगेन यजमानगृहे समागमनाय पशून् प्रवर्त्तयितुं वायुरूपत्वमुच्यते । कात्यायनः ( ४, २, ९, १० ) देवो व इति मातॄणाम् एकां न्याकृत्यैन्द्रम्भवति माहेन्द्रं वेति' । अस्यार्थः । पूर्वसूत्राच्छाखयोपस्पृशतीति पदद्वयमनुवर्त्तते । वत्सानां मातरो या गावः सन्ति तासां मध्ये एकाङ्गां न्याकृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशेत् । तथा सति गोसम्बन्धिदधिरूपं हविरैन्द्रं माहेन्द्रं वा भवतीति । देवो व इति मन्त्रस्येन्द्रो देवता । षू प्रेरणे । सुवति स्वस्वव्यापारे प्रेरयतीति सविता । देवः द्योतमानः परमेश्वरः । हे गावः ! वो युष्मान् प्रार्पयतु प्रभूततृणोपेतं वनं गमयतु । किमर्थम् ? श्रेष्ठतमाय कर्म्मणे । चतुर्विधं कर्म्म । अप्रशस्तम् । प्रशस्तम् । श्रेष्ठम् । श्रेष्ठतमञ्चेति । लोकविरुद्धं बधबन्धचौर्य्यादिकमप्रशस्तम् । लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम् । स्मृत्युक्तं वापीकूपतडागादिकं श्रेष्ठम् । वेदोक्तं यज्ञरूपं श्रेष्ठतममिति तल्लक्षणम् । यज्ञो वै श्रेष्ठतमं कर्मेति श्रुतेः ( १, ७, १, ५ ) । हे

अघ्न्याः गावः । गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या अघ्न्या उच्यन्ते । तथाविधा यूयमिन्द्राय भागम् इन्द्रमुद्दिश्य सम्पादयिष्यमाणं दधिरूपहेतु क्षीरम् आप्यायध्वं समन्ताद्वर्धयध्वम् । सर्वास्वपि गोषु प्रभूतक्षीरं कुरुत । ओप्यायी वृद्धौ । वो युष्मानपहर्तुं स्तेनश्चौरो मा ईशत ईश्वरः समर्थो मा भूत् । अघशंसः अघेन तीव्रपापेन भक्षणादिना शंसो घातको व्याघ्रादिरपि मा ईशत वो हिंसको मा भूत् । कीदृशीर्युष्मान् ? प्रजावतीः बह्वपत्याः । अनमीवाः अमीवा व्याधिः स नास्ति यासां ताः अनमीवाः कृमिदुष्टत्वादिस्वल्परोगरहिताः । अयक्ष्माः यक्ष्मा रोगराजः प्रबलरोगरहिताः । किञ्च । यूयं गोपतौ गवां युष्माकं पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत ॥ का० ( ४, २, ११ ) यजमानस्य पशूनित्यग्न्यागारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहतीति' । हे पलाशशाखे । त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशून् अरण्ये सञ्चरतश्चोरव्याघ्रादिभयात् पाहि रक्ष । शाखया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्तीत्याशयः । यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमुक्तम् । यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्रदृष्ट्या विष्णुसन्निधिमभिप्रेत्य विष्णुं सम्बोध्य षोडशोपचारान् विदधत इत्युक्तं प्राक् ॥

अथ व्याकरणप्रक्रिया । 'इषे' इषेरिच्छार्थस्य कर्म्मणि क्विप् । कित्त्वादुपधाया गुणाभावः । तस्माच्चतुर्थ्येकवचनम् । इषशब्दगत इकारो धातुस्वरेण प्रातिपदिकस्वरेण चोदात्तः । स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् चतुर्थ्येकवचनस्य प्रत्ययत्वादाद्युदात्तत्वे प्राप्ते अनुदात्तौ सुप्पिताविति तदपवादेनानुदात्तत्वे प्राप्तेऽपि सावेकाचस्तृतीयादिर्विभक्तिरित्युदात्तत्वम् तस्मिन् सति अनुदात्तं पदमेकवर्जमितीकारोऽनुदात्तः यद्यप्येकशब्देन द्वयोरुदात्तयोरन्यतरो यः कोऽपि वक्तुं शक्यते तथापि सति शिष्टस्वरो बलीयानिति न्यायेन विभक्तिगत उदात्त एव प्रबलः ॥ तथा सत्यनुदात्तादिकमुदात्तान्तमिदं पदं सम्पन्नम् । 'त्वा' । युषेर्भजनार्थस्य युष्यसिभ्यां मदिगिति मदिक्प्रत्ययान्तस्य युष्मच्छब्दस्य द्वितीयायां त्वेति रूपम् । तस्य प्रातिपदिकस्वरेण यद्यपि उदात्तः प्राप्तस्तथापि अनुदात्तं सर्वमपादादावित्यस्य सूत्रस्य अ-

नुवृत्तौ सत्यां त्वामौ द्वितीयाया इति त्वादेशविधानादयं शब्दो-ऽनुदात्तः ॥ ऊर्जे । ऊर्ज बलप्राणनयोरस्मात् क्विप् । ऊर्जति बलवन्तं प्राणवन्तं वा करोति इत्यूर्क् अन्नम् । ऊर्गित्यन्ननामोर्जय-ति इति सत इति यास्कः (निरु० ९. २७ )। स्वर इषेवत् । संहि-तायां तूदात्तादनुदात्तस्य स्वरित इति त्वाशब्दस्य स्वरितत्वम् । मन्त्रद्वयस्य संहितायाम् ऊर्जे इति ऊकारस्य स्वरितात् संहिताया मनुदात्तानामिति प्रचयाभिधायामेकश्रुतौ प्राप्तायां तदपवादकत्वे-नोदात्तस्वरितपरस्य सन्नतर इत्यत्यन्तनीचोऽनुदात्तो भवति । अ-ग्रिमस्य त्वाशब्दस्य स्वरितत्वम् । एवमुत्तरपदेषु संहितायां स्वरा ऊहनीयाः ॥ वायवः ॥ वातेर्गत्यर्थात्, कृवापाजिमिस्वदिसाध्यशूभ्य उणित्युण् । सति शिष्टप्रत्ययस्वरेणान्तोदात्तो वायुशब्दः । जसः सुप्त्वादनुदात्तत्वम् । जसि चेति गुणेऽवादेशे च, स्थानेऽन्तर-तम इति परिभाषया उदात्त एव जाते वायव इति मध्योदात्तं पदम् । जसः स्वरितत्वं पूर्ववत् ॥ स्थ ॥ अस्तेर्लेटि शपो लुकि, श्नसोरल्लोप इति अकारलोपः । तिङ्ङतिङ इति निघातः ॥ देवः ॥ पचादित्वादच् । चित इत्यन्तोदात्तः ॥ वः ॥ बहुवचनस्य वस्नसावित्य-नुदात्तो वसादेशः । सविता ॥ षू प्रेरणे । ण्वुल्तृचाविति तृच् । इडागमः । चित्त्वादन्तोदात्तः ॥ प्र ॥ उपसर्गाश्चाभिवर्जमित्याद्युदात्तः ॥ अर्पयतु ॥ ऋ गतौ । हेतुमति चेति णिच् । अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति पुक् । पुगन्तेति गुणो निघातश्च ॥ श्रेष्ठतमाय ॥ प्रशस्यशब्दाद-तिशायने तमबिष्ठनावितीष्ठन् प्रशस्यस्य श्र इति श्रादेशः । ञ्नि-त्यादिर्नित्यमित्याद्युदात्तत्वम् । ततः पुनस्तमप् । तस्य पित्त्वादनु-दात्तत्वम् । स्वरितप्रचयाः पूर्ववत् ॥ कर्मणे ॥ करोतेर्मनिन् । नि-त्वादाद्युदात्तः ॥ आ, उदात्तः ॥ प्यायध्वम् ॥ ओप्यायी वृद्धौ । हे-तुमति णिच् । तस्य, छन्दस्युभयथेत्यार्द्धधातुकत्वाण्णेरनिटीति णिलोपः । निघातः ॥ अघ्न्याः ॥ अघ्न्या अहन्तव्या भवत्यघघ्नीति वेति यास्कः ( निरु० ११, ४३, )। अघे नञि वोपपदे हन्तेरघ्न्या-दयश्चेति यगन्तो निपातः । सम्बुद्धित्वादामन्त्रितस्य चेति आष्ट-मिको निघातः ॥ इन्द्राय ॥ इदि परमैश्वर्य्ये, इन्धी दीप्तौ वा । इ-न्दति इध्यते वा तेजोभिरिति इन्द्रः । ऋज्रेन्द्रेत्यादिना रन्प्रत्यया-न्तो निपातः । नित्वादाद्युदात्तः । स्वरितप्रचयौ च ॥ भागम् ॥ भ-

ज भागसेवनयोः। अकर्त्तरि च कारके सञ्ज्ञायामिति घञ्। ञि-
त्वादाद्युदात्ते प्राप्ते, कर्षात्वतो घञोऽन्त उदात्त इत्यन्तोदात्तत्वम्॥
तस्यामिपूर्व इत्यमा सहैकादेशः, एकादेश उदात्तेनोदात्त इत्यु-
दात्त एव॥ प्रजावतीः॥ उपसर्गे च सञ्ज्ञायामिति जनेर्डप्रत्य-
यः। ततष्टाप्। तेन सहैकादेशोऽप्युदात्तान्तः प्रजाशब्दः। तस्मा-
त्तदस्यास्त्यस्मिन्निति मतुप्। मादुपधायाश्च मतोर्वोऽयवादिभ्यः
इति मस्य वः। उगितश्चेति ङीप् मतुप्ङीपोरनुदात्तत्वात् प्रजा-
शब्दस्वर एव। वा छन्दसीति पूर्वसवर्णदीर्घत्वम्॥ अनमीवाः॥
अम रोगे। अमेरीव इति ईवप्रत्ययः यद्वा शेवायह्वजिह्वाग्रीवाप्वा-
मीवा इत्यमेर्वन्प्रत्ययान्तो निपातः। तस्य नञा बहुव्रीहौ, समा-
सस्य चेत्यन्तोदात्ते प्राप्ते तदपवादेन, बहुव्रीहौ प्रकृत्या पूर्वपदमिति
पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादेन नञ्सुभ्यामित्यन्तोदात्तत्वम्।
अयक्ष्माः॥ तद्वत् स्वरः॥ मा॥ निपातत्वादाद्युदात्तः॥ स्तेनः॥
स्तेन चौर्ये। स्तेनयति चोरयतीति स्तेनः। पचाद्यच्। चित्वादन्तो-
दात्तः॥ ईशत॥ ईश ऐश्वर्य्ये। छन्दसि लुङ्लङ्लिट इति लङ्। व्यत्य
यो बहुलमिति बहुवचनम्। न माङ्योगे इत्यडभावः। निघातश्च॥
अघशंसः॥ अघ पापकरणे। पचाद्यजन्तोऽघशब्दोऽन्तोदात्तः।
अघं शंसति इच्छतीत्यघशंसः। शसि इच्छायाम्। अच्। तत्पुरुषे
तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वम्॥ ध्रुवाः॥ ध्रुव स्थैर्ये। इगु-
पधज्ञाप्रीकिरः क इति कः। प्रत्ययस्वरेणान्तोदात्तो ध्रुवशब्दः॥
अस्मिन्॥ इणो दमुगिति एतेर्दमुक्। अन्तोदात्त इदं शब्दः। त-
स्मात् ङेः, स्मिन्। तस्य ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः इत्युदात्तत्व-
म्॥ गोपतौ॥ गमेर्डोरिति गोशब्दः प्रत्ययस्वरेणोदात्तः। गवां
पतिरिति तत्पुरुषे, पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वम्॥ स्या-
त्॥ अस्तेः प्रार्थनायां लिङ्। तस्यस्थमिपां यासुट्। सलोपोऽल्लो-
पश्च। तिङ्ङतिङः॥ बह्वीः॥ बहुशब्दाद्, वोतो गुणवचनादिति
ङीष्। वा छन्दसीति जसः पूर्वसवर्णत्वम्। प्रत्ययस्वरेणान्तो-
दात्तः॥ यजमानस्य॥ पूङ्यजोः शानन्निति यजतेः शानन्। नि-
त्वादाद्युदात्तः॥ पशून्॥ पश्यन्ति गन्धेनेति पशवः। अर्जिदृशिकमी-
त्यादिना दृशेः कुप्रत्ययः पशादेशश्च। प्रत्ययस्वरेणान्तोदात्तः॥
पाहि॥ पा रक्षणे। लोट्। तिङ्ङतिङः। एवमग्रे पदस्वरप्रक्रियो-

हनीया विस्तरभयान्नोच्यते ॥ १ ॥

वसो॑: प॒वित्र॑मसि । द्यौर॑सि पृथि॒व्य॑सि मा॒त॒रि॒श्व॑नो घ॒र्मो॑ऽसि वि॒श्वधा॑ असि । प॒र॒मेण॒ धाम्ना॒ दृꣳह॑स्व॒ मा ह्वा॒र्मा ते॑ य॒ज्ञप॑तिर्ह्वार्षीत् ॥ २ ॥

तस्यां पवित्रं करोति । "वसोः पवित्रमसि" । वसोर्वासवितुर्यज्ञस्य । यज्ञसाधनभूते पयसि अत्र यज्ञशब्दः । पयसः पवित्रं परिपावनं भवसीत्यर्थः । उखामादत्ते । "द्यौरसि पृथिव्यसि" । "उपस्तौत्येवैनामेतादि"ति श्रुतिः । सा यद्दिवोऽवयवभूतेनोदकेन क्रियते तेन द्यौरित्युच्यते । यत्पृथिव्यवयवभूतया मृदा क्रियते तेन पृथिवीत्युच्यते । मातरिश्वन इत्यधिश्रयति । उखोच्यते । "मातरिश्वनो घर्मोऽसि" । मातरिश्वा वायुः, मातर्यन्तरिक्षे श्वसितीति । वायोः संबन्धी त्वं घर्मोऽसि । त्रयो घर्मा अग्निवायुसूर्यदेवत्याः । तत्र मध्यमघर्मः साधवे त्वेति "अयं वै साधुर्योऽयं पवते" इति । वायुदेवत्यः स त्वमसीत्यर्थः । यतश्च त्वं वायुरतो "विश्वधा असि" सर्वस्य धारयिता भवसि । किञ्च "परमेण धाम्ना दृꣳहस्व" धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति । उत्कृष्टेन नाम्नाभिहिता सती घर्मोऽसीत्यादिना आत्मानं दृꣳहस्व दृढीकुरुष्वेत्यर्थः । "माह्वाः" ह्वृ कौटिल्ये । माह्वार्षीः । दृढीभूतायामपि लुठितायां पयः स्कन्दनं भवति तन्माभूदित्येवमुच्यते । मा च तव यज्ञपतिरधिष्ठानात्प्रच्यवतु ॥ २ ॥

का० ( ४, २, १५, १६ ) वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृद्वेति । वासयति वृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः । यज्ञो वै वसुर्यज्ञस्य पवित्रमसीति श्रुतेः ( १, ७, १, ९ ) । यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यते । हे दर्भमय पवित्र ! 'वसोः' इन्द्रदेवताया निवासहेतोः पयसः

शोधकं 'पवित्रं' त्वम् 'असि' । अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात् । द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते ॥ का० (४, २, १९) द्यौरसीति स्थाल्यादानमिति । यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तद्ग्रहणार्थोऽयं मन्त्रः । हे स्थालि ! मृज्जलाभ्यां निष्पन्ना त्वं 'द्यौरसि' जलहेतुवृष्टिप्रदद्युलोकरूपासि । द्युसम्बन्धात्तद्रूपत्वमस्यामुपचर्य्यते । तथा 'पृथिव्यसि' पृथिव्याः सकाशादुद्धृतया मृदा निष्पन्नत्वात् पृथिवीरूपत्वम् ॥ का० (४, २, २०) मातरिश्वन इत्यधिश्रयतीति । गार्हपत्यादुदीचोऽङ्गारान्निरुह्य तेषूखामधिश्रयति । हे उखे ! त्वं 'मातरिश्वनः' वायोः 'घर्म्मः' दीपकोऽन्तरिक्षलोकोऽसि । मातर्यन्तरिक्षे श्वसिति निश्वासवच्चेष्टां करोतीति मातरिश्वा वायुः । घर्म्मः । घृ क्षरणदीप्त्योः । घर्म्मः दीपकः । सञ्चारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः । हे स्थालि ! तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसञ्चारस्य सद्भावात् त्वमपि वायोर्घर्म्मरूपासि ॥ द्यौरसि पृथिव्यसीति पूर्वमन्त्र लोकद्वयरूपत्वमुखायाः उक्तम् । अत्र मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते । तस्मादेषां त्रयाणां लोकानां धारणात् त्वं 'विश्वधा असि, विश्वं दधातीति विश्वधाः विश्वधारणसमर्थासि लोकत्रयरूपत्वात् । किञ्च 'परमेण धाम्ना' उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे ! त्वं 'दृंहस्व' दृढा भव त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत् । दृहि वृहि वृद्धाविति धातुर्यद्यपि वृद्ध्यर्थस्तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद् दार्ढ्यं नाम कालवृद्धिरेव भवति । किञ्च । हे उखे ! 'मा ह्वाः' कुटिला मा भव । ह्वृ कौटिल्ये । यद्युखा कुटिला भवेत् तदानीमवाङ्मुखायां सत्यां तत्स्थं क्षीरं गलेत् । अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं चार्थ्यते । किञ्च 'ते यज्ञपतिः' तत्सम्बन्धी यजमानः 'मा ह्वार्षीत्' कुटिलो मा भूत् त्वन्निष्ठक्षीरस्कन्दनेनानुष्ठानविघ्न एव यजमानस्य कौटिल्यम् । तत्त्वदीयेन दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ॥ २ ॥

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि

सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा । कामधुक्षः ॥ ३ ॥

'तस्यां पवित्रं निदधाति'। "वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्"। अभ्यासे तूभयं समर्थं मन्यते। अनन्तधारमित्यर्थः। आसिच्यमाने जपति "देवस्त्वासविता" पय उच्यते । देवस्त्वा सविता पुनातु दोषात् पृथक्करोतु निर्दोषं करोतु । वसोः अग्निष्टोमयज्ञस्य सम्बन्धिना आविकेन अनेकधारेण पवित्रेण । "सुप्वा" । शोभनं पुनातीति सुपूः तेन सुप्वा साधुपवनेन पवित्रेण । अथाह "कामधुक्ष" इति। प्रश्नोऽयं गवां मध्ये त्वं कां गाम् अधुक्षः । दुह प्रपूरणे, दुग्धवानसि ॥ ३ ॥

का० (४, २, २१) 'वसोः पवित्रम्' इति पवित्रमस्यां करोत्युदग्वेति । अस्यामुखायां स्थापनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत् कृत्वोदगग्रत्वं विकल्प्यते । हे शाखापवित्र ! 'वसोः' इन्द्रदेवतानिवासहेतोः पयसः शोधकं 'पवित्रं' त्वम् 'असि' । पवित्रेण व्यवधाने सति क्षीरेण सह स्थाल्यां पततां तृणपर्णादीनां प्रतिबध्यमानत्वात् पवित्रस्य क्षीरशोधकत्वम् । किम्भूतं पवित्रम् ? 'शतधारम्' शतसंख्याधारा यस्मिन् । तथा 'सहस्रधारं' सूक्ष्मैः पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावाच्छोधकत्वमाहर्त्तुम् । वसोः पवित्रमिति द्विरुक्तिः । अभ्यासे भूयांसमर्थं मन्यन्ते [ निरु० १० ४१ ] ॥ का० [ ४, २, २ ३ ] 'देवस्त्वेत्यासिच्यमाने जपतीति' । पयो देवता । दोहनादूर्ध्वं स्थाल्यां सिच्यमान हे क्षीर ! 'सविता' प्रेरको देवः पूर्वोक्तरीत्या 'शतधारेण' वसोः पवित्रेण 'त्वा' त्वां 'पुनातु' शोधयतु । सुप्वेति पवित्रविशेषणं सुष्ठु पुनातीति सुपुः तेन 'सुप्वा' 'नुडागमाभाव आर्षः' ॥ का० कामधुक्ष इति प्रश्न इति [ ४, २, २४ ] एकस्यां गवि दुग्धायां दोग्धारम्प्रत्यध्वर्युः पृच्छेत् । हे दोग्धः ! विद्यमानानां गवां मध्ये त्वं 'कां

गाम्' 'अधुक्षः' दुग्धवानसि ॥ ३ ॥

सा विश्वायुः । सा विश्वकर्मा । सा विश्वधायाः । इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष ॥ ४ ॥

अमूमित्युक्ते दोग्धा " साविश्वायु"रित्यर्ध्वयुराह । सा गौः विश्वस्य जगत आयुषो दात्री । द्वितीयामाह । सा गौः " विश्वस्य " जगत " कर्मा " कर्त्री । तृतीयामाह । सा गौः " विश्वस्य " जगतः धायाः । धायतेर्णिजन्तस्यासुनि रूपम् । पाययित्री । यज्ञादेव सर्वाः प्रजा उत्पद्यन्ते आयुर्भोजनसहिताः स गवामुपचर्य्यते । आतनक्ति । " इन्द्रस्य त्वा भागम् " । इन्द्रस्य त्वा भागं सोमेन दध्ना आतनच्मि । तञ्चतिः काठिनीकरणार्थः । दधिभावमापादयामीत्यर्थः । अपिदधाति । " विष्णो हव्यं रक्ष " । "यज्ञो वै विष्णु"रिति श्रुतिः । हविर्गोपाय ॥ ४ ॥

का० [ ४, २, २५ ] प्रोक्ते सा विश्वायुरित्याहेति । पूर्वोक्तप्रश्नस्योत्तरे अमूं गामिति दोग्ध्रा प्रोक्ते सति सा विश्वायुरिति मन्त्रेण दोग्धारम्प्रत्यध्वर्युर्ब्रूयात् । या गौस्त्वया दुग्धा मया च पृष्टा 'सा' विश्वायुःशब्देनाभिधेया । विश्वमायुर्यस्याः सा विश्वायुः । यजमानस्य सम्पूर्णम् आयुः प्रयच्छतीत्यर्थः ॥ का० ( ४, २. २६ ) एवमितरे उत्तराभ्यामिति । यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादूर्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये । दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्म्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात् । या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्म्मा या तृतीया गौस्त्वया पृष्टा सा विश्वधायाः । डुधाञ् धारणपोषणयोः । विश्वान् सर्वान् देवान् दधाति क्षीरदध्यादिहविर्दानेन पुष्णाति इति विश्वधायाः । असुन्प्रत्ययो णिच्च । णित्वादातो युक्चिण्कृतोरिति युक् । यद्वा धेट् पाने ।

विश्वानिन्द्रादिदेवान् क्षीरादिहव्यं धापयति पाययतीति विश्वधायाः ॥ का० (४,२, ३२ ) 'उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति । क्वथितं क्षीरमग्नेरुद्वास्य मन्दोष्णे तत्र प्रातः कालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आतञ्चनं कुर्य्यात् । हे क्षीर ! 'इन्द्रस्य भागं' त्वां 'सोमेन' सोमवल्लीरसेन 'आतनच्मि' दध्यर्थं कठिनीकरोमि । तञ्चतिः कठिनीकरणार्थः । यद्यप्यत्रातञ्चनहेतुर्दधिशेषस्तथापि भावनया तस्यैव सोमत्वं सम्पाद्यते । यथा कश्चित् पुमान् बन्धुत्वेन भावितो बन्धुर्भवति प्रातिकूल्येन भावितः शत्रुश्च । तदुक्तं वसिष्ठेन—'बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः । विषामृतदृशैवेह स्थितिर्भावनिबन्धिनीति । भोज्यं वा विषत्वेन भावितं वान्ति करोति । अमृतत्वेन भावितं जीर्णं सद्बलहेतुर्भवति । तथात्र दधिशेषस्य भावनया सोमत्वम् ॥ का० (४, २, ३४ ) 'सोदकेनापि दधात्यमृण्मयेन विष्णो हव्यमितीति । हे 'विष्णो' इदं 'हव्यं' क्षीरं 'रक्ष' । सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वरा अभिमानिन्यो देवताः । अतो विष्णुं सम्बोध्य हविषो रक्षा प्रार्थ्यते ॥ ४ ॥

अग्ने॑ व्रतपते व्रतञ्च॑रिष्यामि तच्छ॑केयं॒ तन्मे॑ राध्यताम् । इ॒दम॒हमनृ॑तात्स॒त्यमुपै॑मि ॥ ५ ॥

व्रतमुपैति । "अग्नेव्रतपते" हे भगवन्नग्ने व्रतस्य पते व्रतं सत्यादिकं चरिष्यामि । तद्व्रतं तव प्रसादात् शकेयं शक्नुयाम् । शक्तं च तन्मे मम राध्यताम् सिध्यताम् । यज्ञफलेन समृद्धिराशास्यते । अनेन वा अग्निरुच्यते । इदमहं त्वत्साक्षिकम् अनृताद् असत्यात् सत्यमुपगच्छामि ॥ ५ ॥

का० ( २, १, ११ ) अपरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमितिवेति । हे व्रतपते ! व्रतस्यानुष्ठेयस्य कर्मणः पते पालक ! हे अग्ने ! त्वदनुज्ञया व्रतं चरिष्यामि कर्मानुष्ठास्यामि । 'तत् शकेयम्' तत्कर्मानुष्ठातुं शक्तो भूयासं त्वत्प्रसादात् । 'तन्मे राध्यतां' मदीयं तत्कर्म निर्विघ्नं सत् फलपर्य्यन्तं सिध्यतु । शकेराशीर्लिङ्यासुट् । लिङ्याशि-

ष्यङ् अतो येयः गुणः शकेयम् । अग्निर्वै देवानां व्रतपतिरिति श्रुतिः ( १, १, १, २ )॥ इदमहम् ॥ 'अहं' यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य 'सत्यं' देवताशरीरम् 'उपैमि' प्राप्नोमि। सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशिनष्टि । अनृतं मनुष्यजन्म शीघ्रविनाशित्वात् । यथा स्वप्नगजादयो बोधमात्रेण शीघ्रं निवर्त्तमाना अनृता उच्यन्ते । सत्यं देवजन्म बहुकालस्थायित्वात् । यथा जागरणगजादयः। श्रुतिरपि ( १, १, १, ४ ) इदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपावर्तत इति । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये। नानृतं वदेदिति कर्मण्यनृतनिषेधात् । अनृतवदनादुद्धृत्याहमिदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्माङ्गत्वात्कर्मकाले पालनीयम् ॥५॥

कस्त्वा॑ युनक्ति॒ स त्वा॑ युनक्ति॒ कस्मै॑ त्वा युनक्ति॒ तस्मै॑ त्वा युनक्ति । कर्म॑णे वा॒ं वेषा॑य वाम् ॥ ६ ॥

अपः प्रणयति। "कस्त्वा युनक्ति"। यज्ञस्यारम्भकर्मणि आत्मनः कर्तृत्वमपनीयाध्वर्युः प्रजापतेर्यज्ञस्य कर्तृत्वमाह। अत्र चत्वारि सर्वनामानि तत्र प्रथमतृतीये प्रश्नभूते द्वितीयचतुर्थे प्रतिप्रश्नभूते। "कस्त्वा युनक्ति"। हे यज्ञ प्रजापते न मनुष्यः सतु यज्ञः प्रजापतिः त्वां युनक्ति। कस्मै प्रयोजनाय युनक्तीत्यध्वर्युराशङ्क्योत्तरं ददाति । " तस्मै " प्रयोजनाय " युनक्ति "। यज्ञादुत्पत्तिः स्थितिश्च जगतः अतोऽनेन सर्वनाम्ना तदेव निर्दिश्यते। सूर्प्पं चाग्निहोत्रहवणीं चादत्ते । " कर्मणे वाम् " यज्ञकर्मणे वां युवाम् अहमाददे इति वाक्यशेषः। " वेषाय " । विषॢ व्याप्तौ । यज्ञव्याप्त्यर्थं वां युवाम् अहमाददे इति च ॥ ६ ॥

एवं व्रतमुपेत्य ब्रह्माणं वृत्वापां प्रणयनं कुर्यात् । का० [ २, ३, २, ३ ] ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याहानुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति कस्त्वा युनक्तीति । अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणी-

तानामपां धारक हे पात्र ! त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति 'सः' एव परमेश्वरः हे पात्र 'त्वा युनक्ति'—इत्युत्तरम् । पुनरपि 'कस्मै' प्रयोजनाय 'त्वा युनक्ति'—इति प्रश्नः । 'तस्मै' प्रजापतये तत्प्रीत्यर्थं 'त्वा युनक्ति'—इत्युत्तरम् । सर्वकर्माणि परमेश्वरप्रीत्यर्थमनुष्ठेयानीति भगवद्गीतास्वर्जुनं प्रति भगवतोक्तम् परिस्तीर्य द्वन्द्वशः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते । का० ( २, ३, १० ] कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादायेति ॥ 'कर्मणे' हे अग्निहोत्रहवणि ! हे शूर्प ! वां युवां कर्मार्थमहमाददे इति शेषः । 'वेषाय' च । विष्लृ व्याप्तौ । घञ् । वेषो व्याप्तिः । सूचितकर्मसु व्याप्त्यर्थं च 'वां' युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रोक्षणार्थोदकधारणमित्यादयोऽग्निहोत्रहवणीव्यापाराः । व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनरुद्धरणं चेत्यादयः शूर्पव्यापाराः ॥ ६ ॥

**प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः । निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥ ७ ॥**

प्रतपति " प्रत्युष्टम् " । उष दाहे प्रतिज्ञाय दग्धं रक्षः, प्रतिज्ञाय च दग्धा अरातयः । न विद्यते रातिर्दानं येषां ते अरातयः । अनेन वा " निष्टप्तम् " । तप सन्तापे निरेतस्य स्थाने नितरां तप्तं रक्षः न तु यज्ञतत्साधनमित्यभिप्रायः । उक्तमन्यत् । गच्छाति । " उर्वन्तरिक्षम् " । यद्यपि रक्षोभिराकुलमन्तरिक्षं तथाप्यनेन यजुषा ऊरु विस्तीर्णं कृत्वा अन्वेमि प्रतिगच्छामि ॥ ७ ॥

का० ( २, ३, ११ ) प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति । 'रक्षः' राक्षसजातिः । 'प्रत्युष्टं' प्रत्येकं दग्धम् । उष दाहे । अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः । अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः । रा दाने । हविषो दक्षिणाया वा

दानं रातिः । रातेः प्रति बन्धका अरातयस्तेऽपि दग्धा अन्यथा न यज्ञसाधनमित्यर्थः । शूर्पादौ निगूढं 'रक्षो निष्टप्तं' निःशेषेण तप्तं सन्तप्तम् । तप सन्तापे । 'अरातयः' च निष्टप्ताः । अनयोर्मन्त्रयोर्विकल्पः ॥ का० गच्छत्युर्वन्तरिक्षमितीति । 'उरु, विस्तीर्णम् 'अन्तरिक्षम्' अवकाशम् 'अन्वेमि' अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियते इत्याशयः ॥ ७ ॥

धूर॑सि॒ धूर्व॒ धूर्व॑न्तं॒ धूर्व॒ तं योऽस्मान् धूर्व॑ति॒ तं धूर्व॒ यं व॒यं धूर्वा॑मः । दे॒वाना॑मसि॒ वह्नि॑तम॒ꣳ सस्नि॑तमं प॒प्रि॑तम॒ं जुष्ट॑तमं दे॒वहू॑तमम् ॥ ८ ॥

धुरमभिमृशति । "धूरसि" । अनसोऽवयवं धुरं स्तौति । तत्र श्रुतिः " अग्निर्वा एष धुर्यस्तमेतदत्येष्यनब्रवीतीति " । हविर्ग्रहीष्यन् धुर्यमग्निं ब्रवीति । "धूरसि" । धूर्वतेर्वधकर्मणः । धूर्वणक्रियानिमित्तं हि ते नाम अतो ब्रवीमि "धूर्व धूर्वन्तम्" । हिन्धि हिंसन्तम् । " धूर्व तम् " हिन्धि तम् " योऽस्मान् धूर्वति " । योस्मान् हिनस्ति । " तं धूर्व यं वयं धूर्वामः " तं पुरुषं हिन्धि यं वयं हिंस्मः । अनस उपस्तम्भनमभिमृशति " देवानामसि " । अन उच्यते देवानामग्न्यादीनां त्वं भवसि । "वन्हितमम्" वन्हिर्वोढा वोढृतमम् । सर्वे तमपः अतिशयार्थाः । "सस्नितमम्" स्नै वेष्टने । आदृगमहनेत्यादिना किन्प्रत्ययः । चर्मणा स्नायुना परिवृततमम् । अथ वा पार्श्वतः काशैर्गोणिपटैश्च परिवृततमम् । "पप्रितमम्" । प्रा पूरणे पूर्ववत्किन् प्रत्ययः । हविषा पूर्णतमम् । "जुष्टतमम्" । जुषी प्रीतिसेवनयोः । अभिप्रेततमम् । सेविततमं वा । "देवहूतमम्" । देवानाहूयतीति देवहूः देवानामाह्वातृतमम् ॥ ८ ॥

का० ( २, ३, १२, १३ ) श्रपणस्य पश्चादनस्तिष्ठन्तसमञ्जिधूरसीति धुरभिमर्शनमिति । अस्यायमर्थः—'श्रपणस्य पुरोडाश-

म् । अयं तु विशेषः । तत्र यज्ञं युनक्ति इह तु विमुञ्चति । "पोषाय" यजमानस्य पोषायं निनयामीति शेषः । कणानपास्यति । "रक्षसां भागोऽसी"ति । निगदव्याख्यातम् ॥ २३ ॥

का० ( ३, ८, ६ ) वेद्यां प्रणीता निनयति परीत्य कस्त्वेति । व्याख्यातः [ अध्या० १, ६ ) मन्त्रः प्रजापतिर्देवतः तत्र यज्ञयोगे नियुक्तः अत्र तु यज्ञविमोके । पोषाय यजमानं पुत्रादिभिः पोषयितुं त्वां निनयामीति शेषः । यज्ञं प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोकः कार्य्यः । यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवतीति श्रुत्यन्तरवचनात् ॥ का० ( ३, ८, ७ ) पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳ रक्षसामितीति । हे कण समूह ! त्वं रक्षसां भागोऽसि तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्तः ॥ २३ ॥

**सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ २४ ॥**

इत उत्तरं याजमानं, पूर्णपात्रम्प्रतिगृह्णाति । "संवर्चसेति" त्वाष्ट्री त्रिष्टुप् । समित्युपसर्गः अगन्महीत्याख्यातेन सम्बध्यते । समगन्महि । "ब्रह्मवर्चसा" ब्रह्मवर्चसेन । "पयसा" गोभिः "तनूभिः" भार्यापुत्रादिभिः । "मनसा" च "शिवेन" शान्तेन । यज्ञमुपगच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्च आदि अतोऽनेन पुनराप्यायति । किञ्च "त्वष्टा सुदत्रः" कल्याणदानः विदधातु "रायो" धनानि । किञ्च "अनुमार्ष्टु" शुन्धयतु "तन्वः" शरीरस्य "यद्विलिष्टम्" विश्लिष्टम् ॥ २४ ॥

त्वष्टृदेवत्या त्रिष्टुप् । इतः परं याजमानम् ॥ का० (३, ८,८,-१०) पूर्णपात्रं निनयति परीत्य सन्नतं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति मुखं विमृष्ट इति । समित्युपसर्गोऽगन्महीत्यनेन सम्बद्धः प्रत्येकम् । वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सङ्गता भवामः ।

पयसा क्षीरादिरसेन समगन्महि । तनूभिरनुष्ठानक्षमैः शरीरावयवैः यद्वा तनूभिर्भार्य्यापुत्रादिभिः समगन्महि । शिवेन शान्तेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । यज्ञमुपगच्छतो नरस्य वर्चसाद्युपैति तदनेन पुनराप्याययति । किञ्च सुदत्रः शोभनदानः त्वष्टा राया धनानि विदधातु करोतु । तन्वः शरीरस्य मदीयस्य यत् विलिष्टं विशेषेण न्यूनमङ्गं तदनुमार्ष्टु । न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु । धनस्य शरीरस्य पुष्टिं करोत्वित्यर्थः ॥ सुष्ठु ददातीति सुदत्रः । सुपूर्वाद्ददातेः ष्ट्रन् । सार्वधातुभ्य इति ष्ट्रन् । बाहुलकत्वाद्भस्त्रः ॥ २४ ॥

दिवि विष्णुर्व्यक्रꣲस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । अन्तरिक्षे विष्णुर्व्यक्रꣲस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । पृथिव्यां विष्णुर्व्यक्रꣲस्त गायत्रेण छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । अस्मादन्नात् । अस्यै प्रतिष्ठायै । अगन्म स्वः । संज्योतिषाभूम ॥ २५ ॥

विष्णुक्रमान् क्रमते । "दिवि विष्णुः" द्युलोके विष्णुर्यज्ञो मदीयः "व्यक्रंस्त" विक्रान्तवान् । "जागतेन छन्दसा" "ततो निर्भक्तः" । ततो द्युलोकात् निर्भक्तो निर्गतभागः कृतः । "योस्मान् द्वेष्टि" हिंनस्ति । "यं च वयं द्विष्मः" हिंस्मः । अनेनोत्तरावपिमन्त्रौ व्याख्यातौ । भागमवेक्षते । "अस्मादन्नात् अस्मात् यज्ञभागात् । निर्भक्त इत्यनुषङ्गः । भूमिमवेक्षते । "अस्यै प्रतिष्ठायै" । अस्या भूमेः प्रतिष्ठायाः निर्भक्त इत्यनुषङ्गः । प्राङीक्षते । "अगन्म स्वः" । अनेन कर्मणा अगन्म गताः । कम्, स्वर्गं यज्ञं सूर्यं देवान् । स्वरव्ययमनेकार्थम् । आहवनीयमीक्षते । "संज्योतिषाभूम" समित्येकीभावमाचष्टे आहव-

नीयलक्षणेन ज्योतिषा एकीभूताः ॥ २५ ॥

का० ( ३, ८, ११ ) विष्णुक्रमान् क्रमते दिवि विष्णुरिति मन्त्रमिति । विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः।विष्णुर्यज्ञपुरुषः । जागतेन छन्दसा जगतीछन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान् । तथा सति ततो द्युलोकात् निर्भक्तो भागरहितः कृत्वा निःसारितः । कः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।योऽस्मान् दृष्ट्वा न प्रीयते यंच दृष्ट्वा वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः । एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ ॥ का० [ ३, ८, १३ ) अस्मादन्नादिति भागमवेक्षत इति । योऽयम्भागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्य शेषोऽनुवर्त्तनीयः ॥ का० (३, ८, १४) अस्यै प्रतिष्ठाया इति भूमिमिति । अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्त्तते । अस्यै अस्याः पुरतो दृश्यमानायाः प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त इत्यादि पूर्ववत् ॥ का० ( ३, ८, १५ ) अगन्म स्वरिति प्रागिति । पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः । यज्ञानुष्ठानेन । का० [ ३, ८, १६ ] संज्योतिषेत्याहवनीयमिति । ज्योतिषाहवनीयलक्षणेन वयं समभूम सङ्गता अभूम ॥ २५ ॥

स्व॒य॒म्भूर॑सि॒ श्रेष्ठो॑ र॒श्मिर्व॑र्चो॒दा अ॑सि॒ वर्चो॑ मे देहि । सूर्य्य॑स्या॒वृत॒मन्वाव॑र्त्ते ॥ २६ ॥

सूर्यमुदीक्षते । "स्वयंभूरासि" । अकृतकस्त्वं भवासि । "श्रेष्ठः" प्रशस्ततमः "रश्मिः" । सप्त रश्मय आदित्यस्य तत्र चतसृषु दिक्षु चत्वारो रश्मयः । एकोऽधस्तादेक उपरिष्टात् । मण्डलशरीराहंमानी हिरण्यगर्भाख्यः पुरुषः सप्तमः श्रेष्ठोरश्मिरिति । तथाच श्रुतिः । "अथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोक" इति । यस्त्वं स्वयंभूरासि श्रेष्ठश्च रश्मिस्तं त्वां ब्रवीमि । "वर्चोदा आसि" । ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दातासि, अतो वर्चोमे मह्यं "देहि" । आवर्तते ।

"सूर्यस्यावृतम्" । आवर्त्तनमावृत् । सूर्यस्यावर्त्तन"मनु" अहम् "आवर्त्ते" । "तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमनु आवर्त्तत" इति श्रुतिः ॥ २६ ॥

का० ( ३, ८, १७ ) स्वयम्भूरिति सूर्य्यमिति । हे सूर्य्य ! त्वं स्वयम्भूरकृतकः स्वयंसिद्धोऽसि । श्रेष्ठो प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भाख्योऽसि । सूर्य्यस्य सप्त रश्मयः सन्ति । चतुर्दिक्षु चत्वारः । एक उपर्य्येकोऽधस्तात् सप्तमो मण्डलाभिमानी हिरण्यगर्भः पुरुषः स श्रेष्ठः स त्वमसि । यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि ॥ ( ३, ८, १९ ) सूर्य्यस्येत्यावर्त्तते प्रदक्षिणमिति । आवर्त्तनमावृत् । सूर्य्यस्य सम्बन्धिनमावृतमावर्त्तनमनुसृत्याहमपि आवर्त्ते प्रादक्षिण्येन वर्त्तनं करोमि ॥ २६ ॥

अग्ने॑ गृहपते सुगृहप॒तिस्त्वया॑ग्ने॒ऽहं गृ॒हप॑तिना भूयासꣳ सुगृहप॒तिस्त्वं मया॑ग्ने गृहप॑तिना भूया॒ः । अ॒स्थूरि॒णौ गार्ह॑पत्यानि सन्तु श॒तꣳ हि॒माः । सूर्य॑स्या॒वृत॒मन्वाव॑र्त्ते ॥ २७ ॥

गार्हपत्यमुपतिष्ठते । "अग्ने गृहपते" हे भगवन्नग्ने गृहपते "सुगृहपतिः शोभनो गृहपतिः अहं त्वया गृहपतिना गृहाणां पालयित्रा भूयासं भवेयम् । किञ्च "सुगृहपतिस्त्वं मया अग्ने" "सहायेन गृहपतिना भूयाः" भवेः । एवमनेन प्रकारेण । "अस्थूरिणौ गार्हपत्यानि सन्तु" । अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते । तत्त्वतः प्रतिषिध्यते अस्थूरीति । लुप्तोपमञ्चैतत् । यथा उभयतो युक्तं शकटम्, एवं नौ आवयोः "गार्हपत्यानि" गृहपतिसंयुक्तानि कर्माणि "सन्तु" । "शतं हिमाः" शतं वर्षाणि । अथावर्त्तते । "सूर्यस्यावृतमन्वावर्त्ते" इति । व्याख्यातम् ॥ २७ ॥

का० ( ३, ८, २१ ) गार्हपत्यमुपतिष्ठतेऽग्नेगृहपत इति। हे गृहपते! अस्मदीयगृहस्य पालक! हे अग्ने! त्वया गृहपतिना गृहपालकेन कृत्वा त्वत्प्रसादेनेत्यर्थः। अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम्। तथा हे अग्ने! त्वमपि मया गृहपतिना मदीयसेवयेत्यर्थः। सुगृहपतिः शोभनो गृहपालको भूयाः भव। अग्ने पदस्यावृत्तिरादरार्था। एवं सति नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमाः वर्षाणि शतवर्षपर्य्यन्तमस्थूरीव सन्तु। निरन्तरमव्यवहितानि प्रवर्त्तन्ताम्। एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि न स्थूरि अस्थूरि। लुप्तोपमानम्। बलीवर्दयुक्तं शकटं यथा निरन्तरम् अव्यवहितं प्रसरति तथास्माकं गार्हपत्यानि सन्तु। गृहपतिना संयुक्ते ञ्य इति ञ्यप्रत्ययः॥ का० ( ३, ८, २३ ) सूर्य्यस्येत्यावर्त्तते प्रदक्षिणमिति। व्याख्यातम्॥ २७॥

अग्ने॑ व्रतपते व्रतम॑चारिषं॒ तद॑शकं॒ तन्मे॑ऽराधि।
इ॒दम॒हं य ए॒वास्मि॒ सो॑ऽस्मि॥ २८॥

व्रतं विसृजते। "अग्ने व्रतपते" हे अग्ने व्रतपते "व्रतमहम्। अचारिषं" चरितवानस्मि। "तदशकं" शक्तवानस्मि। "तन्मे" मम "आराधि" राद्धं फलम् अभिसमृद्धमित्यर्थः। द्वितीयो व्रतविसर्गमन्त्रः। "इदमहम्" हे अग्ने त्वत्साक्षिकं व्रतं गृहीत्वा इदं कर्म समाप्य य एव कर्मणः पुरा अहमस्मि मनुष्यः स एवास्मि॥ २८॥

का० ( ३, ८, २९ ) व्रतं विसृजते येनोपेयादिति। व्रतग्रहणे मन्त्रद्वयमुक्तं तयोर्मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा। अत्रापि तदनुसारेण व्रतं विसृजेत्। हे अग्ने! हे व्रतपते कर्मपालक! व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शकितवान्। त्वत्प्रसादात्तत्कर्मशक्तोऽभवम्। त्वया च तन्मे मदीयं कर्म अराधि साधितम्। द्वितीयो मन्त्रः। हे अग्ने! इदं कर्म समाप्य योऽहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि॥ २८॥

इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः॥

अ॒ग्नये॑ कव्य॒वाह॑नाय॒ स्वाहा॑ । सोमा॑य पितृ॒मते॑ स्वाहा॑ । अप॑हता॒ असु॑रा॒ रक्षा॑ᳪसि वेदि॒षद॑: ॥ २९ ॥

अतः परं पिण्डपितृयज्ञिया मन्त्राः । प्रजापतेरार्षम् । अग्नौ जुहोति। "अग्नये कव्यवाहनाय स्वाहा"। कवयः क्रान्तदर्शनाःपितरस्तेषां सम्बन्धि हविः कव्यम् । तद्वोढव्यं यस्यायमधिकारः स कव्यवाहनः । "सोमाय पितृमते स्वाहा"। पितृमान् पितृसंयुक्तः । वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति लिङ्गाद्दैवावेतौ मन्त्रौ। उल्लिखति । "अपहताः" अपहताः अस्मात् स्थानात् "असुराः रक्षांसि च वेदिषदः" वेद्यां सीदन्तीति वेदिषदः ॥ २९ ॥

अतः परं पिण्डपितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः ॥

का० [ ४, १, ७ ] सारतण्डुलमपूर्णᳪ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च । कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि कव्यं हविः । तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः । तस्मै अग्नये स्वाहा हविर्दत्तम् । पितृमान् पितृसंयुक्तः तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तम् । स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नदानश्रुतेर्दैवाविमौ मन्त्रौ ॥ का० ( ४, १, ८ ) दक्षिणेनोल्लिखत्यपहता इतीति। वेद्यां सीदन्ति वेदिषदः तादृशा असुराः अपहता वेदिसकाशादपगताः । तथा रक्षांसि वेद्या अपहतानि । असुरत्वं रक्षस्त्वं चेति जातिविशेषौ देवविरोधिनौ॥२९॥

ये रू॒पाणि॑ प्रतिमु॒ञ्चमा॑ना॒ असु॑रा॒: सन्त॑: स्व॒धया॒ चर॑न्ति। प॒रा॒पुरो॑ नि॒पुरो॒ ये भर॑न्त्य॒ग्निष्टाँल्लो॒कात् प्रणु॑दात्य॒स्मात् ॥ ३० ॥

उल्मुकं परस्तात्करोति ये रूपाणीति। त्रिष्टुबाग्नेयी । "ये रूपाणि प्रतिमुञ्चमानाः" । ये पितृरूपाणि आत्मनि प्रतिमुञ्चमानाः । प्रतिपूर्वो मुञ्चतिर्बन्धने वर्त्तते। आत्मनि

बध्नन्तः"असुराः सन्तो "भवन्तः "स्वधया"पित्र्येणान्नेन हेतुभूतेन अस्माभिरेतत्स्वादितव्यमिति चरन्ति सञ्चरन्ति। किञ्च "परापुरः" पराक्रान्ताः पुरः परापुरः। शरीराणि महान्तीति "निपुरः" निकृष्टाः पुरो निपुरः। सूक्ष्माणि शरीराणि ये "भरन्ति ये बिभ्रति धारयन्ति "अग्निस्तान्" असुरान्"लोकात्"स्थानात् "प्रणुदाति"प्रणुदतु प्रेरयतु। अस्मात्पितृलोकात् ॥ ३० ॥

का० (४, १, ९) उल्मुकं परस्तात्करोति ये रूपाणीति। इयं त्रिष्टुप् कव्यवाहनाग्निदेवत्या। स्वधया पैतृकान्नेन निमित्तेन पितॄणामन्नमस्माभिर्भक्षणीयमिति हेतोः स्वीयरूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः सन्तो ये असुराः देवविरोधिनश्चरन्ति पितृयज्ञस्थाने प्रसरन्ति। तथा ये असुराः परापुरः निपुरश्च भरन्ति। पराक्रान्ताः पुरः परापुरः स्थूलदेहान्। निकृष्टाः पुरः निपुरः सूक्ष्मदेहान् ये धारयन्ति। स्वमसुरत्वं प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रति। अग्निरुल्मुकरूपः। अस्माल्लोकात् पितृयज्ञस्थानात्तानसुरान् प्रणुदाति प्रणुदतु प्रेरयतु प्रकर्षेणापसारयत्वित्यर्थः ॥ ३० ॥

अत्र॑ पितरो मादयध्वं यथाभा॒गमावृ॑षायध्वम्।
अमी॑मदन्त पि॒तरो॑ यथाभा॒गमावृ॑षायिषत ॥ ३१ ॥

उदङ्ङास्ते। "अत्र पितरः"। बृहती। अत्र अस्मिन्बर्हिषि हे पितरः "मादयध्वं" मोदयध्वम्। किञ्च "यथाभागं" यो यस्य भागः तं तथा भागम्। "आवृषायध्वम्"। आङ्पूर्वाद् वृषशब्दा'त्कर्तुःक्यङ् सलोपश्चेति क्यङ्। वृष इव स्वेच्छया महद्भिर्ग्रासैरेतान् पिण्डानश्नीत। आवृत्यामीमदन्तेति जपति। "अमीमदन्त" हर्षं प्राप्तवन्तः पितरो "यथाविभागं" च "आवृषायिषत"। अशितवन्तः। "यथाभागमाशिषुरित्येवैतदाहेति" श्रुतिः ॥ ३१ ॥

का० (४, १, १३, १४) अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनादावृत्यामीमदन्तेति जपतीति । आ तमनात् श्वासनिरोधेन ग्लानिपर्य्यन्तमुदङ्मुख आस्त इति सूत्रार्थः । हे पितरः ! यूयमत्रास्मिन् बर्हिषि मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद्वृषवदाचरत । यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्तिपर्य्यन्तं स्वीकरोति तद्वत् स्वीकुरुत । आङ्पूर्वाद् वृषशब्दात्कर्त्तुः क्यङ् सलोपश्चेति क्यङ् ततो लोट् । पितरः अमीमदन्त । यान् पितॄन् प्रति मादयध्वमित्युक्तं ते पितरोऽमीमदन्त हृष्टाः यथाभागमावृषायिषत स्वं भागमनतिक्रम्य वृषवत् स्वीचक्रुः । लुङि रूपम् । यथाभागमाशिषुरित्येवैतदाहेति श्रुतिः (२, ४, २, २२) भागं स्वं जक्षुरित्यर्थः ॥ ३१ ॥

नमो॑ वः पितरो॒ रसा॑य । नमो॑ वः पितरः॒ शोषा॑य । नमो॑ वः पितरो॒ जी॒वाय॑ । नमो॑ वः पितरः स्व॒धायै॑ । नमो॑ वः पितरो॒ घो॒राय॑ । नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरः॒ पित॑रो॒ नमो॑ वः । गृ॒हान्नः पितरो दत्त स॒तो वः पितरो देष्म । ए॒तद्वः पितरो॒ वास॒ आध॑त्त ॥ ३२ ॥

नमो व इत्यञ्जलिं करोति । षट्कृत्वो नमस्करोति "षड्वा ऋतवः पितर" इति श्रुतिः । व्याख्यातम् । "नमो वः पितरो रसाय" हे पितरः वः युष्माकं संबन्धिने रसाय रसभूताय वसन्ताय नमः । वसन्ते हि मध्वादयो रसाः संभवन्तीत्यत एवं नमस्क्रियते । एवं वक्ष्यमाणा अपि मन्त्रा व्याख्येयाः । "शोषाय" शोषप्रभावाय ग्रीष्माय नमः । शुष्यन्ति हि ग्रीष्मे ओषधयः । "जीवाय" जीवनहेतुभूताय वर्षाभ्यो नमः । "स्वधायै" स्वधा वै शरत् स्वधा वै पितॄणामन्नमिति' श्रुतिः । शरदि हि प्रायशोऽन्नानि भवन्ति । "घोराय" विषमाय । विषमो हि हेमन्तः प्राणिनां शीतप्रचुरत्वात् । मन्यवे मन्युः क्रोधः । क्रोध इव

हि शिशिर ओषधीर्दहति । "नमो वः पितरः पितरो नमो वः" अभ्यासे महत्प्रयोजनं समर्थं मन्यन्ते । "गृहान्नः पितरो दत्त"। भार्यापुत्रपौत्रादयो गृहा उच्यन्ते । गृहान्नः अस्मभ्यं हे पितरो दत्त । किञ्च तथा युष्मत्प्रसादादस्माकं भवतु यथा नः गृहे सतो विद्यमानान् द्रव्यान् "वो" युष्मभ्यं दद्म । सूत्राणि ददाति । "एतद्वः युष्माकं हे पितरो "वासः" परिधानम् ॥ ३२ ॥

का० ( ४, १, १५ ) नमो व इत्यञ्जलिं करोतीति । षट्कृत्वो नमस्करोति। षड् वा ऋतवः पितर इति श्रुतेः रसादिशब्देन वसन्तादिषड्ऋतव उच्यन्ते। ते च पितॄणां स्वरूपभूता अतस्तेभ्यो नमस्करोति। हे पितरः ! वो युष्माकं सम्बन्धिने रसाय रसभूताय वसन्ताय नमः । यतो मध्वादयो रसा वृक्षेषु जायन्तेऽतो रसशब्देन वसन्तः। युष्मद्रूपाय वसन्ताय नमइत्यर्थः । एवमग्रेतना मन्त्रा व्याख्येयाः। शोषाय । शुष्यन्त्यौषधयो यत्रेति शोषो ग्रीष्मः । जीवनहेतुभूताय जलाय वर्षर्त्तवे । स्वधायै । शरदे । स्वधा वै शरत् स्वधा वै पितॄणामन्नमिति श्रुतेः । शरदि हि प्रायशोऽन्नानि भवन्ति । घोराय । विषमाय हेमन्ताय । हेमन्तः शीतप्रचरत्वेन दुःखदत्वात् घोरः । मन्यवे । मन्युः क्रोधः । तद्रूपाय शिशिराय । शिशिरस्तु क्रोध इवौषधीर्दहति। हे पितरः। एवंविध ऋतुरूपेभ्यो वो युष्मभ्यं नमः हे पितरः ! वो नम इत्यभ्यास आदरातिशयार्थः । हे पितरः ! नोऽस्मभ्यं गृहान् दत्त । भार्य्यापुत्रपौत्रादयो गृहाः । हे पितरः ! वो युष्मभ्यं सतः विद्यमानात् देष्म ददामः । सतो धनाद् युष्मभ्यमस्माभिर्दातव्यम् । ददतामस्माकं कदाचिद् द्रव्यक्षयो मास्त्वित्यर्थः ॥ का० ( ४, ७, १८ ) एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णा दशा वा वयस्युत्तरे यजमानलोमानि वेति । हे पितरः ! वो युष्मभ्यमेतद्वासः सूत्रमेव परिधानमस्तु ॥ ३२ ॥

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥ ३३ ॥

मध्यपिण्डं प्राश्नाति पुत्रकामा । "आधत्त" गायत्री । हे पितरः

आधत्त "गर्भम्" । "कुमारं पुष्करस्रजम्" । स्रक्शब्देन मुण्डमालोच्यते । पुष्करशब्देन पद्मानि । अश्विनौ पुष्करस्रजौ अश्विभ्यां पुत्रोपमानं क्रियते । किञ्च यथा येन प्रकारेण "इह" अस्मिन्नेव ऋतौ "पुरुषः" पूरयिता देवपितृमनुष्याणाम् । "असत्" । भूयात् तथा आधत्तेति सम्बन्धः ॥ ३३ ॥

का० ( ४, १, २२ ) आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति । गायत्री पितृदेवत्या । हे पितरः ! यथा इहास्मिन्नेव ऋतौ पुरुषः असत् पुरुषः देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता भूयात् तथा कुमारं गर्भं पुत्ररूपं गर्भं यूयमाधत्त सम्पादयत । किम्भूतं कुमारं येन प्रकारेणेह पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ । अश्विनौ । अश्विनीकुमारौ पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ । तत्तुल्यः कुमारः पुष्करस्रक् तम् । अश्विसाम्यकथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ॥ ३३ ॥

ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
द्वितीयोऽध्यायः ॥ २ ॥

अपो निनयति । "ऊर्जं वहन्ती" । अब्दैवत्या विराट् । हे आपः यूयम् ऊर्जमन्नं वहन्त्यो नानाविधम् "अमृतं घृतं पयः कीलालम्" । अन्नरसम् । कीले अलं पर्याप्तः समर्थोऽन्नमिष्टं कर्तुं रस इति कीलालः । कीलं बन्धनम् । अलमत्यन्तमन्नस्येति वा कीलालम् । "तस्माद्यावन्मात्र इवान्नस्य रसः सर्वमन्नमवतीत्यादि"श्रुतिः । "परिस्रुतम्" । सुराम् । "स्वधा स्थ" "स्वधा वै पितृणामन्नमि"ति श्रुतिः । डुधाञ् धारणपोषणयोः । स्वमात्मीयं पितॄणां धानं पोषणं स्वधा स्थ । "तर्पयत मे पितॄन् ।" स्वधा भवथ ततस्तर्पयत मे पितॄन् ॥ ३४ ॥

इति उव्वटकृतौ मन्त्रभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

का० ( ४, १, १९ ) ऊर्जमित्यपो निषिञ्चतीति। अब्देवत्या विराट्। हे आपः! यूयं स्वधा स्थ पित्र्यहविःस्वरूपा भवथ। अतो मे पितॄंस्तर्पयत। कथम्भूता आपः। परिस्रुतं वहन्तीः पुष्पेभ्यो निःसृतं सारं वहन्त्यः। तच्च सारं त्रिविधम् ऊर्जशब्देन घृतशब्देन पयःशब्देन चाभिधेयम् तत्रोर्जशब्दोऽन्नगतं स्वादुत्वमभिधत्ते। घृतपयसी प्रसिद्धे। तच्च त्रिविधमपि कीदृशममृतं सर्वरोगविनाशकं मृत्युनाशकं च। नास्ति मृतं यस्मात्तत् पुनः कीदृशं कीलालम्। कील बन्धने। कीलनं कीलो बन्धः। तमलति वारयतीति कीलालम्। अलं वारणपर्य्याप्त्योरिति धातुः सर्वबन्धनिवर्त्तकम्। ईदृशास्य त्रिविधस्य सारस्य वहनादपां पितृतर्पकत्वमुपपन्नम् ॥३४॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
इध्मप्रोक्षादिपित्र्यान्तो द्वितीयोऽध्याय ईरितः ॥ २ ॥

---

## तृतीयोऽध्यायः।

**समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। अस्मिन् हव्या जुहोतन ॥ १ ॥**

"समिधाग्निम्"। आधानमन्त्राः। प्रागग्निर्ज्योतिरित्येतेभ्यः। देवानामार्षं प्रजापतेर्वाग्नेर्वा। आग्नेय्यश्चतस्रो गायत्र्यः। आश्वत्थीस्तिस्रः। समिधो घृताक्ता आदधाति। "समिधाग्निं दुवस्यत"। समिधाश्वत्थसमिधा अग्निं दुवस्यत। दुवस्यतिः परिचरणार्थः। परिचरत। ततो जातं सन्तम् पूर्णाहुतिसम्बन्धिभिर्घृतै"र्बोधयत" अवगतार्थं कुरुत। "अतिथिम्" अतिथिधर्माणम्। ततोऽनन्तरं तनूहविःसम्बन्धिनि "अस्मिन् हव्यांजुहोतन"। आजुहुत अस्मिन्नग्नौ हव्या हवींषि ॥ १ ॥

अध्यायद्वयेन दर्शपौर्णमासेष्टिविषया मन्त्रा उक्ताः। अथाधानमन्त्रा उच्यन्ते प्रागग्निर्ज्योतिरित्यन्तेभ्यः ( ख० ९ )। देवानां

प्रजापतेरग्नेर्गन्धर्वाणां वार्षम् । आग्नेय्यश्चतस्रो गायत्र्यः । तत्र कात्यायनः ( ४, ७, १ ) अमावास्यायामग्न्याधेयमित्यादिना कालविशेषादीनि ब्रह्मौदनपाकपर्य्यन्तानि कार्य्याण्युक्त्वा पश्चादिदमाह । ( ४, ८, ४, ५ ) तं चातुष्प्राश्यं पचत्युद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचमिति आस्यर्थः । चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं पक्त्वा बहिरुद्वास्य तस्यौदनस्य मध्ये घृतसेचनाय निम्नं स्थानं कृत्वा तत्सर्पिषापूर्य्य तिस्रः समिधस्तस्मिन् सर्पिष्यभ्यज्य तिसृभिर्ऋग्भिरग्नावभ्यादधातीति । समिधाग्निम् । हे ऋत्विजः ! यूयं समिधा कृत्वा अग्निं दुवस्यत परिचरत । दुवस्यतिः परिचरणार्थः । सम्यगिध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित् तया । घृतैः होष्यमाणैः पूर्णाहुतिसम्बन्धिभिरातिथिमातिथ्यकर्मणा पूजनीयमग्निं बोधयत प्रज्वालयत अस्मिन् प्रज्वलितेऽग्नौ हव्या नानाविधानि हवींषि आजुहोतन सर्वतो जुहुत । तप्तनप्तनथाश्चेति तनबादेशः ॥ १ ॥

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥ २ ॥

जपति "सुसमिद्धाय" साधु समिद्धाय । "शोचिषे" शोचिष्मते दीप्तिमते ज्वलनाय । "घृतं तीव्रम्" पटुतरं गव्यं ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कारैः संस्कृतमित्यर्थः । "जुहोतन" । जुहुत कुरुत । नेत्यनर्थका उपजना भवन्ति ॥ कर्त्तन हन्तन यातनेति । "अग्नये जातवेदसे" जातप्रज्ञानाय ॥ २ ॥

हे ऋत्विजः ! अग्नये यूयं घृतेन जुहोतन जुहुत । जुहोतेः परस्य लोड्मध्यमबहुवचनस्य तस्य तप्तनप्तनथनाश्चेति तनबादेशे गुणे जुहोतनेति रूपम् । किम्भूतायाग्नये । सुसमिद्धाय शोभनतया सम्यग्दीप्ताय । अत एव शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय । जातवेदसे जातं वेत्ति वेदयति वा जातवेदास्तस्मै । जातप्रज्ञानाय

वा। किम्भूतं घृतं तीव्रं स्वादुतमं समग्रं वा पटुतरं वा। ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कृतमित्यर्थः॥ २॥

तं त्वा सुमिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य॥ ३॥

"तं त्वा सामिद्भिः"। यस्त्वमुक्तगुणस्तं त्वां सामिद्भिः। हे "अङ्गिरः"। अङ्गतिर्गत्यर्थः। रो मत्वर्थीयः। गमनवन्। "अङ्गिरा उ ह्यग्निरिति" श्रुतिः। "घृतेन वर्द्धयामासि"। वर्द्धयाम। इदन्तो मसीति सिकारश्छान्दसः। "बृहत्" महत् "शोचा" दीप्यस्व। "यविष्ठ्य" युवतम। इष्ठानि परभूते टेः स्थूलदूरयुव इत्यादिना यविष्ठ्य इति सिद्धम्। स्वार्थिको यकारस्तद्धितः॥ ३॥

हे अङ्गिरः! अङ्गतिर्गत्यर्थः। अङ्गिर्गतिरस्यास्तीति अङ्गिराः। रप्रत्ययो मत्वर्थीयः। तत्तद्यागेषु गमनवन्नग्ने। अङ्गिरा उ ह्यग्निरिति श्रुतेः [ १, ४, १, १५ )। तं य उक्त गुणस्तथाविधं त्वा त्वां समिद्भिर्यज्ञसम्बन्धिकाष्ठैर्घृतेन संस्कृताज्येन च वर्धयामसि वर्धयामः प्रवृद्धं कुर्मः। इदन्तो मसीति इकारश्छान्दसः। हे यविष्ठ्य युवतम! कदाचिदपि स्थविरत्वरहित इत्यर्थः। तथाविधाग्ने बृहत् महत् प्रवृद्धं यथा तथा शोचा दीप्यस्व। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। अतिशयेन युवा यविष्ठ। इष्ठनि परे स्थूलदूरयुवेत्यादिना वादिलोपे गुणे च रूपम्। यविष्ठ एव यविष्ठ्यः। स्वार्थे तद्धितयकारः॥ ३॥

उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम॥ ४॥

"उप त्वा"। उप "यन्तु" त्वां हे "अग्ने हविष्मतीः" हविषा संयुक्ताः "घृताचीः" घृताञ्चनाः सामिधः। "हर्यत"। हर्य क्लान्तौ हर्यतिः प्रेप्साकर्मा। प्रेप्सावन् ताश्च त्वां प्रत्युपगच्छन्तीः "जुषस्व आसेवस्व "समिधः मम" सम्बन्धिनीः॥४॥

का० (४, ८६) उप त्वेति जपतीति । हे अग्ने ! हविष्मतीर्हविष्मत्यः हविर्युक्ता घृताचीः घृताच्यो घृताक्ता एताः समिधस्त्वा त्वामुपयन्तु प्रत्युपगच्छन्तु । हे हर्यत प्रेप्सावन् ! हर्यतः आचक इति कान्तिकर्मसु पठितत्वात् ( निघ० २, ६, १० ) । तथाविध हे अग्ने ! मम मदीयाः समिधः त्वं जुषस्व सेवस्व त्वामुपयतीरङ्गीकुर्वित्यर्थः । छन्दसि परेऽपि व्यवहिताश्चेति उपयन्तु इत्युपसर्गक्रियापदयोर्व्यवहितत्वम् । हविष्मतीरित्यादौ वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ॥ ४ ॥

भूर्भुवः स्वः । द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥

"भूर्भुवः स्वः" । महाव्याहृतयः, प्रजापतेरार्षम् । गार्हपत्याहवनीययोराधानमन्त्राः । पृथिव्यन्तरिक्षद्युलोका अभिधेयाः, ब्रह्मक्षत्रविशो वा वर्णाः । अन्नप्रजापशवो वा । श्रुतितो व्याख्यातमेतत् । इध्मपूर्वार्द्धं गृहीत्वा यजमानो जपति । "द्यौरिव भूम्ना उपरिष्टादारभ्यैतद्यजुर्व्याख्येयं, तथाहि सुबोधं भवति । "तस्याः" ते तव हे "पृथिवि देवयजनि" देवा यस्यामिज्यन्ते इति देवयजनी तस्याः सम्बोधनं क्रियते हे देवयजनि ! ते "पृष्ठे" उपरि "अग्निमन्नादम्" अन्नस्यात्तारम् । "अन्नाद्याय" अन्नादनाय अन्नभक्षणाय । "आदधे" स्थापयामि । तस्याः पृथिव्याः पृष्ठेऽग्निमाधाय । "द्यौरिव भूम्ना" । यथा द्यौर्भूम्ना नक्षत्रबहुत्वेन बह्वी एवं पुत्रादिभिर्बहुभिर्भूयासम् । "पृथिवीव वरिम्णा" । यथा पृथिवी वरिम्णा उरुत्वेन सता सर्व प्राणिनामाश्रयभूता एवमहं महत्त्वेन सता सर्वप्राणिनामाश्रयभूतो भूयासम् । अथवा यथाक्रममेव व्याख्यायते । द्यौरिव भूम्ना भूयासम्, पृथिवीव वरिम्णा भूयासम्, हे

अग्ने त्वत्प्रसादात् । पृष्टिव्युच्यते । तस्याः ते तव पृथिवि देवयजनि पृष्ठे उपरि अग्निमन्नादमन्नभक्षणाय । आदधे । यस्यास्तव मन्वादयोऽपि अन्नदाः आधाय संवृताः संजाताः ॥ ५ ॥

का० ( ४, ९, १ ) दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्विति । ( ४, ९, १६ ) भूर्भुवः स्वरिति पूर्ववदिति चेति। अस्यार्थः । आपो हिरण्यमूषाखूत्करः शर्करेति पञ्च सम्भारान्सम्पाद्य स्फ्येनोल्लिखितायां शुद्धायां भूमौ तान् सम्भारानवस्थाप्य तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुवः स्वरिति पञ्चाक्षराण्युच्चारयन्नादध्यात् । इदमाहवनीयाधानम् । एवमष्टाक्षरत्वादग्नेर्गायत्रत्वं श्रुत्योक्तम् । गायत्रीसहितस्याग्नेः प्रजापतिमुखादुत्पन्नत्वात् ॥ अथ मन्त्रार्थः । एतेष्वाधानमन्त्रेषु भूरिति प्रथमा व्याहृतिः । भुव इति द्वितीया । स्वः इति तृतीया । एतास्तिस्रो व्याहृतयः पृथिव्यादिलोकत्रयनामानि । एतदुच्चारणपूर्वकं प्रजापतिना लोकत्रयस्य सृष्टत्वात् । अत एवाभिः स्थापयन् लोकत्रयमनेन स्मरेत् । एतासां व्याहृतीनां महिमा भूयादिति । भूर्भुवःस्वः शब्देन ब्रह्मक्षत्रविशो वा आत्मप्रजापशवो वा । सर्वे मद्वशगा भूयासुरिति प्रार्थयन्नग्नीनादध्यादित्यर्थः ॥ का० ( ४, ९, १७ ) इध्मपूर्वार्धे गृहीत्वा द्यौरिव भूम्नेत्याहेति । देवा इज्यन्ते यस्यां पृथिव्यां सा देवयजनी तथाविधे हे पृथिवि ! तस्यास्ते तव पृष्ठे देवयजनयोग्यायास्तवोपरि । अन्नादमन्नस्य हुतस्यात्तारमग्निं गार्हपत्यादिरूपमादधे स्थापयामि । किमर्थमन्नाद्याय । अन्नञ्च तदाद्यञ्च तस्मै आद्यस्यान्नस्यात्तयोग्यस्यान्नस्य सिद्ध्यर्थम् । आहिताग्न्यादित्वात्परनिपातः [ पा० २, २, ३७ ] । यद्वान्नस्याद्याय भक्षणाय । यस्याः पृष्ठेऽग्निमाधाय भूम्ना द्यौरिव भूयासमिति शेषः । बहोर्भावो भूमा तेन । यथा द्यौर्नक्षत्रबहुत्वेन बह्वी । एवं पुत्रपश्वादिभिर्बहुर्भूयासम् । वरिम्णा पृथिवीव भूयासम् । उरोर्भावो वरिमा तेन । यथा पृथिवी उरुत्वेन सर्वप्राणिनामाश्रयभूता एवमहं महत्त्वेन सर्वप्राणिनामाश्रयभूतो भूयासम् । यद्वा पूर्वार्धस्यायमर्थः । किम्भूतमग्निं भूम्ना द्यौरिव वर्तमानम् । यथा द्यौर्नक्षत्रादिबहुत्वेन युक्ता तथा ज्वालाबहुत्वेन युक्तम् । किञ्च वरिम्णा पृथिवीव स्थितम् । यथा पृथिवी सर्व-

प्राण्याश्रयत्वरूपेण श्रेष्ठत्वेनोपेता । तथा सर्ववस्तुशोधकत्वरूपेण श्रेष्ठत्वेनोपेतम् । अत एव क्वचिद्विधिवाक्ये अग्नये पावकायेत्याम्नातम् ॥ ५ ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ६ ॥

"आयं गौः पृश्निः" । सार्प्यराज्ञ आर्षम् । गायत्र्यस्त्यृचः । आहवनीयाग्न्युपस्थाने विनियुक्ताः । अग्निः परापररूपेण स्तूयते । "आयं गौः पृश्निरक्रमीत्" । आक्रमीत् आक्रमते ऐश्वर्यरूपेणायमग्निः गौः गन्ता सर्वासु तासु तासु क्रियासु पृश्निर्नानारूपः "असदन्मातरं पुरः" इमं लोकमग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति मातरं पृथिवीं पुरः पुरस्तात्प्राच्यां दिशि । "किञ्च पितरं च प्रयन्स्व" पितरं द्युलोकं च प्रयन् गच्छन् सीदतीत्यनुवर्त्तते । स्वः आदित्यः ॥ ६ ॥

का० [ ४, ९, १८, १९ ] आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादधातीति । आयं गौरित्यादीनां तिसृणामृचां सार्पराज्ञीति नामधेयम् । सर्पराज्ञी कद्रूः पृथिव्यभिमानिनी । तया दृष्टत्वात् ताभिर्ऋग्भिराहवनीयमुपतिष्ठते ततो दक्षिणाग्निमादध्यादिति सूत्रार्थः । गायत्र्यस्त्यृचः । अग्निः परावररूपेण स्तूयते । अयं दृश्यमानोऽग्निः आ अक्रमीत् सर्वतः आहवनीयगार्हपत्यदक्षिणाग्निस्थानेषु सर्वतः क्रमणं पादविक्षेपं कृतवान् । किम्भूतोऽग्निः । गच्छतीति गौः । यज्ञनिष्पत्तये तत्तद्यजमानगृहेषु गन्ता । गमेर्डोप्रत्ययः ( उ० २, ६६ )। तथा पृश्निः चित्रवर्णः । लोहितशुक्लादिबहुविधज्वालोपेतः । आक्रमणमेवाह । पुरः प्राच्यां दिशि मातरं पृथिवीमसदत् आसीदत् । आहवनीयरूपेण प्राप्तवान् । तथा स्वः प्रयन् आदित्यरूपेण स्वर्गे सञ्चरन् पितरञ्च द्युलोकमपि असदत् प्राप्तवान् । स्वःशब्देन सूर्य्यः [ निघ० १, ३, १ ] द्युलोकभूलोकयोर्मातापितृत्वमन्यत्रापि श्रूयते । द्यौः पिता पृथिवी मातेति ॥ ६ ॥

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्य-न्महिषो दिवम् ॥ ७ ॥

एवमादित्यरूपेणाग्निं स्तुत्वा अथेदानीं वायुरूपेणाग्निं स्तौति । "अन्तश्चरतिरोचनास्य" । द्यावापृथिव्योरन्तर-श्चरति अग्नेर्वाय्वाख्या शक्तिः । "अन्तरिक्षेयं तिर्यङ् वायुः पवत इति" श्रुतिः । "रोचना" । दाप्तौ । दीपना "अस्य" अग्नेः । किं कुर्वाणा चरति । "प्राणादपानती" । अन प्राण-ने । सर्वप्राणिषु प्राणादनन्तरम् अपानती चरति अपाना दनन्तरं प्राणती चरतीति समर्थ्याऽयमर्थो लभ्यते । एवं वाय्वादित्याभ्यां स्वशक्तिभ्यामिदं जगदनुगृह्याथ य एन मुपतिष्ठते तस्य किं करोतीत्याह । "व्यख्यन्महिषोदिवम्" । विविधं तस्य पुरुषस्योपभोगार्थमवलोकयति पश्यति भोग्यत्वे-न दिवं द्युलोकम् महिषः । "अग्निर्वै महिषः स हीदं जातो म-हानिति" श्रुतिः ॥ ७ ॥

एवमादित्यरूपेणाग्निं स्तुत्वा वायुरूपेण स्तौति । अस्याग्ने रोचना रुच दीप्तौ दीप्तिः काचिच्छक्तिः वाय्वाख्या अन्तश्चरति द्यावापृथिव्योर्मध्ये शरीरमध्ये चरति । अन्तरिक्षेऽयं तिर्य्यङ् वायुः पवत इति श्रुतिः । किं कुर्वती । प्राणादपानती सर्वशरीरेषु प्राण-व्यापारादनन्तरमपानव्यापारं कुर्वती । अपानादनन्तरं प्राणतीत्य-प्यर्थो लभ्यते सामर्थ्यात् प्राणापानयोर्वायुविशेषयोः प्रेरिकेत्यर्थः । सति हि जठराग्नौ जीवनहेतो रौष्ण्यस्य शरीरे सद्भावात् प्राणा-पानौ प्रवर्त्तेते । तस्मादग्निः प्राणापानरूप इत्यर्थः । एवं वाय्वा-दित्याभ्यां स्वशक्तिभूताभ्यामिदं जगदनुगृह्य य एनमुपतिष्ठते तस्य किं करोतीत्याह । व्यख्यदिति । महिषोऽग्निः दिवं व्यख्यत् । द्यु-लोकं भोगस्थानमनुष्ठातृभ्यो विशेषेण प्रकाशितवान् प्रकाशयति च । महि माहात्म्यं यागकर्तृस्वरूपं सनोति ददाति स महिषः । अग्निर्वै महिषः स इदं जातो महानिति श्रुतेः । व्यख्यत् विपूर्वस्य

ख्या प्रकथन इत्यस्यास्यतिवक्तिख्यातिभ्योऽङ् इति च्लेरङ् । आ-
लोपः । छन्दसि लुङ्लङ्लिट इति सर्वकालेषु लङ् । अपान इवाचर-
तीत्यपानती क्विबन्तादपानशब्दाच्छतृप्रत्ययः । उगितश्चेति ङीप् ॥ ७ ॥

त्रि॒ꣳशद्धाम॒ विरा॑जति॒ वाक्प॑त॒ङ्गाय॑ धीयते ।
प्रति॒ वस्तो॒रह॒ द्युभिः॑ ॥ ८ ॥

"त्रिꣳशद्धाम" । त्रिंशत्सु धामस्विति विभक्तिव्यत्ययः ।
धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति स्था-
नान्यत्राभिप्रेतानि । त्रिंशच्चाहोरात्रे मुहूर्तास्त इह गृह्यन्ते । त्रिं
शत्सु स्थानेषु मुहूर्ताख्येषु स्तुतिभिरग्निरयं स्तूयते । यज्ञे या वा-
ग् "विराजति" शोभते स्तूयमाना सा वाक् "पतङ्गाय" पत-
न् गच्छतीति पतङ्गोऽग्निः स ह्यरण्याः पतन् गार्हपत्यभावं गच्छति
गार्हपत्यादाहवनीयमित्यादिना तादर्थ्ये चतुर्थी । पतङ्गार्थं धी-
यते अग्न्यर्थमुच्चार्यत इत्यर्थः । एतदुक्तं भवति । सर्वदेवता-
सम्बन्धिनीभिः स्तुतिभिरग्निरेव स्तूयते स हि सर्वात्मा । "प्रतिव-
स्तोरह द्युभिः" वस्तोः द्युर्भानुरित्यहर्नामसु पठितम् । अह इति
निपातो विनिग्रहार्थीयः । न केवलं या त्रिꣳशत्सु धामसु वा-
ग्विराजति सा पतङ्गाय धीयते किं तर्हि प्रति वस्तोः प्रत्यहं
च या स्तुतिलक्षणा वाक् सा च द्युभिः अहोभिरुत्सवभूतैः ।
उत्सवाः यागपारायणादयः स्तुतिलक्षणा वाक् सा च पतङ्गा-
य धीयते नान्यस्यै देवतायै ॥ ८ ॥

सुपां सुलुगित्यादिना त्रिंशच्छब्दाद्धामशब्दाच्च सुपो लुक् ।
धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति ( निरु०
९, २८, २९ ) । अत्र धामशब्देन स्थानमुच्यते । अहोरात्रस्य त्रिं-
शन्मुहूर्त्ता धामशब्देनाभिप्रेताः । त्रिंशत्सु धामसु मुहूर्त्ताख्येषु स्था-
नेषु या वाक् विराजति शोभते स्तूयमाना वाक् पतङ्गाय धीयते
अग्न्यर्थमुच्चार्य्यते । पतन् गच्छति पतङ्गः अग्निः । स ह्यरण्याः

पतन् गार्हपत्यभावं गच्छति गार्हपत्यात्पतन्नाहवनीयतामित्यादि । सर्वदेवसम्बन्धिनीभिः स्तुतिभिरग्निरेव सर्वात्मत्वात् स्तूयते इत्यर्थः । न केवलं त्रिंशत्सु धामसु या वाग्विराजति सैव पतङ्गाय धीयते किं तर्हि प्रति वस्तोः प्रत्यहं या स्तुतिलक्षणा वाक् या च द्युभिः अहोभिः यागपारायणाद्युत्सवभूतैः स्तुतिलक्षणा वाग्विराजति सा पतङ्गायैव धीयते । नान्यस्यै देवतायै । वस्तोः द्युः भानुरित्यहर्नामसु पठितम् ( निघ० १, ९, १ ) । अहेति निपातो विनिग्रहे । सर्वकालं सर्वा स्तुतिवागग्न्यर्थैवेत्यर्थः । यद्वास्या ऋचोऽयमर्थः । धाम स्थानं तच्च त्रिंशत् त्रिंशत्संख्याकं मासगतदिनभेदेन । तद्विराजति विशेषेण दीप्यते । आलस्यरहितानां यजमानानामनुष्ठानेनाहवनीयाद्यग्गीनां स्थानं मासगतेषु त्रिंशत्संख्याकेषु दिनेषु विशेषेण शोभत इत्यर्थः । वाक् स्तुतिरूपा पतङ्गायाग्नये धीयते उच्चार्य्यते । पतङ्गः पक्षी । तत्सदृशत्वादग्निः पतङ्गः । यथा कश्चित् पक्षी एकस्मात् स्थानात् स्थानान्तरं गच्छति तद्वदग्निरपि गार्हपत्यस्थानादाहवनीयस्थानं गच्छतीग्नेः पक्षिसादृश्यम् । अहेति निपातः पूर्वोक्तनिषेधार्थः । अस्या ऋचः पूर्वार्द्धेऽग्निमाहात्म्यज्ञापकं वाक्यद्वयेनार्थद्वयं यदुक्तं तावदेव न भवति किन्त्वन्यदप्युच्यत इत्यर्थः । वस्तोरित्यहर्नामसु पठितम् । प्रति वस्तोः प्रत्यहं द्युभिः द्योतनैरयमग्निः स्तूयत इत्यध्याहारः । द्युर्द्योतनं दीप्यतेः प्रयोगः ॥ ८ ॥

इत्यग्न्याधेयमन्त्राः ॥

अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॑ । सूर्य्यो॒ ज्योति॒र्ज्योति॒ः सूर्य्य॒ः स्वाहा॑ । अ॒ग्निर्वर्चो॒ ज्योति॒र्वर्च॒ः स्वाहा॑ । सूर्य्यो॒ वर्चो॒ ज्योति॒र्वर्च॒ः स्वाहा॑ । ज्योति॒ः सूर्य्यः सूर्य्यो॒ ज्योति॒ः स्वाहा॑ ॥ ९ ॥

" अग्निर्ज्योतिः" अग्निहोत्रमन्त्राः प्रागुपप्रयन्त इत्येतस्मात् । प्रजापतेरार्षम् । अग्निर्वर्च इति द्वे तक्षा पश्यत्परा जीवलश्चैलकिः । सलिङ्गोक्ता देवता गायत्र्यः । पूर्वाः पञ्चैकपदाः ॥ "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" । नमः स्वस्तिस्वाहे' त्यादि-

ना सूत्रेण प्रथमायाः स्थाने चतुर्थी । अग्निर्ज्योतिर्ज्योतिरग्निरि-तिमन्त्राभ्यासः। अभ्यासे भूयांसमर्थं मन्यन्ते इत्यभिप्रायः। अथ कोऽर्थः। अग्नये ज्योतिषे स्वाहा सुहुतमस्तु। अथ वा स्वस्याहानमस्तु। हानं हाः न हाः अहाः स्वस्य अहा अपरित्यागः। आत्मनो द्रव्यस्य वेति । अथवा योऽग्निर्ज्योतिर्ज्योतिश्चाग्निस्तस्मै स्वाहा। सूर्योज्योतिरित्यनेनैव व्याख्यातम् । अथ ब्रह्मवर्चसकामस्य। "अग्निर्वर्चः" योऽग्निर्वर्चसा अनन्यभूतः यस्य च ज्योतिर्वर्चसा अनन्यभूतम्, तद्रूपं तस्मै हुतमस्तु । अनेनैव सूर्यो वर्च्च इत्याख्यातः। प्रातर्होममन्त्रः "ज्योतिः सूर्य्य" इति व्याख्यातः सूर्यो ज्योतिरित्यनेनैव ॥ ९ ॥

अथाग्निहोत्रहोममन्त्राः । अग्निर्ज्योतिरित्यारभ्य उपप्रयन्त (ख० ११) इत्यतः प्राक्। तन्मन्त्राणां प्रजापतिर्ऋषिः सामान्यतः। यत्र ऋषिविशेषोऽभिधीयतेऽनुक्रमणीकारैस्तत्र द्वावप्यृषी। यथाग्निर्वर्चो द्वे तक्षापश्यत्परां जीवलश्चैलकिरिति (अनु० १, ११)। सप्त लिङ्गोक्तदेवता गायत्र्यः आद्याः पञ्चैकपदाः। अग्निर्ज्योतिः सूर्य्यो ज्योतिः एते द्वे एकपदे गायत्र्यौ तक्षा मुनिरपश्यत्। परां ज्योतिः सूर्य्यः इमां चैलकस्य पुत्रो जीवल ऋषिरपश्यदित्यर्थः॥ अथ का० (४, १४, १४) प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरितीति। या समित् प्रदीप्ता तामभिलक्ष्य जुहुयात्। अग्निर्ज्योतिषमिति (अध्या० ३, २, १) काण्वशाखोक्तमन्त्रेण समित्प्रक्षेपः। मन्त्रार्थस्तु। योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमानज्योतिःस्वरूपम्। यच्चेदं दृश्यमानं ज्योतिः तदेवाग्निर्देवः। देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम्। स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम्। अयं सायंकालीनोऽग्निहोत्रहोममन्त्रः। सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति प्रातर्होममन्त्रः सायंहोममन्त्रवद्व्याख्येयः। सूर्य्यसम्बन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः। उदयकालेऽग्निसम्बन्धि ज्योतिः सूर्य्यं प्रविशति। तस्मात् प्रातः सूर्य्यो ज्योतिरिति मन्त्रः। अग्निमादित्यः

सायं प्रविशाति तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी सम्पद्येते उद्यन्तं वादित्यमग्निरनु समारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृश इति तित्तिरिश्रुतेः । का० (४, १४, १५) अग्निर्वर्च इति ब्रह्मवर्चसकामस्येति । ब्रह्मवर्चसकामस्तु अग्निर्वर्चः सूर्य्यो वर्च इति सायं प्रातश्च जुहुयात् । योऽग्निर्वर्चोऽनन्यभूतः । यस्य तज्ज्योतिर्वर्चोऽनन्यभूतम् । तस्मै सुहुतमस्तु । एवं सूर्य्यो वर्च इति ॥ का० (४, १५ ११) ज्योतिः सूर्य्य इति वा प्रातरिति । प्रातर्होममन्त्रः ज्योतिः सूर्य्य इति । यत् ज्योतिः स सूर्य्य एव । यः सूर्य्य स ज्योतिरेव । तस्मै स्वाहा ॥ ९ ॥

सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा ॥ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्य्यो वेतु स्वाहा ॥ १० ॥

अन्यो होममन्त्रविकल्पः । "सजूर्देवेन" । अग्निरुच्यते । सजूर्देवेन सवित्रा । जुषी प्रीतिसेवनयोः । योऽग्निः समानप्रीतिः देवेन सवित्रा समानप्रीतिश्च "रात्र्या इन्द्रसंयुक्तया स जुषाणः "सेवमानः आस्वादयन् आहुतिं वेतु वेतिरिह पानार्थः । खादनार्थो वा स्वाहा सुहुतं हविरेव भवतु । अथ प्रातः सूर्य उच्यते । "सजूर्देवेन सवित्रा" । समानप्रतीतिर्देवेन सवित्रा भूत्वा समानप्रीतिश्च "उषसा" उषसाशब्देन सूर्यप्रभोच्यते । इन्द्रसंयुक्तया भूत्वा जुषाणः सेवमानः स्वादयन् सूर्यः वेतु पिबतु स्वाहेति व्याख्यातम् ॥ १० ॥

का० (४, १४, ९) सजूरिति वेति । जुहोतीत्यनुवर्त्तते । पूर्वोक्तमन्त्रैः सह सजूरित्यादिमन्त्रद्वयं विकल्पितम् । सजूर्देवेन । अग्निर्वेतु । अस्मदीयं कर्म प्राप्नोतु । यद्वा वेतु आहुतिं भक्षयतु । वी प्रजननकान्त्यसनखादनेष्विति धातोः प्रयोगः । किम्भूतोऽग्निः सवित्रा देवेन प्रेरकेण परमेश्वरेण सह सजूः । जुषी प्रीतिसेवनयोः । जोषणं जू समाना जूः प्रीतिर्यस्यासौ सजूः । तथा इन्द्रवत्या रात्र्या

इन्द्रेण देवेनापेतया रात्रिदेवतया सजूः समानप्रीतिः । तथा जुषाणोऽस्मासु प्रीतियुक्तः । य उक्तगुणवानग्निर्देवस्तस्मै स्वाहा हूयमानमिदं द्रव्यं दत्तम् । प्रातः सूर्य्ये उच्यते । अग्निमन्त्रवदयं सूर्य्ये मन्त्रो व्याख्येयः । पूर्वार्धे रात्रिदेवतायाः स्थाने उषोदेवता योजनीया ॥ १० ॥

उपप्रयन्तो॑ अध्व॒रं मन्त्रं॑ वोचेमा॒ग्नये॑ । आ॒रे अ॒स्मे च॑ शृण्व॒ते ॥ ११ ॥

अथ यजमानाग्न्युपस्थानम् । "उपप्रयन्तो अध्वरं सुपोषः पोषै" रित्यन्तम् । देवानामार्षम् । आद्ये द्वे आग्नेय्यौ गायत्र्यौ । उपप्रयन्तः उपगच्छन्तः अध्वरं यज्ञम् "मन्त्रम्" आर्षम् । "वोचेम" ब्रूयाम "अग्नये" । "आरे" दूरेऽपि स्थिताय "अस्मे च" शृण्वते" अस्माकं च मन्त्रं शृण्वते अस्मन्मत्रश्रवणादभिमुखायेत्यर्थः ॥ ११ ॥

का० ( ४, १२, १—३ ) सायमाहुत्यां हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण न वा तिसृभिरुपप्रयन्तो ( ११ ]ऽस्य प्रत्नां ( १६ ) परि ते ( ३६ ( चित्रावसविति ( १८ ) चेति । आहवनीयगार्हपत्यावग्नी उपप्रयन्तो अध्वरमित्यारभ्य सुपोषः पोषैरित्यन्तं [ ३७ ) बृहदुपस्थानं देवलदृष्टम् । तत्राद्ये द्वे आग्नेय्यौ गायत्र्यौ क्रमेण गोतमविरूपाभ्यामपि दृष्टे ॥ आहवनीयोपस्थानमन्त्रा आदौ वयमनुष्ठातारोऽग्नयेऽग्न्यर्थं मन्त्रं मननेन त्राणकरं शब्दसमूहं वोचेम उच्याम । किम्भूता वयम् । अध्वरं यज्ञमुपप्रयन्तः उपगच्छन्तः । किम्भूतायाग्नये आरे दूरे अस्मे अस्माकं समीपे इति शेषः शृण्वते दूरे समीपे चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय ॥ वोचेमेति वक्ते राशीर्लिङि परस्मैपदोत्तमबहुवचने परे लिङ्याशिष्यङ्ङिति अङ् । यासुट् अतो येयः वच उम् छन्दस्युभयथेति ( पा० ३, ४, ११७ ) सार्वधातुकत्वाल्लिङः सलोपोऽनन्त्यस्येति सलोपः । यलोपः । वोचेम । अस्मे सुपां सुलुगिति शेआदेश आसः ॥ ११ ॥

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत्पतिः॑ पृथि॒व्या अ॒यम् । अ॒पा॑॑ँ

रेता॑ꣳसि जिन्वति ॥ १२ ॥

"अग्निर्मूर्धा" । परापररूपेण व्यवस्थितोऽस्यामृच्यग्निः स्तूयते । अभिनयेन दर्शयति । योय"माग्निमूर्धा दिवः" अहनि आदित्यात्मद्युलोकस्य मूर्द्धा भवति । अयमेव "ककुत्"। ककुदमिति महन्नामसु प्रयुज्यते । तस्य कृतान्तलोपस्यैतद्रूपम् । अयमेव महानात्मा जगतः कारणमित्यर्थः । अयमेव पृथिव्याः पतिः । तापपाकप्रकाशादिभिरयमग्निः सर्वाः प्रजा अनुगृह्णातीत्ययमभिप्रायः । किञ्च अयमेव " अपां रेतांसि जिन्वति" । या एता द्युलोकात्पतन्ति तासामपां रेतांसि रेतःकारणमुच्यते । तानि कारणानि जिन्वति । जिन्वतिः प्रीतिकर्मा । तर्पयति परिपुष्यतीति यावत् । आहुतिः परिणममाना वृष्टिं जनयतीत्येतद्दर्शयति । तथाच श्रुतिः अग्निहोत्रं प्रकृत्य भवति । "ते वा एते आहुती हुते उत्क्रामत"इत्यारभ्य "यस्ततः पुत्रो जायते सलोक" इत्येवमन्ता आहुतिपरिणामवादिनी ॥ १२ ॥

अयमग्निः अपां रेतांसि जिन्वति द्युलोकाद् वृष्टिरूपेण पतन्तीनामपां रेतांसि साराणि व्रीहियवादिरूपेण परिणतानि जिन्वति । जिन्वतिः प्रीतिकर्मा प्रीणयति वर्धयतीत्यर्थः । यद्वा अपां रेतांसि कारणानि जिन्वति पुष्णाति । आहुतिपरिणामेन वृष्टिं जनयतीत्यर्थः । ते वा एते आहुती उत्क्रामत इत्यादिश्रुतेः । किम्भूतोऽग्निः । दिवो मूर्धा द्युलोकस्य शिरःसमानः । यथा शिरः शरीरस्योपरि वर्त्तते तथायमग्निरहनि स्वतेजसा आदित्ये प्रविष्टत्वादादित्यरूपेण द्युलोकस्योपरि वर्त्तते।तथा ककुत्।ककुच्छब्दो गोपृष्ठोन्नतावयववाची तद्वदादित्यरूपेण सर्वोपरिस्थत्वात्ककुत्सदृशः । यद्वा ककुदमिति महन्नाम ( निघ० ३, ३, १० ॥ । तस्यान्तलोप आर्षः । महत् जगत्कारणमित्यर्थः । तथा पृथिव्याः पतिः पालकः । वाहपाकप्रकाशै र्भूलोकस्थानामुपकारकत्वात् ॥ १२॥

उ॒भा वा॑मिन्द्राग्नी आहु॒वध्या॑ उ॒भा राध॑सः स॒ह मा॑द॒यध्यै॑ । उ॒भा दा॒तारा॑वि॒षाᳬ र॑यी॒णामु॒भा वाज॑स्य सा॒तये॑ हुवे वाम् ॥ १३ ॥

"उभा वामिन्द्राग्नी" । ऐन्द्री त्रिष्टुप् । हे इन्द्राग्नी उभौ वां युवाम् "आहुवध्यै" कध्यैप्रत्ययः आख्यातोत्तमपुरुषस्यै-कवचनस्थाने । आह्वयामि । किमर्थमुभावाह्वयामि । "रा-धसः सहमादयध्यै" राधसो धनस्य हविर्लक्षणस्य सह एक-स्मिन्नेव प्रदाने । मादयध्यै । माद्यतिर्भोजनार्थः, सह भोजनाय। किमर्थं पुनरुभावाह्वयामि सहभोजनायेत्यत आह । "उभा दातारावषांरयीणाम्" । उभावाहुतभुक्तौ सन्तौ दातारौ दानशी-लौ इषामन्नानां रयीणां धनानां च भवथो युवाम् । "उभा वा-जस्य सातये हुवे वाम्" । यतश्चैवं युवां विशिष्टान्नधनदातारौ अतो भूयो भूय उभावपि वाजस्यान्नस्य सातये लब्धये हुवे आह्वया-मि वां युवाम् ॥ १३ ॥

भरद्वाजदृष्टा ऐन्द्राग्नी त्रिष्टुप् द्व्युना । इन्द्रशब्देनात्राहवनीयः । तस्य यज्ञसाधकत्वरूपैश्वर्य्ययुक्तत्वात् । अग्निशब्देन गार्हपत्यः । अग्रे नीयते इत्यग्निरिति यास्कव्युत्पत्तेः । स हि प्रथममाधीयते । हे इन्द्राग्नी ! वां युवामुभा आहुवध्ये आह्वातु मच्छामीति शेषः । ह्वयतेस्तुमर्थे कध्यैप्रत्ययः । किञ्च राधसः धनाद्धविलक्षणात् सह मादयध्यै युगपदेककर्मणि उभौ युवां मादयितुं हर्षयितुं वा इ-च्छामीति शेषः । मदी हर्षे मद तृप्ताविति धातोर्वा णिजन्तात्तुमर्थे शध्यैप्रत्ययः । गुणः । यत उभौ युवामिषामन्नानां रयीणां धनानां दातारौ अत उभौ वां युवां वाजस्यान्नस्य सातये दानाय हुवे आ-ह्वयामि । उभा उभशब्दस्य विभक्तेराकारः । सातये षणु दाने अस्य धातोरूतियूतीति क्तिन्नन्तो निपातः । हुवे बहुलं छन्दसीति ह्व-यतेः शपि सम्प्रसारणे उवङ् ॥ १३ ॥

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः । तं

जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ १४ ॥

"अयं ते योनिः"। आग्नेय्यस्तिस्रोऽनुष्टुब्जगतीगायत्र्यः। आहवनीयोऽग्निरुच्यते । हे अग्ने आहवनीय "अयं" गार्हपत्योऽग्निः "ते तव योनिः" उत्पत्तिस्थानम्। कथं भूतौ योनिः "ऋत्वियः" ऋताद्धतौ प्राप्तः काले भवति। "यतो जातो अरोचथाः"। रुचि दीप्तौ । यस्मात्त्वं जातः सन् पूर्वमस्याधानेष्टिपशुचातुर्मास्यसोमेष्वङ्गभावमुपगतः सन् दीप्तिमानासि । तं जानन्नग्ने आरोह। तं तथाभूतं योनिं गार्हपत्याख्यं विद्वानारोह पुनरुद्धरणाय । "अथा"नन्तरमेव "नः" अस्माकं "वर्द्धय" स्फीतं कुरु "रयि" धनम् । येन पुनरपि त्वां यक्ष्याम इत्यभिप्रायः ॥ १४ ॥

तिस्र आग्नेय्यः । आद्यानुष्टुप् देवश्रवो देववातदृष्टा । हे अग्ने । ते तवायं गार्हपत्यो योनिः उत्पत्तिस्थानम् । किम्भूतः ऋत्वियः । उत्पादनयोग्यः काल ऋतुरुच्यते । ऋतुः प्राप्तोऽस्येति ऋत्वियः । छन्दसि घसिति ( पा० ५, १, १०६ ) ऋतुशब्दात्तस्य प्राप्तमित्यर्थे घस् । तस्य इयादेशः । सायंप्रातःकाले उत्पादनयोग्यो योनिः । यतो यस्मादृतुकालोपेताद्गार्हपत्याज्जात उत्पन्नस्त्वमरोचथाः कर्मकाले दीप्तोऽभूः । हे अग्ने ! तं गार्हपत्यं जानन् स्वजनकमवगच्छन् आरोह । पुनरुद्धरणाय कर्मान्ते प्रविश । अथानन्तरं नोऽस्मदर्थे रयिं धनं वर्धया पुनर्यागाय समृद्धं कुरु। अन्येषामपि दृश्यते इति संहितायां वर्धयेति दीर्घः ॥ १४ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १५ ॥

"अयमिह"। अयमाहवनीयोऽग्निः इह कर्मस्थाने "प्रथमः" मुख्यः, दक्षिणाग्न्यपेक्षं च प्राथम्यम् । "धायि" । दुधाञ्

धारणपोषणयोः । निहितः । "धातृभिः" अग्निधातृभिरध्वर्युभिः । "होता" आह्वाता देवानाम् । "यजिष्ठः" यष्टृतमः मानुषाद्धोतुः । "अध्वरेषु" यज्ञेषु "ईड्यः" स्तुत्यः । "यमप्नवानः" । यमग्निमाधाय पूर्वेऽपि ऋषयः अप्नवानप्रभृतयः । "भृगवः" । भृगवश्च भृगोरपत्यानि । "विरुरुचुः" । रुचि दीप्तौ विविधां दीप्तिं प्राप्तवन्त इत्यर्थः । क्वावस्थितं सन्तमाधाय विरुरुचुः । "वनेषु" अरण्योराधानाभिप्रायम् । "चित्रं" चयनीयम् । विभ्वं "विशे विशे" । यश्च इदानीमपि आदधाति विभूतिशक्तियुक्तं मनुष्याय । विश् इति मनुष्यनाम ॥ १५ ॥

जगती वामदेवदृष्टा । द्वादशाक्षराश्चत्वारः पादा जगत्याः । द्वितीयोऽत्र व्यूहेनैकादशः चतुर्थो व्यूहेन द्वादशकस्तेनैकोना जगती । अयमाहवनीय इह कर्मानुष्ठानस्थाने प्रथमो मुख्यः सन् धातृभिर्धायि । अधायि आधानकर्तृभिराहितोऽभूत् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः दक्षिणाग्न्यपेक्षं प्राथम्यम् । किम्भूतः । होता देवनामाह्वाता । यजिष्ठः अतिशयेन यष्टा । अतिशायने तमविष्ठनावितीष्ठनि परे ( पा० ५, ३, ५५ ) तुरिष्ठेमेयःस्विति ( पा० ६, ४, १५४ ) तृचो लोपः । तथा अध्वरेषु सोमयागादिषु ईड्यः ऋत्विग्भिः स्तुत्यः । अप्नवानो भृगवो विशेविशे यमाहवनीयं वनेषु विरुरुचुः । अन्तर्भूतो णिच् रोचयामासुः दीपितवन्तः । अप्नशब्दोऽपत्यनामसु पठितः ( निघ० २, २, ७ ) अप्नवानः पुत्रवन्तो भृगुवंशोत्पन्ना मुनयः । यद्वा अप्नवानृषिः अप्नवानस्तत्प्रभृतयो भृगवश्चमुनयः । विशेविशे विडिति मनुष्यनाम ( निघ० २, ३, ५ ) यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय । वनेषु ग्रामाद्बहिर्यजनाख्येष्वरण्यप्रदेशेषु यमग्निं विरुरुचुः दीपयन्ति स्म । किम्भूतं यम् । चित्रं विविधकर्मोपयोगित्वेन आश्चर्यकारिणम् । अतएव विभ्वं विभुं विभुत्वशक्तियुतं यणादेशः ॥ १५ ॥

अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ १६ ॥

अस्य प्रत्नां गां प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते । "तामु-हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति । तां सम्बभूव तस्यां रेतः प्रासिञ्चदित्यादि तदर्थाभिवादिन्येषा ऋग्भवति । "अ-स्य" वाग्नेः "प्रत्नां" चिरन्तनीं "द्युतं" दीप्तिं गावि अनुषिक्तां "शुक्रं" शुक्ररूपापन्नां गां "दुदुहे" । दुदुहिरे दुग्धं रक्षन्ति दुहन्ति । का दुहन्ति रक्षन्ति काः । "अह्रयः" गावः । ह्री लज्जायाम् । अविद्यमानह्रियः अलज्जिता उज्ज्वलाः प्रशस्या इत्यर्थः । किं तच्छुक्रं या एता गावः रक्षन्ति "पयः" दुग्धम् । "सहस्रसाम्" । सहस्रसंख्यानां चातुर्मास्यपशुसोमानां "स-नितारं" सम्भक्तारम् । "ऋषिं" द्रष्टृ । द्रष्टृत्वं च गवि सत् पयस्युपचर्यते । "साहैनानुदीक्ष्य हिं चकारे"त्युपक्रम्य ते देवा विदां चक्रुरेष साम्नो हिं चकारेत्येवमादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इत्येतत्प्रतिपादितम् । स एष मन्त्रो गां वाग्निं वा पयो वा स्तौति ॥ १६ ॥

गायत्र्यवत्सारदृष्टा गोऽग्निपयोदेवत्या । अस्याग्नेः प्रत्नां चि-रन्तनकालभवां द्युतमनु दीप्तिमनुसृत्य । अह्रयः नास्ति ह्रीर्येषामी-दृशा लज्जापहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहि-रे । दुहेर्लिटि इरयो रे इति रेआदेशे रूपम् । ऋष गतौ । अर्षति दोहनस्थाने गच्छतीति ऋषिर्गौः । तां होमार्थं दुग्धवन्तः । सायं-दोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति श-ङ्कया दोग्धृणां लज्जा भवति । सत्यामग्निदीप्तौ स्कन्दशङ्कानुदयाल्ल-ज्जाभावादह्रयो दोग्धारः । किम्भूतामृषिं सहस्रसाम् । षोऽन्तक-र्मणि । सहस्रसङ्ख्याकानि कर्माणि स्यति समापयति क्षीरदध्या-ज्यहविः प्रदानेनेति सहस्रसा ताम् । स्यतेः क्विप् । तद्वास्या ऋचो-ऽर्थान्तरम् । गाम्प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते [ २, २, ४, १५ ) ता-मु हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति ताᳮसम्बभूव तस्याᳮ रे-तः प्रासिञ्चत्तत्पयोऽभवदित्यादि । तदभिप्रेत्यमेषा ऋग्वदति । अ-ह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्र-

शस्या इत्यर्थः । मलिनो हि लज्जते । अह्यो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुषक्तां घृतं दीप्तिं शुक्रं शुक्ररूपापन्नां दुयुतमेव पयो दुग्धे दुदुह्रे दुहन्ति क्षरन्ति । अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः । सहस्रसामृषिमिति विशेषणद्वयं पयसः । सहस्रं सनोति सहस्रसास्तम् । चातुर्मास्यपशुसोमानां सम्भक्तारम् । पुंस्त्वमार्षम् । जनसनखनक्रमगमो विडिति विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे वेर्लोपे सहस्रसा इति रूपम् । तथा ऋषिं द्रष्टारम् । गवि वर्त्तमानं द्रष्टृत्वं पयस्युपचर्यते । सा हैनानुदीक्ष्य हिङ्ङकारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इति प्रत्यपादि । यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्यः इत्यस्य विशेषणद्वयम् । किम्भूता अह्यः सहस्रसा ऋषयः । पूर्ववदर्थो वा ॥ १६ ॥

तनूपा अग्नेऽसि तन्वं मे पाहि । आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ १७ ॥

अथ यजूंषि । "तनूपा अग्ने" । हे भगवन्नग्ने यस्त्वं स्वभावत एव अग्निहोत्रिणां तनूपा असि तनूः शरीरं तस्य गोपायिता भवसि स त्वं "तन्वं मे" मम पाहि गोपाय । "आयुर्दा अग्नेऽसि" । यस्त्वमायुषो दातासि हे अग्ने स आयुर्मे मम देहि । "वर्चोदा अग्नेऽसि वर्चो मे देहि" । यस्त्वमग्ने वर्चोदा असि सं वर्चो मे मम देहि । यतो दर्शनादेव महानयं ब्राह्मणो विद्वान् तपसाग्निरिव ज्वलतीति प्रतिपत्तिस्तद्वर्च इत्युच्यते । हे "अग्ने यन् मे" मम "तन्वाः" शरीरस्य "ऊनं" न्यूनम् अवखण्डितम् । "तद्" मे मम "आपृण" आपूरय ॥ १७ ॥

अथ यजूंषि चत्वार्य्यग्निदेवत्यानि । हे अग्ने ! त्वं स्वभावत एव तनूपा असि । अग्निहोत्रिशरीराणां पालकोऽसि । तनूं पाहि

पालयतीति तनूपाः । उदराग्नौ सत्यन्ने जीर्णे शरीरपालनमतो मे मम तन्वं शरीरं पाहि पालय । तन्वम् वा छन्दसीत्यमि ( पा० ६, १, १०६, १०७ ) पूर्वरूपाभावे यणादेश इत्युक्तम् । हे अग्ने ! त्वमायुर्दा असि आयुषो दाता भवसि। अतो मे ममायुर्देहि। अपमृत्युपरिहारेण । यावत्कालं वपुष्युदराग्नेरौष्ण्यमुपलभ्यते तावन्न म्रियत इति प्रसिद्धम्। हे अग्ने । त्वं वर्चोदा असि वर्चसो दातासि। अतो मे वर्चो देहि। वैदिकानुष्ठानप्रयुक्तं तेजो वर्चः । यद्दर्शनादेव महानयं ब्राह्मणो विद्वांस्तपसाग्निरिव ज्वलतीति बुद्धिर्नृणाम्भवति। किञ्च हे अग्ने ! मे मम तन्वा मदीयशरीरस्य यदङ्गं चक्षुरादिरूपमूनं दृष्टिपाटवादिरहितं तदङ्गं मे आपृण सर्वतः पूरय ॥ १७ ॥

इन्धानास्त्वा शतꣳहिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥

"इन्धानास्त्वा" महापङ्क्तिस्त्र्यवसाना आग्नेयी। हे अग्ने इन्धानाः । इन्धी दीप्तौ । आदीपयन्तः प्रकाशयन्तस्त्वाम् "शतꣳहिमाः" शतं वर्षाणि "द्युमन्तꣳसमिधीमहि" दीप्तिमन्तं त्वां समिधीमहि सन्दीपयाम इत्यर्थः। "वयस्वन्तो वयस्कृतम्" कथं भूतं त्वां, कथं भूताश्च सन्तो वयं समिधीमहि । वयस्वन्तः। वय इत्यन्ननाम। अन्नवन्तः। "वयस्कृतम्" अन्नस्य कर्त्तारम् । "सहस्वन्तः" सह इति बलनाम। बलवन्तः। "सहस्कृतम्" बलस्य कर्त्तारम् । "अग्ने सपत्नदम्भनम्" हे भगवन्नग्ने सपत्नदम्भनम् सपत्नाः शत्रवः दभ्नोतिर्हिंसार्थः। सपत्नानां हिंसितारम् । "अदब्धासः" अदब्धा एव अदब्धासः। आज्जसेरसुक् । अनुपहिंसिताः सन्तः । "अदाभ्यम्" अनुपहिंस्यम् । समिधीमहीत्यनुवर्त्तते । "चित्रावसो" रात्रिरुच्यते "रात्रिर्वै चित्रावसुः सा हीयꣳ संगृहेव चित्राणि

-वसतीति" श्रुतिः । हे चित्रावसो । "स्वस्ति" स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः सु अस्तीति स्वस्त्या "ते" तव "पारम्" अन्तम् । "अशीय" अश्नुयां व्याप्नुयाम् ॥ १८ ॥

अग्निदेवत्या महापङ्क्तिः । यस्याः षट् पादा अष्टाक्षरा सा महापङ्क्तिः । अत्र षष्ठः सप्ताक्षरः । हे अग्ने ! शतं हिमाः शतं वर्षाणि अस्मदायुषि वर्त्तमानान् शतं संवत्सरान् त्वां समिधीमहि नैरन्तर्येण वयं दीपयामः । किम्भूता वयम् । इन्धानाः त्वदनुग्रहेण दीप्यमानाः तथा वयस्वन्तः । वय इति अन्ननाम ( निघ० २, ७, ७ ) अन्नवन्तः । सहस्वन्तः बलवन्तः । सह इति बलनाम ( निघ० २, ९, २७ ) अदब्धासः अदब्धाः अनुपहिंसिताः केनापि । दभ्नोतिहिंसाकर्मा । आज्जसेरसुगिति असुक् किम्भूतं त्वां द्युमन्तं दीप्तिमन्तम् । वयस्कृतं वयोऽन्नं करोतीति वयस्कृत् तम् । सहस्कृतं सहो बलं करोतीति सहस्कृत् तम् । सपत्नदम्भनं सपत्नानां शत्रूणां हिंसितारम् । अदाभ्यम् केनापि हिंसितुमयोग्यम् ॥ चित्रावसो ! रात्रिदेवत्यं यजुर्ऋषिदृष्टम् । रात्रिर्वै चित्रावसुः सा हीयꣳसंगृह्येव चित्राणि वसतीति ( २, ३, ४, २२ ) श्रुतेश्चित्रावसुशब्देन रात्रिः । चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां रात्रौ सा चित्रावसुः । हे चित्रावसो रात्रे ! स्वस्ति क्षेमं यथा तथा ते तव पारं समाप्तिमशीय व्याप्नवानि । अश्नुतेर्बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुकि लिङ्युत्तमैकवचने रूपम् । यथा लोके मनुष्येषु सुप्तेषु चौरा गृहे प्रविशन्ति तद्वदत्र देवयजने रक्षांसि प्रविशन्तीति शङ्कया तन्निवारणाय रात्रिप्रार्थनम् ॥ १८ ॥

सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन । सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ १९ ॥

"सं त्वमग्ने" । अथोपविश्य जपति । आहवनीय उच्यते । सम् समित्ययमुपसर्गः अगथा इत्यनेनाख्यातेन सम्बध्यते । समगथाः सङ्गतस्त्वम् अग्ने सूर्यस्य सम्बन्धिना वर्चसा तेजसा ।

श्रुतिर्मन्त्रं विवृणोति। "तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति" तेनैतदाह। "समृषीणां स्तुतेन" सङ्गतस्त्वमग्ने ऋषीणां सम्बन्धिभिर्मन्त्रैः। तद्यदुपतिष्ठते तेनैतदाह। "संप्रियेण धाम्ना"। सङ्गतस्त्वं प्रियेण धाम्ना प्रियाभिराहुतिभिः। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति श्रुतिः। "आहुतयो वा अस्य प्रियं धामेति"। यथात्वमग्ने एतैस्त्रिभिः सङ्गतः एवं त्वत्प्रसादा"दह" मपि"आयुषा वर्चसा" तेजसा अन्नेन वा "प्रजया" पुत्रादिकया "रायस्पोषेण" राय इति धननाम्, धनस्य पोषेण पुष्ट्या "ग्मिषीय"। गमेरेतद्रूपम्। सङ्गच्छेयम्। आयुः प्रभृतीनि मम सन्त्वित्यर्थः॥ १९॥

का० [४, १२, ४] स त्वामित्युपविश्येति॥ उपप्रयन्त इत्यादिभिश्चित्रावसो इत्यन्तैर्मन्त्रैरुत्थानमत्र उपविश्येति विशेषः। हे अग्ने! त्वं सूर्य्यस्य वर्चसा तेजसा समगथाः रात्रौ सङ्गतोऽसि। तद्यदस्तं यन्नादित्य आहवनीयम् प्रविशति तेनैतदाहेति श्रुतेः (२, ३, ४, २४)। ऋषीणां मन्त्राणां स्तुतेन स्तोत्रेण समगथाः। बहवो मन्त्रा अग्निं स्तुवन्ति। तद्यदुपतिष्ठते तेनैतदाहेति श्रुतेः [२, ३, ४, २४]। प्रियेण धाम्ना प्रियाभिराहुतिभिः समगथाः। आहुतयो वा अस्य प्रियं धामेति श्रुतेः (२, ३, २४)। यथा त्वमेतैस्त्रिभिः सङ्गतः। एवमहमपि त्वत्प्रसादादायुषा अपमृत्युदोषरहितेव संग्मिषीय सङ्गतो भूयासम्। तथा वर्चसा विद्यैश्वर्य्यादिप्रयुक्तेजसा संग्मिषीय। तथा प्रजया पुत्रादिकया संग्मिषीय। तथा रायस्पोषेण धनस्य पुष्ट्या संग्मिषीय। आयुरादीनि मम सन्त्वित्यर्थः। समगथाः गमेः समो गस्यृच्छीत्यादिना तङ्मध्यमैकवचने लुङि सिचि गमश्चेति सिचः कित्त्वेऽनुदात्तोपदेशेत्यादिना मलोपे ह्रस्वादङ्गादिति सिचो लोपे रूपम्। ग्मिषीय। गमेराशीर्लिङि उत्तमैकवचने इटोऽदित्यकारे परे सीयुटि कृते छान्दसे इडागमे गमहनेत्युपधालोपे रूपम्॥ १९॥

अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भ-

क्षीयोर्ज स्थोर्जं वो भक्षीय रायस्पोष स्थ रायस्पोषं वो भक्षीय ॥ २० ॥

अथगामभ्येति । "अन्ध स्थ" अन्ध इत्यन्ननाम श्रुत्या तु लक्षणया वीर्यमित्युक्तम् । यानि वो वीर्याणि यानि वो महांसीति यतो यूयं वीर्यहेतुभूत"मन्धः स्थः भवथ अतोऽन्धः "वः" युष्मत्सम्बान्धि भक्षीय । भजतेरेतद्रूपं न भक्षयतेः । भजेयम् । मह स्थ । महश्शब्देन तस्यै शृतं तस्यै शिर इत्यादीनि दश वीर्याणि उच्यन्ते । यतो मह स्थ अतो महो वीर्यं वो भक्षीय । "ऊर्ज स्थ" ऊर्जशब्दो रसवचनः । यतो यूयमूर्ज स्थ अत ऊर्जं वो भक्षीय । "रायस्पोष स्थ" । यतो यूयं धनपुष्टिकराः स्थ अतो धनपोषं "वो" भक्षीय ॥ २० ॥

का० (४, १२, ५) गां गच्छत्यन्ध स्थेति । अन्ध स्थ रेवतीरमध्वमिति यजुर्द्वयेन गां गच्छति । गौर्देवता । हे गावः ! यूयमन्ध स्थ अन्नरूपाः स्थ । क्षीराज्यादिरूपस्यान्नस्य जनकत्वादन्नत्वोपचारः । अतो भवत्प्रसादाद्वो युष्मत्सम्बन्धि अन्धः क्षीराज्यादिरूपमन्नमहं भक्षीय सेवेय । भज सेवायामित्यस्याशीर्लिङ्युत्तमैकवचने रूपम् । तथा यूयं मह स्थ पूज्यरूपाः स्थ । मह पूजायाम् । अतो वो युष्माकं पूज्यानां प्रसादादहमपि महो भक्षीय पूज्यत्वं सेवेय । गौर्न पदा स्पृष्टव्येत्यादिस्मृतेर्गवां पूज्यत्वप्रसिद्धिः । यद्वा महःशब्देन दश वीर्य्याण्युच्यन्ते तानि । यथा गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति श्रुत्युक्तानि । प्रतिधुक् तत्कालदुग्धम् । शृतमुष्णं तत् । शरो दुग्धमण्डः । मस्तु दधिरसः । आतञ्चनं दधिपिण्डः । आमिक्षा स्फुटितं दुग्धम् । वाजिनमामिक्षाजलमिति श्रुत्यर्थः । एतद्दशवीर्य्यरूपा यूयं स्थ । अतो वो महो वीर्य्यमहं सेवेयेत्यर्थः । तथा यूयमूर्जं स्थ बलरूपाः स्थ गोक्षीरादेर्बलहेतुत्वात् बलरूपत्वोपचारः । ऊर्ज बलप्राणनयोः । वो युष्माकं प्रसादादूर्जं भक्षीय बलं सेवेय ।

"भेषजमसि" । हे रुद्र यस्त्वं स्वभावत एव भेषजमौषधं भवसि सर्वप्राणिनाम् अतः प्रार्थ्यते देहि "भेषजम् । गवे अश्वाय पुरुषाय भेषजं" देहि । "सुखं" देहि । सुहितं खेभ्यः प्राणेभ्यः इति सुखम् । मेषाय मेष्यै च" ॥ ५९ ॥

हे रुद्र ! त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि ! अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भैषज्यं सर्वव्याधिनिवारकमौषधं देहि । मेषाय मेष्यै च सुखं देहि । सुहितं खेभ्यः प्राणेभ्य इति सुखम् । अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥ ५९ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥

"त्र्यम्बकम्" द्वावनुष्टुभौ । यं वयं त्र्यम्बकं "यजामहे" पूजयामः । "सुगन्धिम्" । 'गन्धस्येदुत्पूती'त्यादिना समासान्तः । पुष्टिवर्धनम्" पोषस्य वर्धयितारम् । योऽस्मान् "उर्वारुकमिव बन्धनात्" । उर्वारुकः फलविशेषः स यथा पक्वः स्वबन्धनाद्वियुज्यते एवं "मृत्योर्मुक्षीय" मोचय मोचयतु । पुरुषव्यत्ययश्छान्दसः । "मामृतात्" । मा कदाचित् अमृतात् मोचयतु । अग्निं त्रिः परियन्त्यनेन मन्त्रेण । कुमार्यश्चोत्तरेण परियन्ति । यं "त्र्यम्बकं यजामहे शोभनगन्धम् । "पतिवेदनम्" भर्तृलम्भयितारम् । "उर्वारुकमिव बन्धनात् "इतोमुक्षीय" । ज्ञातिवर्गान्मोचयतु । मामुतः" । पतिवर्गान्मोचयतु । "सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति" श्रुति ॥ ६० ॥

द्वे अनुष्टुभौ । का० ( ५, १०, १५, १६ ) अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाघ्नाना इति । यथा पितृमेधे पुत्रदायः पुरुषाः स्वकीयान् वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति । यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति । एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः । मन्त्रार्थस्तु । सुगन्धि दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः । ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम् अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चामृतान्मा मुक्षीय मुक्तो मा भूयासम् । एकवचनं बह्वर्थे । मुक्ता मा भूयास्मेत्यर्थः । अभ्युदयनिःश्रेयसरूपात् फलद्वयान्मम भ्रंशो मा भूदित्यर्थः । मृत्योर्मोचने दृष्टान्तः—उर्वारुकमिव बन्धनादिति । यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तपक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते तद्वत् ॥ का० ( ५, १०, १७ ) कुमार्यश्चोत्तरेणेति । यजमानसम्बन्धिन्यः कुमार्य्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति । त्र्यम्बकं यजामहे कीदृशं पतिवेदनं पतिं वेदयतीति तं भर्त्तुर्लम्भयितारं विद्लृ लाभे । अन्यत् पूर्ववत् । इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासं जनकस्य गोत्रं गृहञ्च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद् वसामीत्यर्थः । सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति ( २, ६, २, १४ ) श्रुतेरितोऽमुतःशब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ ॥ ६० ॥

एतत्ते॑ रुद्राव॒सं तेन॑ प॒रो मूज॑व॒तोऽती॑हि । अव॑ततधन्वा॒ पिना॑कावसः॒ कृत्ति॑वासा॒ अहि॑ꣳसन्नः शि॒वोऽती॑हि ॥ ६१ ॥

त्र्यम्बकानासजति । “एतत्ते रुद्र” । एतत् ते तव हे “रुद्र अवसम्” पथ्यदानं शम्बलम् । तेन पथ्यदानेन “परः” पर

स्तात्, मूजवान्नामपर्वतः भगवतो रुद्रस्य वसतिः ताम् "अतीहि" गच्छ । कथं भूतो गच्छ । "अवततधन्वा" अवतारितधनुः । "पिनाकावसः । पिनाको रुद्राङ्कुशः रुद्राङ्कुशकृतकुशलः । "कृत्तिवासाः" चर्मवसनः । "अहिंसन्नः । अविनाशयन्नः अस्मान् "शिवः" शान्तो भूत्वा "अतीहि" पूजितं गच्छ ॥ ६१ ॥

रौद्र्यास्तारपङ्क्तिः । यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः । का० ( ५, १०, २१ ) । मूतयोः कृत्वा वेणुयष्ट्यां वा कुपे वासज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत्त इतीति । व्रीहियवादीन् बध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते । तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति । ततो गोभिराघ्रातुमशक्यत्वाद् गावो रोगं न प्राप्नुवन्तीत्यर्थः । अथ मन्त्रार्थः । मूजवान्नाम कश्चित् पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते । हे रुद्र ! एतत्ते तव अवसं हविःशेषाख्यं भोज्यं तेन सहितस्त्वं मूजवतः पर्वतात् परः परभागवर्त्ती सन्नतीहि अतिक्रम्य गच्छ । कीदृशस्त्वम् । अवततधन्वा अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्द्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः ॥ का० (५, १०, २२—२३), कृत्तिवासा इत्यनवेक्षमेत्योपस्पृशन्त्यप इति । उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्त्तमाना मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः । मन्त्रार्थस्तु हे रुद्र ! त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन् हिंसामकुर्वन् शिवोऽस्मदीयपूजया सन्तुष्टः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ ॥ ६१ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ ६२ ॥

यजमानो मुण्ड्यमानो जपति । त्र्यायुषम् । उष्णिक् । लिङ्गोक्ता देवता । त्रीण्यायूंषि समाहृतानि त्र्यायुषम् बाल्ययौवनस्थाविराणि त्र्यायुषम् । यज्जमदग्नेः" त्र्यायुषम् यच्च "कश्यपस्य" यच्च "देवेषु तन्नो अस्तु" । तदस्माकमस्तु भवतु त्र्यायुषमित्याशीः ६२ ॥

आर्शीर्दैवतोष्णिक् । यस्याश्चत्वारः पादाः सप्ताक्षराः सोष्णिक् । का० ( ५, २, १६ ) त्र्यायुषमिति यजमानो जपतीति । सोऽयं जपो वपनलकालीनः । जमग्दग्नेः मुनेर्यत् त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः सम्बन्धि यत् त्र्यायुषं तथा देवेषु इन्द्रादिषु यत् त्र्यायुषमस्ति तत्सर्वं त्र्यायुषं नोऽस्माकं यजमानानामस्तु । जमदग्न्यादीनां बाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ॥ ६२ ॥

शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः । निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
तृतीयोऽध्यायः ॥ ३ ॥

---

लोहक्षुरमादत्ते । "शिवो नामासि" । हे क्षुर यतः त्वं शान्तनामासि यस्य च तव "स्वधितिः पिता" स्वधितिः वज्रः । तस्मै "नमः ते" तुभ्यं भवतु । "मा मा हिंसीः" मा विनाशय । वपति । "निवर्तयामि" निपूर्वो वपतिरिह मुण्डनार्थः । मुण्डया-

मि त्वाम् । आयुरर्थम् । अन्नाद्यर्थम् धनस्य पोषार्थम् शोभनापत्यतायै । शोभनवीर्याय च ॥ ६३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

क्षुरदेवतं यजुः । का० ( ५, २, १७ ) शिवो नामेति लोहक्षुरमादायेति । हे क्षुर ! त्वं नाम नाम्ना शिवः शान्तोऽसि स्वधितिः वज्रं ते तव पिता । ते तुभ्यं नमोऽस्तु मां मा हिंसीः । का० ( ५, २, १७ ) निवर्त्तयामीति वपतीति । यजमानदेवतं यजुः । निपूर्वो वृतिर्मुण्डनार्थः । हे यजमान ! त्वां निवर्त्तयामि मुण्डयामि किमर्थमायुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय सन्तानाय रायो धनस्य पोषाय पुष्ट्यै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्य्याय शोभनसामर्थ्याय ॥ ६३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।

अग्न्याधानादिपित्र्यान्तस्तृतीयोऽध्याय ईरितः ॥ ३ ॥



## चतुर्थोऽध्यायः।

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे। ऋक्सामाभ्याँ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम। इमा आपः शमु मे सन्तु देवीः। ओषधे त्रायस्व। स्वधिते मैनँ हिँसीः॥१॥

ॐम् "एदमगन्म"। आग्निष्टोमिका मन्त्राः अवभृथपर्यन्ताः। प्रजापतेरार्षम्। द्वे अप्येते ऋचौ अत्यष्टौ त्र्यवसाने। शाला स्तम्भमन्वारभ्य यजमानो जपति। द्वावर्द्धर्चौ देवयजनदेवत्यौ। आ इदम् "एदम्" देवयजनम् "अगन्म" वयम् आगताः स्मः। "पृथिव्या" उत्कृष्टम्। "यत्र" यस्मिन्देवयजने "देवासः" देवा एव देवासः। 'आज्जसेरसुक्'। "अजुषन्त"। जुषी प्रीतिसेवनयोः। सेवितवन्तः कामान्। "विश्वे" सर्वे तमागत्य देवयजनम्। "ऋक्सामाभ्यां" प्लवभूताभ्यां यज्ञसमुद्रं "सन्तरन्तः यजुर्भिश्च रायस्पोषेण" धनस्य पुष्ट्या निमित्तभूतया "इषा" अन्नेन च संमदेम हृष्येमहि तुष्येमहि। उन्दति। "इमा आपः शमु मे सन्तु देवीः"। शमिति सुखनाम। उ इति पादपूरणे। इमा आपः सुखरूपा मम भवन्तु। देव्यो दानादिगुणयुक्ताः अपां वज्रश्रुतौ वज्रसंस्तवोऽतः शमाशास्यते। कुशतरुणमन्तर्दधाति। "ओषधे त्रायस्व"। त्रायतिः पालनार्थः। हे ओषधे पालय एनं यजमानं क्षुरात् क्षुरस्यापि वज्रसम्बन्धः। क्षुरेणाभिनिदधाति। "स्वधिते मैनँ हिँसीः"। स्वधितिर्वज्रः। वज्रकर्म कुर्वन्नवज्रोऽपि वज्रमुच्यते। हे स्वधिते मा एनं हिंसीः॥१॥

आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये (क०

१-८, ९-१०, ११-४३, ४४-६३ ) प्रोक्ताः । चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्य्यन्तमग्निष्टोममन्त्रा उच्यन्ते । तेषां प्रजापतिर्ऋषिः । तत्र चतुर्थे यजमानसंस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते तत्रादौ यजमानः षोडशर्त्विजो वृत्वारण्योरग्नी समारोप्य शालां गच्छेत् । तथा च का० [ ७, १, ३६ ] समारोह्याग्नी शालास्तम्भं पूर्वार्द्धे गृहीत्वारणिपाणिराहेदमगन्मेति । द्वे अत्यष्टी त्र्यवसाने । तयोः कण्डिकयोः सप्त मन्त्राः । आद्यावर्धर्चौ देवयजनदेवत्यौ । आ इदम् अगन्मेति पदानि । व्यवहिताश्चेति ( पा० १, ४, ८२ ) उपसर्गक्रियापदयोर्व्यवधानम् । इदमिति हस्तेन प्रदर्श्यते । वयमिदं पृथिव्याः सम्बन्धि देवयजनं देवा इज्यन्ते यस्मिन् तद्देवयजनं स्थानम् । आ अगन्म आगताः स्मः । गच्छतेर्लङ्युत्तमबहुवचने व्यत्ययेन शपो लुकि मो नो धातोरिति मस्य नः । अडागमश्च । इदं किम् । देवयजने विश्वे देवासः सर्वे देवाः अयुषन्ताप्रीयन्त प्रीत्या स्थिता इत्यर्थः । किञ्च । वयं रायो धनस्य पोषेण पुष्ट्या इषा इष्यमाणेनान्नेन च संमदेम । मदी हर्षे व्यत्ययेन शप् । हृष्टा भवेम धनैरन्नैश्च तृप्येम । किं कुर्वन्तः । ऋक्सामाभ्यामृक् च साम च ऋक्सामे अचतुरेति सूत्रेणाजन्तो निपातः । ताभ्यां यजुर्भिश्च वेदत्रयगतमन्त्रैः सन्तरन्तः समुद्रवद्गम्भीरं सोमयागं समापयन्त इत्यर्थः । का० ( ७, २, ९ ) दक्षिणं गोदानं वितार्योनत्तीमा आप इति । इमा आपः । आपो देवताः । इमा आपः शिरःक्लेदाय सिच्यमाना एता आपो मे मम यजमानस्य शमु । उ एवार्थे । शं सुखार्थमव्ययम् । शं सुखकारिण्य एव सन्तु भवन्तु । किम्भूता आपः । देवीः देव्यः दीव्यन्ति ताः देव्यः । द्योतना निर्मला इत्यर्थः । का० ( ७, २, १० ११ ) यूपवत् कुशतरुणं क्षुरेण चाभिनिधाय छित्त्वेति । यथा पश्वर्थयूपस्य छेदे मन्त्रः एवमत्रापि तृणान्तर्धानं क्षुरस्थापनञ्च मन्त्रद्वयेन कर्त्तव्यमिति सूत्रार्थः । ओषधे । कुशतरुणं देवता । हे ओषधे ! कुशतरुण ! त्वं यजमानं त्रायस्व क्षुराद्रक्ष । स्वधिते । क्षुरो देवता । हे स्वधिते क्षुर ! एनं यजमानं मा हिंसीः ॥ १ ॥

आपो॑ अ॒स्मान्मा॒तरः॑ शुन्धयन्तु घृ॒तेन॑ नो घृत॒प्वः॑

पुनन्तु। विश्वꣳ हि रि॒प्रं प्रव॒हन्ति दे॒वीः। उदि॒दा॑भ्यः॒ शुचि॒रा पू॒त ए॑मि। दी॒क्षा॒त॒प॒सोस्त॒नूर॑सि॒ तां त्वा॑ शि॒वाꣳ श॒ग्मां परि॑दधे भ॒द्रं वर्णं॒ पुष्य॑न् ॥ २ ॥

स्नाति। "आपो अस्मान्मातरः शुन्धयन्तु"। आप उच्यन्ते। या एता आपः जगतो निर्मात्र्यः ता अस्मान् शुन्धयन्तु शोधयन्तु। किञ्च "घृतेन" च "नः" अस्मान् "घृतप्वः"। घृतेन पुनन्तीति घृतप्वः। घृतं हि अपां परमं तेजः पवित्रं च। "तद्वै सुपूतं यं घृतेन पुनन्तीति श्रुतिः। सुवर्णप्राशो घृतप्राश इति मेध्यानी'ति गौतमः। पुनन्तु यज्ञयोग्यं कुर्वन्तु। स्तुतिपूर्वं हि याच्ञा क्रियते नचात्र स्तुतिरत आह। "विश्वं हि रिप्रं प्रवहन्ति देवीः"। हि शब्दो यस्मादर्थे। रयो रिप्रमिति पापनामनी भवतः। यस्मात्स्वभावत एव सर्वं पापं प्रकर्षेण दहन्ति। देव्यः। उत्क्रामत्युत्तरपूर्वार्द्धम्। "उदिदाभ्यः शुचिरापूत एमि"। उदेमि उद्गच्छामि। इत् शब्दोऽनर्थकः। आभ्योऽद्भ्यः शुचिः सन् आपूतश्च। यावत्पापं पावितः। वासःपरिधत्ते। "दीक्षातपसोः"। दीक्षा एव दीक्षा। तपःशब्देन उपसद उच्यन्ते तपःप्रधानत्वात्। तन्वास्त्राणं वासः तनूशब्देनोच्यते। या त्वं दीक्षातपसोस्तनूः शरीरं भवसि "तां त्वा शिवां" शान्ताम् "शग्मां" ससुखां साध्वीं वाश्रुतेः। परिदधे आच्छादयामि। "भद्रं" कल्याणम्। "वर्णं" दीक्षितरूपम् "पुष्यन्" वर्द्धयन्। अनेन हि दीक्षितरूपमभिव्यज्यते ॥ २ ॥

का० (७, २, १५) आपो अस्मानिति स्नात्वेति। मातरः मिमते ता मातरो जगन्निर्मात्र्यो मातृवत्पालयित्र्यो वा आपः अस्मान् कृतक्षीरान् यजमानान् शुन्धयन्तु शुन्ध शुद्धौ शोधयन्तु क्षीरकर्मनिमित्तामपहतिं निवारयन्त्वित्यर्थः। किञ्च घृतप्वः घृ क्षरणे जिघर्ति क्षरति घृतं तेन क्षरितजलेन पुनन्तीति घृतप्वः जलदेव-

तास्ताश्च घृतेन क्षरितजलेन नोऽस्मान् पुनन्तु शुद्धान् कुर्वन्तु । किञ्च । देवीः द्योतमाना आपो विश्वं हि । हि एवार्थः । सर्वमेव रिप्रं पापं प्रवहन्ति प्रकर्षेणापनयन्तु । रपो रिप्रमिति पापनामनी भवत इति यास्कः ( निरु० ४, २१ ) । का० ( ७, २, १५ ) उदिदाभ्य इत्युत्क्राम्यत्युत्तरपूर्वार्धमिति । अहमाभ्योऽद्भ्यः उदेमि इत् इदेवार्थे उद्गच्छाम्येव । जलान्निर्गच्छामीत्यर्थः । किम्भूतोऽहं शुचिः शुद्धः स्नानेन । तथा आपूतः समन्ताद्भावेनान्तरपि शुद्ध आचमनेन । शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां वहिरन्तश्च शुद्धिरुक्ता । का० ( ७, २, १६–१९ ) क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य स्नातवस्यं वाऽमौत्रधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति । दीक्षातपसोः । वासो देवता । हे क्षौम वस्त्र ! त्वं दीक्षातपसोस्तनूरसि दीक्षा दीक्षणीयेष्टिः तप उपसदिष्टिः । दीक्षाभिमानिदेवतायास्तपोऽभिमानिदेवतायाश्च त्वं शरीरवत् प्रियमसि । तां दीक्षातपसोस्तनूं तद्देवताद्वयशरीरभूतां त्वामहं परिदधे धारयामि । किम्भूतां त्वां शिवां शग्मां द्वयोरपि शब्दयोः सुखवाचकत्वादत्यन्तसुखरूपां कोमलत्वात् । किम्भूतोऽहम् । भद्रं वर्णं पुष्यन् त्वत्परिधानेन कल्याणीं कान्तिं पुष्यन् ॥ २ ॥

म॒ही॒नां पयो॑ऽसि वर्चो॒दा अ॑सि॒ वर्चो॑ मे देहि ।
वृ॒त्रस्या॑सि क॒नीन॑कश्चक्षु॒र्दा अ॑सि॒ चक्षु॑र्मे देहि ॥ ३ ॥

तमभ्यनक्ति । नवनीतमुच्यते । "महीनां पयोऽसि" । पयोविकारे नवनीते पयःशब्दः । महीनां गवां पयोऽसि । यतश्च "वर्चोदा असि" । वर्चस्तेज इत्यनर्थान्तरम् । अतो "वर्चो मे देहि" । अक्षिणी अनक्ति । "वृत्रस्यासि" । "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासी"दित्यादिना त्रैककुदस्य चक्षुः संस्तवस्तदयं मन्त्रोऽभिवदति । वृत्रस्य चक्षुषः सम्बन्धिनी भवसि त्वम् । कनीनकः पुरुषो यतः होत्रैककुद्" यतश्च स्वभावत "श्चक्षुर्दा" असि अतश्चक्षुर्मे देहि ॥ ३ ॥

का० ( ७, २, ३३ ) शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन

शीर्ष्णोऽभ्यनुलोमं सपादको महीनां पयोऽसीति । प्राचीनशाला-पूर्वभागेषु कुशेषु स्थित्वा नवनीतं गृहीत्वा शिरस आरभ्य पादान्तं शरीराभ्यङ्गं कुर्य्यादिति सूत्रार्थः । महीनां पयः । नवनीतमुच्यते हे नवनीत ! त्वं महीनां गवां पयोऽसि । महीति गोनामसु पठितम् ( निघ० २, ११, ५ ) । नवनीतस्य क्षीरजन्यत्वात् पयस्त्वोपचारः । वर्चोदा असि । वर्चो ददातीति वर्चोदाः । अतिस्निग्धत्वेन कान्ति-प्रदमसि पुंस्त्वमार्षमतो मे मह्यं यजमानाय वर्चो देहि कान्ति प्रय-च्छ ॥ का० ( ७, २, ३४ ) वृत्रस्येत्यक्षावनक्ति त्रैककुदाञ्जनेनाभावे-ऽन्यादिति । त्रिककुत्पर्वतादुत्पन्नाञ्जनं लभ्यते चेत्तेनाक्षिद्वयमञ्ज्या-त्तदभावेऽन्यदप्यञ्जनं ग्राह्यमिति सूत्रार्थः । वृत्रस्य । अञ्जनं देवता । हे अञ्जन ! त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्ड-लरूपोऽसि । यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदित्यादिश्रुतिः । ( ३, १, २, १२ ) । तथा च तित्तिरिः । इन्द्रो वृत्रमहन् तस्य कनी-निकापरापतत्तदेवाञ्जनमभवदिति । चक्षुर्दा असि कनीनिकारूपत्वा-त्त्वं दृष्टिप्रदोऽसि अतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रय-च्छ ॥ ३ ॥

चित्पतिर्मा पुनातु । वाक्पतिर्मा पुनातु । देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छ-केयम् ॥ ४ ॥

कुशपवित्रैः पावयति । "चित्पतिर्मा पुनातु" । चिती सं-ज्ञाने । अस्य चित् । विज्ञानात्मा मनो वाभिधीयते । चित्प-तिर्मा पुनातु । "प्रजापतिर्वै चित्पति रिति" श्रुतिः । "वाक्-पतिः" । "प्रजापतिर्वै वाक्पति"रिति श्रुतिः । "देवो मासवि-ता पुनातु" । अच्छिद्रेणेति व्याख्यातम् । "तस्य ते पवित्रपते" । तस्य पवित्रपूतस्येति च षष्ठ्यन्तयोः सम्बन्धः । यजमान-वाचित्वं च । तस्य मम पवित्रपूतस्य सतः । ते तव प्रसवे वर्त्तमानस्य हे पवित्रपते देव सवितः एतद्भवतु "यत्कामः" अ-

इमात्मानं "पुने" पावयामि। "तच्छकेयम्" तच्छक्नुयाम्। "यज्ञस्योदृचं गच्छामि" श्रुतिः। अच्छिद्रेणेत्येवमादित्रयाणामनुषङ्गो योज्यः॥ ४॥

का० (७, ३, १) कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति। अच्छिद्रेणेति शेषस्त्रिष्वपि मन्त्रेष्वनुषज्यते। चित्पतिर्मा। चितां ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवो मा मां यजमानं पुनातु शोधयतु मनो वै चित्पतिरिति तित्तिरिवाक्यात्। यद्वा चित्पतिः प्रजापतिः प्रजापतिर्वै चित्पतिरिति श्रुतेः (३, १, २, २२)। किञ्चाच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः किरणैः। वायुरच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच्च यद्वादित्यमण्डलमच्छिद्रं पवित्रम्। असौ वा आदित्योऽच्छिद्रं पवित्रमिति श्रुतेः। हे पवित्रपते! पवित्रान् शुद्धान् पाति पवित्रपतिस्तत्सम्बुद्धौ हे पवित्रपते! शुद्धपालक! ते पवित्रपूतस्य तव पवित्रेण पूर्वोक्तेन शुद्धस्य तस्य यजमानस्याभीष्टं भूयादिति शेषः। तदेव स्पष्टयति। यत्कामोऽहं पुने तत् शकेयम् यः कामो यस्य यत्कामः यद्वा यस्मिन् कामो यस्य स यत्कामः सोमयागानुष्ठाने कामवानहं पुने आत्मानं शोधयामि तत्सोमयागानुष्ठाने शक्तो भूयासम्। यज्ञानुष्ठानसामर्थ्यं मेऽस्त्वित्यर्थः॥ वाक्पतिः वाचां पतिर्बृहस्पतिर्मा मां पुनातु॥ सविता देवोऽन्तर्यामी मा मां पुनातु। एतन्मन्त्रद्वयं पूर्ववद्योज्यम्॥ ४॥

आ वो॑ दे॒वास॑ ईमहे वा॒मं प्र॑य॒त्य॑ध्व॒रे। आ वो॑ दे॒वास॑ आ॒शिषो॑ य॒ज्ञिया॑सो हवामहे॥ ५॥

"आवो देवास" इति वाचयति। दैवी अनुष्टुप्। ईमहे इति याच्ञाकर्मसु पठितम्। हे देवासः आ "ईमहे" आयाचे "वो" युष्मान्। किम्। "वामम्" वन षन सम्भक्तौ। वननीयं संभजनीयं वस्तु। "प्रयत्यध्वरे" प्रगच्छति यज्ञे। किञ्च। हे "देवासः आहवामहे"। आह्वयामः "वः" युष्माकं सम्बन्धिन्यः "आशिषः यज्ञियासः" यज्ञसम्पादिन्यः। यज्ञिया एव

यज्ञियासः । आ ईमहे आयाचे वः ॥ ५ ॥

का० ( ७, ३, ६ ) आ वो देवास इति वाचयतीति । अध्वर्युर्यजमानं वाचयति । दैवी अनुष्टुप् आशीः । हे देवासः ! देवाः ! वयं वो युष्मान् वामं वननीयं यज्ञफलम् आ ईमहे साकल्येन याचामहे । वन्यते भज्यत इति वामम् । वन सम्भक्तौ । मप्रत्ययः । ईमहे याचतिकर्मसु पठितः द्विकर्मकः ( निघ० ३, १९, १ ) । क्व । सति अध्वरे अस्मदीये यज्ञे प्रयति प्रवर्त्तमाने सति । प्रैतीति प्रयन् तस्मिन् प्रपूर्वादिणः शतरि रूपम् । किञ्च हे देवासो ! देवाः ! वो युष्मान् वयं हवामहे आह्वयामः । किं कर्त्तुं यज्ञियासः । यज्ञस्येमा यज्ञिया यज्ञसम्बन्धिनीराशिषः फलानि आ आनेतुं समानेतुमित्यर्थः । उपसर्गेण धातुरध्याहर्त्तव्यः । यज्ञफलं प्राप्तुं युष्मानाह्वयाम इत्यर्थः ॥ ५ ॥

स्वाहा यज्ञं मनसः । स्वाहोरोरन्तरिक्षात् । स्वाहा द्यावापृथिवीभ्याम् । स्वाहा वातादारभे स्वाहा ॥ ६ ॥

अथ अङ्गुलीर्न्यचते । "स्वाहा यज्ञं मनसः । यज्ञं मनसः सकाशादहमारभे इत्यनुषङ्गः । 'उरोर्विस्तीर्णादन्तरिक्षादहमारभे यज्ञं, द्यावापृथिवीभ्यामहमारभे यज्ञम् । "वातादहमारभे यज्ञम्" पञ्चस्वाहाकारा येषु यज्ञेषु तत्रार्थवादः । "यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मानं धत्त" इति । स्वाहाकारेण हि हविः अदीयत इति स्वाहाकारो यज्ञः ॥ ६ ॥

का० ( ७, ३, ७—१० ) स्वाहा यज्ञमित्यङ्गुली अचते नानाहस्तयोरेवं शेषं प्रतिमन्त्रं मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतोऽङ्गुष्ठौ तत्सहिते चोत्सृजतीति ॥ आद्यमन्त्रेण हस्तद्वयकनिष्ठिकाद्वयं सङ्कोचयति एवमन्यत्रयेणान्याः । स्वाहा वातादारभ इत्युत्तमेन मुष्टिद्वयं कुर्य्यादिति सूत्रार्थः ॥ स्वाहा यज्ञम् । चतुर्णां यजुषां यज्ञो देवता । स्वाहाशब्दस्य निपातत्वेनानेकार्थत्वादुचिता अर्था ब्राह्मणानुसारेण ग्राह्याः । तथाहि । स्वाहा यज्ञं मनसः । मनस इति पञ्चमी तृतीयार्थे मनसा यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि अत्र

स्वाहाशब्दोऽभिगमनार्थः ॥ स्वाहोरोरन्तरिक्षात् । पञ्चमी सप्तम्यर्थे उरौ विस्तीर्णेऽन्तरिक्षे स्वाहा यज्ञ आश्रितः । स्वाहा शब्दो यज्ञार्थोऽतः प्रभृति ॥ स्वाहा द्यावापृथिवीभ्याम् । द्यावापृथिव्योः स्वाहा यज्ञः श्रितः । लोकत्रयव्यापी यज्ञ इत्यर्थः ॥ स्वाहा वातादारभे । वाताद्वायुप्रसादात् स्वाहा यज्ञमारभे प्रवर्त्तयामि । वायोः सर्वकर्मप्रवर्त्तकत्वात् ॥ स्वाहा यज्ञ एवं सिद्ध इति शेषः ॥ ६ ॥

आकूत्यै प्रयुजेऽग्नये स्वाहा । मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा । सरस्वत्यै पूष्णेऽग्नये स्वाहा । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा ॥ ७ ॥

औद्ग्रभणानि जुहोति । "आकूत्यै प्रयुजे" । आकुवनमाकूतिः प्रयत्नः आत्मनो धर्मः । मनसः प्रेरणाय भवति । प्रयुङ्क्त इति "प्रयुक्" आकूतलक्षणाय प्रयोगलक्षणाय च "अग्नये स्वाहा" सुहुतमस्तु । "मेधायै मनसे" मेधालक्षणाय मनोलक्षणाय च अग्नये स्वाहा । जपति "दीक्षायै तपसे" । दीक्षालक्षणाय तपोलक्षणाय च अग्नये स्वाहा । तपःशब्देन चोपसद उच्यते । "सरस्वत्यै पूष्णे" । वाग्वै सरस्वती पशवो वै पूषा इति श्रुतिः । वाग्लक्षणाय पशुलक्षणाय च अग्नये स्वाहा । पशुसाध्यत्वाद्यज्ञस्य पशुग्रहणम् । "आपो देवीः" विराट् लिङ्गोक्ता देवता । हे आपो देव्यः "बृहत्यो" महत्यः । विश्वशम्भुवः सर्वस्य जगतः सुखेन भावयित्र्यः । हे "द्यावापृथिव्यौ" हे "उरो" हे विस्तीर्ण "अन्तरिक्ष युष्मभ्यं च बृहस्पतये च । "हविषा विधेम" । विदधातिर्दानकर्मा । हविषेति प्रथमाया विपरिणामः । हविर्दद्मः ॥ ७ ॥

अतः परं षडौद्ग्रभणहोममन्त्राः । चतुर्णामग्निर्देवता । का० (७,

३, १६ ) औदुम्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रमिति । आकूत्यै प्रयुजेऽग्नये स्वाहा । अग्नये वह्निदेवाय स्वाहा, सुहुतमिदमस्तु । किम्भूतायाग्नये आकूत्यै प्रयुजे । यज्ञं करिष्यामीत्येवंविधो मानसः सङ्कल्प आकूतिः तस्यै तत्सम्पूर्त्यै प्रयुजे प्रयुङ्क्तेऽसौ प्रयुक् तस्मै । सङ्कल्पसिद्ध्यै निर्विघ्नं प्रेरयते इत्यर्थः । इति प्रथमो मन्त्रः । मेधायै मनसेऽग्नये स्वाहा । श्रुतयोर्मन्त्रयोर्धारणशक्तिर्मेधा तत्सिद्ध्यर्थं मनसे मदीयमनोऽभिमानिनेऽग्नये स्वाहा सुहुतमस्तु । विद्याधारणशक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति । इति द्वितीयः । जपति । दीक्षायै तपसेऽग्नये स्वाहा । व्रतनियमो दीक्षा तत्सिद्ध्यर्थं मदीयशारीरतपोऽभिमानिनेऽग्नये स्वाहा । नियमसंरक्षणं तपसैव भवति । ततस्तपोदात्रे इत्यर्थः । इति तृतीयः। सरस्वत्यै पूष्णेऽग्नये स्वाहा । मन्त्रोच्चारणशक्तिः सरस्वती तत्सिद्ध्यर्थं पूष्णे पुष्णातीति पूषा तस्मै वागिन्द्रियपोषकायाग्नये हुतमस्तु इति चतुर्थः ॥ आपो देवीः । लिङ्गोक्तदेवता विराट् यस्या एकादशाक्षराः त्रयः पादाः सा विराट् । दशकास्त्रयो विराडेकादशकावेत्युक्तेः । अत्र प्रथमो द्वादशार्णस्तेनैकाधिका । हे आपः । हे द्यावापृथिवी ! द्याव्यापृथिव्यौ ! हे उरो विस्तीर्ण अन्तरिक्ष ! युष्मभ्यं बृहस्पतये च हविषा विधेम हविर्दद्मः । द्वितीयार्थे तृतीया । विदधातिर्दानकर्मा । स्वाहा सुहुतमस्तु किम्भूता आपः । देवीः देव्यो द्योतमानाः बृहतीः बृहत्यः प्रभूताः उभयत्र पूर्वसवर्णः । विश्वशम्भुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशम्भुवः । इति पञ्चमो मन्त्रः ॥ ७ ॥

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्त्तो॑ वुरीत स॒ख्यम् । विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहा॑ ॥ ८ ॥

"विश्वो देवस्य" । सावित्र्यनुष्टुप् । विश्वः सर्वो जनः देवस्य दानादिगुणयुक्तस्य "नेतुः" प्रणेतुः प्रसवितुः "मर्त्तः" मनुष्यः "वुरीत" वृणीत "सख्यं" सखिताभावम् । किञ्च "विश्वः" सर्वः "राये" धनाय "इषुध्यते" प्रार्थयते सवितारम् । इषुध्यतिर्याच्ञाकर्मसु पठितः । किञ्च "द्युम्नं वृणीत"।

द्युम्नं द्योततेर्यशो वाऽन्नं वा प्रार्थयते । "पुष्यसे" पोषाय स्थितये । य इत्थम्भूतः सविता तस्मै स्वाहा ॥ ८ ॥

अथ षष्ठः । सवितृदेवत्यानुष्टुप् स्वस्त्यात्रेयदृष्टा । विश्वो मर्त्तः सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । वृञ् वरणे अस्माल्लिङि ताङि प्रथमैकवचने व्यत्ययेन शपो लुकि उदोष्ठ्यपूर्वस्येति ऋत उदादेशः । किञ्च विश्वः सर्वो जनो राये धनाय इषुध्यति सवितारं प्रार्थयते । इषुध्यतिर्याच्ञाकर्मसु पठितः ( निघ० ३, १९, १४ ) । किञ्च द्युम्नं द्योततेर्यशो वान्नं वा तच्च वृणीत प्रार्थयते । किमर्थं पुष्यसे पोषाय स्वप्रजापालनाय । पुषेस्तुमर्थे असेप्रत्ययः । यः इत्थम्भूतः सविता तस्मै स्वाहा । इति षष्ठ औदुम्रभणमन्त्रः । समाप्तास्ते ॥ ८ ॥

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः । शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिꣳसीः ॥ ९ ॥

कृष्णाजिनयोः शुक्लकृष्णसन्धिमालभते । "ऋक्सामयो"रिति । ये युवामृचां साम्नां च । "शिल्पे स्थः" यद्वै प्रतिरूपं तच्छिल्प"मिति श्रुतिः । प्रतिरूपे प्रतिभूते भवथः । "ते वां" युवाम् । "आरभे" आलभे । "ते च मा पातं" गोपायतम् । "आ अस्य यज्ञस्य उदृचः" । उत्तमा ऋचः आसमाप्तेरित्यर्थः । दक्षिणजानुमारोहति । "शर्मासि" । कृष्णाजिनमुच्यते । शर्म शरणं यतस्त्वमसि अतः शर्म शरणं "मे" मह्यं "यच्छ" प्रयच्छ । "नमस्ते अस्तु" नमस्तुभ्यं भवतु । "मा मा हिꣳसीः" ॥ ९ ॥

का० ( ७, ३, २३ ) कृष्णाजिनयोः सन्धिमालभत ऋक् सामयोरितीति ॥ कृष्णाजिने देवते । हे कृष्णाजिनगते शुक्लकृष्णरेखे ! युवामृक्सामयोः शिल्पे स्थः ऋगभिमानिसामाभिमानिदेवतयोः सम्बन्धिनी शिल्पे चातुर्यं तद्रूपे भवतः । यद्वै प्रतिरूपं

तच्छिल्पमिति श्रुतेः ( ३, २, १, ५ ) । ते वां तथाविधे युवामारभे अहं स्पृशामि ते मा पातं तथाविधे युवां मा मां पालयतम् । कियन्तं कालमिति चेत्तदाह । अस्य यज्ञस्य आ उद्दचः उत्तमा चरमा ऋगुदृक् तस्या उद्दचः आ तत्पर्य्यन्तं पञ्चम्यपाङ्परिभिरिति पञ्चमी । एतद्यज्ञसमाप्तिपर्य्यन्तमित्यर्थः । ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कुत्राप्यतिष्ठतां तन्मृगचर्मणि यच्छुक्लं तदृचो रूपं यत् कृष्णं तत् साम्नो रूपम् । तदुक्तं तित्तिरिणा ( ६, १, ३ ) । ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठमाने कृष्णमृगरूपं कृत्वा पक्राम्यातिष्ठतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत् कृष्णमिति ॥ का० ( ७, ३, २४ ) दक्षिणजानुमारोहति शर्मासीति । हे कृष्णाजिन ! त्वं शर्म शरणमसि । अतो मे मह्यं शर्म शरणं यच्छ देहि । स्वकीयत्वेन स्वीकुर्वित्यर्थः । ते तुभ्यं कृष्णाजिनाय नमोऽस्तु मा मां यजमानं मा हिंसीः मा जहि ॥ ९ ॥

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि । सोमस्य नीविरसि । विष्णोः शर्मासि शर्म यजमानस्य । इन्द्रस्य योनिरसि । सुसस्याः कृषीस्कृधि । उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यंहस आस्य यज्ञस्योदृचः ॥ १० ॥

मेखलां बध्नीते । "ऊर्गसि" । आङ्गिरसामार्षमस्मिन्यजुषि । ऊर्गसि अन्नं भवसि । "आङ्गिरसी" अङ्गिरोभिर्दृष्टा । "ऊर्णम्रदाः" । ऊर्णेव मृद्वी । यतस्त्वमधस्तनैर्गुणैर्युक्तासि अत "ऊर्ज"मन्नं "मयि धेहि"स्थापय । नीवीं कुरुते । "सोमस्य नीविरसि" । पितृदेवत्या वै नीविरित्यदीक्षितस्योक्तम् । इह तु सोमयागार्था नीविः सोमेन व्यपदिश्यते । शिरः प्रोर्णुते । "विष्णोः शर्मासि" । "उभयं वा एषोऽत्र भवति यो दीक्षिते विष्णुश्च यजमानश्चेत्यादि" निदानम् । "विष्णो"र्दीक्षितस्य शरणं भवसि शरणं च "यजमानस्य" । कृष्णविषाणां शिखि

बध्नीते । "इन्द्रस्य योनिः" । "देवाश्च वा असुराश्चेत्यादि" निदानम् । यथा इन्द्रस्य योनिर्जन्मस्थानं पूर्वं त्वमासि एवमिदानीं यजमानस्येतिदर्शनार्थोऽर्थवादः । भूमौ लिखति । "सुसस्याः कृषीस्कृधि" । कल्याणधान्याः कृषीः कृधि जनानां कुरु । दण्डमुच्छ्रयति । "ऊच्छ्रयस्व" । ऊर्ध्वो भव । हे "वनस्पते" ऊर्ध्वो भूत्वा मां पाहि गोपाय । "अꣳहसः पापात् । कियन्तं कालम् । "आस्य यज्ञस्योदृचः" । आ अस्य यज्ञस्य समाप्तेः ॥ १० ॥

का० ( ७, ३, २६ ) मेखलां बध्नीते वेणिं त्रिवृतꣳ शणमुञ्जमिश्रामन्तरां वासस ऊर्गसीति । अङ्गिरोभिर्दृष्टं मेखलं यजुः । हे मेखले ! त्वमाङ्गिरसो अङ्गिरोनामकानामृषीणां सम्बन्धिनी ऊर्क् अन्नरसरूपासि । किम्भूता ऊर्णम्रदाः ऊर्णेव म्रदीयसी कम्बलवत् मृदुरसि । तथाविधा त्वमूर्जमन्नरसं मयि धेहि स्थापय । अङ्गिरसः स्वर्गं लोकं गच्छन्तोऽन्नरसं व्यभजन्त विभज्यमानेऽवशिष्टोऽन्नरसो भूमौ पतितः शणमुञ्जनामकतृणरूपेणाविर्भूतस्तस्माच्छणमुञ्जमयी मेखला अत एव मेखलाया आङ्गिरसत्वमिति तित्तिरिणा प्रत्यपादि । का० ( ७, ३, २७ ) नीविं कुरुते सोमस्य नीविरसीति । हे मेखले ! त्वं सोमस्य नीविरासि सोमदेवतायाः प्रियभूता ग्रन्थिरसि । मूलाग्रयोरेकीकरणेन ग्रन्थिविशेषो नीविरुच्यते । अदीक्षितस्य पितृदेवत्या नीविरुक्ता दीक्षितस्य तु सोमयागाय नीविः सोमेन व्यपदिश्यते । का० ( ७, ३, २८ ) शिरः प्रोर्णुते विष्णोः शर्मेति । हे वस्त्र ! त्वं विष्णोः व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवासि अतो यजमानस्य शर्म सुखं कुर्विति शेषः । का० ( ७, ३, २९–३१) कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते तथा कण्डूयनमुपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरितीति । हे कृष्णविषाणे ! त्वं यथा पूर्वमिन्द्रस्य योनिरासि तथेदानीं यजमानस्य स्थानं भवेति शेषः । पुरा कदाचिद्यज्ञपुरुषो दानिणां देवीं समभवत्तस्मात्सम्भावनादिन्द्रोऽजायत तदानीमत्रान्यस्योत्पत्तिर्मा भूदिति विचार्येन्द्रः स्वां जोनिं दक्षिणाया आच्छिद्य मृगेषु न्यद-

धात् निहिता सा योनिः कृष्णविषाणाभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यधादित्याख्याने कथा तस्मात् कृष्णविषाणाया इन्द्रयोनित्वम् । का० ( ७, ३, ३२ ) भूमौ चोल्लिखति सुसस्या इतीति । हे कृष्णविषाणे ! त्वं कृषीः सुसस्याः कृधि कुरु । किरतेः शपि लुप्ते श्रुशृण्वित्यादिना [ पा० ६, ४, १०२ ] हेर्धिः । शोभनं सस्यं यासु ताः सुसस्याः । सस्यं व्रीहियवादि । तदर्थो भूम्युल्लेखः कृषिः यजमानानां कृषयः सन्ति ताः सर्वाः शोभनधान्याः कुर्वित्यर्थः । का० ( ७, ४, १—२ ) मुखसम्मितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येनमुच्छ्रयतीति । दण्डो देवता । हे वनस्पते ! वृक्षावयव दण्ड ! उच्छ्रयस्व उन्नतो भव । ऊर्ध्वो भूत्वा अंहसः पापात् मा मां पाहि रक्ष तत्र कालावधिरुच्यते । अस्यानुष्ठीयमानस्य यज्ञस्य उदृचः उत्तमायाः समाप्तिगतायाः ऋचः आ तदृक्पर्य्यन्तमित्यर्थः ॥ १० ॥

व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः । दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां यज्ञवाहसꣳ सुतीर्था नो असद्वशे । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥ ११ ॥

वाचं विसृजते । "व्रतं कृणुत" । व्रतशब्देन पयोऽभिधीयते । मम क्षिप्रं भोजनार्थं पयः कुरुत । "अग्निः ब्रह्म" त्रयीलक्षणम् । "अग्निः यज्ञः" अग्निं प्रत्याख्याय यज्ञो न प्रवर्त्तते इत्याशयः । "वनस्पतिर्यज्ञियः" । "न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति" श्रुतिः । "दैवीं धियम्" । शक्करी अतिशक्करी वा । अस्याश्च पूर्वेणार्द्धर्चेन व्रतायोपस्पृशति "दैवीं धियं मनामहे" । मनामह इति याच्ञाकर्मसु पठितम् । देवसम्बन्धिनीं धियं याचामहे । "सुमृडीकाम्" मृड सुखने । सुसुखाम् । "अभिष्टये" । अभिपूर्वस्य यजतेरादिलोपः अभि इष्टिः अभियागाय । अथवा अभिपूर्वस्य सिश्चतेः अभिष्टिः । "अ-

भिषेकाय" प्रक्षालनाय । "वर्चोधाम्" ब्रह्मवर्चसो धारयित्रीम् । "यज्ञवाहसम्" यज्ञस्य वोढ्रीम् । सा च "सुतीर्थानोऽसत्" । यज्ञं प्रति शोभनावतारा अस्माकं भवतु । "वशे" । वश्या भवतु । व्रतं व्रतयति । "ये देवाः" । अत्राग्निहोत्रसम्पदं यजमानः करोति । ये मयि प्राणेषु देवाः "मनोजाताः" मनसो जाताः । मनःपूर्विका हि तेषां प्रवृत्तिः । "मनोयुजः" । मनसा युज्यन्ते स्वप्नावस्थायामिति मनोयुजः । "दक्षक्रतवः" । क्रतुः सङ्कल्पः । तस्यैव समृद्धिर्दक्षक्रतुशरीरा । वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वेदेवाः" य एते अध्यात्मश्रुतौ पठ्यन्ते त इहोच्यन्ते । "ते नः" अस्मान् "अवन्तु" ते अस्मान् पान्तु पालयन्तु "तेभ्य"श्च स्वाहा सुहुतमस्तु । सुहुतमेतद्धविर्भवतु ॥ ११ ॥

का० ( ७, ४, १५ ) व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्तेति । मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम् । हे परिचारकाः । व्रतं कृणुत दोहनादिना क्षीरं सम्पादयत । दीक्षितस्य भोजनाय यन्नियतं पयस्तद् व्रतमित्युच्यते वाक्यावृत्तिरादरार्था । का० ( ७, ४, १५ ) अग्निर्ब्रह्मेति च सकृदिति । एतमपि मन्त्रं सकृत् पठेत् । अग्निर्ब्रह्म ब्रह्मशब्देन वेदत्रयमभिधीयते तस्य वेदत्रयस्याग्नित्वमुपचर्य्यते । आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासम्भवात् । तस्मादयं श्रौतोऽग्निर्ब्रह्मैव वेदरूप एव । अयमग्निर्यज्ञः तस्य अग्नेर्यज्ञसाधनत्वाद्यज्ञत्वमुपचर्य्यतेऽग्निर्यज्ञ एवेति । वनस्पतिः । यज्ञियः यज्ञयोग्यो यो वनस्पतिः । खादिरादिः सोऽपि यज्ञ इत्यनुवर्त्तते वनस्पतेर्यज्ञसाधनत्वाद्यज्ञत्वम् । तथा च श्रुतिः ( ३, २, २, ९ ) । न हि, मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति । का० ( ७, ४, ३२ ) दैवीं धियमिति व्रतायोपस्पर्शनँ स्वासन इति । शकरी अतिशकरी वा । पूर्वार्धेनाचमनम् । वयं धियं मनामहे यज्ञानुष्ठानविषयां बुद्धिं याचामहे । मनामह इति याच्ञाकर्मसु पठितः [ निघ० ३, १९, १६ ] । किमर्थमभिष्टये

अभि समन्ताद्यजनमभिष्टिः । अभिपूर्वस्य यजतेः क्तिनि आदिलोपः । अभिमुखत्वेन प्राप्तस्य यज्ञस्य सिद्ध्यर्थम् । किम्भूतां धियं दैवीं देवसम्बन्धिनीं देवतोद्देशेन प्रवृत्तामित्यर्थः । तथा सुमृडीकाम् सुष्ठु मृडयति सुमृडीका ताम् शोभनसुखहेतुम् । तथा वर्चोधां वर्चो दधाति वर्चोधास्तां तेजसो धारयित्रीम् । तथा यज्ञवाहसम् यज्ञं वहति यज्ञवाहास्तां यज्ञनिर्वाहकर्त्रीम् । तथाविधा धीः सुतीर्था सुखेन तरीतुं प्राप्तुं शक्या सुतीर्था यद्वा सुष्ठु तीर्थमवतरणमार्गो यस्यां सा । एवंविधा सती नो वशे असत् अस्माकमधीनत्वे भवतु । का० [ ७, ४, ३३ ] ये देवा इति व्रतयत्यमृन्मय इति । ये देवा । ईदृशाः दीव्यन्ति द्योतन्ते त इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः । वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति । ( ३, २, २, १३ ) श्रुत्युक्ताः । किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्ती तेषां प्रवर्त्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते ! अन्यमनस्कस्य रूपादिप्रतिभासाभावात् । यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः । तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः सङ्कल्पाः येषां ते सङ्कल्पितार्थकारिण इत्यर्थः । ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः देवेभ्यः स्वाहा इदं क्षीरं हुतमस्तु ॥ ११ ॥

श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥ १२ ॥

"श्वात्राः पीता" । जगत्याब्दैवत्यया नाभिमुपस्पृशति । हे आपः "यूयं" श्वात्राः । श्वात्रमिति क्षिप्रनाम । क्षिप्रपरिणामाः । "पीता भवत" "अस्माकमन्त"र्मध्ये । पुनरपि शिनष्टि "उदरे सुशेवाः" । शेव इति सुखनाम । सुसुखाः । "ता अस्मभ्यम् अयक्ष्माः अनमीवा अनागसः" । आग इत्यपराध-

नाम । अनपराधाः। "स्वदन्तु देवीः" । स्वद स्वर्द आस्वादने । देवीरिति निःसशयं द्वितीयान्तम् । एतत्पदसामानाधिकरण्या-च्च ता इत्येतदादीन्यपि द्वितीयान्तान्येव । ता युष्मान् अस्मभ्यम् अस्मदर्थम् अयक्ष्माः सतीः । यक्ष्मा व्याधिराजः । तद्रहिताः "अनमीवा" अमीवा व्याधिरेव आदरार्थं तु यक्ष्मग्रहणम् । "अनागसः" अनपराधाः सतीः । आग इत्यपराधनाम । स्व-दन्तु । स्वद स्वर्द आस्वादने । आस्वादयन्तु । कमादयन्तु "अमृताः" प्राणाः वागेवाग्निरित्यादयः । "ऋतावृधः" सत्य-वृधः यज्ञवृधो वा ॥ १२ ॥

का० ( ७, ४, ३५ ) श्वात्रा पीता इति नाभिमालभत इति । अब्देवत्या जगती । हे आपः । क्षीररूपा यूयं मया पीताः सत्यः श्वात्राः क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत । श्वात्रमिति क्षिप्रना-माशु अतगं भवतीति यास्कः ( निरु० नै० ५, ३ )। किञ्च अस्माकं पीतवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखाः भवतेत्य-नुवर्त्तते । सुष्ठु शेवं याभ्यस्ताः। शेवमिति सुखनाम ( निघ० ३, ६, १७ )। किञ्च । तास्तथाविधा आप अस्मभ्यमस्मदुपकारार्थं स्वदन्तु स्वादुत्वयुक्ता भवन्तु । किम्भूतास्ताः । अयक्ष्माः प्रबलरो-गराजरहिताः । अनमीवाः सामान्यरोगनिवर्त्तिकाः । नास्त्यमीवा याभ्यः । अनागसः नास्त्यागो याभ्यः अपराधहारिण्यः । ऋतावृधः ऋतं वर्धयन्ति ऋतवृधः संहितायाम् ऋतस्य दीर्घः । यज्ञवृद्धिहेतवः। देवीः देव्यो द्योतमानाः । अमृताः नास्ति मृतं याभ्यः मरणनिवर्त्ति-काः : यद्वायमर्थः । ता इति द्वितीयाबहुवचनम् । अमृताः अमर-णधर्मिणो देवा पूर्वोक्ताः प्राणा वागादयस्ता अपः स्वदन्तु आस्वा-दयन्तु । कीदृशीः अस्मभ्यमयक्ष्माः अस्मदर्थमस्माकं वा यक्ष्म-नाशिनीः । शेषं पूर्ववत् ॥ १२ ॥

इ॒यं ते॑ य॒ज्ञिया॑ त॒नूः । अ॒पो मु॑ञ्चामि॒ न प्र॒जाम् । अ॒ꣳहो॒मुचः॒ स्वाहा॑कृताः पृथि॒वीमावि॑शत । पृथि॒व्या सम्भ॑व ॥ १३ ॥

मेक्ष्यन् लोष्टं किञ्चिद्वादत्ते । इयं "ते यज्ञिया तनूः" पृथिव्यभिधीयते । इदम् तव यज्ञार्हतनूः तामादद इति शेषः । मेहति । "आपो मुञ्चामि" । अपो मूत्रं मुञ्चामि त्यजामि न तु प्रजाम् । उभयं वा । अत एत्यापश्चरितश्च स एतदाप एव मुञ्चति न प्रजाम् । "अꣳहोमुचः" । अंहः पापमसुखं तस्मात्पुरुषं मुञ्चन्ति पृथक्कुर्वन्तीत्यंहोमुचः । हे मूत्राख्या आपः यूयम् अंहोमुचः ताः "स्वाहाकृताः" सुष्ठु त्यक्ताः "पृथिवीम् आविशत" प्रविशत । आत्तं निदधाति । "पृथिव्या सम्भव । भूम्या सहएकीभव ॥ १३ ॥

का० ( ७, ४, ३६ ) मेक्ष्यन् कृष्णविषाणया लोष्टं किञ्चिद्वादत्त इयं त इति । मूत्रं करिष्यन् शृङ्गेण लोष्टं किञ्चित् तृणादिकं वा गृह्णातीति सूत्रार्थः । हे यज्ञपुरुष । इयं पृथिवी ते तव याज्ञिया तनूः यज्ञयोग्यो: देशः । अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीति भावः । यद्वा पृथिवीं प्रत्युच्यते । हे पृथिवि । इयं लोष्टरूपा ते तव यज्ञार्हा तनूस्तामादद इति शेषः । का० । [ ७, ४, ३७ ] अपो मुञ्चामीति मेहतीति । अपो मूत्ररूपा अहं मुञ्चामि न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि । अतो हे आपः मूत्राख्या यूयं पृथिवीमाविशत प्रविशत । किम्भूताः । अंहोमुचः अंहसः पापान् मुञ्चन्ति पुरुषं पृथक्कुर्वन्तीत्यर्थः । तथा स्वाहाकृताः पूर्वं क्षीरपानकाले स्वाहेति मन्त्रेण स्वीकृताः । यद्वा स्वाहाकृताः सत्यो भूमिमाविशत । का० ( ७, ४, ३८ ) पृथिव्या सम्भवेत्यात्तं निदधातीति । गृहीतलोष्टादिकं मूत्रस्थाने क्षिपेत् । हे लोष्टादिक । पृथिव्या सह त्वं सम्भव एकीभव ॥ १३ ॥

अग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि । रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥ १४ ॥

स्वपिति । "अग्ने त्वम्" । अनुष्टुबाग्नेयी । हे अग्ने त्वं "सुजागृही" । साधु जागृहि । "वयꣳ सुमन्दिषीमहि" । मन्दि

स्तुतिमोदमदस्वप्नकान्तिगतिषु । वयं स्वप्स्यामः । मन्दतिः स्वप्नार्थः । किञ्च "रक्ष नः" अस्मान् "अप्रयुच्छन्" । युच्छ-प्रमादे । किञ्च "प्रबुधे प्रबोधाय "नः" अस्मान् "पुनः" कृधि" कुरु ॥ १४ ॥

का० (७, ४, ३९) अग्ने । त्वमित्युक्त्वा स्वपित्यधः प्राङ्दक्षिणत इति । अनुष्टुबाग्नेयी । हे अग्ने । त्वं सुजागृहि सुष्ठु निद्रारहितो भव । वयं यजमानाः सुमन्दिषीमहि साधु स्वप्स्यामः । मदि मोदस्तुतिस्वप्नकान्तिगतिषु अत्र स्वप्नार्थः । आशीर्लिङ्युत्तमबहुवचने रूपम् । किञ्च । नोऽस्मान् रक्ष किं कुर्वन्नप्रयुच्छन् । युछ प्रमादे । अप्रमाद्यन् । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । नश्च धातुस्थोरुषुभ्य इति न इत्यस्य णत्वम् । नो अप्रयुच्छन्नित्यत्र एङः पदान्तादतीति पूर्वरूपे प्राप्ते प्रकृत्यान्तःपादमव्यपर इति प्रकृतिभावः । किञ्च अग्ने । नोऽस्मान् पुनः प्रबुधे प्रबोधाय कृधि कुरु प्रबोधनं प्रभुत्तस्यै प्रबुधे सम्पदादित्वाद्भावे क्विप् । स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय । तदुक्तं तित्तिरिणा । अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्या इति ॥ १४ ॥

पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन् । वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ १५ ॥

विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयति । "पुनर्मनः" । मे मम मनः आगन् आगतम् । "पुनरायु" जीवितं मम आगतम् । "पुनः प्राणो" ममागतः । मुखनासिकासञ्चारी वायुः प्राणः । "पुनः श्रोत्रं" मम आगतम् । "सर्वे ह वा एते स्वपतोपक्रामन्तीति" श्रुतिः । किञ्च "अग्निर्वैश्वानरो" "अदब्धः" अनुपहिंसितः "तनूपाः" शरीरस्य गोपायिता "नः" अस्मान् "पातु" रक्षतु "दुरितात्" अशुभात् "अवद्यात्" अवदनीयात् ॥ १५ ॥

का० (७, ४, ४०) विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयतीति। मे मम यजमानस्य मनः पुनरागन् सुप्तिकाले विलीय पुनरिदानीं शरीरे समागतम्। गमेर्लङि शपि लुप्ते हल्ङ्याब्भ्य इति प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम्। किञ्च स्वापकाले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीत् तथा मे प्राणो वायुः पुनरागन् तथा मे आत्मा जीवः पुनरागन् तथा मे चक्षुः पुनरागन् तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन्। सर्वे ह वा एते स्वपतोऽपक्रामन्तीति श्रुतेः (३, २, २, २३) स्वापकाले मनआदीनामपक्रमो भवति। तेषां पुनर्यथास्थानमागमनं प्रार्थ्यते। एवं सर्वेन्द्रियेषु समागतेषु अयमग्निः अवद्यात् वदितुमयोग्यात् निन्दितात् दुरितात् पापात् नोऽस्मान् पातु पालयतु। यद्वा अवद्यात् दुर्यशसो दुरितात् पापाच्च पातु। किम्भूतोऽग्निः। वैश्वानरः विश्वेभ्यो नरेभ्यो हितः सर्वपुरुषोपकारकः। नरे सञ्ज्ञायामिति पूर्वपददीर्घः। अदब्धः केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः॥ १५॥

**त्वम॑ग्ने व्रत॒पा अ॑सि दे॒व आ मर्त्ये॒ष्वा त्वं य॒ज्ञेष्वीड्यः॑। रास्वेय॑त्सो॒मा भूयो॑ भर दे॒वो नः॑ सवि॒ता वसो॑र्दा॒ता वस्व॑दात्॥ १६॥**

अग्न्यरयं व्याहृत्य जपति। "त्वमग्ने"। आग्नेयी गायत्री। हे अग्ने त्वं व्रतस्य पालयिता भवसि। "देव आ मर्त्येषु आ"। आकारौ समुच्चयार्थीयौ। देव"आ" त्वं च मर्त्येषु मनुष्येषु च "व्रतपा" इति शेषः। त्वं च यज्ञेष्वीड्यः। सत्कारपूर्वो व्यापारोऽध्येषणा। ईडिरध्येषणकर्मा वा पूजाकर्मा वा। अध्येषितव्यः याचितव्यः। त्वमतो व्रतं पाहीति शेषः। लब्धमालभ्य वाचयति। "रास्वेयत्"। सोम उच्यते। "रास्व"। रा दाने देहि। इयदिति लब्धद्रव्यपरिमाणवचनम्। हे सोम। किञ्च "आभूयो भर" 'हृग्रहोर्भश्छन्दसी'ति हकारस्य भकारश्छान्दसः। आहर भूयो बहुतरम्। किञ्च "देवः सविता नः" अस्मभ्यम्

"वसोर्दाता" धनस्य दाता "वस्वदात्" धनमदात् दत्तवान् पूर्वमेवेत्यभिप्रायः ॥ १६ ॥

का० ( ७, ५, १, २ ) त्वमग्न इत्याह क्रुद्ध्वाऽनृत्यं वा व्याहृत्येति । दीक्षितो यदा क्रुध्यति व्रतविरुद्धं वा ब्रूते तदा त्वमग्न इत्यृचं जपेत् । गायत्र्याग्नेयी वत्सदृष्टा । व्यूहेनाक्षरपूरणम् । हे अग्ने ! देवो द्योतनात्मकः त्वमामर्त्येषु मनुष्यपर्य्यन्तेषु सर्वप्राणिषु व्रतपा असि व्रतस्य कर्मणः पालको भवसि । तथा आ समन्ताद्यज्ञेषु त्वमीड्योऽसि । ईडिरध्येषणकर्मा चेति यास्कः । याचितव्यः पूजयितव्यो वा भवसि । अतः पाहीति शेषः । यद्वा आकारद्वयं समुच्चयार्थं देवे इति सप्तम्यन्तं पदं हे अग्ने । त्वं देवे आ देवेषु च मर्त्येषु आ मनुष्येषु च व्रतपा असीति शेषं पूर्ववत् । का० ( ७, ५, १६ ) लब्धमालम्भ्य वाचयति रास्वेयदिति । क्रतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रं पठेत् । रास्व । सोमदेवत्यं यजुः । हे सोम । इयद्रास्व एतावद्धनं देहि भूयः पुनरपि आभर धनम् आहर । हृग्रहोरिति भकारः । यतो वसोर्धनस्य दाता सविता देवो नोऽस्मभ्यं वसु अदात् पूर्वमपि धनं दत्तवान् ॥ १६ ॥

एषा ते॑ शुक्र त॒नूरे॒तद्वर्च॒ स्तया॒ सम्भ॑व॒ भ्राजं॑ गच्छ । जूर॑सि धृ॒ता मन॑सा॒ जुष्टा॒ विष्ण॑वे ॥ १७ ॥

"एषा ते" । अनुष्टुभौ पूर्वोऽर्द्धर्चो हिरण्यदेवत्यः उत्तरो वाग्देवत्यः विनियोगो ध्रौवाज्ये । आज्यं जुह्वां चतुः क्षिप्त्वा तत्र रिरण्यं निदधाति । आज्यमुच्यते । एषा हिरण्यलक्षणा ते तव हे शुक्राज्य तनूः शरीरम् । "समानजन्म वै पयश्च हिरण्यं चोभयश्ह्याग्निरेतसमिति" श्रुतिः । एतच्च हिरण्यलक्षणं वर्चस्तेजः "तया" तन्वा "सम्भव"एकीभव, एकीभूय च भ्राजं सोमं गच्छ । जुहोति "जूरसि" जीव प्राणधारणे । अस्य क्विबन्तस्यापि ऊप्रत्यये जूरिति भवति । या त्वं जीवनमसि । "धिया धिया ह्येतया मनुष्या जुजूषन्तीति" श्रुतिः । अथवा-

जवत इति जूः । "एतद्ध्याकाशमनुजवत" इति श्रुतिः । या च त्वं "धृता" धारिता "मनसा" जुषी प्रीतिसेवनयोः । अभिरुचिता च । "विष्णवे" विष्णोः सोमस्य ॥ १७ ॥

का० (७, ६, ७—८) शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति बर्हिस्तृणेन हिरण्यं बद्ध्वावदधात्येषा त इतीति। ध्रुवास्थमाज्यं जुह्वां चतुर्गृहीत्वा तत्राज्ये दर्भतृणबद्धं स्वर्णं क्षिपेदिति सूत्रार्थः । एषा ते। हिरण्याज्यदैवतम् । हे शुक्र ! शुक्र दीप्यमानाग्ने ! ते तव एषा तनूः दृश्यमानमाज्यं शरीरम् । एतत् आज्ये प्रक्षिप्यमाणं हिरण्यं ते वर्चः त्वदीयं तेजः । तया सम्भव आज्यरूपया तन्वा एकीभव । ततो भ्राजं गच्छ भ्राज दीप्तौ हिरण्यगतां दीप्तिं प्राप्नुहि । एतन्मन्त्रपाठेनाग्नेः सतेजस्त्वं सतनुत्वं च सम्पद्यते । तदुक्तं तित्तिरिणा । सतेजसमेवैनं सतनुं करोतीति । यद्वायमर्थः । हे शुक्र आज्य ! एषा हिरण्यलक्षणा ते तनूः एतत्ते वर्चश्च । समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसमिति (३, २, ४, ८) श्रुतेः । तथा हिरण्यलक्षणया तन्वा सम्भव एकीभूय भ्राजं गच्छ । भ्राजतेऽसौ भ्राट् तम् । सोमो वै भ्राडिति (३, २, ४, ९) श्रुतेः । का० (७, ६, ९) जूरसीति जुहोतीति । वाग्देवतम् । हे वाक् ! त्वं जूरसि वेगयुक्तासि यद्वा जीव प्राणधारणे । जीवयतीति जूः । डूप्रत्ययः । किम्भूता त्वं मनसा धृता नियमिता । तथा विष्णवे जुष्टा यज्ञो वै विष्णुः । यज्ञार्थे प्रीतियुक्ता । यद्वा षष्ठ्यर्थे चतुर्थी । यज्ञस्य रुचिता ॥१७॥

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा। शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि॥१८॥

"तस्यास्ते" तव "सत्यसवसः" अवितथाभ्यनुज्ञायाः । "प्रसवे" अभ्यनुज्ञायां वर्त्तमानाः । "तन्वो यन्त्रम् अशीय" । शरीरस्य यमनं दार्ढ्यम् अशीय व्याप्नुयाम् आ यज्ञसमाप्तेः । हिरण्यमुद्धरति । "शुक्रमसि" अग्ने रेतोऽसि । "चन्द्रमसि" । चदि आह्लादने । "अमृतमसि" अमरणधर्मासि । "वैश्वदेव-

मासि" सर्वदेवत्यमसि इति ॥ १८ ॥

सत्यं सवो यस्याः सा सत्यसवाः तस्याः सत्यसवसोऽवितथाभ्यनुज्ञायास्तस्यास्ते तथाविधायास्तव वाचः प्रसवेऽनुज्ञायां वर्त्तमानोऽहं तन्वः शरीरस्य यन्त्रं नियमनं दार्ढ्यमशीय प्राप्नुयाम् । स्वाहा इदमाज्यं हुतमस्तु ॥ का० ( ७, ६, १० ) शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधातीति । जुह्वां बद्ध्वा स्थापितं हिरण्यमुद्धरेत । शुक्रमासि । हिरण्यं देवता । हे हिरण्य ! त्वं शुक्रमसि शोचत शुक्रम् । शुच दीप्तौ । दीप्यमानमासि । तथा चन्द्रमाह्लादकमसि । चदि आह्लादने । चन्दतीति चन्द्रम् । अमृतं विनाशरहितमसि । अग्नियंसोगेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः । अग्नौ सुवर्णमक्षीणमिति याज्ञवल्क्योक्तेः । वैश्वदेवमासि । विश्वेषां देवानामिदं वैश्वदेवं सर्वदेवसम्बन्धि । सर्वोऽपि देवो हिरण्यदानेन तुष्येत् ॥ १८ ॥

चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥

सोमक्रयणीमभिमन्त्रयते वाग्रूपाध्याहारोपकल्पनया । त्वं "चिदसि" । चित्तस्य मनसोऽनुवादिनी भवसि । या च "मनासि" प्रज्ञासि । या च "धीरसि" बुद्धिर्भवसि । "धिया ह्येतया मनुष्या जुजूषन्ति जीवितुमिच्छन्ति" इति श्रुतिः। या च त्वं "दक्षिणासि" । भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकमित्येतदभिप्रायम् । तेभ्यो वाचं दक्षिणामानयन्नित्येतदभिप्रायं वा । या च "क्षात्रियासि" । क्षतात् त्रायत इति क्षत्रियः । जात्या स्तूयते वा । या च "यज्ञियासि" । यज्ञार्हासि । या च "अदितिरसि" । अदीनासि । या च "उभयतः शीर्ष्णी" । उभयतोमुखी । वाक्ये पदानामन्यथाचान्यथा च क्रमो भवती-

त्येतदभिप्रायम्। "स यदेनया समानꣳ सविपर्यासं वदतीत्यादि" श्रुतिः। "सा नः सुप्राची सुप्रतीची एधि"। या त्वमुक्तगुणासि सास्माकं सुप्राची भव सोममभिगच्छेत्यर्थः। सुप्रतीच्येधि। साधु अस्मान् प्रति सोमं गृहीत्वा आगच्छेत्यर्थः। "सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनर्गृहीत्वैवैतदाह" इति श्रुतिः। किञ्च। "मित्रस्त्वा पदि बध्नीताम्"। मित्र आदित्यस्त्वां पदि पादे बध्नातु अप्रणाशाय। किञ्च "पूषाध्वनस्पातु" इयं वै पृथिवी पूषा सा त्वामध्वनः मार्गात् पातु रक्षतु। किञ्च "इन्द्रायाध्यक्षाय"। चतुर्थ्यां षष्ठ्या विपरिणामः। अधि उपरि अक्षिणी यस्य सोऽध्यक्षः। इन्द्रस्याध्यक्षस्य सतः॥ १९॥

का० (७, ६, १५) चिदसीत्येनामभिमन्त्रयत इति। कण्डिकाद्वयेन एनां सोमक्रयणीमित्यर्थः। वाग्रूपाध्यारोपकल्पनया सोमक्रयणी गौः स्तूयते! हे वाग्देवतारूपे सोमक्रयणि! त्वं चिदसि मनासि धीरसि। अन्तःकरणस्य चित्तमनोबुद्धय इति तिस्रो वृत्तयः। तल्लक्षणानि। अचेतनदेहादिसङ्घातस्य चेतनत्वं सम्पादयन्ती बाह्यवस्तुषु वा निर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते। लोके कश्चित् पदार्थं दृष्ट्वा एवं भवति न वेति सङ्कल्पविकल्पौ कुर्वाणा वृत्तिर्मनः तदेवात्र मनेत्युच्यते। इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः सैवात्र धीशब्देनोच्यते। वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन प्रशस्यते। चिदादिरूपत्वमाराप्य स्तुतिः कृता। दक्षिणादिरूपत्वं तु विद्यमानमेव स्तूयते। हे गौः। त्वं दक्षिणासि। गवां देयद्रव्यत्वेन कर्मसु दक्षिणात्वं प्रसिद्धम्। यद्वा वाग्दानस्य प्रशस्तत्वाद्दक्षिणासि। भूमिदानात् परं नास्ति विद्यादानं ततोऽधिकमिति स्मृतेः। तथा क्षत्रियासि। सोमक्रयसाधनत्वेन। तथा हि। देवेषु क्षत्रजात्यभिमानी सोमः। तदुक्तं बृहदारण्यके (माध्य० १, २, १३ काण्व० १, ४, ११) यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्र इति। तेन सोमेन

क्षत्रेणाभिमन्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन त्वं क्षत्रियासि । तद्रूपं चास्याः क्रयद्वारा तत्सम्बन्धित्वादुपचर्यते । अत एव यज्ञसम्बन्धित्वाद्यज्ञिया यज्ञार्हासि । अदितिः अखण्डिता अदीना देवमातृरूपासि । नास्ति दितिर्यस्याः सा । अदितिरदीना देवमातेति यास्कः ( निरु० नै० ४, २२ ) तथा उभयतःशीर्ष्णी । उभयतः शीर्षे यस्याः सा ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् । द्वे शीर्षे प्रायणीयोदयनीये इति यास्कोक्तेः ( निरु० १३, ७ ) । यद्वोभयतःशीर्ष्णी सर्वतोमुखी वाग्रूपत्वात् । स यदेनया समानं सद्विपर्यासं वदतीति ( ३, २, ४, १६ ) श्रुतेः । सा पूर्वोक्ता चिदादिरूपा त्वं नोऽस्मदर्थं सुप्राची सुप्रतीची च एधि भव । सुष्ठु प्राङञ्चति सुप्राची । सुष्ठु प्रत्यङ्ङञ्चति सुप्रतीची । प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखो भूत्वा पश्चात्सोमेन सहास्मान् प्रत्यागन्तुं सुष्ठु प्रत्यङ्मुखी भवेत्यर्थः । तथा च श्रुतिः ( ३, २, ४, १७ ) । सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाहेति । किञ्च मित्रः सूर्य्यः पदि दक्षिणपादे त्वा त्वां बध्नीतां बन्धनं करोतु अप्रणाशाय । तथा पूषा पोषको देवः सूर्य्य एवाध्वनो मार्गात्पातु त्वां रक्षतु । यद्वा पूषेत्याबन्तं स्त्रीलिङ्गं पदम् पूषा पृथिवी त्वां मार्गात् पातु इयं वै पृथिवी पूषेति ( ३, २, ४, १९ ) श्रुतेः । किमर्थमिन्द्राय इन्द्रप्रीत्यर्थं किम्भूतायेन्द्राय अध्यक्षाय अधि उपरि अक्षिणी यस्य सोऽध्यक्षस्तस्मै । द्रष्ट्रे यज्ञस्वामिने इत्यर्थः ॥ १९ ॥

**अनु॑ त्वा मा॒ता म॑न्यता॒मनु॑ पि॒तानु॒ भ्रा॒ता सग॑र्भ्यो॒ऽनु॒ सखा॒ सयू॑थ्यः ॥ सा दे॑वि दे॒वमच्छे॒हीन्द्रा॑य॒ सोम॑ꣳ रु॒द्रस्त्वाव॑र्त्तयतु स्व॒स्ति सोम॑सखा॒ पुन॒रेहि॑ ॥२०॥**

किञ्च सोमाहरण प्रवृत्तां त्वामेते "ऽनुमन्यन्तां त्वां माता अनुमन्यतां त्वां पिता अनुमन्यतां त्वां भ्राता "सगर्भ्यः" । समानगर्भभवः । अनुमन्यतां त्वां सखा 'सयूथ्यः' समानयूथप्रभवः सखा अनुमन्यताम् । किञ्च या त्वं कृतसामग्रीका ऽस्माभिः सोमं प्रति गमने सा त्वं हे "देवि" दानादिगुणयुक्ते

"देवमच्छेहि" अच्छाभेराप्तुमिति शाकपूणिः। "देवं सोममभ्येहि" अभिगच्छ। इन्द्राय सोमम् आहर्तुमिति शेषः। किञ्च। "रुद्रस्त्वावर्त्तयतु" रुद्रः त्वाम् आवर्त्तयतु। रुद्राज्ञां नातिक्रामन्ति पशवः। ततः "स्वस्ति" अविनाशेन सोमसखा सती पुनरागच्छ॥ २०॥

किञ्च। सोमाहरणे प्रवृत्तां त्वां माता त्वदीया जननी अनुमन्यतामनुज्ञां ददातु। पितानुमन्यताम्। उपसर्गावृत्त्या क्रियापदावृत्तिः। सगर्भ्यः समाने गर्भे भवः सहोदरो भ्रातानुमन्यताम्। समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्विति समानपदस्य सादेशः। सयूथ्यः समाने एकस्मिन् यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम्। हे देवि सोमक्रयणि। सा त्वमिन्द्राय इन्द्रार्थं सोमं देवमच्छेहि प्राप्तुं गच्छ। अच्छाभेराप्तुमिति शाकपूणिः (निरु० नै० ५, २८)। किञ्च रुद्रः त्वा त्वां वर्त्तयतु सोमं गृहीत्वा स्थितां त्वां रुद्रो देवोऽस्मान् प्रति निवर्त्तयतु। यद्वा रुद्रः त्वां प्रवर्त्तयतु। यतो रुद्राज्ञां नातिक्रामन्ति पशवः सोमो देवः सखा यस्याः सा सोमसखा। ईदृशी सोमसहिता सती स्वस्ति क्षेमेण पुनरेहि भूयोऽप्यागच्छ॥ २०॥

**वस्व्यस्यदि॑तिरस्यादि॒त्यासि॑ रु॒द्रासि॑ च॒न्द्रासि॑। बृह॒स्पति॑ष्ट्वा सु॒म्ने र॑म्णातु रु॒द्रो वसु॑भि॒रा च॑के॥ २१॥**

उदीचीं नीयमानामनुगच्छति। "वस्व्यसि"। अनुष्टुप् बृहती वा। वसुरूपेणादितिरूपेणादित्यरूपेण रुद्ररूपेण चन्द्ररूपेण स्तूयते गौः। किञ्च "बृहस्पतिः त्वा सुम्ने" सुखे "रम्णातु" संयमयतु"। रम्णातिः संयमकर्मा। "रुद्रो वसुभिः" सहितः "आचके" कामयतु। रक्षितुमितिशेषः। आचक इति कान्तिकर्मसु पठितम्॥ २१॥

का० (७, ६,) उदीचीं नीयमानामनुगच्छतो वस्व्यसीतीति। अनुष्टुब् बृहती वा। सोमक्रयण्याः स्तुतिः। सोमक्रयणी गौर्वसु-

दित्यादित्यरुद्रचन्द्ररूपेण स्तूयते वस्वीत्यादिपञ्चविशेषणैः । हे गौः । त्वं वस्वी वसुरूपासि । अदितिर्देवमातासि । द्वादशादित्यरूपासि । रुद्रा एकादशरुद्ररूपासि । चन्द्ररूपा चासि । किञ्च बृहस्पतिः सुम्ने त्वां रम्णातु रमयतु । रमतेर्व्यत्ययेन श्नाप्रत्ययः । यद्वा रम्णातु संयमयतु । रम्णातिः संयमनकर्मा विसर्जनकर्मा वेति यास्कः [ निरु० १०, ९ ] रुद्रा वसुभिः अष्टदेवैः सहितः त्वामाचके रक्षितुं कामयताम् । आचक इति चकमान इति कान्तिकर्मसु पठितः ( निघ० २, ६, ११ ) ॥ २१ ॥

अदि॑त्यास्त्वा मू॒र्धन्नाजि॑घर्मि दे॒व॒यज॑ने पृथि॒व्या इडा॑यास्प॒दम॑सि घृ॒तव॑त् स्वाहा॑ । अ॒स्मे र॑मस्व । अ॒स्मे ते॒ बन्धुः॑ । त्वे रायः॑ । मे रायः॑ । मा व॒यᳶ रा॒यस्पोषे॑ण वियौ॑ष्म । तोतो॒ रायः॑ ॥ २२ ॥

पदे जुहोति । "अदित्यास्त्वा" । अदित्याः पृथिव्यास्त्वाम् हे आज्य "मूर्धनि" शिरसि "आजिघर्मि" । घृ क्षरणदीप्त्योः । आक्षारयामि । "देवयजने पृथिव्याः इडायाः" गोः पदं यतस्त्वमसि अतो "घृतवत् घृतयुक्तं त्वां कर्तुं जुहोमीतिशेषः । पदं लिखति । "अस्मे रमस्व" । अस्मासु रतिं कुरु । पदं स्थाल्यामावपति । "अस्मे ते बन्धुः" । वयं ते तव बन्धुभूताः । यजमानाय पदं प्रयच्छति । "त्वे रायः" । 'पशवो वै रायः" । त्वयि पशवः सन्त्विति शेषः । पदं यजमानः प्रतिगृह्णाति । "मे रायः" । मयि पशवः सन्त्विति शेषः । अध्वर्युरात्मानमुपस्पृशति । "मा वयं रायस्पोषेण वियौष्म" । मा वियौष्म मा विभक्ताः स्याम वयं धनस्य पोषेण । गृहीतपदां पत्नीं वाचयति । "तोतो रायः" । त्वयि रायः पशवः सन्त्विति शेषः ॥ २२ ॥

का० ( ७, ६, १७—१८ ) षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति

हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेतीति। आज्यदेवतं यजुः। अदित्याः अखण्डितायाः पृथिव्याः भुवो मूर्धन् मूर्धनि शिरोरूपे देवयजने देवानां यागयोग्यस्थाने हे आज्य। त्वा त्वामाजिघर्मि आक्षारयामि। घृ क्षरणदीप्त्योः। पृथिव्या ह्येष मूर्धा यद्देवयजनमिति तित्तिरिश्रुतेर्देवयजनस्य पृथिवीमूर्धत्वम्। किञ्च हे स्थानविशेष। त्वमिडायाः गोः पदमसि गोपदेनाङ्कितत्वात्तद्रूपमसि तच्च पदं घृतवत् घृतयुक्तं कर्तुं स्वाहा जुहोमि। का० [७, ६, १९] स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति। हे गोः पद। त्वमस्मे अस्मासु रमस्व क्रीडां कुरु। का० (७, ६, २०) समुद्धृत्य पदᳫं स्थाल्यामावपत्यस्मे ते बन्धुरिति। सोमक्रयणिपद! ते तव अस्मे बन्धुः वयं बन्धुभूताः स्मः। सुपां सुलुगिति जसः शे आदेशे अस्मे इति रूपम्। का० (७, ६, २१) यजमानाय पदं प्रयच्छति त्वे राय इति। हे यजमान! त्वे त्वयि रायो धनानि एतत्पदरूपेण तिष्ठन्त्विति शेषः। यद्वात्र रायः पशवः। पशवो वै राय इति श्रुतेः [ ३, ३, १, ८ )। त्वयि पशवः सन्तु॥ का० (७, ६, २२) मे राय इति यजमानः प्रतिगृह्णातीति। मे मयि यजमाने रायो धनानि पदरूपेण तिष्ठन्तु। पशवो मयि सन्तु। ङेः शे आदेशे मे इति रूपम्। का० (७, ६, २३) मा वयमित्यध्वर्युरात्मानᳫं संस्पृशतीति। वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भावाम। यौतेर्माङि लुङ्ङिति लुङि उत्तमबहुवचने वियौष्मेति रूपम्॥ का० (७, ६, २४—२५) हुत्वा पत्न्यै पदं प्रयच्छति नेष्टा तोत इत्येनां वाचयतीति। तोतःशब्दः कलत्रवाची अव्ययम्। तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु। यद्वाव्ययानामनेकार्थत्वात्तोतःशब्दो युष्मत्पर्यायः। तोतः त्वयि रायः सन्तु॥ २२॥

समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा। मा म आयुः प्रमोषीर्मो अहं तव। वीरं विदेय तव देवि संदृशि॥ २३॥

सोमक्रयण्या समीक्षयति। "समख्ये"। पत्न्याशीः। आस्तारपङ्क्तिः सोमक्रयणीतः पत्न्याशिषमाशास्ते। यया त्वया

अतः पृथग्वाक्यार्थव्याख्या नोपपद्यत इति यश्चोदयेत्तं प्रत्याह । साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः । तद्यथा गौरित्युक्ते किमित्याकाङ्क्षा भवति ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । तथा गच्छतीत्युक्ते क इति साकाङ्क्षा भवति ततो गौरित्युक्ते निराकाङ्क्षं भवति । अथेदानीं गौर्गच्छतीत्युक्ते यद्गौर्वाहदोहादिभ्यो व्यावृत्तगमनेऽवतिष्ठते । गमनं चान्यगन्तृभ्यो व्यावृत्य गव्येवावतिष्ठते सोऽयं वाक्यार्थः । स एव प्रकरणाविरोधी वाक्यार्थः पदार्थनियमहेतुः । पदं तु पदार्थपरिज्ञाने हेतुः । अयं पदार्थवाक्यार्थयोरर्थविशेषः । नन्वस्य पदचतुष्टयस्य वाक्यगतस्य कथं गुणप्रधानभाव इति । पदार्थद्वारकः सम्बन्धो गुणप्रधानभावश्च पदानाम् । तत्र प्रधानमाख्यातं गुणभूतान्यन्यानि पदानि आख्यातार्थस्य साध्यत्वादितरेषां पदानां सिद्धत्वात् । तत्र सिद्धार्थसाध्यार्थयोर्यदेकस्मिन् वाक्ये समुच्चारणं तत्साध्यार्थं भवितुमर्हति । न सिद्धार्थं तथा च भूतभव्यसमुच्चारणे भूतं भव्यायोपादिश्यते न भव्यं भूतायेति न्यायविदः पठन्ति । एते च वाक्यार्था इषे त्वादिके मन्त्रगणे प्रायशो दृश्यन्ते ।

विध्यर्थवादयाच्ञाशीस्तुतिप्रैषप्रवह्लिकाः ।
प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्त्तनम् ॥
अवधारणं चोपनिषद् वाक्यार्थाः स्युस्त्रयोदश ।
मन्त्रेषु ये प्रदृश्यन्ते, व्याख्या च श्रुतिचोदिता ॥

अथैतेषामुदाहरणानि । तत्र विधिः परमेष्ठ्यभिधीतः अश्वस्तूपरो गोमृग इत्यादि । अर्थवादः देवा यज्ञमतन्वतेत्यनुवाकः । याच्ञा तनूपाऽग्ने ऽसि तन्वं मे पाहि । आशीः । आ वो देवास ईमहे । स्तुतिः । अग्निर्मूर्धा दिवः ककुत्पतिः । प्रैषः । होता यक्षत्समिधाग्निमित्यादि । प्रवह्लिका । इन्द्राग्नी अपादियमित्यादि । प्रश्नः । कः स्विदेकाकी चरति । व्याकरणं व्याख्या । सूर्य एकाकी चरतीत्यादि । तर्कः । मा गृधः कस्यस्विद्धनं पूर्ववृत्तानुकीर्त्तनम् ओषधयः समवदन्तेत्यादि । अवधारणम् । तमेव विदित्वातिमृत्युमेति । उपनिषत् । ईशावास्यमित्यादि । अथ व्याख्याधर्म्मः ।

अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।
विप्रकृष्टं तु सन्दध्यादानुपूर्वीं च कल्पयेत् ।

लिङ्गं धातुं विभक्तिं च योजयेदानुलोमतः ।
यद्यत्स्याच्छान्दसं वाक्यं कुर्यात् तत्तच्च लौकिकम् ।

अथोदाहरणानि अतिरिक्तं पदं त्याज्यमिति । यथा इमानु कं भुवना सीषधामेत्यत्र कमित्यनर्थको निपातः । हीनं वाक्ये निवेशयेदिति अस्मादन्नादिति भागमवेक्षत इत्यत्र अध्यस्तनो मन्त्रशेष इहाभिसम्बन्धनीयः अस्मादन्नान्निर्भक्त इत्यादि । विप्रकृष्टं तु संदध्यादिति संरेवतीर्जगतीभिः पृच्यन्तामित्यत्र संपृच्यन्तामिति व्यवहितसम्बन्धः । आनुपूर्वीं च कल्पयेदिति । मनो मित्रो वरुणो अर्यमायुरित्यत्र यद्वाजिनो देवजातस्य सप्तेरिति द्वितीयोऽर्द्धर्चः प्रथमं व्याख्येयः । यतो हि दत्तं वाक्ये प्रथमं भवति लिङ्गं धातुं विभक्तिं च वाक्यविशेषार्थे संनमयेत् । यथा पवित्रे स्थो वैष्णव्यौ । अत्र पवित्रे इति नपुंसकलिङ्गं वैष्णव्याविति च पुँल्लिङ्गम् । तत्र वैष्णव्ये इति संनतिः । आविष्टलिङ्गत्वात्पवित्रशब्दस्य धातुं धात्वर्थं च संनमयेत् अग्रेगुवोऽग्रेपुव इत्यादि । तत्राग्रेपुव इति सन्देहः किमत्र पिबते रूपम् उत पवतेः । तत्र श्रुतितो निर्णयः तावत्प्रथमाः सोमस्य राज्ञो भक्षयन्तीति व्याख्यानात् पिबतेरत्र रूपमिति । विभक्तिं सन्नमयेत् कस्मै देवाय हविषा विधेमेति । हविर्विधेमेति हविषेति तृतीयायाः द्वितीयया संनतिर्वाक्यसंयोगात् । अन्यदपि यत् किञ्चिच्छान्दसं तत्सर्वं लोकविदितैः शब्दैर्व्याख्येयमिति अयं सामान्यो व्याख्याक्रम उक्तः । अतः परं वैशेषिकमनुक्रमिष्यामः । तत्र इषे त्वा द्वावध्यायौ दर्शपौर्णमासमन्त्राः परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानाम् । तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यत् यद्दर्शपूर्णमासाविति श्रुतेः परमेष्ठिन आर्षम् । तथा ते देवा अकामयन्तेत्युपक्रम्य त एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासाविति देवानामार्षं कथ्यते । अस्मिन्नध्याये सर्वाण्येव यजूंषि । पुरा क्रूरस्येतीयं त्रिष्टुप् यत्र यजुषां केचिद्वैशेषिकं छन्द इच्छन्ति पिङ्गलपरिपठितम्, दैव्येकमिति तत्र च सर्वः संख्यया व्यवहारः । पाद इत्युपरिष्टादधिकारात् । तत्र इषे त्वा द्विपदो मन्त्रः अक्षरत्वाद्दैव्यनुष्टुप् । श्रुत्या शाखाछेदने विनियुक्तः न चाख्यातमुपलभ्यतेऽत्र न चाख्यातं विना वाक्यं किञ्चिद्विधत्ते अतोऽध्याहारेण वा अनुषङ्गेण वा वा-

क्यपरिपूर्त्तिः कर्त्तव्या । ननु अध्याहारानुषङ्गयोः को विशेषः । लौकिकोऽध्याहारः । यथा भूताय त्वा नारातय परिशेषयामीति पिनष्टि प्राणाय त्वेति प्रतिमन्त्रं प्राणाय त्वा पिनष्टि । अनुषङ्गस्तु मन्त्रावयव इति । यथा । अस्माद्न्नान्निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । तथा अस्यै प्रतिष्ठायै निर्भक्त इत्यादिविष्णुक्रममन्त्रेषु परिपठितमिहाभिसंबध्यते । अपरिपूर्णत्वाद्वाक्यस्य अयं विशेषोऽध्याहारानुषङ्गयोः । इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रकारेण वाक्यपरिपूर्त्तिः कृता । छिनद्मीति चोभयोः साकाङ्क्षत्वात्संनमयामीति चोत्तर इति । अथ कोऽर्थः । शाखा उच्यते । इषे अन्नाय त्वां छिनद्मीति । इषु इच्छायाम् । तस्य क्विपि इडिति रूपं भवति । तस्य तादर्थ्ये चतुर्थी इषे श्रुत्युक्तमभिधेयम् वृष्ट्यै तदाह यदाहेषे त्वेति वृष्टिः सर्वैर्णैष्यते अतोऽभिधानगतस्य धातोरभिधेये क्रिया विद्यत इति न्याय्योऽभिधानाभिधेयलक्षणः संबन्धः । त्वा इति युष्मदो द्वितीयैकवचनस्य स्थाने त्वादेशः ननु यद्येषणाक्रियायोगादिह वृष्टिरभिधीयते नतु रूढ्या । तदानीं यद्यद्धिरण्यादिकं चेष्यते तत्सर्वमिडित्युच्यते । तथा च सति सर्वव्यवहारोच्छेद इत्येवमादीन् दोषान् केचिद्विदधति तदसत् । सिद्धे हि सर्वार्थसंबन्धे पश्वाभिधानाभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिः क्रियते । सा च क्रियमाणा तस्मिन्नेवाभिधेयेऽवतिष्ठते मगधाधिपतिवत् । यथा मगधाधिपतेर्म्मागधेषु जनपदेषु आधिपत्यमस्ति न कान्यकुब्जेषु । एवमिहापि जात्यादिपरिच्छिन्नेष्वभिधेयेषु क्रियाप्रवृत्तिरस्ति न सर्वत्रेत्यदोषः । व्युत्पत्तिद्वारेण च शब्दानां परिज्ञानम् अभ्युदयहेतुरिति श्रुतिर्दर्शयति । तत्प्रणीतानां प्रणीतात्वं प्रति ह तिष्ठति य एवमेतत् । प्रणीतानां प्रणीतात्वं वेदेति । प्रणीताशब्दस्य निर्वचनपरिज्ञानद्वारेण फलं दर्शयति । तथा पुरुषशब्दव्युत्पत्तिं प्रकृत्याह स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन ओषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेदेति एवं तत्र तत्र । एतच्च स्थालीपुलाकन्यायेन सर्वेष्वभिधानेषु द्रष्टव्यम् । आह च ।

क्रियाद्वारकसंबन्धमभिधानाभिधेययोः ।
ज्ञात्वा फलमवाप्नोति श्रुतिर्वक्ति पुनः पुनः ।

ऊर्जे त्वा द्विपदः । त्र्यक्षरो मन्त्रः । दैव्यनुष्टुप् । यदि यजुषां

छन्दोऽस्ति । एवं सर्वेष्वेव यजुःषु ऋक्षु च वक्तव्यं ग्रन्थगौरवभयान्नोच्यते । उक्तं च ।

स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगोऽर्थ एव च ॥

मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ।

शाखासंनमने विनियुक्तः । संनमयामीति वाक्यशेषः । यो वृष्टादूर्ग्रसो जायते तस्मै तदाहेति श्रुतिः । ऊर्ज बलप्राणनयोः । क्विप् । ऊर्जे तादर्थ्ये चतुर्थी व्रीह्यादेर्धान्यस्य क्षीरादेश्चोपसेचनस्य उत्पत्त्यर्थं त्वां संनमयामि । यज्ञपरिणामो हि वृष्टिरन्नादिकं च तदभिप्रायौ मन्त्रौ । श्रुतिश्चास्मिन्नर्थे भवति । अग्नेर्वै धूमो जायते । धूमादभ्रम् अभ्राद्वृष्टिरिति तथा इतः प्रदानाद्वै वृष्टिः । इतो ह्यग्निर्वृष्टिं वनुते स एतैः स्तोकैरेतान् वनुते ददाति त एते स्तोका वर्षन्तीति । वायव स्थ वत्सं शाखयोपस्पृशति यथा वायुर्वृष्टिद्वारेण गवामप्यायकः एवं च यूयमपि प्रश्नुतिद्वारेणाप्यायका भवथेत्यर्थः । एकस्यापि वत्सस्योपसर्जने सर्वेषां संस्कारो बहुवचनोपदेशात् पूजार्थं वा बहुवचनम् । देवो वः सविता । अथ मातॄणामेकां शाखयोपस्पृशति । देवो दानादिगुणयुक्तः । वः बहुवचनस्य वस्नसाविति युष्मदो द्वितीयाबहुवचनस्य स्थाने वसादेशः । युष्मान् सविता देवः सर्वस्य प्रसविता प्रार्पयतु समर्पयतु सङ्गमयतु श्रेष्ठतमाय कर्मणे । यज्ञो वै श्रेष्ठतमं कर्मेति श्रुतिः । प्रशस्यतमाय कर्मणे । तादर्थ्ये चतुर्थी यज्ञार्थमित्यर्थः । यूयमपि यज्ञार्थं सवित्रा सङ्गमिताः सत्यः आप्यायध्वं दात्रे । ओप्यायी वृद्धौ । णिचो लोपः । आप्याययत । हे अघ्न्याः अहननीयाः गावः कम् । इन्द्राय भागम् । तादर्थ्ये चतुर्थी इन्द्रार्थो यो भागस्तमिति सम्बन्धः । इन्द्रोऽत्र हविर्भाक् कथम्भूताः सत्यः । प्रजावतीः वा छन्दसीति दीर्घत्वं प्रजावत्यः । जीववत्सा: । अनमीवाः । अम रोगे तस्य अमीवा व्याधिविशेषः न विद्यते अमीवा यासां तास्तथोक्ताः । अयक्ष्माः यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः आदरार्थं पुनर्वचनम् । अथवा अयनम् अयः गमनं क्ष्मा पृथिवी अयो गमनं क्ष्मायां पृथिव्यां विद्यते घासभक्षणार्थं यासां ता अयक्ष्मा अनिवारितगोप्रचारा इत्यर्थः । किञ्च । मा वो युष्माकं स्तेनश्चोरः ईशत माङि लुङ् मा वो युष्माकं चौर ईशानं

कार्षीदित्यर्थः मा च अघशꣳसः अघं पापं यः शंसति भक्षरणार्थं वृको वा चाण्डालादिर्वा स च मा ईशत किं च ध्रुवाः शाश्वतिकाः। अस्मिन् गोपतौ यजमाने स्यात भवत बह्वीः, बह्वयः॥ शाखामुपमूहति आकारयति। यजमानस्य सम्बन्धिनः पशून् प्रकृतं गोवत्समभिप्रेतं दोहाङ्गभूतं पाहि गोपाय॥ १॥

तस्यां पवित्रं करोति वसोः पवित्रमसि। वसोर्वासयितुर्यज्ञस्य यज्ञसाधनभूते पयसि अत्र यज्ञशब्दः। पयसः पवित्रं पावनम्भवसीत्यर्थः। उखामादत्ते। द्यौरसि पृथिव्यसि उपस्तौत्येवैनामेतादिति श्रुतिः सा यद्दिवोऽवयवभूतेनोदकेन क्रियते तेन द्यौरसीत्युच्यते यतः पृथिव्यवयवभूतया मृदा क्रियते। तेन पृथिव्यसीत्युच्यते मातरिश्वन इत्यधिश्रयति। उखैवोच्यते। मातरिश्वनो घर्मोऽसि-मातरिश्वा वायुः। मातरि अन्तरिक्षे श्वसितीति वायोः सम्बन्धी त्वं घर्मोऽसि त्रयो घर्म्माः अग्निवायुसूर्यदेवत्याः। तत्र मध्यमो घर्म्मः साधवे त्वेति अयं वै साधुर्योऽयं पवत इति वायुदेवत्यः। स त्वमसीत्यर्थः यतस्त्वं वायुरतो विश्वधा असि सर्वस्य धारयिता भवसि किञ्च परमेण धाम्ना दृꣳहस्व। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च अतः उत्कृष्टेन नाम्ना अभिहिता सती घर्मोऽसीत्यादिना आत्मानं दृंहस्व दृढीकुर्वित्यर्थः। मा ह्वा। ह्वृ कौटिल्ये मा ह्वार्षीः। मा कुटिलीभूः। कुटिलीभूतायां चलितायां पयसः स्कन्दनं भवति तन्मा भूदित्येवमुच्यते। मा च ते तव यज्ञपतिः अधिष्ठानात् प्रच्यवताम्॥ २॥

तस्यां पवित्रं निदधाति। वसोः पवित्रमसि शतधारम्। वसोः पवित्रमसि सहस्रधारम्। अभ्यासे भूयांसमर्थं मन्यन्ते। अनन्तधारस्त्वमित्यर्थः। आसिच्यमाने जपति- देवस्त्वा सविता- पय उच्यते देवस्त्वा सविता पुनातु दोषात्पृथक्करोतु। वसोः अग्निष्टोमयज्ञस्य सम्बन्धिना आविकेन पवित्रेण सुप्वा। शोभनं पुनातीति सुपूः तेन सुप्वा साधुपवनेन पवित्रेण। अथाह कामधुक्ष इति प्रश्नोऽयं गवां मध्ये त्वं कां गाम् अधुक्षः दुह प्रपूरणे दुग्धवानसि॥ ३॥

अमूमित्युक्ते दोग्ध्रा सा विश्वायुरित्यध्वर्युराह सा गौर्विश्वस्य जगतः आयुषो दात्री द्वितीयामाह। सा गौर्विश्वस्य जगतः

कर्मा कर्त्री । तृतीयामाह । सा गौर्विश्वस्य जगतः धायाः धयतेर्णि-जन्तस्याशुनि रूपम् । सा विश्वस्य जगतः पाययित्री । यज्ञादेव सर्वाः प्रजा उत्पद्यन्ते आयुर्भोजनसहिताः स गवामुपचर्यते आत-नक्ति । इन्द्रस्य त्वा भागं सोमेन दध्ना आतनच्मि तञ्चतिः कठिनी-करणार्थः । दधिभावमापादयामीत्यर्थः । अपिदधाति । विष्णो हव्यं-रक्ष यज्ञो वै विष्णुरिति श्रुतेः । विष्णो हविर्गोपाय ॥ ४ ॥

व्रतमुपैति अग्ने व्रतपते । हे भगवन्नग्ने व्रतस्य पते व्रतं सत्यादि-कं चरिष्यामि तच्च तव प्रसादात्- शकेयं शक्नुयां शकितं च सत् तत् मे मम राध्यतां संसिध्यताम् । यज्ञफलसमृद्धिराशास्यते । अ-नेन वा अग्निरुच्यते । इदमहं त्वत्साक्षिकम् अनृतादसत्यात्सत्यमुप-गच्छामि ॥ ५ ॥

अपः प्रणयति । कस्त्वा युनक्ति यज्ञारम्भकर्म्मणि आत्मनः क-र्तृत्वमपनीयाध्वर्युः प्रजापतेर्यज्ञस्य कर्तृत्वमाह । अत्र चत्वारि सर्व-नामानि तत्र प्रथमतृतीये प्रश्नभूते द्वितीयचतुर्थे प्रतिप्रश्नभूते क-स्त्वा युनक्ति । यज्ञः प्रजापतिर्न मनुष्यः स तु यज्ञः प्रजापतिस्त्वां युनाक्ति कस्मै प्रयोजनाय युनक्तीत्यध्वर्युराशङ्क्योत्तरं ददाति । तस्मै प्रयोजनाय युनक्ति । यज्ञादुत्पत्तिस्थितिश्च जगतः । अतोऽनेन सर्व-नाम्ना तदेव निर्दिश्यते । सूर्यं चाग्निहोत्रहवणीं चादत्ते कर्मणे वाम् । कर्मणे यज्ञकर्मणे वां युवामहमाददे इति शेषः । वेषाय । विष्लृ व्याप्तौ । यज्ञव्याप्त्यर्थं वां युवां अहमाददे इति च ॥ ६ ॥

प्रतपाति प्रत्युष्टम् । उष दाहे । प्रातिज्ञाय दग्धं रक्षः प्रतिज्ञाय च दग्धा अरातयः । न विद्यते रातिर्दानं येषां ते अरातयः अनेन वा । निष्टप्तम् । तप संतापे । निरित्यस्य स्थाने सुतरां तप्तं रक्षः । नतु यज्ञसाधनमित्यभिप्रायः । उक्तमन्यत् । गच्छति । उर्वन्तरिक्षम् । यद्यपि रक्षोभिराकुलमन्तरिक्षं तथाप्यनेनैव यजुषा विस्तीर्णं कृ-त्वा अन्तरिक्षम् अनु प्रत्येमि ॥ ७ ॥

धुरमभिमृशति । धूरसि । अनसोऽवयवं धुरं स्तौति । तत्र-श्रुतिः । अग्निर्वा एष धुर्यस्तमेतदत्येष्यन् भवतीति । धुरमग्निं ब्रवीति धूरसि । धूर्वतेर्वधकर्म्मणः धूर्वणक्रियानिमित्तं हि ते नाम अतो ब्रवीमि । धूर्व धूर्वन्तम् । हिन्धि हिंसन्तम् । धूर्व तं योऽस्मान् धूर्वति । हिन्धि तं यः अस्मान् हिनस्ति । त धूर्व यं वयं

धूर्वामः। तं हिन्धि यं वयं हिंस्मः। अनस उपस्तम्भनमभिमृशति। देवानामसि अन उच्यते देवानाम् अग्न्यादीनां त्वं भवसि वह्नितमम् वह्निः वोढा वह प्रापणे इत्यस्य रूपम् वोढृतमम्। सर्वे तमपः अतिशयार्थाः। सस्नितमम्। ष्णै वेष्टने। आद्दगमहनेत्त्यादिना किन्‌प्रत्ययः चर्मणा स्नायुना च परिवृततमम् अथवा पार्श्वतः काष्ठैर्गोणिपटैश्च परिवृततमम्। पप्रितमं प्रा पूरणे पूर्ववत् किन्प्रत्ययः हविषा पूर्णतमं जुष्टतमं जुषी प्रीतिसेवनयोः अत्र जुषिः प्रीतौ वर्त्तते अतिप्रियतमं सेवितितमं वा। देवहूतमं देवानाह्वयतीति देवह्वः देवानामाह्वातृतमम्॥ ८॥

अह्रुतमसि ह्रु ह्वरेश्छन्दसीति ह्वरतेर्लुण्ठनार्थस्य ह्रुरादेशः। अलुण्ठितपूर्वमसि। हविर्धानं हविषां निधानम्। अत आत्मानं दृंहस्व दृढीकुरु मम आरुरुक्षतः अवहितं भव। मा ह्वार्म्मा ते यज्ञपतिर्ह्वार्षीदित्युक्तार्थः। आरोहति विष्णुस्त्वाक्रमतां विष्णुर्यज्ञस्त्वां शकट! आक्रमताम् आरोहतु। अहं त्वसमर्थ इत्यभिप्रायः। प्रोक्षते हविष्यात् उरुवाताय उरु महते वाताय प्राणाय त्वां करोमीति प्रेक्ष्य अपद्रव्यं निरस्यति। अपहतं हन हिंसागत्योः। अत्र गतौ वर्त्तते अपगतम् अस्माद्धविषो रक्षः आलभते। यच्छतां पञ्च। यमु उपरमे निवध्नन्तु त्वां हविष्यं पञ्चाङ्गुलयः॥ ९॥

गृह्णाति। देवस्य त्वा। त्वाशब्देन हविरुच्यते। देवस्य सवितुः प्रसवेऽभ्यनुज्ञायां वर्त्तमानः। देवेन सवित्रा प्रसूतः अनुज्ञातः। अश्विनोर्बाहुभ्यां न स्वाभ्याम् आश्विनौ हि देवानामध्वर्यू पूष्णो हस्ताभ्यां न स्वाभ्यां पूषा हि देवानां भागधुक् अग्नये जुष्टं जुषी प्रीतिसेवनयोः। अत्र जुषिः प्रीतो वर्त्तते। तथाहि। रुच्यर्थानां प्रीयमाण इत्यग्निशब्दस्य चतुर्थी सञ्जाता अग्नये जुष्टं रुचितम् अभिप्रेतं गृह्णामि। एतदुक्तं भवति योऽग्निः सर्वेश्वरः सर्वात्मा तस्य तथाभूतमेवान्नं भवितुमर्हति नच तथाभूतं मनुष्येण तद्ग्रहीतुं शक्यते। अतोऽहं सावित्रं प्रसवमास्थायाश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वां हविष्यम्। अग्नये रुचितं गृह्णामि अग्नीषोमाभ्यां त्वा रुचितं हविष्यं गृह्णामि॥ १०॥

भूताय त्वेति शेषाभिमर्शनं भूताय त्वा भवनाय त्वां परिशेषयामीति शेषः। नारातये न अदानाय। उत्तं सत् व्रीह्यादि पुनर्बद्धं

भविष्यतीति परिशेषयामि न कृपणतायै । स्वरिति प्राङीक्षते स्वरभिविख्येषम् । पश्येयं स्वःशब्देन यज्ञोऽभिधीयते । स हि शोभनं प्राङ् ऋतो गतो भवति । न कृपणतायै । यज्ञार्हाः देवाः सूर्य्य एते स्वः शब्देनोच्यन्ते यज्ञो वै स्वरहर्देवाः सूर्य इति श्रुतेः दृꣳहन्तामित्यवरोहति । दृह दृहि बृह बृहि वृद्धाविति यद्यपि वृद्ध्यर्थो धातुः पठ्यते तथापि मन्त्रेषु दृढीकरणार्थः प्रयुज्यते । दृह्यन्तामिति प्राप्ते दृहन्तामिति विकरणव्यत्ययः । दुर्याः दुरः द्वाराणि अर्हन्ति दुर्य्या गृहा उच्यन्ते । ते दुर्याः दृढा भवन्तु पृथिव्याम् । गच्छत्युर्वन्तारिक्षमन्वेति व्याख्यातम् । पृथिव्यास्त्वेति सादयति । पृथिव्यास्त्वा नाभौ सादयामि । हविरुच्यते पृथिव्याः त्वा नाभौ मध्ये सादयामि अदित्या देवमातुः उपस्थे उत्सङ्गे । अग्ने हव्यं रक्ष त्रायस्व अर्पणमग्निमाह ॥ ११ ॥

पवित्रे छिनत्ति पवित्रे स्थ इति पवित्रे पवनक्रियाशीले युवां भवथः वैष्णव्ये इति प्राप्ते वैष्णव्याविति लिङ्गव्यत्ययः यज्ञो वै विष्णुर्यज्ञियै स्थ इति ह श्रुतिः । अप उत्पुनाति सवितुर्वः आप उच्यन्ते । सवितुः प्रसवे अहं वर्त्तमानः वः युष्मान् उत्पुनामि अच्छिद्रेण पवित्रेण यो वा अयं पवत एषोऽछिद्रं पवित्रमिति वायोः सर्वगतत्वादच्छिद्रत्वं सूर्य्यस्य च रश्मिभिः । उदिङ्गयति देवीराप इति अप उच्यन्ते हे देव्यः आपः अग्रेगुवः अग्रेपुवः अग्रे शब्दः पूर्वपदं द्वयोः पूर्वस्य गमिः उत्तरपदम् । उत्तरस्य तु पिबतिः उभयोरपि डुप्रत्ययः अग्रेः याः समुद्रं गच्छन्तीत्यग्रे गुवः अग्रे प्रथमाः सोमस्य राज्ञो भक्षयन्तीत्यग्रे पुवः । अग्रे उत्कृष्टे स्वर्गे इदं दर्शपौर्णमासाख्यम् । अद्य अस्मिन् द्यवि यज्ञं नयत प्रापयत अग्रे यज्ञपतिं नयत । सुधातुं शोभनदक्षिणं यज्ञपतिं देवयुवं देवान् कामयत इति देवयुः । इदंयुरिदङ्कामयमान इति यास्कः । एतदुक्तं भवति यज्ञं यजमानं पुष्कलदक्षिणं देवकामं च अग्रे नयत ॥ १२ ॥

युष्मा इन्द्रो वृणीत वृत्रतूर्य्ये युष्मान् इन्द्रः सहायार्थमववृणीत किमर्थं पुरस्कृत्य वृत्रतूर्य्ये तूर्य्यतिर्बधकर्मा वृत्रबधाय यूयं चेन्द्रमवृणीध्वं वृतवत्यः वृत्रतूर्य्ये अस्मिन्नेकावसरे अतिमनुष्यतया । प्रोक्षिताः स्थेति आसां प्रोक्षणम् । उक्ष सेचने प्रोक्षिता यूयं तावद्भवथ । न ह्यसंस्कृता अन्यसंस्कारक्षमा इति निह्नवः । हविः प्रोक्षति अ-

ग्नये त्वा जुष्टम् । अभिरुचितं प्रोक्षामि अग्निशब्दस्य रूच्यर्थानां प्रीयमाण इति चतुर्थी । एवम् अग्नीषोमाभ्यामित्युक्तम् । पात्राणि प्रोक्षति दैव्याय कर्मणेशुन्धध्वं देवसम्बन्धिकर्मणे । तादर्थ्ये चतुर्थी । शुन्ध्यध्वमिति कर्माणि यकि प्राप्ते विकरणव्यत्ययः देवयज्यायै देवयागाय च पवित्राभिरद्भिः शुन्धध्वमिति सम्बन्धः । किञ्च यद्वोऽशुद्धाः पराजघ्नुः यत् वः युष्माकम् अशुद्धाः तक्षप्रभृतयः पराजघ्नुः पराहतवन्तः इदमिति प्रत्यक्षनिर्देशः । वः युष्माकं तत् शुन्धामि शोधयामि । अपनयामि ॥ १३ ॥

कृष्णाजिनमादत्ते । शर्म्मासीति चर्मासीति प्राप्ते चकारस्य शकारः शर्मदेवत्रेति श्रुतिः । अवधुनोति अवधूतं धूञ् कम्पने अवकम्पितं रक्षः अवकम्पिताश्चारातयः अदानशीलाः पुरुषाः न त्वेतत् यज्ञसाधनमित्यपह्नवः कृष्णाजिनमास्तृणाति अदित्यास्त्वगसि अदित्याः पृथिव्यास्त्वं त्वग्भवसि अतः प्रतिवेत्तु । विद ज्ञाने प्रतिजानातु त्वम् । अदितिः पृथ्वी प्रति हि स्वः स्वं जानीत इति श्रुतिः तस्मिन्निदधात्युलूखलम् अद्रिरसि आदृणात्यनेन व्रीह्यादिकमित्यद्रिः त्वं भवसि । वानस्पत्यश्च वनस्पतेर्विकारो वानस्पत्यः अनेन वा निदधाति ग्रावासि घ्नन्ति व्रीह्यादिकमनेनेति ग्रावा त्वमासि पृथुबुध्नः । बृहन्मूलः अतः प्रतित्वादित्यास्त्वग्वेत्तु प्रतिवेत्तु त्वाम् उलूखल आदित्यास्त्वक् कृष्णाजिनं कथम् अहं पृथिव्यास्त्वक् अयं चोलूखलः पृथिव्यास्त्वगिति नो वा आत्मानं हिनस्ति अहिंसायै॥१४॥

हविरावपति । अग्नेस्तनूरसि आहवनीयोऽत्राग्निरुच्यते तत्र हि हविः प्रक्षिप्तमग्निर्भवत्यत एवमुच्यते अग्नेस्तनूः शरीरमसीति अथवाग्निशब्देन यस्यै देवतायै हविर्गृह्यते सा लक्ष्यते । तस्या अपि हविस्तनुर्भवतीति । वाचो विसर्जनम् । वाक् यस्मिन् हविषि क्षिप्ते विसृज्यते अध्वर्युणा तादिदं वाचो विसर्जनं हविः । देववीतये देवतर्पणाय त्वां गृह्णामि आवपामीत्यर्थः । मुसलमादत्ते । बृहद्ग्रावासि दीर्घत्वापेक्षं बृहत्वं हन्त्यपेक्षं ग्रावत्वं दीर्घो ग्रावा त्वमसि वानस्पत्यः वनस्पतेर्विकारः स इदमित्यवदधाति स त्वमिदं देवेभ्योऽर्थाय हविः शमीष्व शम्यतिः संस्कारार्थः सुशमि क्रियाविशेषणमेतत् साधु यथा संस्कृतं भवति तथा शमीष्वेति । हविष्कृदेहीति त्रिराह्वयति हविः करोतीति हविष्कृत् । एहि आगच्छ अधि-

दैवं वागुच्यते अधियज्ञं पत्नी ॥ १५ ॥

आहन्ति दृषदुपले कुक्कुटोऽसि । अत्र मनोर्ह वा ऋषभ आसेत्यादीतिहास उत्प्रेक्षितव्यः । कुत्सितं शब्दम् असुरघ्नम् असुराणां कुटति तनोतीति कुक्कुटः अथवा असुरघ्नीं वाचमुपादाय क क असुरा एवंयः अटति असौ कुक्कुटः । अस्मिन् पक्षे कशब्दस्य सम्प्रसारणम् । अटतेश्चाकारस्य सम्प्रसारणाच्चेति परपूर्वरूपत्वं कुक्कुटस्त्वमस्यसुराणां देवानां मधुचिह्वः अतः इषं वृष्टिम् । ऊर्जमन्नं च आभिमुख्येन वद त्वया च सहायभूतेन वयं संघातं सम्पूर्वस्य हन्तेः सङ्घातः संग्रामः । समुदायो वाभिधेयः । वीप्सार्थे द्विर्वचनं संग्रामं संग्रामं जयेम । सूर्पमादत्ते । वर्षवृद्धं वृष्टया वृद्धं त्वमसि । ह विरुद्धपति प्रति त्वा वर्षवृद्धं वेत्तु । प्रतिवेत्तु प्रतिजानातु त्वां वृष्टया वृद्धं हे हविः । समानजन्मत्वाद्धविःशूर्पयोर्भ्रातृत्वार्थे वचनम् । निष्पुनाति परापूतं रक्षः पराक्षिप्तं रक्षः पराक्षिप्ताश्च अरातयः अदानशीलाः पुरुषाः । तुषान्निरस्यति अपहतं हन्तिर्गत्यर्थः । अपगतं रक्षः विविनक्ति वायुर्वः तण्डुलाः उच्यन्ते । वायुर्वः युष्मान् विविनक्तु पृथक्करोतु व्रीहिभ्यः सकाशात् पात्र्यामोप्याभिमन्त्रयते । देवो वः देवः सविता वः युष्मान् हे तण्डुलाः हिरण्यपाणिः । तत्सावित्रे प्राशित्रं परिजघ्नुः । तस्य पाणी अच्छिद्रेणाशिथिलेन हस्तेन ॥ १६ ॥

उपवेषमादत्ते । धृष्टिरासि । ञिधृषा प्रागल्भ्ये अनेन अग्निर्धृष्टमुपचरतीति । धृष्टिरुपवेष उच्यते । धृष्टिस्त्वमसि उपवेष । अङ्गारान् प्राचः करोति अपाग्ने अग्निमामादं जहि अपजहि हे भगवन्नग्ने आमादम् आममत्तीत्यामात्- येन मनुष्याः अपक्वमन्नमश्नन्ति स उच्यते । जहीति त्यागार्थः । निष्क्रव्यादं सेध क्रव्यादमग्निं येन पुरुषं दहन्ति स क्रव्यात् सेधतिः परित्यागार्थः । अङ्गारमाहरति आदेवयजं वह आवह आनय देवयजमग्निं देवा यस्मिन्निज्यन्ते स देवयजः । तं देवयजमग्निम् । कपालेनावच्छादयति । ध्रुवमसि पृथिवीं दृꣳह त्रिभिः कपालैस्त्रीन् लोकान् यजमानो जयति चतुर्थेन दिशो यश्चैतेषु संस्क्रियते पुरोडाशः सो ऽप्याधारवशात् त्रिलोकाविग्रह एव भूत्वा देवताः प्रीणातीति प्रकरणार्थः यद्‌ वा आत्मसम्मितमन्नं तदवति तन्न हिनस्तीति श्रुतेः । ध्रुवं स्थिरं त्वमसि अ-

तः पृथिवीं दृꣳह दृढीकुरु । नहि स्वयमप्रतिष्ठितोऽन्यस्य प्रतिष्ठां कर्त्तुं समर्थः । किञ्च इत्थम्भूतं त्वामहमुपदधामि ब्रह्मवनि ब्रह्म यद्वनोति सम्भजते तत्कपालं ब्रह्मवनि । एवं क्षत्रवनि सजातवनि समानं जाताः भ्रातृप्रभृतय उच्यन्ते । भ्रातृव्यस्य वधाय त्वामुपदधामीत्यनुषङ्गः ॥ १७ ॥

अङ्गुल्या शून्येऽङ्गारं निदधाति । अग्ने ब्रह्म । हे भगवन्नग्ने ब्रह्म ब्राह्मणमङ्गुलिप्रदानेन व्यावृत्तमनुगृह्णीष्व धरुणमसि धरुणं धारकमस्यन्तारिक्षं दृꣳह । धर्त्रमासि धारयितृ असि दिवं दृꣳह । विश्वाभ्यस्त्वा सर्वाभ्यस्त्वाम् । आशाभ्यो दिग्भ्यः उपदधामि । इतराणि कपालान्युपदधाति । चितस्थ । चिञ् चयने । अस्य क्विबन्तस्य बहुवचनं चितः । बहुवचनं च पूर्वकपालोपहितविषयं चितानि पूर्वं यूयं तावद्भवथ । ऊर्ध्वचितः । ऊर्ध्वं पश्चादुपहितेषु कपालेषूह्नीयत इति ऊर्ध्वचित् तस्य ऊर्ध्वचितः । उपधीयमानस्येति शेषः । अङ्गारैरभ्यूहति । भृगूणामङ्गिरसाम् । भृगोः अपत्यानि बहूनि भृगवः तथाङ्गिरसः । तद्राजस्य बहुषु लुक् । भृगूणाम् अङ्गिरसां च तपसा यूयं कपालानि तप्यध्वम् ॥ १८ ॥

शर्म्मासीत्यादीनि त्रीणि यजूꣳषि व्याख्यातानि कृष्णाजिने दृषदं निदधाति धिषणासि धीः कर्म्म बुद्धिर्वा तदुभयं सीदति सनोति वा कर्माङ्गत्वाद् दृषद्धिषणोच्यते । धिषणा त्वमसि पर्व्वती पर्ववती अतः प्रतिवेत्तु । प्रतिजानातु त्वामदित्याः पृथिव्यास्त्वक्कृष्णाजिनं शम्यामुपदधाति । दिवस्कम्भनीरसि दृषदुपलयोः पृथिवीद्युभक्तित्वात् । शम्यायाः अन्तरिक्षभक्तित्वमुपपद्यते । द्यावापृथिव्योः स्कम्भनीः स्कभ्नोतिः संस्तम्भनकर्म्मा त्वं स्तम्भनीर्भवसि । अन्तरिक्षरूपेण हीमे द्यावापृथिवी विष्टब्धे इति श्रुतिः । दृषदुपलमुपदधाति । धिषणासीति व्याख्यातम् । पार्वतेयी । पर्वत्या अपत्यं कनीयसी ह्येषा दुहितेव भवतीति श्रुतिः । प्रतिजानातु त्वां पर्वती माता । प्रतिहिस्वः स्वं जानीत इति श्रुतिः ॥ १९ ॥

दृषदि तण्डुलानावपति ।

धान्यमसि धिनोतेः प्रीणनार्थस्य धान्यमिति भवति । तदभिप्रा-

येणैवमाह । यतस्त्वं प्रीणनस्वभावमसि अतः प्रीणीहि देवान् पिनष्टि प्राणाय त्वा । अत्र श्रुतिः । जीवं वै देवानां हविरित्युपक्रम्य दृषदुपलाभ्याᳪहविर्यज्ञं घ्नन्तीति प्रतिपाद्य स यदाह प्राणाय त्वोदानाय त्वेत्येवमादिना ग्रन्थेन यथा हविषः पुनर्जीवनं क्रियते तथा श्रुतिः प्रतिपादयति । तदनुसारेण व्याख्यानं करिष्यामः । प्राणदानाय त्वां पिनष्मि नतु हिंसायै । एवमुत्तरावपि मन्त्रौ व्याख्येयौ । कृष्णाजिने प्रक्षिपति । दीर्घामनु प्रसितिम् । षह मर्षणे । प्रसितिः प्रसहनात्तन्तुर्वा जालं वा इह तु प्रसितिशब्देन कृष्णाजिनमभिधीयते तदपि हि पिष्टानि गृह्णाति दीर्घां कृष्णाजिनाख्यां प्रसितिमनु आयुषे आयुर्दानाय धां दधामि । देवो व इति व्याख्यातम् ईक्षते चक्षुषे त्वा चक्षुर्दानाय त्वामहमीक्षे । एतानि वै जीवतो भवत्येव तु हैतज्जीवितमेव देवानां हविर्भवतीति श्रुतिः आज्यं गृह्णाति । महीनां पयोऽसि । महीति गोनाम । महीनां गवां पयो भवसि । पयःशब्देन लक्षणया घृतमभिधीयते ॥ २० ॥

पात्र्यां पिष्टान्यावपति । देवस्य त्वेति व्याख्यातम् । ननु ग्रहणे देवस्य त्वेति यदुक्तं तेनैव दर्शनेन ब्राह्मणतर्पणान्तं कर्म्म करिष्यति किमनेन पुनर्द्देवस्य त्वेति । संस्कारोज्ज्वलनार्थं हितं च पथ्यं पुनः पुनरुपदिश्यमानं न दोषाय भवतीति संवपामि । समित्येकीभावमाचष्टे । एकत्र क्षिपामि । उपसर्जनीः प्रतिगृह्णाति समाप ओषधीभिः सङ्गच्छन्ताम् आप ओषधीभिः पिष्टाख्याः पिष्टाख्याभिः समोषधयो रसेन सङ्गच्छन्ताम्– ओषधयः पिष्टाख्याः रसेन उपसर्जनीभिः । आपो हि ओषधीनां रसः सᳪरेवतीर्जगतीभिः पृच्यन्ताम् । पृची सम्पर्के रेवत्य आपो जगत्य ओषधय इति श्रुतिः । संपृच्यन्तां रेवत्य आपो जगतीभिः ओषधीभिः पिष्टाभिः समधुमतीर्मधुमतीभिः पृच्यन्तां मधुशब्दो रसवचनः संपृच्यन्तां च मधुस्वादोपेता आपः मधुमतीभिः संपृच्यन्तां च मधुवत् स्वादोपेताभिरोषधीभि पिष्टाभिः ॥ २१ ॥

जनयत्यै त्वा द्व्यर्थोऽयं मन्त्रः श्रुतिर्व्याचष्टे । जनेर्ण्यन्तस्य क्तिन् जनतिः यजमानस्य जनयत्यै श्रीप्रजापशुभिर्यजमानं जनयितुं सम्मिश्रयितुं त्वां संयौमि । अथवा पुरोडाश उच्यते । जनयत्यै उत्पादनाय त्वां संयौमि श्रयामि संमिश्रयामि यथा त्वं मिश्रितः पुरोडा-

शभावमापद्याधिश्रितः सन् दैवाद्योनेरग्नेरधिजायस इति न ह्यमर्त्यं त्वां मर्त्यो जनयितुमर्हति । असंहरिष्यन्नालभते । इदमग्नेरिदमग्नीषोमयोः अर्द्धशब्दः समप्रविभागवचनो नपुंसकलिङ्गः तदभिप्रायमिदमिति नपुंसकलिङ्गत्वम् । आज्यमधिश्रयति । इषे त्वा व्याख्यातम् । पुरोडाशमधिश्रयति । घर्म्मोऽसि प्रवर्ग्यस्त्वमसि विश्वायुः विश्वं सर्वमायुरस्येति विश्वायुः विश्वायुरिति तदायुर्दधातीतिश्रुतिः । पुरोडाशं प्रथयति उरुप्रथाः यस्त्वमुरुप्रथाः उरु विस्तीर्णं प्रथसे स्वभावतस्तं त्वां ब्रवीमि । उरुप्रथस्व किञ्च । उरु ते तव यज्ञपतिर्यजमानः पुत्रान्नपश्वादिभिः प्रथतां विस्तारमाप्नोतु । अद्भिरभिमृशति । अग्निष्टे हे पुरोडाश अग्निः ते तव त्वचं मा हिंसीदिति । श्रपयति देवस्त्वा । देवः सविता त्वां श्रयपतु । वर्षिष्ठे उत्कृष्टे नाके स्वर्गे अधि उपरि स्थितं सविता वा नाके स्थितः वितान एव ह्याधियज्ञिको देवलोकः पुरोडाशशरीरस्य च यज्ञस्यैतज्जन्म यच्छ्रयणं स यदि देवलोके जायेत अतस्तत् समानयोगक्षेमो यजमानोऽपि तत्रैव जानिष्यत इति तत्र जन्माशास्यते ॥ २२ ॥

पुरोडाशमभिमृशति । माभेर्म्मा संविक्था: मा त्वं भैषीःमा च त्वं विकथाः । ओविजी भयचलनयोः तत्र भयं प्रतिषिद्धं चलनं त्वत्र निषिध्यते न भेतव्यं न चलितव्यमित्यर्थः पुरोडाशमभिवासयति । अतमेरुर्य्यज्ञः । तमु अभिकाङ्क्षायां यद्यप्ययं धातुरभिकाङ्क्षामात्रे पठ्यते तथापि स्वाभिकाङ्क्षायां भाष्यते तमनशीलस्तमेरुः न तमेरुः अतमेरुर्य्यज्ञः अतमेरुर्य्यजमानस्य प्रजा भूयात् भवेत् । पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति त्रिताय त्वा द्विताय त्वा एकताय त्वेति त्रिताय त्वेति द्रव्यपरोऽयं निर्देशः । निनयामीति शेषः । एवं द्विताय एवमेकताय तत आप्त्याः सम्बभूवुस्त्रितो द्वित एकत इत्येवमादेरितिहासाच्छेषमवगन्तव्यम् ॥ २३ ॥

स्फ्यमादत्ते देवस्य त्वेति व्याख्यातम् आददे गृह्णामि अध्वरकृतम् अध्वरं करोतीति अध्वरकृत् तमध्वरकृतं देवेभ्योऽर्थाय आलभ्य जपति । इन्द्रस्य बाहुरसि दक्षिणः इन्द्रस्य बाहुर्दक्षिणस्त्वमसि एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणः सहस्रभृष्टिः बहुधारः शततेजाः बहूनि तेजांसि यस्य स शततेजाः वायुरसि तिग्मतेजाः वायुस्त्वमसि तिग्मतेजाः तेजतेरुत्साहकर्मणः उत्साह

एव तेजो यस्य स तथोक्तः द्विषतः शत्रोर्वधः बधकः ॥ २४ ॥

प्रहरति । पृथिवि देवयजनि । वेदिः सम्बोध्यते हे पृथिवि देवयजनि देवा यस्यामिज्यन्ते सा तथोक्ता ओषध्यास्ते तव सम्बन्धिन्याः । मूलं मा हिꣳसिषम् । तृहि हिंसि हिंसायाम् । माङि लुङ् मा विनाशिषं वज्रेण प्रहरन् । पुरीषमादत्ते । व्रजं गच्छ । व्रजन्त्यस्माद्गाव इति व्रजो गोवाट उच्यते परिवृतं गवां स्थानं गच्छ । वेदिं प्रोक्षते । वर्षतु ते द्यौः । वर्षतु तव द्युलोकः शान्त्यर्थं वचनम् । उत्करं करोति । बधान बध बन्धने बधान बन्धनं कुरु हे देव सवितः परमस्यां पृथिव्याम् । यत्र अन्धतामिस्रो नरकः अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति श्रुतिः । शतेन पाशैर्बहुभिः पाशैर्योऽस्मान्द्वेष्टि शत्रुः यं च वयं द्विष्मः शत्रुं तमतः अस्मादन्धतमसः मा मौक् मुचॢ मोक्षणे । मा मुञ्च ॥ २५ ॥

द्वितीयं प्रहरति ॥ अपाररुम् अररुः असुरः तमपनीय पृथिव्यै पृथिव्या देवयजनाच्च अररुं वध्यास व्रजं गच्छेति समानम् । अग्नीदुत्करमभिनिदधाति । अररो दिवम् । हे अररो त्वं दिवं द्युलोकं मा पप्तः मा गमः । तृतीयं प्रहरति । द्रप्सस्ते द्याम् । योऽस्याः पृथिव्या उपजीवनीयो रसः स द्रप्सः तेन च द्यां द्युलोकं मा स्कन् मा स्कान्त्सीन् मा स्कन्दन्तु । व्रजं गच्छेति समानम् ॥ २६ ॥

पूर्वं परिग्रहं परिगृह्णाति । गायत्रेण त्वा त्वाशब्देन विष्णुरभिधीयते ते प्राञ्चं विष्णुं नियस्येति श्रुतिः । गायत्रेण त्वा । छन्दसा परिगृह्णामि एवमुत्तरयोस्त्रैष्टुभेन जागतेनेति विशेषः । उत्तरं परिग्रहं परिगृह्णाति पूर्वेण परिग्रहेण विष्णुं यज्ञं परिगृह्य तेनेमां पृथिवीं लब्ध्वा चोत्तरेण परिग्रहेण वक्ष्यमाणैर्गुणैरयोजयन् देवाः । सुक्ष्मा चासि शिवा चासीति । दक्षिणतः क्ष्मा इति पृथिवीनाम शोभना पृथिवी त्वमसि शिवा शान्ता चासि स्योना चासि सुषदा चासि स्योनम् इति सुखनाम सुखरूपा चासि शोभनं यस्यां सीदन्ति सा सुषदा ऊर्जस्वती चासि पयस्वती च अन्नवती चासि पयोविकारै रसैस्तद्वती च ॥ २७ ॥

वेदिमनुमार्ष्टि । पुरा क्रूरस्य । निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यं पश्चान्मन्त्रार्थः तथाहि क्षिप्रमवगमो भवतीति । देवा असुरैः सह संग्रामं करिष्यन्त इदमूचुः । यदस्याः पृथिव्या अनुपहतं

देवयजनं तच्चन्द्रमसि स्थापयामस्तत्र यदि कथञ्चिदस्मानसुरा जयेयुः ततस्तेनैव देवयजनेन प्रतिक्रियां करिष्यामः । तदेतच्चन्द्रमसि कृष्णमुपलभ्यते एतदियमृक् त्रिष्टुबुक्तवतो पुरा क्रूरस्य क्रूरशब्दः संग्रामवचनः पञ्चम्यर्थे षष्ठी प्राक् । संग्रामात् । विसृपः सृपितृदोः कसुन्निति कसुन् प्रत्ययान्तः तुमर्थेऽव्ययं पञ्चम्यर्थे । विविधं सर्पन्ति योधा अस्मिन्निति विसृपः विरप्शिन्निति आमन्त्रितं महन्नाम स च विष्णुर्यज्ञो वेदित्वमापन्नः स हि त्रिभिर्वेदैर्निर्वर्त्यमानो विविधं स्पृशति शब्दं करोति हे विरप्शिन् विष्णो शृणु उदादाय उत्क्षिप्य प्रकृतत्वाद्देवाः पृथिवीं जीवदानुं जीवितस्य दात्रीं सारभूतामित्यर्थः । यामैरयंश्चन्द्रमसि स्वधाभिः याम् ऐरयन् ईर गतौ अनेकार्थत्वाद्धातूनामिह स्थापनार्थः चन्द्रमसि स्थापितवन्तः स्वधाभिः स्वधाशब्दोऽन्नवचनः इह त्वन्नहेतुभूतास्तिस्रो विद्या गृह्यन्ते यां चन्द्रमसि ब्रह्मणा दधुरिति श्रुतेः । त्रयीलक्षणेन ब्रह्मणा सहितां यां पृथिवीं चन्द्रमसि न्यदधुः तामु धीरासोऽनुदिश्य यजन्ते तामेव पृथिवीं धीरासो मेधाविनः अनुदिश्य हेतुदर्शनेन सम्पाद्य अद्यापि यजन्त इति दर्शनप्रशंसा । प्रैषः । प्रोक्षणीरासादय । प्रोक्षन्ते आभिरिति प्रोक्षण्यः ता आसादय स्थापय स्फ्यं प्रहरति क्षिपतो बधोऽसि द्वेष्टुर्बधो विनाशकस्त्वमसि ॥ २८ ॥

स्रुवं प्रतपति प्रत्युष्टमिति व्याख्याते यजुषी । संमार्ष्टि स्रुवम् । अनिशितोऽसि । शो तनू करणे । निशितस्तीक्ष्णीकृतः न निशितः अनिशितः अतीक्ष्णीकृतस्त्वमसि तथापि सपत्नक्षित् सपत्नाः शत्रवः तान् क्षिणोतीति सपत्नक्षित् क्षिणोतिः हिंसार्थः यतस्त्वं यजमानस्य सपत्नक्षित् अतो वाजिनं त्वां वाजशब्दोऽन्नवचनः इह तु यज्ञवचनः यज्ञो हि देवानामन्नमिति श्रुतिः तद्वाजमन्नं यज्ञाख्यं योऽर्हति स वाजी अर्हार्थे इनिः वाजिनं यज्ञियं त्वा वाजेध्यायै । इन्धी दीप्तौ । यज्ञोज्ज्वलनार्थं संमार्ज्मि संशोधयामि । स्रुवं प्रतपति प्रत्युष्टमिति व्याख्याते यजुषी संमार्ष्टि स्रुचम् । अनिशितासीति व्याख्यातम् । अनिशितेति स्त्रीत्वविवक्षायां टाप् । वाजिनीमिति ङीप् एतावानेव विशेषः ॥ २९ ॥

योक्त्रेण पत्नीं संनह्यति ॥ अदित्यै रास्नासि । अदित्याः संबन्धिनी या रास्ना सा त्वमसि रास्ना रशना । ऊर्ध्वम् उद्गूहति वि-

ष्णोर्वैष्ण्योऽसि विष्णोर्यज्ञस्य वेष्यः विष्लृ व्याप्तौ वेष्ट वेष्टने अन-योर्धात्वोरन्यतरस्यात्र रूपम् । यज्ञस्य वेष्टनं व्यापकं वा त्वमसि वे-ष्यः आवर्त्त उच्यते इत्यपरम् । आज्यमुद्वासयति ऊर्जेति व्याख्या-तम् । पत्न्याज्यमवेक्षते । अदब्धेनेति । आज्यमुच्यते । अद-ब्धेन दभ्नोतिर्हिंसार्थः अहिंसितेन त्वां चक्षुषा अर्वाचीनं पश्यामि किञ्च अग्नेर्जिह्वासि यदा वा एतदग्नौ जुह्वति । तदाग्नेर्जिह्वा इवोत्ति-ष्ठति । ज्वालोत्पत्तिनिमित्तमित्यर्थः ॥ सुहुर्देवेभ्यः साधु हूयते देवे-भ्यः अथवा शोभनमाह्वानं यस्य देवेभ्योऽर्थाय तदाज्यं सुहूः । तादर्थ्ये चतुर्थी । उपकृत्य प्रत्युपकारार्थः प्रार्थयति धाम्ने धाम्ने मे भव यजुषे यजुषे । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मा-नीति धाम्ने धान्मे यजुषे यजुष इति द्विर्वचनं वीप्सार्थं मम यज्ञस्य यावन्ति स्थानानि यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥

आज्यमुत्पुनाति । सवितुस्त्वा । सवितुः प्रसवे वर्त्तमानस्त्वाम् उत्पुनामि व्याख्यातमन्यत् ॥ प्रोक्षणीरुत्पुनाति । सवितुर्व इति व्या-ख्यातम् । आज्यमवेक्षते । तेजोऽसि शुक्रमस्यमृतमसि । यो ह्येतद्भ-क्षयति ददाति जुहोति वा तस्य तेजः प्रभृतीनि भवन्तीति वाक्या-र्थः । यद्वा स्वत एवैतद्गुणयुक्तमाज्यम् । आज्यं गृह्णाति धामना-मासि धाम स्थानम् आयतनं धीयतेऽस्मिन् इति धामासि नाम नमयति सर्वाणि भूतानि आत्मानं प्रति अतो नामप्रियं देवानामिष्ट-मभिप्रेतं देवानम् । अनाधृष्टम । अनाधर्षितं रक्षोभिः देवयजनम-सि । देवा अनेनेज्यन्त इति देवयजनम् ॥ ३१

इति उव्वटकृतौ मन्त्रभाष्ये प्रथमोऽध्यायः ॥ १ ॥

---

अथ इध्मं प्रोक्षति । कृष्णोऽस्याखरेष्ठः अस्ति कृष्णशब्दोऽन्तोदा-त्तो वर्णवचनः अस्ति च कृष्णशब्दो मृगवचन आद्युदात्तः तदिहा-द्युदात्तत्वात् कृष्णमृगवचनो गृह्यते । तथा च श्रुतिः । यज्ञो ह देवे-भ्योऽपचक्राम स कृष्णो भूत्वा चचारेति । इध्मपूलक उच्यते । कृष्णमृगो यज्ञस्त्वमसि । यज्ञसाधनत्वाद्यज्ञ इत्युच्यते आखरेष्ठः आङ् अध्यर्थे आहवनीयाख्ये खरे अधि उपरि तिष्ठतीति आखरेष्ठः एतदु-क्तं भवति आहवनीयाख्ये खरे स्थितस्त्वं कृष्णमृगो यज्ञो भवसि ।

अतोऽग्नये त्वा जुष्टम् अभिप्रेतमभिरुचितं प्रोक्षामि वेदिं प्रोक्षति। वेदिरसि। तद्यदनेनेमाꣳसर्वाꣳसमविन्दत तस्माद्वेदिर्नामेति तां व्युत्पत्तिमङ्गीकृत्याह वेदिस्त्वमसि अतो बर्हिषे त्वामभिरुचितां प्रोक्षामि। बर्हिः प्रोक्षति बर्हिरसि। बर्हिस्त्वमसि। अतः स्रुग्भ्यस्त्वामभिरुचितं प्रोक्षामि॥ १॥

मूलेषूपलिञ्चति। अदित्यै व्युन्दनमसि। इयं वै पृथिव्यदितिः षष्ठ्यर्थे चतुर्थी। अदित्याः पृथिव्याः व्युन्दनम्। उन्दी क्लेदने। उन्दनं सेचनं भवसि उदकसेक उच्यते। प्रस्तरं गृह्णाति। विष्णो स्तुपोऽसि विष्णोर्यज्ञस्य स्तुपः स्त्यायतेः संघातकर्म्मणः शिखा असि भवसि। वेदिं स्तृणाति बर्हिषा। ऊर्णम्रदसम्। ऊर्णामिव मृद्वीं त्वां कर्त्तुं स्तृणामि। स्तृञ् आच्छादने। आच्छादयामि स्वासस्थां साधुमर्यादया अस्यामासीदन्ति सा तथोक्ता। तां त्वां स्तृणामि। देवेभ्योऽर्थाय। स्कन्नमधिमृशति। भुवपतये स्वाहा। भुवनपतये स्वाहा। भूतानां पतये स्वाहा। अस्याग्नेर्ये भ्रातरः पूर्वे त्रयो बभूवुः ते वषट्कारभयादिमां पृथिवीं प्राविशन्। अयं चाग्निः प्रपलाय्याप्सु प्राविविक्षन् स देवैरानीय स्वाधिकारे नियुज्यमान एवमुवाच एतैरग्निभिर्म्मां परिधत्तेति त एते परिधयः तेषां चायं भागः स्कन्नोऽग्नीनां भुवः शब्देन मध्यमा व्याहृतिरुच्यते भुवनशब्देन जगदुच्यते भूतानामिति भूतान्येवोच्यन्ते। एते येषां ऽधिपतयोऽग्नयः तेभ्यः स्वाहेति संबन्धः॥ २॥

परिधीन् परिदधाति आहवनीयस्य पश्चात्। गन्धर्वस्त्वा। परिधिः उच्यते गन्धर्वो विश्वावसुस्त्वां परिदधातु सर्वत्र स्थापयतु विश्वस्य सर्वस्य अरिष्ट्यै अविनाशाय रिषतिर्हिंसार्थः स नञा प्रतिषिध्यते। किञ्च यजमानस्य परिधिरसि। न केवलमाहवनीयस्य किं तर्हि यजमानस्यापि परिधिरसि। किञ्च अग्निरसि। आहवनीयस्य भ्राता अत एवमुच्यते इडः स्तोता होत्राद्यभिप्रायमेतत्। इडितः इड स्तुतौ स्तुत इत्यर्थः। दक्षिणं परिधिं परिदधाति इन्द्रस्य दक्षिणेन बाहुना परिधिरुपमीयते। व्याख्यातः शेषः उत्तरं परिदधाति मित्रावरुणौ त्वोत्तरतः मित्रावरुणौ वाय्वादित्यौ त्वाम्। उत्तरतः सर्वतो धत्तां ध्रुवेण अचलनधर्मणा धारणेन विश्वस्यारिष्ट्या इति व्याख्यातम्॥ ३॥

आहवनीये इध्मकाष्ठमादधाति ॥ वीतिहोत्रम् आग्नेयी गायत्री- वीतिहोत्रं वी गतिप्रजनकान्त्यसनखादनेषु वीतिः अभिलाषः होतृकर्मणि यस्य वीतिहोत्रः ॥ अथवा विविधा इतिर्गतिर्होतृप्रशस्त्रादिषु यस्य स वीतिहोत्रः हे भगवन् अग्ने वीतिहोत्रं त्वां कवे क्रान्तदर्शिन् अतीतानागतविप्रकृष्टविषयज्ञानं युगपत् यस्य स कविस्तस्य संबोधनम् । द्युमन्तं दीप्तिमन्तं समिधीमहि । इन्धी दीप्तौ सन्दीपयामः अनेन इध्मकाष्ठेन बृहन्तं महान्तम् अध्वरे यज्ञे ॥ ४॥

द्वितीयामादधाति । समिदसि । अङ्गप्रधानार्थस्याहवनीयस्याग्नेः समिन्धनमसि समित्स्तूयते । आहवनीयमीक्षमाणो जपति । सूर्यस्त्वा पुरस्तात्पातु गोपायतु गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति श्रुतिः । कस्याश्चिदभिशस्त्यै यः कश्चिदभिशापस्तस्मादित्यर्थः ॥ अभिशस्त्या इति चतुर्थी पञ्चम्यर्थे । बर्हिषस्तृणे तिरश्ची निदधाति । सवितुर्बाहू स्थेति । अनेन प्रस्तरस्य धारणकर्म्मणा युवां सवितुरिव बाहू भवथ तयोः प्रस्तरं स्तृणाति । ऊर्णम्रदसम् । ऊर्णमिव मृदुं त्वां स्तृणामि स्वासस्थं देवेभ्यः । साधु अस्मिन्नासीदन्ति तिष्ठन्ति इति स्वासस्थः प्रस्तरः । देवेभ्य इति षष्ठ्यर्थे चतुर्थी देवानामिति यावत् ॥ प्रस्तरमभिनिदधाति आ त्वा वसवः आसदन्तु आसीदन्तु त्वां सवनदेवता वसवो रुद्रा आदित्याः ॥ ५ ॥

जुहूं निदधाति ॥ घृताच्यसि ॥ अञ्चु गतिपूजनयोः ॥ घृतमञ्चितं प्राप्तं यस्यां स्रुचि घृतं वा अच्यते क्षिप्यते यया स्रुचा सा घृताची । जुहूर्नाम्ना क्रियाभिप्रायमेतत् ॥ हूयते अनयेति जुहूः सेदं प्रियेण धाम्नेति । तदः श्रवणाद् यदोऽध्याहारः या त्वं घृताच्यसि जुहूश्च नाम्ना सा इदं प्रियं सदः स्थानं आसीद । अधितिष्ठ प्रियेण धाम्ना सहिता । एतद्वै देवानां प्रियं धाम यदाज्यमिति श्रुतिः ॥ आज्यसहितेत्यर्थः ॥ अथवा धामानि त्रीणि भवन्ति । स्थानानि नामानि जन्मानीति वा अस्मिन्पक्षे प्रियेण धाम्ना नाम्नाऽभिहिता सतीति योज्यम् ॥ उपभृतं सादयति । घृताच्यस्युपभृन्नाम्ना । उपहरणादुपभृत् व्याख्यातमन्यत् ॥ ध्रुवां सादयति ॥ घृताच्यसि ध्रुवा नाम्ना ध्रुवा स्थिरा व्याख्यातमन्यत् ॥ अन्यद्धविः सादयति प्रियेण धाम्ना व्याख्यातमन्यत् हवींॅष्यभिमृशति ॥ ध्रुवा असदन् ॥ ता

विष्णो पाहीति तदः सम्बन्धाद्यदोऽध्याहारः यान्येतानि ध्रुवाणि असदन् आसादितानि ऋतस्य योनौ यज्ञोत्सङ्गे ता विष्णो तानि हवींषि पाहि । गोपाय किं च पाहि यज्ञं गोपाय यज्ञम् ॥ किं च पाहि यज्ञपतिं गोपाय यज्ञपतिं यजमानम् आत्मानमुपस्पृशति ॥ पाहि माम् ॥ अध्वर्युरात्मानं ब्रवीति गोपाय माम् ॥ यज्ञन्यम् यज्ञं नयतीति यज्ञनीः गोपाय मां तं यज्ञनेतारमित्यर्थः ॥ ६ ॥

अग्नीन् अग्निसंमार्गे करोति अग्ने वाजजित् ॥ हे भगवन्नग्ने वाजजित् वाजस्यान्नस्य जेतः वाजं त्वां सरिष्यन्तमिति सृ गतौ यज्ञं त्वां प्रापयिष्यन्तं वाजजितम् । अन्नस्य जेतारं संमार्ज्मि मृजूष् शुद्धौ अञ्जलिं करोति ॥ अध्वर्युः नमो देवेभ्यः देवेभ्यो निह्नवः दक्षिणतः उत्तानं पाणिं करोति स्वधा पितृभ्यः पितृभ्यो निह्नवः । जुहूपभृतावादत्ते स्रुचावुच्येते । सुयमे साधु यमने मे मम भूयास्तम् भवतम् ॥ ७ ॥

यथाहं सुसंयताभ्यां स्रुग्भ्याम् । अस्कन्नं सकलम् । अद्य अस्मिन् कर्म्मणि देवेभ्योऽर्थायाज्यम् आज्यशब्देन यज्ञो लक्ष्यते यज्ञं संभूयासं संविभ्रियाम् दक्षिणातिक्रामति ॥ अङ्घ्रिणा विष्णो ॥ अङ्घ्रेर्गत्यर्थस्य अङ्घ्रिः पादः पादेन विष्णो यज्ञं मात्वावक्रमिषम् माङि लुङ् मा त्वाम् अर्वाचीनं क्रमिषम् वसुमतीमित्यवस्थाय वसुमतीं धनवतीं हे भगवन्नग्ने ते तव छायां छायाशब्द आश्रयवचनःयुष्माकं पादच्छायायां वपामीति यथा आश्रयम् उपस्थेयम् उपतिष्ठेयम् विष्णोर्यज्ञस्य स्थानं भवसि यज्ञस्य ॥ होतत्स्थानं यत्र स्थितैर्यागः क्रियते । जुहोति इत इन्द्रः अस्मात् यजानस्थानात् । उत्थायेति शेषः इन्द्रो वीर्यमकृणोत् इन्द्रः वीरस्य कर्म वीर्यम् अकृणोत् कृञ् हिंसाकरणयोः कृतवान् अतो हीन्द्रस्तिष्ठन् दक्षिणतो नाष्ट्रा रक्षाꣳस्यपहन्तीति श्रुतिः किं च उर्ध्वोऽध्वर आस्थात् इतश्च यजतिस्थानादूर्ध्वः प्रगुणः यज्ञः आस्थात् आस्थितः अध्वर्युयागाभिप्रायमेतत् ॥ ८ ॥

अग्ने वेर्होत्रं वेर्दूत्यम् हे अग्ने वः विद् ज्ञाने विद्धि जानीहि । अधिगतार्थो भव मया होत्रं कर्त्तव्यम् । वेर्दूत्यम् विद्धि च दूत्यं दूतस्य कर्म्म मया कर्त्तव्यम् । उभयं वा एतदग्निर्देवानां होता च दूतश्चेतिश्रुतिः अवतां त्वां द्यावापृथिवी एवं त्वां स्वकर्म्मणि प्रवृत्तं पालयेताम् द्यावापृथिव्यौ अव त्वं द्यावापृथिवीं पालय त्वं क्षितेन भू-

यात् । सुवाक् इन्द्रः आह स्वाहा वागाह वाचे वा एनमाघारमाघारयन्तीन्द्रो वागित्युवाच । आहुरिति श्रुतिः जुह्वाध्रुवां समनक्ति संज्योतिषा सङ्गच्छतामित्यध्याहारः ज्योतिषा आज्येन ज्योतिः आज्यं सङ्गच्छतम् ॥ ९ ॥

यजमानो जपति मयीदामिन्द्रः मयि इदम् इन्द्रः इन्द्रियं वीर्यं दधातु स्थापयतु किं च अस्माकं सन्त्वाशिषः सत्या अवितथा नः अस्माकं भवन्तु आशिषः अग्नीन् प्राश्नाति । उपहूता अभ्यनुज्ञाता पृथिवी माता जगतो निर्मात्री उपमा पृथिवी माता ह्वयताम् । अभ्यनुजानातु मां पृथिवी माता भक्षणाय अहं त्वामग्निः सन् भभयामि आग्नीध्रात्कर्म्मणोऽनपगतः स्वाहा सुहुतमस्तु ॥ १० ॥

द्वितीयं प्रश्नाति उपहूतो द्यौः पिता अभ्यनुज्ञातो द्यौः पिता उपमां द्यौः पिता ह्वयताम् । अभ्यनुजानातु मां द्यौः पिता अहं त्वग्निः सन् भक्षयामि आग्नीध्रादिति समानम् इत उत्तरं ब्रह्मकर्मत्वं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यत् । प्राशित्रं गृह्णाति देवस्य त्वेति व्याख्यातं प्रतिगृह्णामीत्यन्तं पुरुषः प्राश्नाति अग्नेष्ट्वास्येन अग्नेः सम्बन्धिनास्येन मुखेन त्वां प्राशित्रं प्राश्नामि भक्षयामि ॥ ११ ॥

समिदामन्त्रितः प्रसौति । एतदेव अध्वर्युराह ब्रह्मन्प्रस्थास्यामीति । एतं यज्ञं ते तव हे देव दानादिगुणयुक्त सवितः प्रसवितः प्राहुः एकवचनस्य स्थाने बहुवचनं प्राह ब्रवीतीति तत् सवितारं प्रसवायोपधावति इति श्रुतिः । किं च बृहस्पतये ब्रह्मणे प्राह बृहस्पतिर्वै देवानां ब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति । तेन यज्ञमव तेन हेतुना यज्ञम् अव पालय तेन च यज्ञपतिं यजमानं पालय तेन च माम् अव पालय ॥ १२ ॥

किं च मनो जूतिर्जुषतामाज्यस्य मनो जुषतां सेवताम् । आज्यस्य स्वमंशं कथम्भूतं मनः जूतिः जवतेर्गतिकर्मणो जूतिः अतीतानागतवर्त्तमानेषु कालेषु पदार्थेषु यदुगन्तृ गच्छति किं च बृहस्पतिर्यज्ञमिमं तनोतु विस्तारयतु अरिष्टं यज्ञꣳसमिदं दधातु रिषतिर्हिंसार्थः । अरिष्टम् । अविनष्टं यज्ञमिमं कृत्वा सन्दधातु । इडाभक्षणेन हि यज्ञोऽविच्छिन्नः इत्यत एवमुच्यते किं च विश्वेदेवासः देवा एव देवासः आज्जसेरसुक् आत् अकारान्तात् जसेरसुक् । सर्वे देवा इह कर्मणि मादयन्ताम् मदी हर्षे अस्मात्स्वार्थे णिच् । हर्षं कुव

न्तु ओम् । अवतेराप्नोतेर्वा ओङ्कारः । इहाभ्युपगमार्थः प्रतिष्ठ प्रकर्षेण इह तिष्ठ १३ ॥

एषा ते अग्ने । इतः प्रभृति प्रकृतमार्षमाग्नेयी अनुष्टुप् । समिदामन्त्रणे विनियुक्ता । हे भगवन्नग्ने एषा ते तव समित् समिन्धनं तया समिधा वर्धस्व च आचप्यायस्व चकारो भिन्नक्रमः आप्यायस्व च वर्द्धनाप्यायने समिधा कुर्वित्यर्थः । किं च त्वत्प्रसादात् वयं वर्द्धिषीमहि पुत्रपश्वादिभिः आचप्यासिषीमहि चकारो भिन्नक्रमः आप्यासिषीमहि च । प्यायतेर्लुङि सीयुटि उत्तमपुरुषबहुवचने एतद्रूपम् तत्र सीयुटश्छान्दसोऽभ्यासः अग्नि संमार्ष्टि अग्ने वाजजित् व्याख्यातम् ॥ १४ ॥

जुह्वपभृतौ व्यूहनि । तत्र जुह्वायमानसंस्तवो अग्नीषोमयोः प्रधानदेवतयोः उज्जितिमनु उत ऊर्ध्वं जयनमनु उज्जेषम् । ऊर्ध्वं जयेषम् किं च वाजस्य अन्नस्य पुरोडाशादेः माम् । आत्मानं प्रसवेन अभ्यनुज्ञया करणभूतया प्रोहामि प्रेरयामि प्रकृतत्वादग्नीषोमयोरुज्जितिमनुहविषः प्रसवस्य करणत्वेन विवक्षितत्वात् । मामित्यात्मनः कर्मणः कर्मत्वं प्रोहामीति कर्तृत्वं चोपपद्यते उपभृतं प्रतीचीं प्रेरयति । अग्नीषोमौ प्रधानहविर्भाजौ तं शत्रुम् । अपनुदतां णुद प्रेरणे । अपगमयताम् योऽस्मान्द्वेष्टि द्विष अप्रीतौ योऽस्माभिर्न प्रीयते यं च वयं द्विष्मः येन च वयं न प्रीयेमहि किं च एवमग्नीषोमाभ्यामपनुद्यमानं शत्रुवाजस्यान्नस्य प्रसवेन अपोहामि अवाञ्चन्तं प्रेरयामि । अधोनयामीत्यर्थः । उत्तरौ मन्त्रौ समान व्याख्यानौ ॥ १५ ॥

परिधीन्समनक्तिः अध्वर्युः वसुभ्यस्त्वा परिधिरुच्यते वसुभ्योऽर्थाय त्वामनज्मि रुद्रेभ्योऽर्थाय त्वामनज्मि आदित्येभ्योऽर्थाय त्वामनज्मि । एतदुक्तं भवति इत्थम्भूता यूयं येन युष्मदभ्यञ्जनेन सवनेन देवतानां तृप्तिः प्रस्तरमादत्ते अध्वर्युः । संजानाथां हे द्यावापृथिव्यौ युवां संजानाथम् । अवगतार्थे भवतां युवाभ्यां वृष्टिर्दातव्येति किं च मित्रावरुणौ त्वा वृष्ट्यावतां वायुर्वै वर्षस्येष्टे स चाध्यात्मं प्राणोदानभूतो मित्रावरुणशब्दाभ्यामुच्यते तद्योऽयं वायुरध्यात्मगतः सप्रस्तररूपापन्नं यजमानं त्वां वृष्ट्या अवतु पालयतु यजमानो वै प्रस्तर इति श्रुतिः । अनक्ति व्यन्तु वयः । वय इति छन्दास्यग्निधी-

यन्ते गायत्र्यादीनि । वेतिर्गत्यर्थः व्यन्तु गच्छन्तु वयोरूपाणि छन्दांसि प्रस्तरमादायेति शेषः । अक्तं तमेव प्रस्तरं रिहाणा लिहाना आस्वादयन्तः कथंभूतम् । अवनीचैर्हरेति मरुतां पृषती । प्रस्तरदेवत्या चतुर्थपाद आग्नेयः आहुतिपरिणामं त्रिभिः पादैराह । अन्तरिक्षस्थाना मरुतः तेषामादिष्टोपयोजनं पृषत्यो गावः वाहनं मरुतां संबन्धिनीः पृषतीर्गच्छ ततः अन्तरिक्षं तर्पयित्वा वशा पृश्निर्भूत्वा दिवं गच्छ इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरिति श्रुतिः ॥ पृथिवीसम्बन्धिभिर्भोगैर्द्युलोकं तर्पयित्वा इत्युक्तं भवति । ततो नो वृष्टिमावह ततस्तस्मात् द्युलोकात् नः अस्मभ्यं वृष्टिमावह । वृष्ट्या इमां पृथिवीं तर्पयेत्यर्थः ॥ आत्मानमुपस्पृशति ॥ चक्षुष्याः चक्षुः अग्ने । चक्षूंषि पातीति चक्षुष्याः हे भगवन् अग्ने यतस्त्वं चक्षुष्या भवसि स्वभावतः प्रवृत्या अतश्चक्षुर्मे पाहि गोपाय ॥ १६ ॥

परिधिमनुप्रहरति । यं परिधिंत्रिष्टुब्विराड्रूपा । यजुरन्ता अग्नेः प्रियमिति यजूः आहवनीयोऽग्निरुच्यते हे आहवनीय यं परिधिं पर्यधत्थाः । परिहृतवानसि अग्ने देवपणिभिरसुरैः प्रतिपक्षभूतैः गुह्यमानः गूहू संवरणे संव्रियमाणः अवरुध्यमानः तत एतं तमेतं परिधिं ते तव अनुजोषं भरामि अनुरुपसर्गः । भिन्नक्रमः भरामीत्येतेन सम्बध्यते । हृग्रहोर्भः छन्दसि हस्येति हकारस्य भकारः अनुहरामि जोषमभिप्रेतम् एतत्सङ्गमात्प्रीतो भवेति । एव नेत्त्वदपचेतयातै । एष परिधिर्न इत् नेत् निपातसमाहारः परिभवार्थे त्वत् त्वत्तः सकाशात् अपचेतयातै आशङ्कायां पञ्चमो लकारः चिती संज्ञाने अपचेतयतु । एतदुक्तं भवति एष परिधिः अथ कथञ्चित् त्वत्तो वियुक्तः सन् अस्मान् विगतचेतस्कान् न कुर्यात् । मास्मान् विमनस्कान् करोतु । इतरावनुसमस्यति । अग्नेः प्रियम् अग्नेः सम्बन्धि प्रियं पाथः पाथ इत्यन्न नाम अभिप्रेतमन्नम् । अपीतम् । अपि गच्छतम् ॥ १७ ॥

जुहूपभृद्भ्यां सꣳस्रवान् जुहोति सꣳस्रवभागाः वैश्वदेवी त्रिष्टुप् यजुरन्ता स्वाहा वाडिति यजुः संस्रवः भागो येषां ते संस्रवभागाः विश्वेदेवाः यद्यपि यूयं संस्रवभागा स्थ भवथ तथापि इषाञ्चेन संस्रवलक्षणेन बृहन्तो महान्तः । किं च ये च

प्रस्तरेष्ठाः प्रस्तरस्थायिनः ये च पारिधेयाः परिधिभवा देवास्ता-नुपमन्त्र्य प्रत्यक्षीकृत्य ब्रवीमि इमां मदीयां वाचम् अभिगृणन्तः अभिष्टुवन्तो वर्णयन्तो विश्वे सर्वे आसद्य स्थित्वा । अस्मिन् बर्हिषि मादयध्वं तृप्यध्वम् मोदयध्वं वा स्वाहेति व्याख्यातम् । वाट् वषट्कारः परोक्षम् ॥ १८ ॥

घृताची इति धुरि स्रुचौ निदधाति । घृतमञ्चति ययोस्ते घृताच्या-विति प्राप्ते घृताची इति पूर्वसवर्णदीर्घादेशः ये युवां घृताच्यौस्थः ते ब्रवीमि धुर्यौ धुरि भवौ धुर्यावनड्वाहौ पातं गोपायतम् ॥ किं च सुम्ने स्थः सुम्नमिति सुखनाम यस्मात् सुखरूपे भवथः तस्मात्सुम्ने सुखे मा मां धत्तं स्थापयतम् । यज्ञ नमश्च ते इति । वेदिमालभते यज्ञ नमः शू-र्पे यवमान् कृषिरुद्दालवान् धानान्तवानित्येते ऋषयोऽस्य यजुषो यज्ञो देवता । हे यज्ञ नमश्च ते । नमोऽस्तु ते नमस्कारश्चास्तु ते तुभ्यम् अस्तु ॥ स यदतिरेचयति तन्नमस्कारेण शमयति । उ-पच ॥ यज्ञस्य उपचयश्च तेऽस्तु । अथ यदूनं करोत्युपचेति तेन तदन्यूनं भवतीति श्रुतिः । यज्ञस्य शिवे सन्तिष्ठस्व यद्धि यज्ञस्य न्यूनातिरिक्तं तच्छिवम् । तेन तदुभयं शमयति स्विष्टे मे संतिष्ठस्व साधु इष्टं स्विष्टं तस्मिन् मे मम संतिष्ठस्व । समाप्तिं याहि ॥ १९ ॥

स्रुक् स्रुवं प्रति गृह्णाति अग्नेऽदब्धायो ॥ गार्हपत्योऽग्निरुच्यते हे भगवन्नग्ने अदब्धायो दभ्नोतिर्हिंसाकर्मा ॥ आयुरिति मनुष्यनाम । अदब्धः अनवखण्डितः आयुर्मनुष्यो यजमानो यस्य स तथाक्तः तस्य संबोधनं हे अदब्धायो यद्वा अनवखण्डितायुरग्निरेव एत-स्मिन्पक्षे छान्दसी पुल्लिङ्गता अशीतम अश भोजने अशूङ् व्याप्तौ एतौ धातू संदिह्येते अशीतम अतिशयेन भोक्तः अतिशयेन वा व्या-पकः अशीतमेति दीर्घत्वं छान्दसम् । एवं स्तुत्वा याचते । पाहि मा दिद्योः दिद्युरिति वज्रनाम गोपाय मां दिद्युतः पाहि प्रसित्यै प्रसितिः प्रसहनं तन्तुर्वा जालं वा पाहि मा बन्धनात् पाहि दुरि-ष्ट्यै दुर्यागात्पाहि पाहि दुरद्मन्यै अद्मेत्यन्ननाम । पाहि दुर्भोजनात् भीत्रार्थानां भयहेतुरिति सर्वाश्चतुर्थ्यः पञ्चम्यर्थे । अविषं नः पितुं कृणु ॥ पितुरित्यन्ननाम विषरहितमन्नमस्माकं कुरु सुखदा योनौ । योनिरिति गृहनाम साधुसदने गृहे स्थितानामस्माकम् । एतद्भवतु । स्वाहा वाडिति व्याख्यातम् । दक्षिणाग्नौ जुहोति अग्नये संवेशपतये ।

स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः । तस्य पतिस्तस्मै ॥ सरस्वत्यै यशोभगिन्यै। जीवतः प्रशंसा यशः तस्य यशसः भगिनीति संबन्धिशब्दः स्वसेत्युच्यते ॥ २० ॥

पत्नी वेदं प्रमुञ्चति वेदोऽसीति ॥ वेदोऽसि । विद ज्ञाने । वेदिता त्वमसि योह्युपग्रहः स संनिकर्षाद्यज्ञं जानाति यतस्त्वं वेदोऽसि अतस्त्वां ब्रवीमि येन कारणेन देव वेद देवेभ्यो देवानामिति विभक्तिव्यत्ययः । वेदः अभवः भूतः तेनैव कारणेन मह्यं वेदो भूयाः भवेः ॥ समिष्टयजुर्जुहोति । देवा गातुविदः ॥ इति विराडियं त्रिंशदक्षरा अस्याः पूर्वेणार्द्धर्चेन देवता अवसृजति ॥ हे देवा गातुविदो गातुरिति यज्ञनाम यज्ञविदः युष्मत्प्रसादात्तथा भवतु । यथा आगामिनं गातुं यज्ञं वित्त्वा इति तं विदित्वा । गातुमित ततोऽर्वाक्कालं यज्ञमित आगच्छत यज्ञपरंपराऽविच्छिन्नगमना यूयं भवतेत्यर्थः । एवं देवान् यथायथं विसृज्याथेदानीं मनसस्पतिमाह हे चन्द्रमः इमं यज्ञं देववाते धाः । धारय वाते हि यज्ञोऽवतिष्ठते । तथा च श्रुतिः । वायुरेवाग्निः । तस्माद्यदैवाध्वर्युरुत्तमं कर्म करोति अथैतमेवाप्येतीति ॥ २१ ॥

बर्हिर्जुहोति संबर्हिरङ्क्ताम् ॥ बर्हिर्दैवत्या विरड्रूपा त्रिष्टुप् । सं बर्हिरङ्क्ताम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । बर्हिरिति द्वितीया । समङ्क्तां बर्हिः । कः इन्द्र उपरिष्टाच्छ्रूयते । स इहाभिसंबध्यते । इन्द्रः समङ्क्तां बर्हिः । केन हविषा घृतेन कैः साहितः समङ्क्ताम् आदित्यैर्वसुभिर्मरुद्भिर्विश्वैर्देवैः सहितः इन्द्रो बर्हिः समङ्क्ताम् । आवाहनीयलक्षणेन ज्योतिषा एकीभूतमभ्यक्तं सत् दिव्यं नभो गच्छतु ॥ यत्तु दिव्यं दिवि भवं नभ इत्यादित्यनाम आहित्यलक्षणं ज्योतिस्तद्गच्छतु ॥ २२ ॥

वेद्यां प्रणीतं निनयति कस्त्वा विमुञ्चति । व्याख्यातम् अयं तु विशेषः । तत्र यज्ञं युनक्ति । इह तु विमुञ्चति । पोषाय यजमानस्य पोषाय निनयामीति शेषः । कणानपास्यति । रक्षसां भागोऽसीति निगदव्याख्यातम् ॥ २३ ॥

इत उत्तरं याजमानं कर्म । यजमानः पूर्णपात्रं प्रतिगृह्णाति संवर्चसेति ॥ त्वाष्ट्री त्रिष्टुप् ॥ समित्युपसर्गः अगन्महीत्यनेनाख्यातेन संबध्यते । समगन्महि वर्चसा ब्रह्मवर्चसेन । पयसा गोभि-

स्तनूभिर्भार्यापुत्रादिभिः मनसा च शिवेन शान्तेन यज्ञमुपगच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्च्चआदि अतोऽनेन पुनराप्याययति । किं च त्वष्टा सुदत्रः । कल्याणदानः विदधातु करोतु रायो धनानि किञ्च अनुमार्ष्टु श्लक्ष्णयतु तन्वः शरीरस्य । यद्विलिष्टम् । विलिष्टम् विश्लिष्टम् ॥ २४ ॥

विष्णुक्रमान् क्रमते । दिवि विष्णुः । द्युलोके विष्णुः यज्ञो मदीयः व्यक्रंस्त विक्रान्तवान् । जागतेन छन्दसा । ततो निभक्तः ततो द्युलोकान्निर्भक्तो निर्गतभागः कृतो योऽस्मान् द्वेष्टि हिनस्ति यं च वयं द्विष्मः हिंस्मः अनेनोत्तरावपि विष्णुक्रममन्त्रौ व्याख्यातौ । भागमवेक्षते । अस्मादन्नात् । अस्माद्यज्ञभागात् निर्भक्त इत्यनुषङ्गः भूमिमवेक्षते । अस्य प्रतिष्ठायै अस्या भूमेः प्रतिष्ठाया निर्भक्त इत्यनुषङ्गः । प्राङीक्षते । अगन्म स्वः । अनेन कर्मणा अगन्म गताः । कं स्वर्गं यज्ञं सूर्यं देवान् स्वरव्ययमनेकार्थम् । आहवनीयमीक्षते ॥ संज्योतिषाभूम । समित्येकीभावमाचष्टे आहवनीयलक्षणेन ज्योषिता एकीभूताः ॥ २५ ॥

स्वयम्भूरासि अकृतकस्त्वं भवसि श्रेष्ठः प्रशस्यतमो रश्मिः सप्त रश्मयः आदित्यस्य तत्र चतसृषु दिक्षु चत्वारो रश्मयः । एकोऽधस्तादेक उपरिष्ठात् मण्डलशरीराभिमानी हिरण्यगर्भाख्यः पुरुषः सप्तमो रश्मिः तदभिप्रायं श्रेष्ठो रश्मिरिति । तथा च श्रुतिः । अथ यत्परं भाः प्रजापतिर्वा सः स्वर्गो वा लोक इति । यस्त्वं स्वयम्भूरासि श्रेष्ठश्च रश्मिस्तं त्वां ब्रवीमि । वर्चोदा असि । ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दाता असि अतो वर्चो मे मह्यं देहि आवर्त्तते । सूर्यस्यावृतम् । आवर्त्तनमावृत् सूर्यस्य आवर्त्तनं अनुग्रहम् । आवर्त्ते । तदेतां । गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्ववर्त्तत इति श्रुतिः ॥ २६ ॥

गार्हपत्यमुपतिष्ठते अग्ने गृहपते । हे भगवन्नग्ने गृहपते सुगृहपतिः शोभनो गृहपतिरहं त्वया गृहपतिना गृहाणां पालयिता भूयासं भवेयम् । किञ्च सुगृहपतिस्त्वं मया अग्ने । सहायेन गृहपतिना भूयाः भवेः एवमनेन प्रकारेण अस्थूरिणौ गार्हपत्यानि सन्तु अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते तन्नञा प्रतिषिध्यते अस्थूरीति लुप्तोपमञ्चैतत् । यथा उभयतो युक्तं शकटम् । एवं नौ

आवयोः गार्हपत्यानि गृहपतिसंयुक्तानि कर्माणि सन्तु । शतं हिमाः शतं वर्षाणि । अथावर्त्तते सूर्यस्य वृतमन्वावर्त्ते इति व्याख्यातम् ॥ २७ ॥

व्रतं विसृजते अग्ने व्रतपते । हे भगवन्नग्ने व्रतपते व्रतमहम् अचारिषं चरितवानस्मि । तदशकं तच्च शकितवानस्मि तन्मे मम अराधि राद्धम् फलमाभिसमृद्धम् इत्यर्थः । द्वितीयो व्रतविसर्गमन्त्रः इदमहं हे अग्ने त्वत्साक्षिकं व्रतं गृहीत्वा इदं कर्म्म समाप्य य एव कर्मणः पुराहमस्मि मनुष्यः स एवास्मि ॥ २८ ॥

अतः परं पिण्डपितृयज्ञिया मन्त्राः प्रजापतेरार्षम् । अग्नौ जुहोति प्रेक्षणेन । अग्नये कव्यवाहनाय स्वाहा कवयः क्रान्तदर्शनाः पितरस्तेषां सम्बन्धि हविः कव्यं तद्वोढुं यस्यायमधिकारः स कव्यवाहनः । सोमाय पितृमते स्वाहा । पितृमान् पितृयुक्तः वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति लिङ्गाद् दैवावेतौ मन्त्रौ स्फ्येन उल्लिखति । अपहताः । अपहताः अपगताः अस्मात्स्थानादसुराः अपगतानि रक्षांसि च वेदिषदः वेद्यां सीदन्तीति वेदिषदः ॥ २९ ॥

उल्मुकं परस्तात् करोति ये रूपाणीति । त्रिष्टुबाग्नेयी ये रूपाणि प्रतिमुञ्चमानाः ये पितृरूपाणि आत्मनि प्रमुञ्चमानाः प्रतिपूर्वो मुञ्चतिर्बन्धने वर्त्तते आत्मनि बध्नन्तः असुराः सन्तो भवन्तः स्वधया पैत्र्येणान्नेन हेतुभूतेन अस्माभिरेतत् स्वादितव्यमिति चरन्ति । किं च । परापुरः पराक्रान्ताः पुरः परापुरः शरीराणि महान्तीति । निपुरः निकृष्टाः पुरः निपुरः सूक्ष्माणि शरीराणि ये भरन्ति ये बिभ्रति धारयन्ति । अग्निस्तानसुरान् लोकान् स्थानात् प्रणुदतु प्रेरयतु अस्मात् पितृलोकात् ॥ ३० ॥

अत्र पितर इत्युक्त्वोदङ्ङास्ते । अत्र पितरः बृहतीः अत्र अस्मिन् बर्हिषि हे पितरः मादयध्वं किं च यथाभागं यो यस्य भागः तं तथा भागम् । आवृषायध्वं प्राङ्पूर्वाद्वृषशब्दात् कर्त्तुः क्यङ् सलोपश्चेति क्यङ् । वृष इव स्वेच्छया महद्भिर्ग्रासैरेतान् पिण्डान् अश्नीत । आवृत्यामीमदन्तेति जपति अमीमदन्तः हर्षं प्राप्तवन्तः पितरो यथाविभागं च आवृषायिषत । अशितवन्तः । यथाभागम् आशिषुरित्येवैतदाहेति श्रुतिः ॥ ३१ ॥

नमो व इत्यञ्जलिं करोति। षट्कृत्वो नमस्करोति षड्वा ऋतवः पितर इति श्रुतिः व्याख्यातम्। नमो वः पितरो रसाय हे पितरः वः युष्माकं सम्बन्धिने रसाय रसभूताय वसन्ताय नमः वसन्ते हि मध्वादयो रसाः सम्भवन्तीत्यत एवं नमस्क्रियते एवं वक्ष्यमाणा अपि मन्त्रा व्याख्येयाः। शोषाय शोषप्रधानाय ग्रीष्माय नमः शुष्यन्ति हि ग्रीष्म ओषधयः जीवाय जीवनहेतुभूताय वर्षाभ्यो नमः स्वधायै स्वधा वै शरत् स्वधा वै पितृणामन्नमिति श्रुतिः। शरदि हि प्रायशोऽन्नानि भवन्ति। घोराय विषमाय विषमो हि हेमन्तः प्राणिनां शीतप्रचुरत्वात्॥ मन्यवे मन्युः क्रोधः क्रुद्ध इव हि शिशिरः ओषधीर्दहति यतः। नमो वः पितरः पितरो नमो वः आभ्यासे भूयांसमर्थं मन्यन्ते। गृहान्नः पितरो दत्त॥ भार्यापुत्रपौत्रादयो गृहा इत्युच्यन्ते गृहान्नः अस्मभ्यं हे पितरो दत्त किं च तथा युष्मत्प्रसादादस्माकं भवतु यथा नः गृहे सतो विद्यमानाम् द्रव्यान् वो युष्मभ्यं दद्म। सूत्राणि ददाति।एतद्वः युष्माकं हे पितरो वासः परिधानम्॥३२॥

मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा आधत्त गायत्री हे पितरः आधत्त गर्भं कुमारं पुष्करस्रजं स्रक्शब्देन पुष्पमालोच्यते। पुष्करशब्देन पद्मानि अश्विनौ पुष्करस्रजौ। अश्विभ्यां पुत्रोपमानं क्रियते।किं च यथा येन प्रकारेण इह अस्मिन्नेव ऋतौ पुरुषः पूरयिता देवपितृमनुष्याणाम्। असत् भूयात् तथा आधत्तेतिसंबन्धः॥ ३३॥

अपो निषिञ्चति॥ ऊर्जं वहन्तीः अब्देवत्या विराट् हे आपः यूयम् ऊर्जमन्नं वहन्त्यो नानाविधम् अमृतं घृतं पयः कीलालम् अन्नरसं कीलेऽलम् अन्नपर्यायः समर्थोऽन्नमिष्टं कर्त्तुं रस इति कीलालः कीलं बन्धनम् अलम् अत्यन्तम् अन्नस्येति वा कीलालम्। तस्माद्यावन्मात्र इवान्नरसः सर्वमन्नं भवतीत्यादि श्रुतिः परिश्रुतं सुरां स्वधास्थ॥ स्वधा वै पितृणामन्नमिति श्रुतिः॥ डुधाञ् धारणपोषणयोः॥ स्वमात्मीयं पितॄणां धानं पोषणम्। स्वधास्थ स्वधा भवथ ततस्तर्पयत मे मम पितॄन्॥ ३४॥

इतिउव्वटकृतौ मन्त्रभाष्ये द्वितीयोऽध्यायः।

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना॥

मन्त्रभाष्यमिदं क्लृप्तं पदवाक्यैः सुनिश्चितैः।

## अथ तृतीयोऽध्यायः ।

समिधाग्निम् । आधानमन्त्राः । प्रागग्निर्ज्योतिरित्येतेभ्यः देवानामार्षं प्रजापतेर्वाग्नेर्वा गन्धर्वाणां वा आग्नेय्यश्चतस्रो गायत्र्यः आश्वत्थ्यः तिस्रः समिधो घृताक्ता आदधाति । समिधाग्निमिति । समिधाऽश्वत्थसमिधा अग्निं दुवस्यत ॥ दुवस्यतिः परिचरणार्थः ॥ परिचरत ततो जातं सन्तं पूर्णाहुतिसम्बन्धिभिर्घृतैर्बोधयत । अवगतार्थं कुरुत । अतिथिम् । अतिथिधर्माणं ततोऽनन्तरं तनूहविःसम्बन्धीनि अस्मिन् हव्या जुहोतन । आजुहोतु अस्मिन्नग्नौ हव्या हवींषि ॥ १ ॥

जपति अध्वर्युः सुसमिद्धाय । साधु समिद्धाय शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय घृतं तीव्रं पटुतरं गव्यं ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कारः संस्कृतमित्यर्थः । जुहोतन जुहोत कुरुत नेत्यनर्थका उपजना भवन्ति कर्त्तन हन्तन मातनेति । अग्नये जातवेदसे । जातप्रज्ञानाया ॥ २ ॥

तं त्वा समिद्भिः । यस्त्वमुक्तगुणः तं त्वां समिद्भिः हे अङ्गिरः अङ्गतिर्गत्यर्थः रो मत्वर्थीयः गमनवन् आङ्गिरा उ ह्यग्निरिति श्रुतिः । घृतेन वर्द्धयामसि । वर्द्धयामः । इदन्तो मसीति इकारश्छान्दसः बृहत् शोचा दीप्यस्व यविष्ठ्य । युवतम । इष्ठनि परभूते टेः स्थूलदूरयुव इत्यादिना यविष्ठ इति सिद्धं तत्र साधुः स्वार्थिको वा यकारस्तद्धितः ॥ ३ ॥

उप त्वाग्ने । उपयन्तु त्वां हे अग्ने हविष्मतीः हविषा संयुक्ताः घृताचीः घृताश्रिताः समिधः हर्यतेति हर्य कान्तौ । हर्यतिः प्रेप्साकर्मा प्रेप्सावन् । ताश्च त्वां प्रत्युपगच्छन्तीः जुषस्व आसेवस्व । समिधः मम सम्बन्धिनीः ॥ ४ ॥

भूर्भुवः स्वः । महाव्याहृतयः । प्रजापतेरार्षं गार्हपत्याहवनीययो राधानमन्त्राः पृथिव्यन्तरिक्षद्युलोका अभिधेयाः । ब्रह्मक्षत्रविशो वा वर्णाः । आत्मा प्रजापशवो वा श्रुतितो व्याख्यातमेतत् । इध्मपूर्वार्द्धं गृहीत्वा यजमानो जपति । द्यौरिव भूम्ना यथा द्यौर्भूम्ना उपरिष्टादारभ्यैतद्यजुर्वा व्याख्येयं तथा हि सुबोधं भवति । तस्याः

ते तव हे पृथिवि देवयजनि देवा अस्यामिज्यन्ते इति देवयजनी। तस्याः सम्बोधनं हे देवयजनि ते पृष्ठे उपरि अग्निमन्नादम् । अन्नस्यात्तारम् अन्नाद्याय अन्नादनाय । अन्नभक्षणाय । आदधे स्थापयामीति तस्याः पृथिव्याः पृष्ठेऽग्निमाधाय द्यौरिव भूम्ना यथा द्यौर्भूम्ना नक्षत्रबहुत्वेन बह्वी एवं पुत्रपश्वादिभिर्बहुभिर्भूयासम् । पृथिवीव वरिम्णा । यथा पृथिवी वरिम्णा उरुत्वेन सती सर्वप्राणिनाम् आश्रयभूता एवमहं महत्त्वेन सता सर्वप्राणिनामाश्रयभूतो भूयासम् । हे अग्ने त्वत्प्रसादात् पृथिव्युच्यते । तस्याः ते तव पृथिवि देवयजनि । पृष्ठे स्थातारम् । अन्नादनाय अग्निमन्नादमन्नम् । उपरि भक्षणाय । आदधे स्थापयामि । यस्यास्तव मन्वादयोऽपि आधाय अन्नादाः संवृत्ताः संजाताः ॥ ५ ॥

आयं गौः पृश्निः सार्प्यराज्ञ आर्षेयो गायत्र्यस्तृचः । आहवनीयाग्न्युपस्थाने विनियुक्तः । अग्निः परापररूपेण स्तूयते । आयं गौः पृश्निरक्रमीत् आक्रमीत् आक्रमते । ऐश्वर्येण । अयमग्निः गौर्गन्ता । सर्वासु तासु तासु क्रियासु पृश्निर्नानारूपः । असदन्मातरं पुरः इमं लोकं अग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति । मातरं पृथिवीं पुरः पुरस्तात् । प्राच्यां दिशि किं च पितरं च प्रयन् स्वः पितरं च द्युलोकं च प्रयन् । गच्छन् सीदतीत्यनुवर्त्तते स्वः ॥ आदित्यः ॥ ६ ॥

एवमादित्यरूपेणाग्निं स्तुत्वाथेदानीं वायुरूपेणाग्निं स्तौति । अन्तश्चरति रोचनास्य ॥ द्यावापृथिव्योः अन्तरं चरति । अग्नेर्वाय्वाख्या शक्तिः अन्तरिक्षेऽयं तिर्यङ् वायुः पवत इति श्रुतिः ॥ रोचना रुचिः दीप्तौ । दीपना । अस्य अग्नेः । किं कुर्वाणा चरति । प्राणादपानती अन प्राणने । सर्वप्राणिषु प्राणादनन्तरम् अपानती चरति अपानादनन्तरं प्राणती चरतीति सामर्थ्याद्यमर्थो लभ्यते । एवं वाय्वादित्याभ्यां स्वशक्तिभूताभ्यामिदं जगत् अनुगृह्याथ य एवमेवमुपतिष्ठते तस्य किं करोतीत्याह । व्यख्यन्महिषो दिवम् ॥ विविधं तस्य पुरुषस्योपभोगार्थम् अवलोकयति पश्यति । भोग्यत्वेन दिवं द्युलोकं महिषः अग्निर्वै महिषः स हीदं जातो महानिति श्रुतिः ॥ ७ ॥

त्रिँशद्धाम ॥ त्रिंसत्सु धामस्विति विभक्तिव्यत्ययः । धा-

मानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति ॥ स्थानान्यत्राभिप्रेतानि ॥ त्रिंशच्चाहोरात्रे मुहूर्त्तास्त इह गृह्यन्ते त्रिंशत्स्थानेषु मुहूर्त्ताख्येषु स्तुतिभिरियं स्तूयते । यज्ञे या वाग्विराजति शोभनेस्तूयमाना वाक् पतङ्गाय धीयते पतन् गच्छतीति पतङ्गोऽग्निः । स ह्यरण्याः पतन् गार्हपत्यभावं गच्छति । गार्हपत्यादाहवनीयभावमित्यादिना तादर्थ्ये चतुर्थी पतङ्गार्थं धीयते अग्न्यर्थमुपधार्यत इत्यर्थः । एतदुक्तं भवति सर्वदेवतासंबन्धिनीभिस्तुतिभिरग्निरेष स्तूयते । स हि सर्वात्मा । प्रति वस्तोरह द्युभिः । वस्तोः द्युः भानुरित्यहर्नामसु पठितम् । अह इति निपातो विनिग्रहार्थीयः । न केवलं या त्रिंशत्सुधामसु वाग्विराजति सा पतङ्गाय धीयते । किं तर्हि प्रति वस्तोः प्रत्यहं च या स्तुतिलक्षणा वाक् या च द्युभिः अहोभिरुत्सवभूतैरुत्सवा यागपारायणादयः स्तुतिलक्षणा वाक् सा च पतङ्गायैव धीयते नान्यस्यै देवतायै ॥ ८ ॥

अग्निर्ज्योतिरिति । अग्निहोत्रहोममन्त्राः प्रागुपप्रयन्त इत्येतस्मात्प्रजापते रार्षम् । अग्निर्वर्च इति द्वे तक्षा पश्यत्परां जीलश्चैलकिः सप्त लिङ्गोक्तदेवता गायत्र्यः । पूर्वाः पङ्क्तिपदाः । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ नमः स्वस्तिस्वाहेत्यादिना सूत्रेण प्रथमायाः स्थाने चतुर्थी । अग्निर्ज्योतिर्ज्योतिरग्निरिति मन्त्राभ्यासे भूयांसमर्थं मन्यन्त इत्येतदिहाभिप्रायः ॥ अथ कोऽर्थः । अग्नये ज्योतिषे स्वाहा सुहुतमस्तु ॥ स्वस्याहानमस्तु । हानं हा न हा अहा स्वस्य अहा अपरित्यागः आत्मनो द्रव्यस्य चेति । अथवा योऽग्निर्ज्योतिर्ज्योतिश्चाग्निस्तस्मै स्वाहा । सूर्यो ज्योतिरित्यनेनैव व्याख्यातम् ॥ अथ ब्रह्मवर्चसकामस्य अग्निर्वर्चः योऽग्निर्वर्चः वर्चसा अनन्यभूतः तत् ज्योतिर्वर्चसा अनन्यभूतम् । तद्रूपं तस्मै सुहुतमस्तु । अनेनैव सूर्यो वर्च इति व्याख्यातम् । प्रातर्होममन्त्रः ज्योतिः सूर्य इति व्याख्यातः । सूर्यो ज्योतिरित्यनेनैव ॥ ९ ॥

अन्यो होममन्त्रविकल्पः सजूर्देवेन ॥ अग्निरुच्यते सजूर्देवेन सवित्रा । जुषी प्रीतिसेवनयोः ॥ योऽग्निः समानप्रीतिर्देवेन सवित्रा समानप्रीतिश्च रात्र्या इन्द्रवत्या इन्द्रसंयुक्तया स जुषाणः सेवमानः आस्वादयन् । आहुतिं वेतु वेतिरिह पानार्थः स्वादनार्थो वा । स्वाहा सुहुतं हविरेतद्भवतु । अथ प्रातः सूर्य उच्यते सजूर्देवेन

सवित्रा समानप्रीतिः देवेन सवित्रा भूत्वा समानप्रीतिश्च उषसा उषः शब्देन सूर्यप्रभोच्यते। इन्द्रसंयुक्तया भूत्वा जुषाणः सेवमानः आस्वादयन्सूर्यः वेतु पिबतु स्वाहेति व्याख्यातम् ॥ १० ॥

अथ यजमानाग्न्युपस्थानम् ॥ उपप्रयन्तो अध्वरं सुपोषः पौषैरित्यन्तं देवानामार्षम्। आद्ये द्वे आग्नेय्यौ गायत्र्यौ उपप्रयन्तः उपप्रगच्छन्तः अध्वरं यज्ञम्। मन्त्रम् आर्षं नित्यं वोचेम स्तूयाम अग्नये आरे दूरेऽवस्थिताय। अस्मे च शृण्वते अस्माकं च मन्त्रं शृण्वते अस्मन्मन्त्रश्रवणायाभिमुखायेत्यर्थः ॥ ११ ॥

अग्निर्मूर्धा ॥ परापररूपेण व्यवस्थितोऽस्यामृच्यग्निः स्तूयते अभिनयेन दर्शयति योऽयमग्निर्मूर्द्धा दिवः अहनि आदित्यात्मना द्युलोकस्य मूर्द्धा भवति अयमेव ककुत् ककुद इति महन्नामसु पठ्यते। तस्य कृतान्तलोपस्यैतद्रूपम्। अयमेव महानात्मा जगतः कारणमित्यर्थः॥ अयमेव पृथिव्याः पतिः। तापपाकप्रकाशादिभिरयमग्निः सर्वाः प्रजाः अनुगृह्णातीत्ययमभिप्रायः। किं च अयमेव अपाᳬंरेतांसि जिन्वति। या एता द्युलोकात् पतितास्तासामपां रेतांसि रेतः कारणमुच्यते। तानि कारणानि जिन्वति। जिन्वतिः प्रीतिकर्मा। तर्पयति परिपुष्यतीति यावत् ॥ आहुतिः परिणममाना वृष्टिं जनयतीत्येतद्दर्शयति। तथा च श्रुतिः अग्निहोत्रं प्रकृत्य भवति॥ ते वा एते आहुती हुते उत्क्रामत इत्यारभ्य यस्ततः पुत्रो जायते स लोक इत्येवमन्ता आहुतिपरिणामवादिनी ॥ १२ ॥

उभा वामिन्द्राग्नी ऐन्द्राग्नी त्रिष्टुप्। हे इन्द्राग्नी उभौ वां युवाम् ॥ आहुवध्यै ॥ कध्यैप्रत्ययः ॥ आख्यातोत्तमपुरुषस्यैकवचनस्य स्थाने। आह्वयामि। किमर्थं पुनरुभावाह्वयामि। सह भोजनाय। अत आह। उभा दाताराविषाᳬंरयीणाम्। उभावाहूतौ सन्तौ दातारौ दानशीलौ इषाम् अन्नानां रयीणां धनानां च भवथो युवाम्। उभा वाजस्य सातये हुवे वाम्। यतश्चैवं युवां विशिष्टान्नधनदातारौ अतो भूयो भूयो विशिष्टान्नधनदातारौ उभावपि वाजस्यान्नस्य सातये लब्धये हुवे आह्वयामि वां युवाम् ॥ १३ ॥

अयं ते योनिः। आग्नेय्यस्तिस्रः अनुष्टुब्जगतीगायत्र्यः ॥ आहवनीयोऽग्निरुच्यते। हे अग्ने आहवनीय अयं गार्हपत्योऽग्निस्ते तव योनिः उत्पत्तिस्थानम्। कथंभूतो योनिः ऋत्वियः ऋतावृतो-

प्राप्ते काले यो भवति । यतो जातो अरोचथाः । रुच दीप्तौ कारणात् यस्मात्त्वं जातः सन् पूर्वमस्याधानेष्टिपशुचातुर्मास्यसोमेष्वङ्गभावमुपगतः दीप्तवानसि तं जानन्नग्ने आरोह तं तथाभूतं योनिं गार्हपत्याख्यं विद्वान्नारोह पुनरुद्धरणाय अथानन्तरमेव नः अस्माकं वर्द्धये स्फीतं कुरु रयिं धनम् । येन पुनरपि त्वां यक्ष्याम इत्यभिप्रायः ॥ १४ ॥

अयमिह । अयमाहवनीयोऽग्निः इह कर्मस्थाने प्रथमः मुख्यः । दक्षिणाग्न्यभिप्रायं वा प्राथम्यम् । धायि डुधाञ् धारणपोषणयोः ॥ निहितो धातृभिः अग्निधारयितृभिः अध्वर्युभिः होता आह्वाता देवानां यजिष्ठः यष्टृतमः मानुषाद्धोतुः सकाशात् । अध्वरेषु यज्ञेषु ईड्यस्तुत्यः ॥ यमप्नवानः यमग्निमाधाय । पूर्वेऽपि ऋषयोऽप्नवान् प्रभृतयः भृगवश्च । भृगोरपत्यानि । विरुरुचुः । रुच दीप्तौ विविधां दीप्तिं प्राप्तवन्त इत्यर्थः ॥ क्वावस्थितं सन्तमाधाय विरुरुचुः । वनेषु अरण्योराधानाभिप्रायम् । चित्रं चयनीयम् ॥ विभ्वं विशे विशे । ये च इन्द्राणीमपि आदधाति विभ्वं विभूतिशक्तियुक्तम् । विशे मनुष्याय विट् इति मनुष्यनाम ॥ १५ ॥

अस्य प्रत्नां गां प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते । तामु हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति । तां सम्बभूव तस्यां रेतः प्रासिञ्चदित्यादि । तदर्थाभिवादिन्येषा ऋग्भवति अस्यैवाग्नेः प्रत्नां चिरन्तनी द्युतं दीप्तिं गवि अनुषिक्तां शुक्ररूपापन्नां दुदुह्रे दुदुहिरे दुग्धं क्षरन्ति । क्षरन्ति काः अह्रयः गावः ह्री लज्जायाम् । अविद्यमानह्रियः अलज्जिताः उज्ज्वलाः प्रशस्या इत्यर्थः ॥ किं तच्छुक्रम् । यापता गावः क्षरन्ति । पयः दुग्धं सहस्रसाम् । सहस्रसंख्यानां चातुर्मास्यपशुसोमानाम् । सनितारं सम्भक्तारम् । ऋषिं द्रष्टारम् । द्रष्टृत्वं च गवि सत् पयस्युपचर्यते । सा हैना उदीक्ष्य हिङ्ङकारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्येवमादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इत्येतत्प्रतिपादितम् । स एष मन्त्रो गां वाग्निं वा पयो वा स्तौति ॥ १६ ॥

अथ यजूंषि तनूपा अग्ने ऽसि हे भगवन्नग्ने यस्त्वं स्वभावत एव अग्निहोत्रिणां तनूपा असि तनूः शरीरं तस्य गोपायिता भवसि स त्वं तन्वं मे मम पाहि गोपाय । आयुर्दा अग्नेऽसि । यस्त्वमा-

युषो दातासि हे अग्ने आयुर्मे मह्यं देहि। वर्च्चोदा अग्नेऽसि। त्वमग्ने वर्चोदा असि संवर्चो मे मम देहि। यद्दर्शनादेव महानयं ब्राह्मणो विद्वान् तपसा अग्निरिव ज्वलतीति प्रतिपत्तिस्तद्वर्चं इत्युच्यते। अग्ने यत् मे मम तन्वाः शरीरस्य ऊनं न्यूनम्। अखण्डितं तत् मे मम आपृण आपूरय॥ १७॥

इन्धानास्त्वा। जगती महापङ्क्तिस्त्र्यवसानाग्नेयी। हे अग्ने इन्धानाः इन्धी दीप्तौ आदीपयन्तः प्रकाशयन्तः त्वाम्। शतꣳ हिमाः। शतं वर्षाणि। द्युमन्तं समिधीमहि। दीप्तिमन्तं त्वां समिधीमहि। संदीपयामः। कथंभूतं त्वां कथंभूताश्च सन्तो वयं समिधीमहि। वयस्वन्तः वय इत्यन्ननाम। अन्नवन्तः वयस्कृतम् अन्नस्य कर्त्तारम्। सहस्वन्तः॥ सह इति बलनाम बलवन्तः सहस्कृतं बलस्य कर्त्तारम्॥ अग्ने सपत्नदम्भनम्॥ हे भगवन्नग्ने सपत्नदम्भनम्। सपत्नाः शत्रवः दभ्नोतिर्हिंसार्थः सपत्नानां हिंसितारम् अदब्धासः अदब्धा एव अदब्धासः। आज्जसेरसुक्। अनुपहिंसिताः सन्तः। अदाभ्यम्। अनुपहिंस्यं समिधीमहि इत्यनुवर्त्तते॥ चित्रावसो॥ रात्रिरुच्यते। रात्रिर्वै चित्रावसुः सा हीयꣳ संगृह्येव चित्राणि वसतीति श्रुतिः। हे चित्रावसो स्वस्ति स्वस्तीत्यविनाशनाम। अस्तिरभिपूजितः सु अस्तीति स्वस्त्या ते तव पारम् अन्तम् अशीयं अश्नुयां व्याप्नुयाम्॥ १८॥

सं त्वमग्ने। अथोपविश्य जपति॥ आहवनीय उच्यते। समित्युपसर्गः अगथा इत्यनेनाख्यातेन संबध्यते। समगथाः संयुतस्त्वम् अग्ने सूर्यस्य संबन्धिनो वर्चसा तेजसा। श्रुतिर्मन्त्रं विवृणोति तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति। तेनैतदाह। समृषीणाꣳस्तुतेन॥ संगतस्त्वमग्ने ऋषीणां स्तुतेन ऋषीणां संबन्धिभिर्मन्त्रैः। तद्यदुपतिष्ठते तेनैतदाह॥ संप्रियेण धाम्ना॥ संगतः त्वं प्रियेण धाम्ना प्रियाभिराहुतिभिः धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति वा। इति श्रुतिः आहुतयो वा अस्य प्रियं धामेति यथा त्वमग्ने एतैस्त्रिभिः संगतः एवं त्वत् प्रसादादहमपि आयुषा वर्चसा तेजसा अन्नेन वा प्रजया पुत्रादिकया रायस्पोषेण राय इति धननाम। धनस्य पोषेण। पुष्ट्या ग्मिषीय गमेरेतद्रूपम्॥ संगच्छेयम्। आयुः प्रभृतीनि मम सन्त्वित्यर्थः॥१९॥

अथ गामभ्येति । अन्ध स्थ अन्ध इत्यन्ननाम श्रुत्या तु लक्षणया वीर्यमित्युक्तम् । यानि वो वीर्याणि यानि वो महांसीति यतो यूयं वीर्यहेतुभूतास्ततोऽन्धः स्थ ॥ अन्नानि स्थ भवथ अतः अन्धो वः युष्मत्संबन्धि भक्षीय । भजतेरेतद्रूपम् ॥ न भक्षयतेः ॥ भजेयम् । मह स्थ महःशब्देन तस्यै शृतं तस्यै शर इत्यादीनि दश वीर्याण्युच्यन्ते यतो महः स्थ अतो महो वीर्यं वो भक्षीय । ऊर्जं स्थ ऊर्जशब्दो रसवचनः यतो यूयम् ऊर्ज स्थ अत ऊर्जं वो भक्षीय । रायस्पोष स्थ यतो यूयं धनपुष्टिकरा स्थ अतो धनपोषं वो भक्षीय ॥ २० ॥

रेवती रमध्वम् । हे रेवत्यो धनवत्यो गावः रमध्वं रतिं कुरुत । अस्मिन्योनौ । अस्यां गोयूथसंबन्धिन्यां प्रजनन्यां रमध्वमित्यनुवर्त्तते ॥ अस्मिन् गोष्ठे अस्मिन् गोवाटे रमध्वम् । अस्मिन् लोके लोकदर्शने मदीये अस्मिन्नवलोकने रमध्वमस्मिन् क्षये गृहे रमध्वम् । क्षयो निवास इत्याद्युदात्तः क्षयशब्दः किं च । इहैव स्त । इहैव यजमानगृहे स्त भवत । मापगात मापगच्छत । यजमानं परित्यज्य ॥ २१ ॥

गामभिमृशति । सꣳहितासि संलग्नासि यज्ञहोमसबन्धेन । अथवा संदधाति क्षीणान् प्राणिनः स्वपयोभिरिति संहिता विश्वरूपी शुक्लकृष्णादिभिर्भेदैः पशूनां वैश्वरूप्यम् । या त्वं संहितासि । विश्वरूपी च । सा ऊर्जा अन्नेन मा माम् आविश । गौपत्येन गवां पतित्वं गौपत्यम् । गार्हपत्यमुपतिष्ठते । तिसृभिर्गायत्रीभिः उप त्वाग्ने उपेत्ययमुपसर्गः एमसीत्यनेनाख्यातपदेन सह संबध्यते । इमसीति लटि इदन्तो मसीति रूपम् । उपेमसि । उपेयामः उपगच्छामः त्वां हे अग्ने दिवे दिवे इति अह्नो नाम । अहन्यहनि । हे दोषावस्तः दोषेति रात्रिनाम । वस निवासे । रात्र्यां वसनशीलो दोषावस्ता तस्य संबोधनं हे दोषावस्तः अग्नौ ह वै देवा इत्युपक्रम्य तैः संगृह्य रात्रिं प्रविवेशेति । यदनेनेतिहासेनोच्यते तदयं मन्त्रो दृष्ट्वाह दोषावस्तरिति धिया बुध्या युक्तयायतमनस्का । श्रद्धानाः वयं नमो भरन्तः नम इत्यन्ननाम ॥ अन्नं बिभ्रतः । उप आ इमसीत्याख्यातपदं व्याख्यातमेव ॥ २२ ॥

राजन्तमध्वाराणाम् अस्मिन्मन्त्रे आख्यातं नाम्नातम् अतोऽध-

स्तनमन्त्रे यदाख्यातं तदनुवर्त्तते राजन्तं दीप्यमानम् अध्वराणां यज्ञानां गोप्तारम्। ऋतस्य दीदिविम्। सत्यस्य दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदति। तदभिप्रायमेतत्॥ बर्द्धमानम्॥ चातुर्मास्यपशुसोमैः स्वे दमे स्वकीये यज्ञगृहे। दम इति गृहनाम। दाम्यन्ति गृहस्थाः। उप आ इमसीत्यनुवर्त्तते॥ २३॥

स नः पितेव॥ यस्त्वमुक्तगुणः सोऽस्माकं पिता इव सूनवे पुत्राय। हे भगवन्नग्ने सूपायनः सुखोपागमनो भव किं च सचस्वानः॥ सेवस्व अस्मान् स्वस्तये अविनाशाय स्वस्तीत्यविनाशनाम॥२४॥

अग्ने त्वम्॥ चतस्रो द्विपदा विराज आग्नेय्यः॥ हे भगवन्नग्ने त्वन्नोऽन्तमः। त्वमस्माकं निकटतमः अन्तिकशब्दस्य तमप्येतद्रूपम्। ब्रह्मचर्यप्रभृति अग्निमुपासते तदभिप्रायमेतत्। देशाविवक्षायां वा सन्निकृष्टो ह्यग्निर्विप्रकृष्टा ह्यन्या देवताः उत त्राता अपि च स्वभावत एव सर्वप्राणिनां पालयितासि। यत एवमतो ब्रूमः। शिवो भवावरूथ्यः। शिवः शान्तो भव। वरूथ इति गृहनाम वरूथाय हितो वरूथ्यः। वसुरग्निः। अग्निशब्द आमन्त्रितविभक्त्यात्र परिणम्यते वाक्यसम्बन्धात्। हे अग्ने यस्त्वं वसुः वासयिता जनानाम्। यद्वा वसु धनम्। तापपाकप्रकाशैरुपकुर्वन्नुपस्कर इव भवसि वसुश्रवाश्च वसुना धनदानेन यः श्रूयते स वसुश्रवाः धनदातेत्यर्थः। स अच्छा नक्षि। अच्छाभेराप्तुमिति शाकपूणिः। नशिराप्नोतिकर्मा अभिव्याप्नुहि अस्मान् किं च द्युमन्तꣳ दीप्तिमन्तं रयिं धनं दाः देहि द्युमन्तम्॥ २५॥

तं त्वा शोचिष्ठ। यस्त्वमुक्तगुणस्तं त्वां ब्रवीमि हे अग्ने शोचिष्ठ शोचिष्मत्तम। शोचिरिति ज्वालानामसु पठितम्। छान्दसो मतुब्लोपः दीदिवः। दीप्यस्व दिवेर्ज्वलनार्थस्य लिट्येतद्रूपम्। सुम्नाय द्वितीयार्थे चतुर्थी। सुम्नम्। नूनं निश्चयेन ईमहे। याचामहे त्वत्तोऽवश्यं सुखं भवतीत्यभिप्रायः। सखिभ्यः सखिभ्योऽर्थाय। सुम्नं नूनमीमह इति अनुषङ्गः। स नो बोधि। यस्त्वमुक्तगुणः सोऽस्माकं बुध्यस्वाभिप्रायं बुद्ध्वा च श्रुधी हवम्। शृणु। अस्मदीयमाह्वानम्। श्रुत्वा चाह्वानम्। उरुष्याणः उरुष्यतिः रक्षणकर्मा रक्ष अस्मान् कुतो रक्ष। अघायतः। अघं पापं य इच्छति स अघायन् तस्मादघायतः शत्रोः। समस्मात् सर्वस्मात्॥ २६॥

गां गच्छति । इड एहि । इडा मनोर्दुहिता अदितिर्देवमाता इडेव मनुमस्मान् प्रत्येहि । अदितिरिवादित्यानस्मान् प्रत्येहि ॥ अतस्मिंस्तच्छब्दस्तद्वदतिदेशार्थः ॥ गामभिमृशति ॥ काम्या एत ॥ मनुष्याणाᳫंह्येतासु कामाः प्रविष्टा इति ॥ काम्या आ इत एत आगच्छत मयि वः युष्माकम् ॥ कामधरणम् । कामा यस्मिन् ध्रियन्ते तत्कामधरणम् । अहं वः प्रियो भूयासमिति ॥ २७ ॥

अग्निमीक्षमाणो जपति । सोमानं स्वरणम् ॥ ब्राह्मणस्पत्यो गायत्र्यस्तृचः ॥ बृहस्पतिरेव ब्रह्मणस्पतिः ॥ हे ब्रह्मणस्पते सोमानं षुञ् अभिषवे । आतो मनिन्क्वनिब्वनिपः । अन्येभ्योऽपि दृश्यन्ते इति मनिन् । सोमानम् । सोतारं पाता इति पर्यायः ॥ केषां सोतारं सामर्थ्यात् सोमानाम् । स्वरणम् । स्वृ शब्दोपतापयोः ॥ शब्दयितारम् । सोतारं च सोमानाम् । स्तोतारं च देवानाम् ॥ कृणुहि कुरु धनप्रदानैः ब्रह्मणस्पते कमिव । कक्षीवन्तम् इव लुप्तोपममेतत् । कक्षीवन्तमिव । ऋषिं दीर्घतमसः पुत्रम् ॥ य औशिजः उशिजः पुत्रः उशिक् माता अस्यासीत् ॥ २८ ॥

यो रेवान् । रे इति धननाम । यो रेवान् ब्रह्मणस्पतिः रेवान् धनवान् यश्च । अमीवहा । अमीवा व्याधिः व्याधेर्हन्ता ॥ वसुवित् । वसु धनं तस्य सारासारतां वेत्ति विदित्वा च यथायोगं स्तोतृभ्यो ददाति । पुष्टिवर्द्धनः ॥ पुष पुष्टौ । पुष्टेः पोषस्य वर्द्धयिता । सः नः सिषक्तु ॥ सिषक्ति सचत इति सेवानाम सोऽस्मान् सेवताम् । यस्तुरस्त्वरणः अविलम्बितकारी । यद्वा पुत्रः प्रार्थ्यते । हे ब्रह्मणस्पते यः पुत्र धनवान् यश्च व्याधिहर्त्ता ज्योतिःशास्त्राभिप्रायमेतत् । धनस्य च लब्धा पुष्टेश्च वर्द्धयिता सोऽस्मान् पुत्रः सेवताम् । यस्तुरः शीघ्रकारी । कालातिक्रमो हि प्रत्यग्रं कार्य्यरसं पिबतीत्याहुः ॥ २९ ॥

मा नः शᳫंसः । मा इत्ययं प्रणगित्यनेन आख्यातेन संबध्यते । प्रपूर्वस्य नशेर्व्याप्त्यर्थस्यैतद्रूपम् । व्याप्नोतु । नः अस्मान् शᳫंसः ॥ शंसनं शंसः अनिष्टचिन्तनं कस्य संबन्धि आररुषः रा ला आदाने अस्य क्वसौ षष्ठ्याम् अररुष इति भवति तन्नञा प्रतिषिध्यते अररुषः अदातुः अनुपभोग्यस्य शत्रोरित्यर्थः धूर्त्तिः हिंसा ध्वरति धूर्वति इतिः बधकर्मसु पठितम् ॥ मर्त्यस्य मरणधर्मणो मनुष्यस्य मा स्मा-

र्व्याप्नोतु । अररुषो मर्त्यस्य संबन्धि शंसनं धूर्त्तिश्चेति वाक्यार्थः ॥ किं च रक्ष णः गोपायास्मान् । हे ब्रह्मणस्पते ॥ ३० ॥

महित्रीणाम् ॥ आदित्यदेवत्यस्त्यृचो गायत्र्यः पथि स्वस्त्ययनं महि महत् त्रीणां त्रयाणामादित्यानामवोऽस्तु अवनमवः पालनं भवतु कथम्भूतं पालनं द्युक्षं द्युतिमन्ति द्रव्याणि यस्मिन् पालने क्षियन्ति तद् दूयुक्षम् । किंनामादित्यानां मित्रस्यार्यम्णः वरुणस्य ॥ दुराधर्षमिति अवनविशेषणम् ॥ दुराधर्षम् ॥ नञोऽर्थे दुरुपसर्गः ॥ अनाधर्षमसह्यमाधर्षयितुमन्यैः ॥ ३१ ॥

नहि तेषाम् । नहि कदाचित्तेषामादित्यपालितानां यजमानानाम् ॥ अमा चनः ॥ अमाशब्दो गृहवचनः ॥ चशब्दोऽस्त्यर्थे- गृहेऽपि सतां नाध्वसु वारणेषु नच मार्गेषु सतां कथम्भूतेषु वारणेषु यत्रावस्थिताश्चौराः पथिकान्वारयन्ति ते वारणाः पन्थानः । एतदुक्तं भवति न गृहे स्थितानां नापि गृहाद्बहिः । ईशे रिपुरघशꣳसः । ईश ऐश्वर्ये । लोपस्त आत्मने पदेष्विति तकारलोपः ॥ न इष्टे रिपुः अघं पापं यः शंसति चौरादिः सोऽघशंसः ॥ ३२ ॥

ते हि पुत्रासः । कस्मात्पुनरादित्यगुप्तानां गृहे बहिश्च शत्रुर्नेष्टे यतस्ते पुत्रा अदितेः ॥ एवं तावदेकमिदमपरम् ॥ प्रजीवसे मर्त्याय ज्योतिर्यच्छन्ति ॥ प्रयच्छन्ति ददति कस्मै मर्त्याय मनुष्याय किं प्रयच्छन्ति ज्योतिः अजस्रमनुपक्षीणं किमर्थं ज्योतिः प्रयच्छन्ति प्रजीवसे चिरजीवनाय ॥ ३३ ॥

कदाचन । ऐन्द्री बृहती नकारो भिन्नक्रमः ॥ आदौ च वर्त्तते ॥ हे इन्द्र भूयो भूयो याच्यमानस्त्वं न कदाचन कदाचिदपि स्तरीरसि स्तृञ् आच्छादने । स्तृणातेर्हिंसार्थस्यैतद्रूपम् ॥ न स्तृणासि न क्रुध्यसि किं पुनः करोषि ॥ सश्चसि दाशुषे ॥ दाशुषः इति द्वितीयार्थे चतुर्थी । सश्चतिः सेवनकर्मा । सेवसे दाशुषे दाश्वांसं हवींषि दत्तवन्तं यजमानम् । किं च उपपृच्यते एवं क्षिप्रं पृची संपर्के । संपृच्यते हि दाश्वांसं प्रति ॥ प्रसमुपोदः पादपूरण इत्युपशब्दो पादपूरणः ॥ इच्छब्द एवार्थे नुशब्दः क्षिप्रवचनः ॥ हे मघवन् कथंभूतमुपपृच्यते भूयो बहुतरमेव क्षिप्रम् इत् नु उक्तार्थौ । ते तव स्वभूते दानं देवस्य दातुः । एतदुक्तं भवति न कदाचित्त्वं यजमानं प्रति क्रुध्यसि सेवसे च दाश्वांसम् ॥ उपपृच्यते वा त्वदीयं दानं

भूयोभूयो दाश्वांसं प्रति ॥ ३४ ॥

तत् सवितुः सावित्री गायत्री तदिति षष्ठ्या विपरिणस्यते तस्य सवितुः सर्वस्य प्रसवदातुरादित्यान्तरपुरुषस्य ॥ देवस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य चाविज्ञानानन्दस्वभावस्य वा ब्रह्मणः वरेण्यं वरणीयं भर्गः । भर्गशब्दो वीर्यवचनः वरुणाद्ध वाभिषिषिचानात् । भर्गो रचक्राम वीर्यं वै भर्ग इति श्रुतिः । तेन हि पाप्मानं भृज्जति दहति । भृजी भर्जने अथवा भर्गस्तेजोवचनः । यद्वा मण्डलं पुरुषो रश्मय इत्येतत् त्रितयमभिप्रेयसो देवस्य दानादिगुणयुक्तस्य धीमहि । ध्यै चिन्तायाम् । अस्य छान्दसं सम्प्रसारणं ध्यायामः चिन्तयामः निदिध्यासनं तद्विषयं कुर्म इति यावत् । धियो यो नः । धीशब्दो बुद्धिवचनः कर्मवचनो वा बुद्धीः कर्माणि योऽस्माकं सविता प्रचोदयात् । चुदी सञ्चोदने प्रकर्षेण चोदयति प्रेरयति तस्य सवितुः सम्बन्धि वीर्यं तेजो वा ध्यायाम इति सम्बन्धः । वाक्यभेदेन वा योजना तत्सवितुर्वरेण्यं वरणीयं वीर्यं तेजो वा देवस्य ध्यायामः यश्च बुद्धीः प्रचोदयात् । प्रेरयत्यस्माकं तं ध्यायामः स च सवितैव भवति लिङ्गव्यत्ययेन वा योजना तत्सवितुर्वरेण्यं भर्गो देवस्य ध्यायामः धियो यद्भर्गोऽस्माकं प्रेरयति ॥ ३५ ॥

परि ते आग्नेयी गायत्री । हे अग्ने पर्यश्नोतु परिव्याप्नोतु ते तव स्वभूतो रथः अस्मान् विश्वतः सर्वतः। कथम्भूतो रथः दूडभः दुर्दभः दुरुपसर्गः प्रतिषेधार्थः दभ्नोतिर्बधकर्मा । अबध्यः येन रथेन रक्षांसि । दाशुषः यजमानात् । यजमाना वै दाश्वांस इति श्रुतिः स रथोऽस्मान् पर्य्याप्नोत्विति सम्बन्धः । बृहदुपस्थानं समाप्तम् ॥ ३६ ॥

क्षुल्लकोपस्थानमुच्यते आसुरेरार्षं यजूंषि भूः भुवः स्वः । हे भगवन्नग्ने यस्त्वं महाव्याहृत्यात्मकः तं त्वां याचे । शोभनप्रजाः प्रजाभिः स्यां भवेयं शोभनवीरश्च वीरैः शोभनपोषश्च पोषैः पोषो भूमिहिरण्यधान्यादिभिः प्रवसन् यजमानो गार्हपत्यमुपतिष्ठते । नर्य प्रजां मे पाहि । नरेभ्यो हितो नर्यः । हे नर्य्य प्रजाम्मे पाहि गोपाय । आहवनीयमुपतिष्ठते शंस्य । शंसु स्तुतौ । हे स्तुत्य पशून्मे पाहि गोपाय ॥ दक्षिणाग्निमुपतिष्ठते । अथर्य अतनवानथर्यः अत सातत्यगमने सततं हि दक्षिणाग्निर्गार्हपत्यात् स्वस्थानं गच्छति ॥ हे अतनवन् अन्नं गोपाय ॥ ३७ ॥

प्रत्यागत आहवनीयमुपतिष्ठते । आगन्म । अनुष्टुप् ॥ हे आहवनीय त्वामागता वयं विश्ववेदसम् । सर्वधनम् । अस्मभ्यं षष्ठयर्थे चतुर्थी । अस्माकम् । वसुवित्तमम् अतिशयेन धनस्य वेदितारम् । सः हे भगवन्नग्ने सम्राट् सम्यग्दीप्तिमत् । अभिद्युम्नं द्युम्नं द्योततेर्यशो वा अन्नं वा । अभि सहः । सह इति बलनाम । आयच्छस्व यमेरेतद्रूपम् । एतदुक्तं भवति । अस्मानभिद्युम्नम् । अन्नं यशो वा बलं च निगृह्णीष्व आगमयेत्यर्थः । यद्वा अस्मासु द्युम्नमभिबलं च अभि आयच्छस्व स्थापय । यच्छतिः स्थापनार्थः ॥ ३८ ॥

गार्हपत्यमुपतिष्ठते । अयमग्निः न्यङ्कुशारिणी बृहती । योऽयमग्निर्गृहपतिः गार्हपत्याख्यः प्रजायाश्चातिशयेन धनस्य वेदिता । तमेतं याचे । हे अग्ने गृहपते । अभिद्युम्नेति व्याख्यातम् ॥ ३९ ॥

दक्षिणाग्न्युपस्थानम् । अयमग्निः । अनुष्टुप् । योऽयमग्निः । पुरीष्यः पशव्यः पशवो वै पुरीषमिति श्रुतिः । रयिमान् । धनवान् पुष्टेर्वर्धयिता । तमेतं प्रत्यक्षीकृत्य याचे हे अग्ने पुरीष्य द्युम्नं बलं च प्रत्यस्मान्निधेहि ॥ ४० ॥

गृहानुपैति । गृहा मा बिभीत । त्रिष्टुप् विराड्रूपा हे गृहाः मा बिभीत भयं मुञ्चत । मा वेपध्वम् । वेपतिः कम्पनार्थः कम्पनं मुञ्चत यतो वयं युष्मान् ऊर्जमन्नं बिभ्रतः धारयमाणान् अनुपक्षीणान् अनेनैव । आ इमसि । आगताः स्मः । किं च अहमपि ऊर्जमन्नं बिभ्रत् धारयन् वः युष्मान्प्रति । सुमनाः शोभनचित्तः सुमेधाः शोभनप्रज्ञः सन् गृहानैमि । गृहान्प्रत्यागच्छामि । मनसा मोदमानः । हृष्यन् आ इमः बहुवचनम् । एमि एकवचनम् । आत्मनि विकल्पेन बहुवचनं स्मर्यत इत्यदोषः ॥ ४१ ॥

येषामध्येति । अनुष्टुप् येषां गृहाणामध्येति । इक् स्मरणे इत्येतस्यैतद्रूपं नतु इङ् अध्ययन इत्यस्य । येषां गृहाणां स्मरति गृहपतिः प्रवसन् । येषु च सौमनसो बहुः । येषु गृहेषु बहुप्रकारं सौमनस्यं विद्यते तान् गृहानुपह्वयामहे । आह्वयामः ते च आहूताः सन्तः नोऽस्मान् जानन्तु अस्मद्विषयां प्रत्यभिज्ञां कुर्वन्तु जानन्तोऽस्मान् प्रत्यभिज्ञावतोऽस्मान् ॥ ४२ ॥

उपहूता इह । त्र्यवसाना महापङ्क्तिः अभ्यनुज्ञाता इह गृहेषु न

इत्येतत्पदद्वयं विप्रकृष्टमिह सम्बध्यते इहास्माकं गृहेषु गावः अजावयः उपहूताः अथो अपि च अन्नस्य कीलालः कीलालशब्दो रसवचनः पटुरसमिदमन्नमभ्यनुज्ञायते क्षेमाय वः इति प्रविशति गृहा उच्यन्ते क्षेमाय अविनाशाय वः युष्मान् शान्त्यै च । प्रपद्ये प्रविशामि । शिवꣳशग्मम् । द्वे अप्येते सुखस्य नामनी । अनेकप्रकारं सुखं भवत्विति शेषः । कस्य शंयोः शमिति । सुखनाम । इदंयुरिदं कामयमानः सुखकामस्य नर्यं प्रजामित्यादि आदित्यार्षम् ॥ ४३ ॥

प्रघासिनो हवामहे । चातुर्मास्यमन्त्राः प्रजापतेरार्षं गायत्री मारुती शुक्रज्योतिः सप्तसप्तका मारुता गणाः तत्र स्वतवांश्च प्रघासी चेति पठ्यते । तदेतदुच्यते । प्रघास्युपलक्षितान् मरुतः प्रघासिनः हवामहे आह्वयामः । ये च शुक्रज्योतिःप्रभृतयो मरुतस्तांश्च हवामहे । रिशादसः रिशतिर्हिंसार्थः दसु उपक्षये । ब्राह्मणान् रेशयन्तमुपक्षयन्तीति रेशयद्दासिनः सन्तो रिशादस इत्युच्यन्ते । कथम्भूतान् हवामहे । करम्भेण सजोषसः करम्भपात्रैः समानप्रीतयः तान् ॥ ४४ ॥

पत्नीवाचनमन्त्रः पत्नी दक्षिणाग्नौ करम्भपात्राणि जुहोति । अनुष्टुभा मारुत्या । यद्ग्रामे वसन्तो यच्चारण्ये यच्च सभायामवस्थिताः यच्च इन्द्रिये प्रजननेऽवस्थिताः सन्तः यदेनश्चकृमा वयम् । एनः शब्दः पापपर्यायः यच्छब्दश्चाधस्तनैश्चतुर्भिर्यच्छब्दैरेकीभूय वीप्सार्थो भवति । अथ कोऽर्थः यद्ग्रामादिष्ववस्थिताः सन्तः पापं चकृमा कृतवन्तो वयम् । इदं तदवयजामहे । अवपूर्वो यजिर्नाशने वर्त्तते । एतत्पापं नाशयामः स्वाहा । सुहुतं चैतद्धविर्भवतु ॥ ४५ ॥

ऐन्द्री मारुती विराट् । मो षूणः यजमानो जपति । यत्र वै प्रजापतिः प्रजानां मरुतः पाप्मानं विमेथिर इत्यादिना इतिहासेन निदानवचनं श्रुतिः करोति । मो षूणः मो इत्ययं निपातः प्रतिषेधार्थीयः पुरस्तादाख्यातस्य भवति । यस्यार्थे प्रतिषेधति । नचात्राख्यातं विद्यते अतश्च श्रुत्युक्तमध्याह्रियते । हे इन्द्र मा विमन्थीः मा हिꣳसीः सु इत्यनर्थकः नः अस्माकं प्रजाः । अत्र पृत्सु । एषु संग्रामेषु वर्त्तमानः देवैर्मरुद्भिः सहितः । क उपकार इति चेत् । उपकृत्य हि प्रत्युपकारः प्रार्थ्यते । अस्ति हि । यस्मादस्ति । स्म इत्यनर्थकः ते तव विषये शुष्मिन् शुष्म इति बलनाम । हे बलवन् । अवयाः

अवपूर्वस्य यजेरेतद्रूपम् । अवयुतो यागः तद्योगी । किञ्च । महश्चित्यस्य महतः चित् यस्य तव मीढुषः । मिह सेचने । सेक्तुस्तरुणस्य वर्षयितुर्वा । यद्वा हविष्मतो मरुतः यवमयैः करम्भपात्रैर्हविष्मन्तो मरुतस्तव स्वभूताः सञ्जातास्तवानुग्रहात् । किञ्च । मरुतो यस्य मीढुषः । वदन्ते गीः । वदि अभिवादनस्तुत्योः । स्तौति गीः वाक् स्तोतॄणाम् ॥ ४६ ॥

पत्नी वाचयाति । अक्रन् कर्म । अनुष्टुप् । पत्नी ऋत्विजो ब्रवीति । य एते अक्रन् अकार्षुः कृतवन्तः वरुणप्रघासं कर्म कर्मकृतो ऋत्विजः सह वाचा । मन्त्रेण । मयोभुवा । वाग्विशेषणमेतत् । मय इति सुखनाम । सुखेन या भावयति वाक् अतोऽत्र वधूरहं ब्रवीमि । देवेभ्योऽर्थाय कर्म कृत्वा वरुणप्रघासरूपं कर्म कृत्वा । अस्तं गृहान् प्रेत प्रगच्छत मया सह हे सचाभुवः सचा सहेत्यर्थः । सह भवनशीला ऋत्विजः ॥ ४७ ॥

अवभृथ निचुम्पुण । अवभृथो यज्ञः हे अवभृथ अर्वाचीनं पात्राण्यस्मिन् भ्रियन्त इत्यवभृथः । निचुम्पण नीचैः क्वणन उपांशवभृथेष्टया चरन्तीति श्रुतेः । यस्त्वं नीचैश्चरणोऽसि नीचैः क्वणनश्च तं त्वां प्राप्यैव । अवदेवैर्देवकृतमेनो ऽयासिषम् । अवनीतवानहं किमवनीतवान् । एनः पापं कैः सखिभूतैर्देवैः मर्त्यकृतम् अवनीतवांश्च । मर्त्यैर्मनुष्यैः ऋत्विग्भिः सखिभूतैः मर्त्यकृतं मनुष्यविषये कृतं पापम् । अतस्त्वं हे अवभृथ देव रिषः पाहि रिषतिर्हिंसार्थः ॥ रिष हिंसायाम् । क्विबन्तः तस्य पञ्चमी रिषः बन्धनात् पाहि गोपाय । कथम्भूताद्बन्धात् । पुरुराव्णः ॥ रा दाने । बहुकर्मोपभोगसन्तानदातुः संसारलक्षणाद्बन्धात् । यद्वा रु शब्दे ॥ रुवन्ति शब्दवन्तो भवन्ति प्राणिनोऽस्मिन् संसार्यमाणा इति पुरुराव्णो वा ॥ ४८ ॥

दर्व्योपहन्ति । पूर्णा दर्वि ॥ द्वे ऐन्द्र्यावनुष्टुभौ । हे दर्वि अस्याः स्थालीतोऽन्नं गृहीत्वा पूर्णा सती परा इन्द्रम्प्रति । पत गच्छ । ततः कर्मफलेन शोभनेन पूर्णा पुनरापत । आगच्छ एवं दर्वीमुक्त्वाथेन्द्रमाह । वस्नेव विक्रीणावहै वस्नशब्देन मूल्यमुच्यते ॥ वस्ना इव मूल्येनेव आवाम् अध्वर्युयजमानौ विक्रीणावहै किं तद्विक्रेयं द्रव्यमित्यत आह । इषमन्नम् । ऊर्जमुपसेचनम् । हे शतक्रतो बहुकर्म्मन् ॥ ४९ ॥

इन्द्र उच्यते । देहि मे । मह्यं प्रथमं तावत् देहि ततो ददामि ते तुभ्यं पश्चात् । नि मे धेहि निधेहि । मम प्रथमं तावत् पश्चात् निते द धे निदधे तव । निहारं च हरासि मे । नितरां हरणं निहारः । अवश्यहर्त्तव्यमुच्यते मूल्यमिति पर्यायः हरासि मे मम अहमपि निहारं निहराणि । ते तव प्रत्यग्रं फलतां मन्त्रदृगाशास्ते ॥ ५० ॥

आहवनीयमुपतिष्ठन्ते । अक्षन्नमीमदन्तेति द्वाभ्यामैन्द्रीभ्यां पङ्क्तिभ्यां पितृयज्ञे पितर उच्यन्ते । अक्षन् । अदेर्लुङि घस्लादेशः । अदितवन्तो भुक्तवन्तः कथं ज्ञायत इति चेत् । अमीमदन्त हि । मद तृप्तौ हिशब्दो यस्मादर्थे । यस्मात्तृप्तास्तस्माद् भुक्तवन्त इत्यनुमानं तृप्तिविशेषणान्युत्तराणि अवप्रिया अधूषत अवाचीनमन्नं निःक्षिप्य प्रिया अन्नभक्तीरुपस्मृत्य अधूषत । धूञ् कम्पने धुन्वाति गात्राणि किं च अस्तोषत स्वभानवः । प्रिया अन्नभक्तीरुपस्मृत्य शरीराणि कम्पयन्तो दातृन् स्तुवन्ति अस्तोषत अहो दत्तमन्नं स्वादु बहु च स्वभानवः स्वयन्दीप्ताः । अन्नविस्मयात् । विप्रा आप्तप्रज्ञा मेधाविनः । नविष्ठया मती । नवतमया अपूर्वया मत्या स्तुवन्तीत्यनुवर्तते । एवं पितृनुपलभ्याथेन्द्रमाह । योजा नु । नु इति क्षिप्रनाम योजयामि । क्षिप्रम् । हे इन्द्र तव स्वभूतौ । हरी हरितवर्णावश्वौ तवापि गमनकालः प्राप्तः ॥ ५१ ॥

सुसंदृशं शोभनदर्शनम् । त्वा त्वां वयं हे मघवन् धनवन् वान्दिषीमहि । वदि अभिवादनस्तुत्योः । अभिवादयामः । अभिवादनप्रयोजनमाह । प्रनूनं पूर्णबन्धुरः स्तुतो यासि । नूनं निश्चयेन । पूर्णरथनीडस्सन् बन्धुरशब्दो रथनीडवचनः । स्तुतश्च स्तोतृभिः । वशान् अनु वश कान्तौ कामाननुप्रयासि । यत एवम् । अतो योजयामि । क्षिप्रं इन्द्र ते हरी ॥ ५२ ॥

मनो न्वाह्वामह इति । गार्हपत्यमुपतिष्ठन्ते । तिसृभिर्गायत्रीभिस्मनोदेवत्याभिः मनः नु क्षिप्रम् । आह्वामहे आह्वयामः पितृयज्ञचरणेन पितृलोकमिव मनोगतमासीदत आहूयते । केनाह्वयामः । नाराशंसेन स्तोमेन । येन नराः प्रशंस्यन्ते दीर्घायुषः पुत्रवन्तो धनवन्तो भूयासुरित्यादिभिर्गुणैः स नाराशंसः । स्तोमः स्तुतिः । पितॄणां च मन्मभिः मननीयैस्तोमैराह्वयाम इति शेषः ॥ ५३ ॥

आ न एतु । आगच्छतु नः अस्माकं मनः पुनः । किमर्थं क्रत्वे क्रतुः

सङ्कल्पः यज्ञो वा दक्षाय । दक्षः सङ्कल्पसमृद्धिः । उत्साहो वा । स यदेव मनसा कामयत इदस्मै स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्ष इति श्रुतिः । जीवसे । जीवनाय । ज्योक् च सूर्यं दृशे ज्योक् निपातश्चिरवचनः । चिरं च सूर्यं दृशे द्रष्टुम् ॥ ५४ ॥

पुनर्नः । हे पितरः पुनरस्माकं मनः ददातु दैव्यो जनः देवसम्बन्धी जनः ततस्तेन देवजनदत्तेन मनसा जीवनवन्तं व्रातं गणं पुत्रपश्वादिकम् । सचेमहि परिष्वजेमहि षच परिष्वङ्गे ॥ ५५ ॥

वयᳪ सोम । सौमी बन्धुर्गायत्री जपे विनियोगः । वयं सोम व्रते तव । व्रतमिति कर्म्मनाम । तव कर्म्मणि वर्तमानाः मनस्तनूषु शरीरेषु जाग्रत्स्वप्नसुषुप्त्यादिकेषु बिभ्रतः धारयन्तः प्रजावन्तश्च सचेमहि । सचेमहीति सेवेमहि सेवितव्यानि वस्तूनि ॥ ५६ ॥

एष ते रुद्र भागः । रौद्रोऽनुवाकः त्र्यम्बकाः पुरोडाशास्तत्र विनियुक्तः अवदानहोमे एष ते तव रुद्र भागः सह स्वस्रा । स्वसेति भगिन्युच्यते । सह भगिन्या अम्बिकया तं भागं जुषस्व । सेवस्व स्वाहा सुहुतमस्तु । अतिरिक्तमाखूत्कर उपकिरति । एष ते रुद्र भागः । आखुः मूषिका ते तव पशुः ॥ ५७ ॥

आगत्य जपति । अव रुद्रम् । द्वे पङ्क्तिककुभौ अवयुत्य पृथक्कृत्वान्यदेवताभ्यः । रुद्रम् । अदीमहि । अद भक्षणे छान्दसो णिलोपः । रुद्रमादयामः भोजयामः । अवगम्य च ज्ञात्वा देवम् । त्र्यम्बकम् । तथा च भोजयामः यथा नो वस्यसस्करत् । येनप्रकारेण नोऽस्मान् वसीयसः कुर्यात् । वस निवासे इत्यस्य तृजन्तस्य वस्तेति । भवति । ततस्तुश्छन्दसीति ईयसुनि कृते वसीयस इति भवति । तत ईकारलोपे वस्यस इति भवति । वस्तृतरानिति पर्यायः । वसनशीलानित्यर्थः । तथा चास्मान् श्रेयसः प्रशस्यतरान्कुर्यात् यथा च नो व्यवसाययात् । विपूर्वस्यावपूर्वस्य च षोऽन्तकर्म्मणीत्यस्य ण्यन्तस्य आशिषि लिङार्धधातुके यासुटि अवसाययादित्येतद्रूपं भवति । यथास्मान् सर्वकर्म्मणामन्तं प्रापयेदित्यर्थः ॥ ५८ ॥

भेषजमसि । हे रुद्र । यतस्त्वं स्वभावत एव भेषजम् । औषधं भवसि सर्वप्राणिनाम् अतः प्रार्थ्यते देहि भेषजं गवे अश्वाय ।

पुरुषाय भेषजं देहि सुखं देहि । सुहितं खेभ्यः प्राणेभ्य इति । सुखं मेषाय मेष्यै च ॥ ५९ ॥

त्र्यम्बकम् । द्वे अनुष्टुभौ । यं वयं त्र्यम्बकं यजामहे पूजयामः । सुगन्धि गन्धस्येदुत्पूतीत्यादिना समासान्तः शोभनं गन्धं मर्त्यदोषरहितम् । पुष्टिवर्द्धनं पोषस्य वर्द्धयितारम् । सोऽस्मान् । उर्वारुकमिव बन्धनात् । उर्वारुकः फलविशेषः यथा सुपक्वः स्वयं बन्धतान् विमुच्यते विप्रयुज्यते । एवम् मृत्योर्म्मुक्षीय मोचयतु । पुरुषव्यत्ययश्छान्दसः मामृतात् मा कदाचित् अमृतान्मोचय तु । अग्निं त्रिः परियन्त्यनेन मन्त्रेण कुमार्यश्चोत्तरेण परियन्ति यं त्र्यम्बकं यजामहे । शोभनगन्धं पतिवेदनं भर्त्तुः लब्धारम् उर्वारुकमिव बन्धनात् ॥ इतो मुक्षीय ज्ञातिवर्गान्मोचयतु मामुतः पतिवर्गान्मा मोचयतु । सा यदित आह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति श्रुतिः ॥ ६० ॥

त्र्यम्बकानासजति एतत्ते रुद्र ॥ एतत् तव हे रुद्र अवसं पथ्योदनं शम्बलम् । तेन पथ्योदनेन परः परस्तात् मूजवतः मूजवान्नाम पर्वतो भगवतो रुद्रस्य वसतिः तामतीहि गच्छ ॥ कथम्भूतो गच्छ अवततधन्वा । अवतारितधनुः । पिनाकावसः पिनाको रुद्राङ्कुशः रुद्राङ्कुशकृतशम्बलः कृत्तिवासाः चर्म्मवसनः । अहिꣳसन्नः अविनाशयन् नः अस्मान् । शिवः शान्तो भूत्वा अतीहि पूजितो गच्छ ॥ ६१ ॥

यजमानो मुण्ड्यमानो जपति त्र्यायुषम् । उष्णिक् । त्रीण्यायूंषि समाहृतानि त्र्यायुषं बाल्ययौवनस्थाविराणि । त्र्यायुषं यत् जमदग्नेः त्र्यायुषं यच्च कश्यपस्य । यच्च देवेषु ॥ तन्नो अस्तु तदस्माकं भवतु त्र्यायुषमित्याशीः ॥ ६२ ॥

लोहक्षुरमादत्ते ॥ शिवो नामासि ॥ हे क्षुर यः त्वं शान्तनामासि । यस्य च ते ॥ स्वधितिः पिता ॥ स्वधितिर्वज्रः तस्मै नमः ते तुभ्यं भवतु । मा मा हिꣳसीः । मां मा विनाशय । वपति निवर्त्तयामि निपूर्वो वृत्तिरिह मुण्डनार्थः । मुण्डयामि त्वाम् आयुरर्थम् । अन्नाद्यर्थं प्रजननार्थम् । धनस्य पोषार्थं शोभनापत्यतायै । शोभनवीर्याय च ॥ ६३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

ओम् । एदमगन्म देवयजनम् । आग्निष्टोमिका मन्त्राः । अवभृथपर्यन्ताः । प्रजापतेरार्षे द्वे अप्येते ऋचौ अत्यष्टौ त्र्यवसाने शालास्तम्भमन्वारभ्य यजमानो जपति द्वावर्धर्चौ देवयजनदेवत्यौ । आ इदं देवयजनम् अगन्म । इदं देवयजनं वयम् आगन्म आगता स्मः पृथिव्या उत्कृष्टम् यत्र यस्मिन् देवयजने देवासः देवा एव देवासः आज्जसेरसुक् । अजुषन्त । जुषी प्रीतिसेवनयोः । सेवितवन्तः कामान् । विश्वे सर्वे । तदागन्म देवयजनम् ऋक्सामाभ्यां प्लवभूताभ्यां यज्ञसमुद्रं सन्तरन्तः यजुर्भिः रायस्पोषेण धनस्य पुष्ट्या निमित्तभूतया इषा अन्नेन च संमदेम. हृष्येम । तुष्येम । उनत्ति अध्वर्युः । इमा आपः शमु मे सन्तु देवीः । शमिति सुखनाम । उ इति पादपूर्णः इमा आपः सुरूपाः मम सन्तु भवन्तु । देव्यो दानादिगुणयुक्ताः अपामत्र श्रुतौ वज्रसंस्तवोऽतः शमाशास्यते । कुशतरुणमन्तर्दधाति । ओषधे त्रायस्व । त्रायतिः पालनार्थः । हे औषधे त्रायस्व पालय एनं यजमानं क्षुरात् क्षुरस्यापि वज्रसम्बन्धः । क्षुरेणाभिनिदधाति । स्वधिते मैन ँ हि ँ सीः । स्वधितिर्वज्रः वज्रकर्म कुर्वन्नवज्रोऽपि वज्रमुच्यते । हे स्वधिते मा एनं हिँसीः ॥ १ ॥

स्नाति । आपो अस्मान्मातरः शुन्धयन्तु । आप उच्यन्ते । या एता आपः जगतो निर्मात्र्यस्ता अस्मान् शुन्धयन्तु शोधयन्तु किञ्च घृतेन नः अस्मान् । घृतप्वः । घृतेन याः पुनन्ति ताः घृतप्वः घृतं हि अपां परमं तेजः पवित्रं च । तद्वै सुपूतं यं घृतेन पुनन्तीति श्रुतिः । सुवर्णप्राशो घृतप्राश इति मेध्यानीति गौतमः । पुनन्तु यज्ञयोग्यं कुर्वन्तु । स्तुतिपूर्वं हि याच्ञा क्रियते नचात्र स्तुतिरत आह । विश्वं हि रिप्रं प्रवहन्ति देवीः । हिशब्दो यस्मादर्थे । रपो रिप्रमिति पापनामनी भवतः । यस्मात् स्वभावत एव सर्वं पापं प्रकर्षेण दहन्ति देव्यः । उत्क्रामत्युत्तरपूर्वार्द्धम् । उदिदाभ्यः शुचिरा पूत एमि । उदेमि उद्गच्छामि । इच्छब्दोऽनर्थकः आभ्योऽद्भ्यः शुचिः सन् आपूतश्च यावत्पापं पावितः । क्षौमं वासः परिधत्ते । दीक्षातप-

सोः । दीक्षा एव दीक्षा । तपःशब्देन उपसद उच्यन्ते । तपःप्रधानत्वात् । तन्वाख्राणं वासस्तनूशब्देनोच्यते । या त्वं दीक्षातपसोः तनूः शरीरं भवसि तां त्वां शिवां शान्तां शग्मां सुखां साध्वीं वाश्रुतेः । परिदधे आच्छादयामि । भद्रकल्याणं वर्णं दीक्षितरूपं पुष्यन् विवर्द्धयन् । अनेन हि वाससा दीक्षितरूपमभिव्यज्यते ॥ २ ॥

तमभ्यनक्ति नवनीतमुच्यते । महीनां पयोऽसि । पयोविकारे नवनीते पयःशब्दः महतीनां गवां पयोऽसि । यतश्च । वर्चोदा असि-वर्चस्तेज इत्यनर्थान्तरम् । अतो वर्चो मे देहि । अक्षिणी अनक्ति वृत्रस्यासि यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदित्यादिना त्रैककुदस्य चक्षुः संस्तवस्तदयं मन्त्रोऽभिवदति । वृत्रस्य चक्षुषः सम्बन्धी भवसि त्वं कनीनकः पुरुषो यतः हे त्रैककुद यतः स्वभावतः चक्षुर्दा असि । अतश्चक्षुर्मे मह्यं देहि ॥ ३ ॥

कुशपवित्रैः पावयति । चित्पतिर्मा पुनातु । चिती संज्ञाने इत्यस्य चित् विज्ञानम् । प्रजापतिर्वै चित्पतिरिति श्रुतिः । वाक्पतिः प्रजापतिर्वै वाक्पतिरिति श्रुतिः । देवो मा सविता पुनातु । मा इति मां पुनातु अच्छिद्रेणेति व्याख्यातम । तस्य ते पवित्रपते । तस्य पवित्रपूतस्येति षष्ठ्यन्तयोः सम्बन्धो यजमानवाचित्वं च । तस्य मम पवित्रपूतस्य सतः ते तव प्रसवे वर्त्तमानस्य हे पवित्रपते देवसवितः एतद्भवतु । यत्कामः । अहमात्मानं पुने । पावयामि । तच्छकेयम् । तत् शक्नुयाम् । यज्ञस्योदृचं गच्छामीति श्रुतिः । अच्छिद्रेणत्येवमादित्रयाणामनुषङ्गो योज्यः ॥ ४ ॥

आ वो देवास । इति वाचयति । दैवी अनुष्टुप् ॥ ईमहे इति याच्ञा कर्म्मसु पठितम् । हे देवासः । आ ईमहे । आयाचामहे । वो युष्मान् । किम् । वामम् । वन सम्भक्तौ । वननीयं सम्भजनीयं वस्तु । प्रयत्यध्वरे । प्रगच्छति यज्ञे किं च हे देवासः आहवामहे । आह्वयामः । वः युष्माकं सम्बन्धिन्यः आशिषः यज्ञियासः यज्ञसम्पादिन्यः यज्ञिया एव यज्ञियासः ॥ ५ ॥

अङ्गुली न्यचते । स्वाहा यज्ञं मनसः । यज्ञं मनसः सकाशादहमारभे । आरभ इत्यनुषङ्गः । उरोर्विस्तीर्णादन्तरिक्षादहमारभे यज्ञम् । द्यावापृथिवीभ्यां यज्ञमारभे । वातादहमारभे यज्ञम् । एवं पञ्चस्वाहाकारा एषु यजुःषु तत्रार्थवादः । यज्ञो वै स्वाहाकारो य-

क्षमेवैतदात्मनं धत्त इति स्वाहकारेण हि हविः प्रदीयत इति स्वाहाकारो यज्ञः ॥ ६ ॥

औदूग्रभणानि जुहोति आकुत्यै प्रयुजे। आकुवनमाकूतिः प्रयत्नः आत्मनो धर्मः मनसः प्रेरणाय भवति प्रयुङ्क्ते इति प्रयुक्। आकूतलक्षणाय प्रयोगलक्षणाय चाग्नये स्वाहा सुहुतमस्तु। मेधायै मेधालक्षणाय मनसे मनोलक्षणाय चाग्नये स्वाहा। जपति। दीक्षायै दीक्षालक्षणाय तपसे तपोलक्षणाय चाग्नये स्वाहा। तपःशब्देन चोपसद उच्यन्ते। सरस्वत्यै। वाग्वै सरस्वती पशवो वै पूषा इति श्रुतिः। वाग्लक्षणाय पशुलक्षणाय चाग्नये स्वाहा। पशुसाध्यत्वाद्यज्ञस्य पशुग्रहणम्। आपो देवीः। विराट् स्वलिङ्गोक्तदेवता। हे आपो देव्यः। बृहत्यो महत्यः। विश्वशम्भुवः। सर्वस्य जगतः सुखेनभावयित्र्यः हे द्यावापृथिव्यौ हे उरो विस्तीर्ण अन्तरिक्ष युष्मभ्यं च बृहस्पतये हविषा विधेम विदधातिर्दानकर्म्मा हविषेति द्वितीयाविपरिणामः। हविर्दद्मः ॥ ७ ॥

विश्वो देवस्य। सावित्री अनुष्टुप्। विश्वः सर्वो जनः देवस्यदानादिगुणयुक्तस्य नेतुः प्रणेतुः सवितुः मर्त्यः मनुष्यः वुरीत वृणीत। सख्यं सखिभावम्। किं च विश्वः सर्वः राये। धनाय। य इषुध्यति। प्रार्थयते। सवितारम् इषुध्यतिर्याच्ञाकर्म्मसु पठितः। किं च द्युम्नं वृणीत द्युम्नं द्योततेर्यशो वा अन्नं वा तच्च प्रार्थयते। पुष्यसे पोषाय स्थितये च य इत्थंभूतः सविता तस्मै स्वाह ॥ ८ ॥

कृष्णाजिनयोः शुक्लकृष्णसन्धिमालभते। ऋक्सामयोरिति। ये युवाम् ऋचां च साम्नां च शिल्पे स्थः। यद्वै प्रतिरूपं तच्छिल्पमिति श्रुतिः प्रतिरूपे प्रतिमारूपे भवथः ते वां युवाम् आरभे आलभे। ते मा पातम्। गोपायतम्। अस्य यज्ञस्य उदृचः। उत्तमा ऋक्। उदृक्। आ उत्तमाया ऋचः। आसमाप्तेरित्यर्थः। दक्षिणेन जानुना रोहति। शर्म्मासि। कृष्णाजिनमुच्यते। शर्म्म शरणं यतस्त्वमसि अतः शर्म्म शरणं मे मह्यं यच्छ प्रयच्छ। नमस्ते अस्तु नमस्तुभ्यं भवतु मा मा हिं ॅ सीः ॥ ९ ॥

मेखलां बध्नीते ऊर्गसि। अङ्गिरसामार्षमास्मिन्यजुषि। ऊर्गसि अन्नं भवसि। आङ्गिरसी अङ्गिरोभिर्दृष्टा ऊर्णम्रदाः। ऊर्णेव मृद्वी यतस्त्वमेवं भूतैर्गुणैर्युक्तासि। अत ऊर्गमन्नं मयि धेहि। स्थापय नी-

विं कुरुते । सोमस्य नीविरसि । पितृदेवत्या वै नीविरित्यदीक्षितस्यैवोक्ता इह तु सोमयागार्था नीविः सोमेन व्यपदिश्यते । शिरः प्रोर्णुते । विष्णो शर्मासि । उभयं वा एषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्चेत्यादि निदानम् विष्णोः दीक्षितस्य शरणं भवसि शरणं च यजमानस्य । कृष्णविषाणां बध्नीते इन्द्रस्य योनिः । देवाश्च वा असुराश्चेत्यादि निदानम् । यथा इन्द्रस्य योनिः जन्मस्थानं पूर्वं त्वमसि । एवमिदानीं यजमानस्येति दर्शनार्थोऽर्थवादः ॥ भूमौ चोल्लिखति । सुसस्याः कृषीस्कृधि ॥ कल्याणधान्याः कृषीः जनानां कुरु ॥ दण्डमुच्छ्रयति । उच्छ्रयस्व । ऊर्ध्वो भव भगवन् वनस्पते । ऊर्ध्वश्च भूत्वा । मा मां पाहि गोपाय । अंहसः पापात् कियन्तं कालम् । आ अस्य यज्ञस्य आ समाप्तेः आङ् व्याप्तौ ॥ १० ॥

वाचं विसृजते ॥ व्रतं कृणुत । व्रतशब्देन पयोऽभिधीयते । मम क्षिप्रं भोजनाय पयः कुरुत । अग्निः ब्रह्म त्रयीलक्षणम् । अग्निर्यज्ञः न ह्यग्निं प्रत्याख्याय यज्ञः प्रवर्त्तेत इत्याशयः ॥ वनस्पतिर्यज्ञियः नहि मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति श्रुतिः ॥ दैवीं धियम् । शक्करी । अतिशक्करी वा । अस्या पूर्वेणार्द्धर्चेन व्रतायोपस्पृशति दैवीं धियं च याचते दैवीं धियं मनामह इति याज्याकर्म्मसु पठितम् । याचामहे । सुमृडीकाम् । मृड सुखने । सुसुखाम् । अभिष्टये । अभिपूर्वस्य यजतेरादिलोपः अभि इष्टिः अभियागाय । अथवा अभिपूर्वस्य सिञ्चतेरभिष्टिः अभिषेकाय । प्रक्षालनाय । वर्चोधां ब्रह्मवर्चसस्य धारयित्री । यज्ञवाहसं यज्ञस्य वोढ्रीम् ॥ सा च सुतीर्था नो असत् ॥ यज्ञं प्रति शोभनावताराऽस्माकं भवतु वशे वश्या च भवतु ॥ व्रतं व्रतयति । ये देवाः । अत्राग्निहोत्रसंपदं यजमानः करोति ॥ ये मयि प्राणेषु देवाः मनोजाताः मनसो जाताः मनः पूर्विका हि तेषां प्रवृत्तिः मनोयुजः मनसा युज्यन्ते स्वप्नावस्थायामिति मनोयुजः । दक्षक्रतवः ॥ क्रतुसंकल्पो दक्षस्तस्यैव समृद्धिः दक्षक्रतुशरीराः । वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवाः य एते अध्यात्मश्रुतौ पठ्यन्ते त इहोच्यन्ते । ते नः पान्तु । अस्मान् अवन्तु । कामयन्तु ते अस्मान् पालयन्तु । गोपायन्तु । तेभ्यश्च स्वाहा सुहुतमेतद्धविर्भवतु ॥ ११ ॥

श्वात्राः पीताः जगत्याब्देवत्यया नाभिमुपस्पृशति । हे आपः याः यूयं श्वात्राः श्वात्रमिति क्षिप्रनाम । क्षिप्रपरिणामाः । पीता भवत अस्माकम् अन्तर्म्मध्ये । पुनरपि विसिनष्टि । उदरे सुशेवाः शेवमिति सुखनाम । सुसुखाः ताः अस्मभ्यम् । अयक्ष्माः । अनमीवाः अनागसः स्वदन्तु देवीरिति निःसंशयं द्वितीयान्तम् । एतत्पदसामानाधिकरण्यात्ता इत्यादीन्यपि द्वितीयान्तान्येव ताः युष्मान् अस्मभ्यमस्मदर्थम् । अयक्ष्माः सतीः यक्ष्मा व्याधिराजस्तद्रहिताः अनमीवाः अमीवा व्याधिरेव । आदरार्थं तु यक्ष्मग्रहणं अनागसः अनपराधाः आग इत्यपराधनाम । स्वदन्तु स्वद स्वर्द आस्वादने । आस्वादयन्तु । अमृताः प्राणाः वागादयः ऋतावृधः सत्यवृधो यज्ञवृधो वा ॥ १२ ॥

मेक्ष्यन् लोष्टं किञ्चिद्वादत्ते । इयन्ते यज्ञिया तनूः ॥ पृथिव्यभिधीयते । इयं तव यज्ञिया तनूः । तामादद इति शेषः । मेहति । अपो मुञ्चामि । अपो मूत्रं त्यजामि नतु प्रजाम् । उभयं वा । अत एत्यापश्च रेतश्च स एतदप एव मुञ्चति न प्रजाम् अꣳहोमुचः ॥ अंहः पापम् । अलुखं तस्मात्पुरुषं मुञ्चन्ति पृथक्कुर्वन्तीत्यंहोमुचः हे मूत्राख्या आपः या यूयम् । अंहोमुचः । ताः स्वाहाकृताः । सुष्ठु त्यक्ताः पृथिवीम् । आविशत प्रविशत । लोष्टं निदधाति । पृथिव्या संभव । भूम्या सह एकीभव ॥ १३ ॥

स्वपिति अग्ने त्वम् ॥ अनुष्टुबाग्नेयी । हे अग्ने त्वं सुजागृहि । साधु जागृहि सुष्ठु जागृहि वयं सुमन्दिषीमहि- ॥ वयं स्वप्स्यामः । मन्दतिः स्वप्नार्थः ॥ किं च रक्ष नः अस्मान् । अप्रयुच्छन् । युच्छ प्रमादे । अप्रमाद्यन् किं च प्रबुधे प्रबोधाय नः अस्मान् पुनः कुरु ॥ १४ ॥

विबुद्धमस्वप्स्यन्तं पुनर्म्मन इति वाचयति । पुनः मनः मे मम आगन् । आगतं पुनः आयुः जीवितं मम आगतं पुनः प्राणो ममागतः मुखनासिकासंचारी वायुः प्राणः । पुनरात्मा ममागतः । आत्मशब्देन विज्ञानात्मोच्यते पुनश्चक्षुर्मम आगतं पुनः श्रोत्रं ममागतं सर्वे ह वा एत स्वपतोपक्रामन्तीति श्रुतिः किं च अग्निर्वैश्वानरः । अदब्धः अनुपहिंसितः तनूपाः शरीरस्य गोपायिता । नः अस्मान् पातु रक्षतु । दुरितात् अशुभात् अवद्यात् अवदनीयात् ॥ १५ ॥

अव्रत्यं व्याहृत्य जपति । त्वमग्ने । आग्नेयी गायत्री ॥ हे अग्ने त्वं व्रतस्य पालयिता भवसि । देव . आ मर्त्त्येषु आ । आकारौ समुच्चयार्थीयौ । देवश्च त्वं च मर्त्त्येषु मनुष्येषु च व्रतपा इति शेषः ॥ त्वं च यज्ञेषु । ईड्यः ईडिरध्येषणकर्मा पूजाकर्म्मा वा । अध्येषितव्यः । याचितव्यस्त्वमतो व्रतं पाहीति शेषः । लब्धमालभ्य वाचयति । रास्वेयत् । सोम उच्यते रास्व रा दाने । देहि । इयदिति लब्धद्रव्यपरिमाणम् । हे सोम । किञ्च । आभूयो भर हृग्रहोर्भश्छन्दसीति हकारस्य भकारश्छान्दसः ॥ आहर भूयो बहुतरम् ॥ किञ्च देवः सविता नः अस्मभ्यं वसोर्दाता । धनस्य दाता वस्वदात् धनमदात् दत्तवान् पूर्वमेवेत्यभिप्रायः ॥ १६ ॥

एषा ते । अनुष्टुप् ॥ पूर्वार्द्धर्चो हिरण्याज्यदेवत्यः उत्तरो वाग्देवत्यः विनियोगो ध्रौवाज्ये आज्यं जुह्वाचतुः क्षिप्त्वा हिरण्यं निदधाति । आज्यमुच्यते । एषा हिरण्यलक्षणा ते तव हे शुक्र आज्य तनूः शरीरम् ॥ समानजन्म वै पयश्च हिरण्यं चोभयं हि अग्निरेतसमिति श्रुतिः ॥ एतश्च त्वां हिरण्यलक्षणं वर्च्चस्तेजः । तया तन्वा संभव एकीभव एकीभूय च भ्राजं सोमं गच्छ जुहोति ॥ जूरसि । जीव प्राणधारणे ॥ अस्य क्विप्प्रत्यये जूरिति भवति । या त्वं जीवनमसि । धिया ह्येतया मनुष्या जुषन्तीति श्रुतिः ॥ यद्वा जवते इति जूः ॥ आकाशमनुजवत इति श्रुतेः । या च त्वं धृता धारिता मनसा जुष्टा जुषी प्रीतिसेवनयोः । अभिरुचिता च ॥ विष्णवे । विष्णोः सोमस्य ॥ १७ ॥

तस्याः ते ॥ तव सत्यसवसः । अवितथाभ्यनुज्ञायाः प्रसवे अभ्यनुज्ञायां वर्त्तमानः तन्वो यन्त्रमशीय शरीरस्य यन्त्रं दार्ढ्यम् । अशीय व्याप्नुयाम् । आयज्ञसमाप्तेः । हिरण्यमुद्धरति । शुक्रमसि । अग्नेः रेतोऽसि चदि आह्लादने चन्द्रमसि । अमृतमसि । अमरणधर्मासि । वैश्वदेवमसि सर्वदेवत्यमसि ॥ १८ ॥

सोमक्रयणीमभिमन्त्रयते । वाग्रूपाध्यारोपितकल्पनया त्वं चिदसि । चित्तस्य मनसोऽनुवादिनी भवसि । या च मनासि प्रज्ञासि या च धीरसि बुद्धिर्भवसि । धिया ह्येतया मनुष्या जुजूषन्ति । जीवितुमिच्छन्तीति श्रुतिः या च त्वं दक्षिणासि । भूमिदानात्परं

नास्ति विद्यादानं ततोऽधिकमित्येतदभिप्रायम् । तेभ्यो वाचं दक्षिणामानयन्तीत्येतदभिप्रायं वा ॥ या च क्षत्रियासि । क्षतात् त्रायते इति क्षत्रियः जात्या वा स्तूयते । या च । यज्ञियासि । यज्ञार्हा भवसि या च अदितिरसि अदीनासि । या च उभयतः शीर्ष्णी उभयतो मुखी ॥ वाक्ये पदानामन्यथा चान्यथा क्रमो भवतीत्येतदभिप्रायम् । स यदेतया समानं सद्विपर्यासं वदतीत्यादि श्रुतिः । सा नः सुप्राची प्रेधि । या त्वमुक्तगुणा सास्माकं सुप्राची भव सोममभिगच्छेत्यर्थः ॥ सुप्रतीच्येधि । साधु अस्मान्प्रति सोमं गृहीत्वा आगच्छेत्यर्थः ॥ सुप्राचीन प्रेधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न प्रेधि । सोमेन नः सह पुनरेहीत्येवैतदाहेति श्रुतिः ॥ किञ्च मित्रस्त्वा पदि बध्नीताम् । मित्र आदित्यः त्वां पादे बध्नातु अप्रणाशाय । किञ्च पूषाध्वनस्पातु । इयं पृथिवी पूषा सा त्वाम् । अध्वनः मार्गात्पातु किञ्च इन्द्रायाध्यक्षाय । चतुर्थ्याः षष्ठ्या विपरिणामः ॥ अधि उपरि अक्षिणी यस्य सोऽध्यक्षः इन्द्रस्याध्यक्षस्य सतः ॥ १९ ॥

सोमाहरणे प्रवृत्तां त्वाम् । एतेऽनुमन्यन्ताम् । अनुमन्यतां त्वां माता अनुमन्यतां त्वां पिता । अनुमन्यतां त्वां भ्राता । सगर्भ्यः । समानगर्भप्रभवः अनुमन्यतां त्वां सखा । समानयूथप्रभवः ॥ किञ्च या च त्वं कृतसामग्रीका अस्माभिः सोमं प्रति गमने सा त्वं हे देवि दानादियुक्ते । देवमच्छेहि । अच्छाभेराप्तुमिति शाकपूणिः ॥ देवं सोमम् अभ्येहि । अभिगच्छ । इन्द्राय सोममाहर्त्तुमिति शेषः ॥ किञ्च रुद्रस्त्वा वर्त्तयतु । रुद्रस्त्वाम् आवर्त्तयतु रुद्राज्ञाज्ञातिक्रामन्ति पशवः ॥ ततः स्वस्ति अविनाशेन । सोमसखा सती पुनरेहि पुनरागच्छ ॥ २० ॥

उदीचीं नीयमानामनुगच्छति वस्व्यसि । अनुष्टुप् । बृहती वा । वसुरूपेणादितिरूपेणादित्यरूपेण रुद्ररूपेण चन्द्ररूपेण स्तूयते गौः ॥ किञ्च । बृहस्पतिः त्वां सुम्ने सुखे रम्णातु संयमयतु ॥ रम्णातिः संयमनकर्म्मा रुद्रो वसुभिः सहितः आचके कामयतु रक्षितुमिति शेषः ॥ आचक इति कान्तिकर्म्मसु पठितम् ॥ २१ ॥

पदे जुहोति । अदित्यास्त्वा । अदित्याः पृथिव्याः त्वां हे आज्य मूर्धन् । शिरसि आजिघर्मि घृ क्षरणदीप्त्योः ॥ आघारयामि । देव-

यजने । पृथिव्याः इडायाः गोः पदं यतस्त्वमसि । अतो घृतवत् घृतसंयुक्तं त्वां कर्त्तुं जुहोमीति शेषः ॥ पदं परिलिखति । अस्मे रमस्व । अस्मासु रतिं कुरु पदं स्थाल्यामावपति ॥ अस्मे ते बन्धुः । वयन्तव बन्धुभूताः । यजमानाय पदं प्रयच्छति । त्वे रायः ॥ पशवो वै रायः त्वयि पशवः सन्त्विति शेषः ॥ पदं यजमानः प्रतिगृह्णाति । मे रायः । मयि पशवः सन्त्विति शेषः ॥ अध्वर्युरात्मानमुपस्पृशति । मा वयं रायस्पोषेण वियौष्म । मा वियुक्ताः स्याम वयं धनस्य पोषेण । गृहीतपदां पत्नीं वाचयति । तोतो रायः । त्वयि रयिः पशवः सन्त्विति शेषः ॥ २२ ॥

सोमक्रयण्या समीक्षयति । समख्ये पत्न्याशीः आस्तारपङ्क्तिः सोमक्रयणीतः पत्न्याशिषमाशास्ते यया त्वया अहं समख्ये ख्या-प्रकथने । संदर्शनं कृतवती देव्या दानादिगुणयुक्तया । धिया प्रज्ञया । सहार्थे तृतीया ॥ सन्दक्षिणया उरुचक्षसा । समख्ये च दक्षिणया सह गौर्हि प्रायशो दक्षिणा दीयते । उरुचक्षसा । विस्तीर्णदर्शनया । वाचा ह्यतीतानागतवर्त्तमानविप्रकृष्टं ज्ञायते । सा त्वं मा मे आयुः प्रमोषीः । मावखण्डय मम आयुः मा अहन्तवायुः प्रमोषिषम् । किञ्च वीरं विदेय । विदिर्लाभार्थः । पुत्रं लभेयं । तव देवि संदृशि । हे देवि । तव संदर्शने सति ॥ २३ ॥

यजमानं वाचयति । एत ते गायत्रो भागः । हे सोम एषः ते तव गायत्रीसंबद्धो भागः अंश इति । मे इति यजमानाभिधायकं पदम् । सोमायेति षष्ठ्यर्थे चतुर्थी । मम वचनमेवं सोमस्य ब्रूयात् कथयत हे अध्वर्यवः । छन्दोऽर्थे तव क्रयो न बधार्थम् । एवं यजमानाभिप्रायः । एतदध्वर्यवः सोमस्य कथयन्तीति वाक्यार्थः ॥ एष ते त्रैष्टुभः एष ते जागत इत्यनेनैव व्याख्याते छन्दोनामानां नामशब्दोऽनर्थकः अन्येषामपि छन्दसां साम्राज्यमाधिपत्यं गच्छ इति ॥ एवं मे ममाभिप्रायं सोमस्य ब्रूयात् कथयत हे अध्वर्यवः । अत्रापि मे इत्येतत् यजमानवाक्यमेव पदम् । सोममालभते । आस्माकोऽसि यः त्वं हे सोम क्रयपथमागतः सः आस्माकः अस्मदीयः संजातः शुक्रस्ते ग्रह्यः । शुक्र उपलक्षणार्थः शुक्रप्रभृतयो ग्रहास्तव ग्रहीष्यन्ते । किञ्च विचितः विचयनकर्त्तारः त्वां विचिन्वन्तु । विचितं कुर्वन्तु ॥ २४ ॥

सोमं मिमीते । अभि त्यं देवम् । सविताऽर्षिः । अभ्यर्चामि । अभिपूजयामि त्यं तं देवं दानादिगुणयुक्तं सवितारम् । ओण्योः । द्यावापृथिव्योः अन्तरा वर्त्तमानम् । कविक्रतुं मेधाविकर्म्माणम् । सत्यसवम् अवितथप्रसवं रत्नधाम् । रमणीयानां धनानां दातारम् । अभिरनर्थकः । प्रियं सर्वजनानां प्रियं मतिं बुद्धिं व्याप्यावस्थितम् । मतीनां हि सविता अधिष्ठात्री देवता कविम् । क्रान्तदर्शनम् । किञ्च । ऊर्ध्वा यस्यामतिः । यस्य सवितुः ऊर्ध्वा गगनाभिमुखी । अमतिः आत्ममयी मतिः । अनन्यभूता ततः भा दीप्तिः अदिद्युतत् । द्योतयते सवीमनि प्रसवे दातव्ये सविता हिरण्यपाणिः । सुवर्णपाणिः अमिमीत मिमीते सोमं सुक्रतुः साधुकर्मा शोभनयज्ञो वा कृपा कल्पनया । या सोयस्य कल्पना । स्वः आदित्यः सु अरणः । अन्तान् संगृह्योष्णीषेण बध्नाति । प्रजाभ्यस्त्वां बध्नामीति शेषः । उत्पत्तये स्थितये च प्रजानां त्वां हे सोम बध्नामि । अङ्गुल्या मध्ये विवृणोति । प्रजास्त्वानुप्राणन्तु हे सोम त्वां प्राणन्तमुच्छ्वसन्तं प्रजाः अनुप्राणन्तु । उच्छ्वसन्तु त्वं च प्रजाः उच्छ्वसन्तीः अनुप्राणिहि । अनूच्छ्वसिहि । तमयतीव वा एनमित्यादि ब्राह्मणम् ॥ २५ ॥

हिरण्यमालभ्य वाचयति । शुक्रं त्वां हे सोम । शुक्रमक्लिष्टकर्माणं त्वां शुक्रेण हिरण्येन क्रीणामि । एवं शेषमपि व्याख्येयं सोमविक्रयिणं हिरण्येनाभिकम्पयति । सग्मे ते गौः गौरिति पणिभिः सह गवा वर्त्तत इति सग्मो यजमानः तव सम्बन्धिनी गौः यजमानसहितं निदधाति । अस्मे ते । हे सोमविक्रयिन् अस्मासु तव सम्बन्धीनि हिरण्यानि वर्त्तन्ते । अजामालभ्य वाचयति । तपसस्तनूरसि । तपसः प्रजापतेः हे अज तनूः शरीरं त्वमसि प्रजापतेश्च वर्णः रूपमसि सा यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः । एवमजां सोमसमक्षमभिष्टुत्याथेदानीं सोममाह परमेण । परमेण पशुना क्रीयसे । त्वं हे सोम सा यत्त्रिः संवत्सरस्य विजायते । तेन परमः पशुः यस्मात्त्वं मया परमेण उत्कृष्टेन पशुना गृह्यसे तस्मात्तव प्रसादादहं सहस्रपोषं सहस्रं प्राणिनां यत्पुष्णाति धनं तदहं पुषेयं बर्धयेयं सहस्रप्राणिपोषो मम गृहे वर्तमानोऽस्त्वित्यभिप्रायः ॥ २६ ॥

सोममादत्ते । मित्रो न एहि । सोम मित्रस्त्वं सन्नोऽस्मान् ।

प्रत्येहि । मित्रशब्देनेहादित्यो गृह्यते पुंलिङ्गत्वात् । सुमित्रधः शोभनानि मित्राणि दधाति । पुष्यतीति सुमित्रधः । यजमानस्य दक्षिणे उरौ निदधाति । इन्द्रस्योरुमाविश । इन्द्रस्य यजमानस्य उरुमाविश उपविश । एष वा अत्रेन्द्रो भवति यद्यजमान इति श्रुतिः । उशन्नुशन्तम् । वश कान्तौ । कामयमानस्त्वं कामयमानमेव । यजमानस्योरुमाविशे इत्यनुवर्तते । स्योनः स्योनम् । स्योनमिति । सुखनाम । सुखरूपस्त्वम् । यजमानस्योरुमाविशेत्यनुवर्त्तते । एवं परस्परप्रीत्या अवियुक्तौ भवतमित्यभिप्रायः । सप्तदशानां धिष्ण्यानां मध्यात्सप्त तावत् सोमक्रयणाननुदिशति । स्वान भ्राज । हे स्वान भ्राज । अङ्घारे बम्भारे हस्त सुहस्त कृशानो । एवं सप्तधिष्ण्यान् सम्बोध्याथेतरानाह । एते वः सोमक्रयणाः । एते युष्माकं मध्ये सोमक्रयणाः तान् रक्षध्वं तान् रक्षयत गोपायत धिष्ण्यान् । मा वो दभन् । एतेऽपि स्वानभ्राजादयः वः युष्मान् मा दभन् दभ्नोतिर्हिंसाकर्म्मा । मा युष्मान् दभ्नुयुः ॥ २७ ॥

गृहीतसोमं वाचयति । परि माग्ने । आग्नेयी पुरस्ताद्बृहती । हे भगवन्नग्ने परिबाधस्व । मां परित्रायस्व दुश्चरितात् । पापाचरणात् । आभज माम् । आसेवस्व मां सुचरिते वर्त्तमानम् । उत्तिष्ठति । उदस्थाम् । उत्तिष्ठामि । आयुषा निमित्तभूतेन शोभनेन प्रकारेण यागहोमदानादिभिर्येनास्मदीयमायुर्यात्यनेन च हेतुना । उदस्थाम् । उत्तिष्ठामि च अमृतान् देवान् अनुलक्षीकृत्य अतः परिमाग्ने । दुश्चरिताद्बाधस्वेति सम्बन्धः अमृतशब्देनात्र बहुवचनान्तेन सोमोऽभिधीयते । आगते सोमे दीक्षित उत्तिष्ठति तस्यैषा प्रायश्चित्तिः ॥ २८ ॥

अनोऽभ्येति । प्रति पन्थाम् । अनुष्टुप् । पन्थानं स्तौति । प्रत्यपद्महि । प्रतिपद्येमहि पन्थानम् मार्गम् । स्वस्तिगाम् । अविनाशेन यत्र गम्यते तं स्वस्तिगाम् । अनेहसम् । एह इत्यपराधनाम न विद्यते यत्र गमनापराधः स तथोक्तः । किञ्च । येन पथा गच्छन् । विश्वाः सर्वान् परिवृणक्ति । परिवर्जयति द्विषः द्वेष्टॄन् । किञ्च विन्दते वसु लभते धनम् ॥ २९ ॥

कृष्णाजिनमास्तृणाति । अदित्यास्त्वगिति व्याख्यातः शेषः ॥ सोमं निदधाति । अदित्यै सदः स्थानम् । आसीद ॥ सोममालभ्य

वाचयति ॥ अस्तभ्नाद् । त्रिष्टुभौ वारुण्यौ । योऽयं वृषभः वर्षिता । अस्तभ्नात् द्यां स्तम्भितवान् द्युलोकं यश्चान्तरिक्षम् । अस्तभ्नात् ॥ किञ्च अमिमीत वरिमाणं पृथिव्याः । मिमीते वरिमाणं महत्त्वं पृथिव्याः । यश्च सम्राट् देवताविशेषः । आसीदद्विश्वा भुवनानि । आसीदति सर्वाणि भूतजातान्यात्मत्वेनाधिपत्येन विश्वेत्तानि इच्छन्द एवार्थे । सर्वाण्येवैतानि वरुणस्य व्रतानि । कर्माणि ॥ येऽपि त्रीन् लोकान् स्तभ्नुवन्ति । ये सर्वजनान् विशन्ति तेऽपि वरुणाज्ञां कुर्वन्तीति परब्रह्मरूपेण वरुणस्य श्रुतिः ॥ ३० ॥

वनेषु वि । वीत्ययमुपसर्गः । अन्तरिक्षं ततानेत्यनेन सम्बध्यते । यो वरुणः वनेषु वृक्षाग्रेषु विततान वितनोत्यन्तरिक्षमाकाशम् । यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादुपलभ्यत इव । वाजमर्वत्सु वीर्यं वै वाजः पुमांसोऽर्वन्त इति श्रुतिः वाजं वीर्यम् अर्वत्सु पुरुषेषु विततानेत्यनुवर्त्तते । पय उस्रियासु । उस्रियासु गोषु पयो विततान हृत्सु क्रतुम् । क्रतुः संकल्पः हृदयेषु संकल्पं विततान ॥ विक्ष्वग्निं प्रजास्वग्निं विततान । दिवि द्युलोके सूर्यम् अदधात् स्थापितवान् । सोममद्रौ ॥ अद्रिषु गिरिषु सोमं स्थापितवान् ॥ य एवं परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः ॥ ३१ ॥

कृष्णाजिनं सोमस्य चिह्नं करोति । सूर्यस्य चक्षुः । अनुष्टुप् । कृष्णाजिनमुच्यते । सूर्यस्य चक्षुः आरोह । सूर्यस्य सबन्धि चक्षुः आरोह ॥ तथाभ्युच्छ्रितं भव यथा सूर्यश्चक्षुषा पश्यतीत्यभिप्रायः ॥ अग्नेश्चक्षुः कनीनकमारोह यत्रैताभ्यां दृष्टो लक्षितः।एतशेभिः । एतश इत्यश्वनामसु पठितम् । एतशैरश्वैः ईयसे नीयसे । भ्राजमानः देदीप्यमानः । विपश्चिता सूर्येण सहितः । अग्निना विपश्चिता सह ॥ ३२॥

अनड्वाहौ युनक्ति । उस्रावेतम् । ऊर्ध्वबृहती ॥ हे उस्रौ अनड्वाहौ आ इतम् । आगच्छतम् एत्य च स्वयमेव युज्येथाम् । योगं कुरुतम् । धूर्षाहौ धुरं सोढुम् । यौ शक्तौ तौ तथोक्तौ । अनश्रु अश्रुरहितौ हृष्टावित्यर्थः । अवीरहणौ । वीराणां यौ हननं अपचयन्न कुरुतं ताववीरहणौ प्रशस्तावित्यर्थः । ब्रह्मचोदनौ । ब्राह्मणानां यज्ञं प्रति प्रेरयितारौ एवमनड्वाहौ संबोध्याथेदानीं प्रयोजनमाह । स्वस्ति अविनाशेन यजमानस्य गृहान् गच्छतम् ॥ ३३ ॥

वाचयति ॥ भद्रो मेऽसि । सोम उच्यते । भद्रो वन्दनीयः

स्तुत्यः यतस्त्वं मे मम भवसि अतो ब्रवीमि प्रच्यवस्व प्रगच्छ । भुवस्पते भूतजातस्य पते । विश्वान्यभिधामानि सर्वाणि स्थानानि प्रति हविर्द्धानप्रभृतीनि । किञ्च त्वां प्रच्यवमानं मा विदन् मा जानन्तु परिपरिणः । परिणेतारो दुर्ज्जनाः मा त्वां परिपन्थिनः सर्वतः पन्थानं ये तिष्ठन्ति ते मा विदन्तु ॥ मा त्वा वृका अघायवो विदन् ॥ वृका विकर्त्तनशीलाः अघायवः अघं पापं परस्य कर्त्तुमिच्छन्ति ये ते अघावयवः एते च त्वां गच्छन्तं मा जानन्तु । किञ्च त्वमपि श्येनो भूत्वा परापत श्येनरूपमास्थाय उत्पत । ततो यजमानस्य गृहान् गच्छ ॥ तत् नौ । आवयोः तव च मम च संस्कृतम् । सर्वोपस्करणयुक्तं स्थानं विद्यते ॥ ३४ ॥

वाचयति । नमो मित्रस्य । जगती सौर ऋषिः ॥ नमो मित्रस्याभिनयेन सूर्यः दृष्टार्थः । परब्रह्मरूपेणादित्यमवगम्य सूर्येनमस्कारं कृत्वाऽन्येषां कथयति नमः सूर्याय कथंभूताय । मित्रस्य वरुणस्य चक्षसे । मित्र आदित्यो वरुणश्च । उपलक्षणं चैतत् चतुर्विधस्यापि भूतग्रामस्य मित्रावरुणग्रहणम् । चक्षसे द्रष्ट्रे ईश्वररूपेणाध्यक्षाय । महोदेवाय तदृतꣳसपर्यत । महते देवाय तत्सत्यं पूजयत हे ब्राह्मणाः । सपर्यतेति पूजाकर्म्मसु पठितः । किं च दूरेदृशे । दूरेस्थितो दृश्यत इति दूरेदृक् । यद्वाऽतीतानागतवर्तमानकालसम्बन्धान् प्राणिनो दूरेस्थितान् पश्यतीति दूरेदृक् । देवजाताय । देवानुग्रहार्थं जातो देवजातः । यद्वा जाता देवा अस्मादिति देवजातः । निष्ठा वाहिताग्न्यादिष्विति बहुव्रीहौ परनिपातः । केतवे । केतुरिति प्रज्ञाननामसु पठितम् । प्रज्ञानसरूपाय विज्ञानानन्दस्वभावायेत्यर्थः । दिवस्पुत्राय । द्युलोकाद्धि सूर्यो जायते द्युलोकं वा बहुधा त्रायत इति दिवस्पुत्रः सूर्यः । सूर्याय शंसत । शंसु स्तुतौ । इत्थंरूपाय सूर्याय । स्तुतीरुच्चारयत । किमन्यैर्देवताविशेषैः ॥ ३५ ॥

उत्तम्भनेनोपस्तभ्नाति । वरुणस्योत्तम्भनमसि । वरुणस्य त्वमुत्तम्भनमसि । न तु शकटस्य । उदस्थास्तम्भोः पूर्वस्येति स्तम्भनसकारस्य तकारः । शम्ये चोद्वृहति । वरुणस्य स्कम्भसर्ज्जनी स्थः स्कभ्नोतिः स्तभ्नोतिना समानार्थः अर्ज्ज सर्ज्ज अर्ज्जने । स्कम्भशब्देन युगमुच्यते । तस्य सर्ज्जनी वशीकरण्यौ स्कम्भसर्ज्जनी वरुण-

स्य युवां स्कम्भसर्ज्जनी शम्ये स्थो भवथः । आसन्दीमभिमृशति । वरुणस्य ऋतसदनी सत्यसदनी त्वं भवसि । कृष्णाजिनमस्यामास्तृणाति । वरुणस्य सत्यसदनमसि । सीदत्यस्मिन्निति सदनम् । तस्मिन् सोमं निदधाति वरुणस्य ऋतसदनं सत्यसदनम् आसीद उपविश ॥ ३६ ॥

सोमं प्रवेशयन् वाचयति । या ते धामानि । सौमी त्रिष्टुप् । हे सोम यानि ते धामानि । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति । यानि तव सम्बन्धीनि धामानि नामानि हविषा यजन्ति यष्टारः । ता ते विश्वा । तानि तव विश्वानि सर्वाणि परिभूः नपुंसकबहुवचनस्य स्थाने पुंल्लिङ्गैकवचनम् । परिभूणि सर्वतो भवितॄणि । अस्तु एतदपि बहुवचनं वाच्यसंयोगात् । सन्तु यज्ञं सर्वतो भवन्त्वित्यर्थः । यद्वा यज्ञशब्दे प्रथमा । तानि तव विश्वानि नामानि यज्ञः परिभूः भवतु यज्ञः संगृह्य वर्त्ततामित्यर्थः । त्वं च गयस्फानः गृहस्य पुत्रपशुभूमिहिरण्यादिभिर्वर्द्धयिता । प्रतरणः प्रतरन्ति येनापदः स प्रतरणः ॥ सुवीरः शोभनवीरः अवीरहा । अहन्ता वीराणां प्रचर इत्थंभूतस्त्वं परिभ्रम ॥ सोमदुर्यान् ॥ गृहानस्मदीयान् ॥ ३७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये चतुर्थोऽध्यायः ।

आनन्दपुरवास्तव्यवव्वटाख्यस्य सूनुना ॥
मन्त्रभाष्यमिदं क्लृप्तं पदवाक्यैः सुनिश्चितम् ।

## अथ पञ्चमोऽध्यायः ।

आतिथ्ये हविर्गृह्णाति । पञ्चभिर्वैष्णवैर्यजुर्भिः । अग्नेस्तनूरसि । अग्निशब्देन परोक्षं गायत्र्युच्यत इति स्तुतिः । अग्नेस्तनूः शरीरं भवसि हुतं हविरग्नेः शरीरं भवत्येव । विष्णवे त्वां जुष्टं गृह्णामि । सोमस्यागतस्य शरीरमसि । विष्णवे त्वां जुष्टं गृह्णामि सोमः परोक्षेण त्रिष्टुबुच्यत इति श्रुतिः । अतिथेरातिथ्यमसि । अतिथेः सोमस्य आतिथ्यं भोजनमसि । विष्णवे त्वां जुष्टं गृह्णामि । श्येना-

थ त्वा सोमभृते । गायत्र्यै त्वां सोमहारिण्यै विष्णवे त्वा मिति संबन्धः सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरदिति श्रुतिः ॥ अग्नये त्वा रायस्पोषदे । अग्नये त्वां रायस्पोषदे ॥ धनपोषस्य दात्रे विष्णवे त्वेति सबन्धः । पशवो वै रायस्पोषः । पशवो जगतीति श्रुतिः ॥ १ ॥

आतिथ्ये अग्निमन्थनं शकलमादत्ते ॥ अग्नेर्जनित्रमसि ॥ जायतेऽस्मिन्नग्निरिति जनित्रम् । दर्भतरुणके निदधाति । वृषणौ स्थः वृषु सेचने ॥ वर्षितारौ सेक्तारौ भवथः ॥ अधरारणिं निदधाति । उर्वश्यसि । उत्तरारण्याज्यविलापनीमुपस्पृशति । आयुरसि । उत्तरारणिं निदधाति । पुरूरवा असि ॥ इतिहासपक्षे मन्त्रत्रयं व्याख्यातं श्रुत्या । उर्वशी ह्यप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति ॥ मन्थति । गायत्रेण त्वा । हे अग्ने गायत्रेण छन्दसा त्वां मन्थामि जनयामि ॥ उत्तरौ मन्त्रौ समानव्याख्यानौ ॥ त्रैष्टुभेन जागतेनेति विशेषः ॥ २ ॥

भवतन्नः ॥ पङ्क्तिः ॥ आहवनीयनिर्म्मथ्या उच्येते ॥ भवतं युवां नः अस्माकं समनसौ समानमनस्कौ ॥ सचेतसौ । समानप्रज्ञौ अरेपसौ ॥ रेप इति पापनाम । अपापौ मा यज्ञं हिंसिष्टं विनाशिष्टम् । मा यज्ञपतिं यजमानम् ॥ किञ्च शिवौ शान्तौ भवतम् ॥ अथ अस्मिन्नभिमन्थने नः अस्माकम् ॥ ३ ॥

जुहोति । अग्नावग्निः । आहवनीयनिर्मथ्यावुच्येते ॥ विराट् ॥ अग्नौ आहवनीयाख्ये एषोऽग्निर्निर्म्मथ्यः चरति । प्रविष्टः ॥ ऋषीणां विदुषामग्निहोत्रिणां पुत्रः स यदग्नी आधत्ते तदेनं जनयतीति श्रुतिः ॥ अभिशस्तिपावा ॥ अभिशंसनमभिशस्तिः । अभिशस्तेः पाति गोपायति यः सोऽभिशस्तिपावा स नः । सोऽस्माकम् । अग्निः स्योनः सुखरूपः सुयजा सुयागेन यजा परोक्षकृतत्वान्मन्त्रस्य प्रथमपुरुषेण व्यत्ययः यजतु इह अस्मिन्यज्ञे । देवेभ्यो हव्यं हविः सदम् । सदा अप्रयुच्छन् । युच्छी प्रमादे अप्रमाद्यन् । स्वाहा सुहुतं हविर्जुहोमि ॥ ४ ॥

ध्रौवं व्रतप्रदाने गृह्णाति । आपतये त्वा । वायुदेवत्यं यजुः ॥ आपततीत्यापतिः । परि सर्वतः पततीति परिपतिः ॥ उभयगुणविशिष्टाय वायवे हे आज्य त्वां गृह्णामि । तनूनप्त्रे तनूशब्देन आत्माभिप्रे-

तः। तन्यते हि तस्मादाकाशः ततो वायुर्भवति । तस्मादाकाशो जायते। शक्वरनामा आकाशाद्वायुः एतदभिप्रेत्योक्तं । तनूनप्त्रे ब्रह्मणः पौत्रायेत्यर्थः ॥ शक्नुवन्त्याकाशे भूतानि स्थातुमिति शक्वर आकाशस्तस्यापत्यं शाक्वरो वायुः। तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुरिति श्रुतिः॥ तस्मै तनूनप्त्रे शाक्वराय॥ शक्वने। शक्लृ शक्तौ अन्येषामपि दृश्यत इति वनिप्॥ शक्ताय। ओजिष्ठाय बलिष्ठाय॥ आज्यमवमृशन्त्यृत्विजः परस्परमद्रोहाय शपथयन्तः॥ अनाधृष्टमसि । अनाधार्षितमनुल्लङ्घितं हि त्वं भवसि। हे आज्य शपथकारिभिः पूर्वमिदानीमपि अनाधृष्यम् अनवकथनीयम् अनुल्लङ्घनीयं भवसि। किञ्च देवानाम् ओजः बलं त्वमसि। अनभिशस्ति। अभिशंसतिर्गर्हायां वर्त्तते । न विद्यते अभिशस्तिर्यस्य तत्तथोक्तम् । अभिशस्तिपाः । अभिशस्तेः पाति रक्षतीत्यभिशस्तिपाः अनभिशस्तेऽन्यम् अनभिशस्ते प्रदेशे स्वर्गादौ नयति इत्यनभिशस्तेन्यम् । यतस्त्वमित्थम्भूतं ततस्त्वामभिमृष्य अञ्जसा सत्यम् उपगेषम् । अञ्जसा प्रगुणेन मार्गेण । यथास्वरूपं सत्यमुपगच्छेयम् । त्वं चानेन सत्येन । स्विते मा धाः॥ सु इते कल्याणलोके स्वर्गे मां निदध्याः॥ ५॥

आहवनीये समिधमादधाति । अग्ने व्रतपाः॥ यजमानोऽनेन यजुषाग्निशरीरात्मशरीरयोर्व्यत्ययं करोति। हे अग्ने व्रतपाः व्रतमिति कर्म्मनाम॥ व्रतं पाति रक्षतीति व्रतपाः। त्वे व्रतपाः। अवधारणार्थं पुनः सम्बोधयति । त्वामस्य व्रतस्य गोपायितारं शरणं व्रजाम इति शेषः॥केन प्रकारेण इति चेत्॥या तव तनूरियं सा मयि। या इयं तव तनूः सा मयि भवत्विति शेषः । या मम तनूरेषा सा त्वयि। या च एषा मम तनूः सा त्वयि भवत्विति शेषः ॥ एवं कृतशरीरव्यत्यययोरावयोः॥ सह नौ व्रतपते व्रतानि। हे व्रतपते व्रतानि कर्म्माणि। नौ आवयोः एकत्र सन्त्विति शेषः। किञ्च अनुमन्यतां मे मम दीक्षां दीक्षापतिः सोमः अनुमन्यतां च तपः ॥ तपःशब्देन उपसद उच्यन्ते। तपस्पतिः सोमः॥ ६॥

सोममाप्याययन्ति । अꣳशुरꣳशुष्टे ॥ चतुरवसाना चतुरशीत्यक्षरा प्रकृतिरुच्यते सौमी । चतुर्थोऽर्धर्चो लिङ्गोक्तदेवतः। हे सोम अंशुः वीप्सा ते तव आप्यायताम् । उपचीयताम्। कस्मै

इन्द्राय । तादर्थ्ये चतुर्थी । एकधनविदे एकधनान् वेत्ति इत्येकधनवित् तस्मै एकधनविदे । कथम्भूतान् वेत्ति । एकैकोंऽशुः । सोमस्य देवान् प्रति भक्ष्यत्वेन गच्छन् शतमेकधनानाप्याययति । अथवा दश दश ईदृशी सोमस्य शक्तिरिति श्रुतिः । आ तुभ्यमिन्द्रः प्यायताम् । आप्यायतामुपचीयताम् इन्द्रः हे सोम तुभ्यं त्वदर्थम् । उपचितो हीन्द्रो बहुसोमं पिबति । आ त्वमिन्द्राय प्यायस्व । इन्द्रार्थमात्मानं सोम आप्यायय वर्द्धय । अस्मान्सखीन्समानख्यानान् परिचारकान् सन्या । धनलाभेन । मेधया । प्रज्ञया च । स्वस्ति ते देव सोम स्वस्ति अविनाशः अस्तु । तव हे देव सोम अहं च । सुत्याम् अशीय । व्याप्नुयाम् । यद्वा स्वस्ति अविनाशेन तव सम्बन्धिनीं सुत्याम् अशीय व्याप्नुयां प्रस्तरे निह्नुवते एष्टा रायः । यजतेः कृतसम्प्रसारणस्यैतद्रूपं निष्ठाप्रत्यये परतो दानार्थस्य । आ इष्टाः रायः मर्यादया इष्टानि धनानि दक्षिणाभिप्रायमेतत् । किमर्थमिति चेत् प्रेषे भगाय । प्रकृष्टाय इषे अन्नाद्याय । धनाय च । ऋतसृतवादिभ्यः । सत्यमेतत् चिन्तितमस्माकं भूयात् सत्यवादिनामिति विभक्तिव्यत्ययः । नमो द्यावापृथिवीभ्याम् द्यावापृथिव्योः संयोगमनुसर्वं सिद्ध्यतीति नमस्कारः ॥ ७ ॥

उपसदं जुहोति । ततोऽसुरा एषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिन् लोके रजतामन्तरिक्षे हरिणीं दिवीत्यादीतिहासो निदानभूतः । या ते अग्ने । हे अग्ने या ते तव अयःशया अयसि शेते इत्ययःशया तनूः शरीरं वर्षिष्ठा उरुतमा विस्तीर्णतमा गह्वरेष्ठानिगूढदेशस्थायिनी सा असुरसंबन्धि उग्रं वचः । उद्गूर्णं वचनं जहि जहि मारय मारय इति तीक्ष्णभूतं वचनमपाबधीत् । अपहन्तु त्वेषं दीप्तं धृष्टं बलेन उर्ज्जस्वितया च उक्तमपहन्तु अतो ह्येते सर्वे निर्वाचः असुराः सन्त्वित्यर्थः । यद्वा । या तव अग्ने अयःशया तनूः विस्तीर्णानिगुढदेशस्थायिनी च उद्गुर्णमसह्यवचनमपहतवती दीप्तं वचनमपहतवती सैतां पुरमपहन्त्विति शेषः । रजःशया रजतशायिनी । हरिशया । हरितं सुवर्णं तत्स्थायिनी । एवं चोत्तरयोर्मन्त्रयोर्विशेषव्याख्यानम् ॥ ८ ॥

चात्वालं परिलिखति । तप्तायिनी मेऽसि । चत्वारो मन्त्राः पृथिविदेवत्याः । तप्त इव वृत्त्यर्थे पुरुषोऽस्यामेतीति तप्तायनी पृथि-

वी मे मम असि । द्वितीयं परिलिखति । वित्तायनी । अस्यां हि विविदानो लभमानः पुरुषो वित्तवान् भवतीति वित्तायनी । वित्तायनी मे मम असि । तृतीयम् । अवतान्मा नाथितात् । अवतात् रक्षतु मां नाथितात् नाथतिर्य्याच्ञार्थः । यथाहं न याचेयं तथा मां पृथिवी करोत्वित्यर्थः । चतुर्थम् । अवतात् अवतु रक्षतु मां व्यथितात् । व्यथ भयचलनयोः । भयात् चलनाद्वा पृथिवी । चात्वाले प्रहरति । विदेदग्निः । स वा अग्नीनामेव नामानि गृह्णन्प्रहरति । यां त्वा अमून्देवा अग्ने अग्नीन् होत्राय प्रावृणत इत्यादीतिहासस्तदनुवादिन एते मन्त्राः विदेत जानीयात् । अग्निः कतमः नभः । न भरतीति नभः स्वकीयं नाम । पुरीषं हरति । अग्ने अङ्गिरः हे अग्ने आङ्गिरः अङ्गिरा उ ह्यग्निरिति श्रुतिः । आयुना नाम्ना आयुरित्यनेन नाम्ना अभिहितः । आ इहि आगच्छ । निवपति । योऽस्यां पृथिव्यां यस्त्वमस्यां पृथिव्यां भवसि । यत्ते तव । अनाधृष्टम् । अनाधर्षितं नाम । यज्ञियं यज्ञसम्पादकं तेन नाम्ना त्वाम् । आदधे स्थापयामः । द्वितीयस्यां पृथिव्यामिति पृथिवीशब्देनान्तरिक्षलोक उक्तः । तृतीयस्यां पृथिवीशब्देन द्युलोक उक्तः । चतुर्थं हरति । अनु त्वा देववीतये । अनुहरामि त्वां देववीतये । देवतर्पणाय वीतिस्तर्पणार्थः ॥ ९ ॥

व्यूहत्युत्तरवेदिम् । सिꣳह्यसि । तेभ्यो ह वाक् चुक्रोधेत्युपक्रम्य सिꣳही भूत्वा ददाना चचारेतीतिहासो वेदिमन्त्राणां निदानभूतः या त्वं सिंही भवसि । सपत्नसाही । सपत्नान् सोढुं शीलमस्या इति सपत्नसाही शत्रूणामभिभवित्रीत्यर्थः । सा त्वमस्माभिरनुनीयमाना देवेभ्योऽर्थाय कल्पस्व उत्तरवेदिरूपेण क्लृप्ता भव । प्रोक्षति । शुन्धस्व आभिरद्भिः । स्नाता सती शुद्धा भव । सिकताः प्रकिरति । शुम्भतिरलङ्कारार्थः अलङ्कृता भव ॥ १० ॥

उत्तरवेदिं प्रोक्षति । इन्द्रघोषस्त्वा । घोष इति वाङ्नामसु पठितम् । इन्द्रस्त्वां वसुभिः सहितः पुरस्ताद्गोपायतु । प्रचेताः प्रकृष्टविज्ञानो वरुणस्त्वां रुद्रैः सहितः पश्चात्पातु मनोजवा । मनोगतिर्य्यमः त्वां पितृभिः सहितः दक्षिणतः पातु । विश्वकर्म्मेति निगदव्याख्यातो मन्त्रः । बहिर्वेदिशेषं निषिञ्चति इदमहं वेदिशमनेन तप्तम् । आवर्जितम् । उदकम् । बहिर्धा यज्ञात् । बाह्यतो यज्ञात् निःसृजामि निःक्षिपामि ॥ ११ ॥

नाभिं व्याघारयति । सिᳪंह्यसि । सा यदेवाङ्ः सिंही भूत्वा शान्तेवाचरन्नित्यादिनिदानोद्घाटनं श्रुतौ । सिᳪंह्यसि स्वाहा सिᳪंह्यसि आदित्यवनिः । छन्दसि वनसनरक्षिमथाम् इति इन्प्रत्ययः । आदित्यान् वनुते सम्भजत इत्यादित्यवनिः । सिᳪंह्यसि ब्रह्मवनिः क्षत्रवनिः सिᳪंह्यसि सुप्रजावनिः रायस्पोषवनिः । ब्रह्म क्षत्रं शोभनाः प्रजाः रायस्पोषं धनस्य पोषम् एतान्यादित्यवनिसमानव्याख्यानानि। सिᳪंह्यसि आवह देवान् यजमानाय । आगमय देवान् यजमानाय । स्रुचमुद्यच्छति । भूतेभ्यस्त्वा । भूतशब्देन चतुर्विधो भूतग्रामोऽभिधीयते । चतुर्विधाय भूतग्रामाय उत्पत्तये स्थितये च स्रुचमुद्यच्छामीति शेषः ॥ १२ ॥

परिधीन् परिदधाति । ध्रुवोऽसि। यस्मादधियज्ञं ध्रुवस्त्वमसि । स्थिरोऽसि । तस्मात्पृथिवीं दृᳪंह दृढीकुरु ॥ ध्रुवक्षित् ॥ क्षि निवासे ॥ ध्रुवे नित्ये यज्ञे क्षियतीति ध्रुवक्षित् । यस्मात्त्वं ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु ॥ अच्युतक्षित् ॥ अच्युते यज्ञे क्षियतीत्यच्युतक्षित् यस्मात्त्वमच्युतक्षित् तस्मात्त्वं दिवं दृᳪंह दृढीकुरु ॥ सम्भारानुपनिवपति ॥ अग्नेः पुरीषमसि । अग्नेः पूरयिता भवसि शरीरं हैवास्य पीतुदार्वित्यादिश्रुतेः ॥ संभाराणां शरीरपूरणात् पुरीषत्वमुपपद्यते ॥ १३ ॥

सावित्रं जुहोति ॥ युञ्जते मनः । अधियज्ञानुवादिनी सावित्री जगती । यस्मात्सवित्रा प्रसूता । ऋत्विजो युञ्जते मनः मनांसि । उत युञ्जते धियः । अपि च युञ्जते प्रेरयन्ति धियो वाचः ॥ कथंभूता ऋत्विजः प्रेरयन्ति । विप्राः ॥ ब्राह्मणाः सुश्रुवांसोऽनूचानाः ॥ विप्रस्य॥ विप्राप्तक्रियाशक्तेः फलदानं प्रति । यज्ञस्य कर्मणि ब्राह्मणवत् वैश्यक्षत्रियावपि यजमानावग्निष्टोमेन दीक्षितोऽयं ब्राह्मण इत्युच्येते ॥ अतस्तावपि ब्राह्मणशब्देनोच्येते ॥ बृहतो महतो विपश्चितः । मेधाविनः सर्वज्ञस्य । किञ्च त एव सवित्रा प्रसूता ऋत्विजः । विहोत्रा दधे॥ विदधत इति वचनव्यत्ययः होतारः सप्त वषट्कर्त्तारो होत्रा इत्युच्यन्ते । अथ होत्राः संयाजयन्तीति श्रुतेः ॥ सौत्येऽहनि सप्त होतारो वषट् कुर्वन्ति । तदेतदुच्यते । वयुना विदेक इत् । वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा । इच्छब्द एवार्थे । सर्वेषामेव ऋत्विजां मध्ये सवित्रा प्रसूतो ब्रह्माख्यः एक एव ऋत्विक् । वयुनावित् त्रिवेदज्ञानवित् त्रि

वेदज्ञानान्वितो भैषज्यं करोति । मही देवस्य सवितुः परिष्टुतिः ॥ महती देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रसवितुः परिष्टुतिः परिस्तवनम् । को हि नाम यज्ञं प्रति ऋत्विजः प्रसूय समाप्स्यति यज्ञम् । यज्ञो हि वृष्टिद्वारेण समस्तं जगद्विभर्त्तीति सवितुर्महती स्तुतिरित्युक्तम् ॥ १४ ॥

दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति । इदं विष्णुः । गायत्री वैष्णवी । इदं जगत् विष्णुः विचक्रमे विक्रान्तवान् सर्वप्राणिनां भूतेन्द्रियमनोजीवभावेनाविशतीति विष्णुः । किञ्च त्रेधा निदधे पदम् ॥ पद्यते ज्ञायतेऽनेनेति पदम् । भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा निहितवान् पदम् ॥ किञ्च । समूढमस्य पाᳬंसुरे ॥ लुप्तोपमानमेतत् । अस्यैव विष्णोरन्यत्पदान्तरं विज्ञानघनानन्दमजमद्वैतमक्षरमित्येवंलक्षणं समूढमन्तर्हितमविज्ञातमकृतात्मभिः ॥ पांसुरे पांसुर इव प्रदेशे निहितं न दृश्यते तद् द्रष्टव्यमिति वाक्यशेषः । तदुक्तं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् इति ॥ १५ ॥

द्वितीयस्यानसो वर्त्मनि जुहोति । इरावती वैष्णवी । त्रिष्टुप् ॥ हे विष्णो यस्मात्तव प्रशासनमनुकुर्वन्त्यौ द्यावापृथिव्यौ । इरावती सस्यवत्यौ । धेनुमती धेन्वादिभिः पशुभिस्तद्वत्यौ । हिशब्दो यस्मादर्थे व्याख्यातः ॥ एवंभूतं भूतम् । अभूतामिति पुरुषव्यत्ययः संवृते इत्यर्थः ॥ सुयवसिनी शोभनयवसवत्यौ । मनवे । यजमानाय दशस्या दात्र्यौ यज्ञसाधनानाम् । अतः कारणात् व्यस्कभ्नाः स्कभ्नोतिः स्तम्भनार्थः ॥ स्तम्भितवानसि । रोदसी द्यावापृथिव्या एते । किञ्च दाधर्थ धारयसि च । पृथिवीं द्यां चेत्यध्याहारः ॥ अभितः इतश्चेतश्च । मयूखैः रश्मिभिः। यस्मात्त्वमेवंप्रभावस्तस्मात्त्वां स्तुम इति शेषः॥१६॥

पत्न्यक्षधुरावनक्ति । देवश्रुतौ । देवा एते धुरौ शृण्वन्तीति देवश्रुतौ । ये युवां देवश्रुतौ ते देवेषु आघोषतम् । घुषिर शब्दे आशब्दयतम्— ॥ वाचयति ॥ प्राची प्रेतम् । हे हविर्द्धाने प्राची प्रागञ्चने प्र इतं प्रगच्छतम् । अध्वरं कल्पयन्ती । यज्ञं समर्थं कुर्वाणे । किञ्च ऊर्ध्वं यज्ञं नयतम् । उर्ध्वं स्वर्गं प्रति यज्ञं नयतम् । मा जिह्वरतम् । ह्वल चलने।मा चलनं कुरुतम् । अचालितप्रतिष्ठे युवां भवतम् । शब्दं कुर्वत्यनसि वाचयति । स्वं गोष्ठम् । हे हविर्द्धाने स्वमात्मीयं गोष्ठं

स्थानम् । आवदतम् । उच्चारयतम् । हे देवी दानादिगुणयुक्ते । हे दुर्ये गृहे भूते आमन्त्रितद्विवचनान्ते द्वे पदे । आयुर्मा निर्वादिष्ट-म् । निरुपसर्गः कुत्सायाम् । निकृष्टमल्पं पशुधनादिरहितम् । आयु-र्म्मा निर्वादिष्टं मा उच्चारयतम् । प्रजां मा निर्वादिष्टम् । प्रजां नि-कृष्टां मा उच्चारयतम् । युवाभ्यामुच्चारितं तथा स्यादित्यभिप्रा-यः । नभ्यस्थे करोति । अत्र रमेथम् । अस्मिन् प्रदेशे रतिं कुरुतम् वर्ष्मन् विस्तीर्णे । विभाषा ङिश्योरित्यधिकृत्य न संयोगाद्वमन्ता-दिति नलोपाभावः । सुपां सुलुगिति सप्तम्या लोपः । पृथिव्याः॥१७॥

दक्षिणमुपस्तभ्नाति । विष्णोर्नुकम् । इत्याद्यास्तिस्रो वैष्णव्यः त्रिष्टुभः । द्वयोरन्ते विष्णवे त्वेति यजुः । नुकमिति निपातसमाहारो-ऽवधारणार्थः । विष्णोरेव वीर्याणि प्रवोचं प्रब्रवीमि । यो विष्णुः । पार्थिवानि विममे रजांसि । पृथिव्यन्तरिक्षद्युस्थानानि विममे नि-र्म्मितवान् रजांसि । लोका रजांस्युच्यन्ते इति रजःशब्दो लोक-वचनः । किञ्च । यश्च । विचक्रमाणस्त्रेधोरुगायः । उरुगमनः । अ-स्कभयात् स्तम्भितवान् उत्तरं द्युलोकाख्यम् । सधस्थम् । सहस्था नं देवानाम् । सधमादस्थयोश्छन्दसीति । सहशब्दस्य सधा-देशः । तस्य विष्णोर्वीर्याणि प्रवोचमिति सम्बन्धः । स्थूणमुपनि-हन्ति । विष्णवे त्वा । निहन्मीति शेषः ॥ १८ ॥

उत्तरमुपस्तभ्नाति । दिवो वा विष्णो । हे विष्णो द्युलोकाद्वा उत वा पृथिव्याः । अपि वा पृथिवीलोकात् । महो वा विष्ण उरोर-न्तरिक्षात् । महतो वा हे विष्णो उरोः विस्तीर्णादन्तरिक्षलोकात् । एतेभ्यो वा त्रिभ्यो लोकेभ्यो धनमादाय अन्यतो वा यतः कुतश्चित् । उभा उभौ हस्तौ वसुना धनेन पृणस्व आपूरयत । ततः आप्रयच्छ । आभिमुख्येन देहि दक्षिणात् । आ उत सव्यात् । पञ्चम्यास्तृतीयया व्यत्ययः । दक्षिणेन हस्तेन अपि च सव्येन उभाभ्यां हस्ताभ्याम् । अकृपणतया प्रयच्छेत्ययमभिप्रायः । विष्णवे त्वेति पूर्ववत् ॥ १९ ॥

मध्यमं छदिरालभ्य वाचयति प्रतद्विष्णुः । उत्तरोऽर्द्धर्चः प्रथमं व्याख्यायते यद्वृत्तयोगात् । यद्विष्णोर्यस्य विष्णोः उरुषु मह-त्सु त्रिषु विक्रमणेषु लोकेषु अधिक्षियन्ति । उपरि निवसन्ति भुव-नानि भूतजातानि । विश्वानि सर्वाणि । इदानीं प्रथमोऽर्द्धर्चः । प्रत-द्विष्णुः स्तवते । स विष्णुः प्रस्तूयते यकः स्थाने शप् छान्दसः । वी-

र्येण वीरकर्मणा कथं स्तूयते। मृगो न भीमः। यथा मृगः सिंहः स्तूयते। बिभेत्यस्मादिति भीमः। कुचरः कुत्सितचारी प्राणिबधजीवनः। गिरिष्ठाः पर्वतस्थानः। यद्वा हीनोपमत्वादन्यथा व्याख्यायते। सर्वैरेतैर्मृगादिभिः पदैरिन्द्रो विशिष्यते। स हि विष्णोरुपमानं भवितुमर्हति। मृगो न। मृजूष् शुद्धौ। यथा शुद्धोपहतपाप्मा इन्द्रो भीमो भीषणः कुचरः कायं चरतीति कुचरः कशब्दस्य सम्प्रसारणं छान्दसम्। गिरिर्मेघस्तत्र इन्द्रास्तिष्ठतीति ॥ २० ॥

रराट्यामालभ्य वाचयति। विष्णोर्यज्ञस्य रराटमसि। उच्छ्राण्यान् उपस्पृश्य वाचयति। विष्णोर्यज्ञस्य श्नप्त्रे श्नक्णी स्थः। ओष्ठसन्धिरुच्यते श्नप्त्रशब्देन। सीव्यति। विष्णोः स्यूरसि। षिवु तन्तुसन्ताने सीव्यत्यनेनेति स्यूः। ग्रन्थिं करोति। विष्णोर्ध्रुवोऽसि। ग्रन्थिरसि। समाप्तं स्पृशति। वैष्णवमसि। विष्णुर्देवता अस्य वैष्णवं विष्णवेऽर्थाय त्वाम्। उपस्पृशामीति शेषः ॥ २१ ॥

इत उत्तरम्। उपरवमन्त्राः। प्राग्देवस्य त्वेत्येतस्मान्मन्त्रात्। अभ्रिमादत्ते। देवस्य त्वेति व्याख्यातो मन्त्रः। आददे गृह्णामि। नार्यसि। नारीति प्रशस्यतेऽभ्रिः। नरस्य अपत्यं स्त्री नारी। परिलिखति। इदमहम् यदेतदहमुपरवान् परिलिखामि। इदमहं रक्षसां यज्ञविध्वंसिनां ग्रीवा अपि कृन्तामि। छिनद्मि। यथा परिलिखितं खनति। बृहन्नसि। यस्मात्त्वं हे उपरव बृहत् महानसि कर्म्मणा प्रमाणेन च बृहद्रवाश्च। महान् रवः शब्दोऽस्येति बृहद्रवाः तस्माद् बृहतीं महतीम्। इन्द्राय वाचं वद ॥ २२ ॥

किं बृहतीमेव केवलां नेत्याह। रक्षोहणं रक्षांसि या वागपहन्ति सा रक्षोहा तां रक्षोहणम्। ब्रह्मभ्रूणवृत्रेषु क्विप्। धातूपपदकालप्रत्ययनियमाश्च प्रायशो भवन्तीति बहुलं छन्दसीति क्विप्प्रत्ययः। बलगहनं वलगान् कृत्याविशेषान् भूमौ निखातान् शत्रुभिर्विनाशार्थं हन्तीति वलगहा वाक् पूर्ववत् क्विप् ॥ तां बलगहनम्। वलो वृणोतेः ॥ यस्य बधार्थं क्रियते। तं रोगादिभिः वृण्वन् प्रच्छादयन् गच्छतीति वलगः ॥ वैष्णवीं विष्णुदेवत्यां वाचं वदेति सम्बन्धः। उत्किरति। इदमहं यत्करोमि तद्वलगं कृत्याविशेषमुत्किरामि। उद्धरामि। यं मे निष्ट्यः ॥ यं वलगं मे मम निष्ट्यः पुत्रः स हि निर्गत्य शरीरात्ततो विस्तीर्णो भवति। यं च अमात्यः

अमाशब्दो गृहवचनः सहवचनो वा । अव्ययात्त्यप् ॥ तत्र भव इत्यस्मिन्नर्थे गृहे सह वा भवति अमात्यः यं वलगं निचखान निखनति । छन्दसि लुङ्लङ्लिटः सर्वेषु कालेषु भवन्ति । द्वितीयमुत्किरिति । यं मे समानः । विद्यादिभिः सदृशः । असमानः विद्यादिभिरसदृशः ॥ शेषं व्याख्यातम् ॥ तृतीयमुत्किरति । सबन्धुः । समानो बन्धुः सबन्धुः स्वजनः । असबधुस्तद्विपरीतः । शेषं व्याख्यातम् । चतुर्थमुत्किरति । सजातो भ्राता स हि समानजन्मा भवति ॥ असजातः असमानजन्मा भ्रातृसदृशः । शेषं समानव्याख्यानम् । सर्वानुत्किरति ॥ उत्कृत्यां किरामि उत्किरामि कृत्याम् ॥ २३ ॥

यथाखातं स्पृशति । स्वराडसि । स्वकीयमेव राज्यं यस्य स स्वराट् सपत्नान् शत्रून् हन्ति सपत्नहा । यस्त्वं स्वराडसि सपत्नहा च सोऽस्मानपीत्थम्भूतान् कुर्विति शेषः ॥ एवं वक्ष्यमाणेषु त्रिषु मन्त्रेषु योज्यम् ॥ सत्रराट् सत्रं द्वादशाहादि तत्र राजति सततं वा राजतीति सत्रराट् । अभिमातिहा। अभिमातिरननुकूलः शत्रुः तं हन्ति अभिमातिहा । जनराडसि । जने राजति जनराट् ॥ रक्षोहा । रक्षांसि हन्ति रक्षोहा ॥ सर्वराडसि सर्वस्य राजति सर्वराट् ॥ अमित्रान्हन्तीति अमित्रहा ॥ २४ ॥

प्रोक्षत्येतान् ॥ रक्षोहणः । रक्षसां हन्तॄन् वः युष्मान् । वलगहनः । वलगस्य हन्तॄन् । प्रोक्षामि सिञ्चामि वैष्णवान् विष्णुदेवत्यान् । अवनयति । रक्षसां हन्तॄन् वः युष्मान् वलगस्य हन्तॄन् प्रति अवनयामि । अवाचीनम् । अपः प्रापयामि वैष्णवान् । अवस्तृणाति रक्षोहन्तॄन् युष्मान् वलगस्य हन्तॄन् वैष्णवान्प्रति अवाचीनान् दर्भान् स्तृणामि । अधिषवणे फलके उपदधाति । रक्षसां हन्तृणी वां युवां वलगस्य हन्तृणी उपदधामि स्थापयामि वैष्णवी विष्णुदेवत्ये । पर्यूहति रक्षोहणौ वां पर्यूहामि प्रापयामि संलग्ने करोमि । व्याख्यातमन्यत् तत्राधिषवणं चर्म निदधाति वैष्णवमसि विष्णुदेवत्यमसि । तस्मिन् ग्रावाणः पञ्च वैष्णवा विष्णुदेवत्या भवथ ॥ २५ ॥

इत उत्तरमौदुम्बरीमन्त्राः ॥ अभ्रिमादत्ते ॥ देवस्य त्वेति व्याख्याते द्वे यजुषी । यवानावपति ॥ यवोऽसि यु पृथग्भावे ॥ यौतीति यवः । यस्माद्यवतक्रियायोगाद्यव इत्येतन्नामा त्वमभूः तस्माद्यवय पृथक्कुरु अस्मत् अस्मत्तः द्वेषः अप्रीतिः दौर्भाग्यं यवय अरातीः ।

अदौर्भाग्यं दानं च प्रार्थ्यते । औदुम्बरीं प्रोक्षति । दिवे त्वा ॥ दिवे अर्थाय त्वां प्रोक्षामीति शेषः ॥ अन्तरिक्षाय त्वा ॥ पृथिव्यै त्वा ॥ प्रथमेन यजुषा व्याख्याते द्वे यजुषी ॥ अवटे शेषमासिञ्चति । शुन्धन्तां लोकाः ॥ शुन्ध्यन्तामिति विकरणव्यत्ययः । पितरो येषु लोकेषु सीदन्ति आसते ते पितृसदनाः ॥ बर्हींषि प्रास्यति पितृषदनमसि ॥ पितरो सीदन्तीति पितृषदनम् ॥ २६ ॥

उच्छ्रयति । उद्दिवꣳ स्तभान । दिवं द्युलोकं स्तम्भय ॥ आ अन्तरिक्षं पृण ॥ पृ पालनपूरणयोः ॥ आपृण आपूरयान्तरिक्षम ॥ दृंहस्व पृथिव्यां द्वितीयार्थे सप्तमी ॥ दृढीकुरु पृथिवीं । यद्वा पृथिव्यामवस्थितां पृथिवीं दृंहस्व । मिनोति ॥ द्युतानस्त्वा ॥ देदीप्यमानः त्वां मारुतो वायुर्मिनोतु । डुमिञ् प्रक्षेपणे । प्रक्षिपतु । मित्रावरुणौ । च मिनुतां ध्रुवेण स्थिरेण धर्मणा धारणेन ॥ पर्य्यूहति । छन्दसि वनसनरक्षिमथामितीन्प्रत्ययः ॥ ब्रह्म वनोति ब्रह्मवनि अविभक्तिको निर्देशः ब्रह्मवनि त्वाम् । क्षत्रवनि त्वा । क्षत्रं वनोति क्षत्रवनि एवं रायस्पोषवनि धनपोषवनि त्वां पर्य्यूहामि । ऊह वितर्के । परिपूर्वस्य पूरणमर्थः ॥ पर्यूषति ब्रह्म दृंह । ब्रह्मादीनि दृढीकुरु इति व्याख्यातम् ॥ २७ ॥

आलभ्य वाचयति । ध्रुवासि । यथा त्वं ध्रुवा स्थिरासि एवमयं यजमानो ध्रुवः स्थिरः शाश्वतः अस्मिन्नायतने स्थाने अस्मिन् लोके प्रजया पशुभिश्च भूयात् । विशाखे जुहोति । घृतेन द्यावापृथिवी । घृतेनानेन हे द्यावापृथिव्यौ युवां पूर्येथाम् । सदसि छदिराधि निदधाति इन्द्रस्य छदिर्भवसि । सर्वजनानां छाया विश्वगोत्रा ह्यस्मिन् ब्राह्मणा आस इति श्रुतिः ॥ २८ ॥

परिश्रयति परि त्वा । अनुष्टुप् ॥ ऐन्द्री अनिरुक्ता परिभवन्तु परिगृह्णन्तु त्वां हे गिर्व्वणः इन्द्रो वै गिर्वण इति श्रुतिः ॥ गिरो वाचः इमा ऋग्यजुस्सामलक्षणाः विश्वतः सर्वतः । कथंभूतं त्वां परिगृह्णन्तु वृद्धायुं वृद्धाः आयवो मनुष्याः मरुल्लक्षणा यस्य स तथोक्तः ॥ यद्वा वृद्धायुरिति समानाधिकरणः वृद्धश्चासावायुश्च महामनुष्य इत्यर्थः ॥ अनुवृद्धयः सवनक्रमेणानुवृद्धा वाचः । किञ्च जुष्टा भवन्तु त्वां परिगृह्णानाः । त्वया आसेविता भवन्तु ॥ जुष्टयः प्रीतिकराः ॥ २९ ॥

इन्द्रस्य स्यूः । परिषीवणग्रन्थिकरणाभिमर्शनानि सदस इन्द्रोपलक्षितानि भवन्ति ॥ आग्नीध्रं स्पृशति ॥ वैश्वदेवमसि ॥ ३० ॥

इत उत्तरं षोडश धिष्ण्यमन्त्राः ॥ तत्र श्रुतिः ॥ ते वै द्विनामानो भवन्तीति । अग्नीध्रम् ॥ विभूरसि प्रवाहणः ॥ विभवतीति विभूः प्रवाहयति गमयतीति प्रवाहणः । तस्य हि दक्षिणत उत्तरतश्च ऋत्विजो गच्छन्ति ॥ यस्त्वं विभूश्च नामतः, प्रवाहणश्चासि तं त्वां स्थापयामीति शेषः ॥ एवमुत्तरेष्वपि योज्यम् ॥ होतुर्धिष्ण्यम् । वह्निरसि हव्यवाहनः । प्रशास्तुः ॥ श्वात्रः । आशु क्षिप्रमततीति श्वात्रः । प्रचेताः प्रकृष्टप्रज्ञानः ब्राह्मणाच्छंसिनः ॥ तुथोऽसि विश्ववेदाः । ब्रह्म वै तुथ इति श्रुतिः । विश्ववेदाः सर्वज्ञः सर्वधनो वा॥३१॥

पोतुः ॥ उशिगसि कविः ॥ वश कान्तौ । तस्य कृतसंप्रसारणस्योशिक् । कान्तोऽसि । कविः क्रान्तदर्शनः नेष्टुः अङ्घारिरसि बम्भारिः ॥ अंहःशब्दः पापवचनः हकारस्य घकारश्छान्दसः तस्य अरिः अङ्घारिः । बम्भारिः । डुभृञ् धारणपोषणयोः ॥ भर्त्ता अच्छावाकस्य ॥ अवस्यूरसि दुवस्वान् ॥ अवसमन्नं तदिच्छति क्यप् ॥ अवः ऊप्रत्यय औणादिकः । स हि पुरोडाशशृगलमिच्छति । दुव इति हविर्नाम । दुवस्वान् हाविष्मान् ॥ अच्छावाको हि पुरोडाशशृगलं लभते ॥ मार्ज्जालीयः शुन्ध्यूरसि मार्जालीयः शुन्ध्यूः शोधनः मार्जालीयः मृजूष् शुद्धौ ॥ तत्र पात्राणि प्रक्षाल्यन्ते ॥ इत उत्तरमनुदिशति आहवनीयम् ॥ सम्राडसि कृशानुः ॥ सम्राट् संगतदीप्तिः ॥ कृशानुः कृशो यजमानः पयोव्रतैरुपक्षीणः एतमनुगच्छतीति कृशानुः बहिष्पवमानदेशः परिषद्योऽसि पवमानः ॥ परिसदनीय उद्गातृप्रभृतिभिः पवमानः प्रसिद्धः चात्वालम ॥ नभोऽसि प्रतक्का ॥ न भातीति नभः ॥ यद्वा नभ आकाशरूपः प्रतक्का तकतिर्गत्यर्थः । प्रदक्षिणमेनं तकन्ति निर्गच्छन्ति ऋत्विज इति प्रतक्का शामित्रदेशम । मृष्टोऽसि मृष्टकारी शृतं हविर्मृष्टं भवति ॥ हव्यसूदनः ॥ सूदः सूपकार उच्यते हविषः पक्ता च । औदुम्बरीम् । ऋतधामासि स्वर्ज्योतिः । ऋतं यज्ञस्तस्य धाम स्थानं जन्म वा ऋतधाम उद्गातारो यज्ञस्य कारणभूतास्तिष्ठन्ति जनयन्ति वा यज्ञं स्वर्ज्योतिः आदित्यज्योतिः ॥ ३२ ॥

ब्रह्मसदनम् । समुद्रोऽसि विश्वव्यचाः ॥ समुद्र इव त्वमसि

सर्वव्यश्नुनः । तत्र हि समुद्र इवागाधो ध्यानेन ब्रह्म तिष्ठति विश्वं च यज्ञं व्यश्नुति गच्छति कृतावेक्षणेन ॥ शालाद्वार्य्यम् । अजोऽस्येकपात् ॥ अजः अज गतिक्षेपणयोः ॥ अजनः अयमेवाहवनीयादिभावेन अजति गच्छति । एकपात् । एकः प्राजहितः । एकं पातीति एकपात् स हि अनुगतस्तस्मादुद्ध्रियते॥ हे प्राजहित अहिरसि बुध्न्यः। अहिः अयनः अहिः शालाद्वार्यादिभावैरेति बुध्नमादिरुच्यते । तत्र भवो बुध्न्यः ॥ स हि प्रथमं बुध्यते ॥ नाम्नैवात्र धिष्ण्यानां स्तुतिः उक्तं च ॥ स्तुतिः स्वनाम्ना वाधिककर्म्मरूपैः ॥ सदोऽभिमृशति वागस्यैन्द्रमसि । वाचास्मिन्कर्म्म कुर्वन्ति इति वाक्शब्देनाभेदोपचारेण सदोऽभिधीयते । ऐन्द्रमिति देवताभिप्रायं सदोऽसीति नामव्युत्पत्यभिप्रायम् ॥ सीदन्त्यस्मिन् ब्राह्मणा इति सदः ॥ द्वार्ये ॥ ऋतस्य द्वारौ । ऋतस्य यज्ञस्य ये युवां द्वारौ द्वारदेशस्थायिन्यौ ते मां मा संताप्तम् ॥ संतापश्च प्रवेशनिष्क्रमणस्खलनाभिप्रायः ॥ अभिमन्त्रणमुत्तरैः । सूर्यमभिमन्त्रयते ॥ अध्वनाम् ॥ हे सूर्य अध्वपते मार्गपते अध्वनां संचाराणां मध्ये वर्त्तमानमिति शेषः ॥ प्र मा तिरः । प्रतिर प्रवर्द्धय माम् । संचारेण हि गच्छतो वृद्धिर्भवत्येव ॥ किञ्च त्वत्प्रसादात् स्वस्ति अविनाशः मे मम अस्मिन् पथि मार्गे देवयानप्रापके भूयात् भवतु ॥ ३३ ॥

ऋत्विजः ॥ मित्रस्य मा ॥ मित्रस्यादित्यस्य चक्षुषा मा माम् ईक्षध्वम् मित्रस्य हि शान्तं चक्षुः । धिष्ण्यान् ॥ अग्नयः सगराः ॥ हे अग्नयः सगराः ॥ गृ स्तुतौ ॥ समानगराः समानस्तुतयः ॥ किञ्च ये यूयं समानस्तुतयो भवथ ते सगरेण नाम्ना समानस्तुतिनाम्नाभिहिताःसन्तः। समानं हि नाम धिष्ण्या इति । ते वै द्विनामानो भवन्तीति द्विनामता। रौद्रेण रुद्रदेवत्येनानीकेन मुखेन पात पालयत माम् । हे अग्नयः पिपृत । पूरयत धनैः माम् । अग्नयः गोपायत रक्षत माम् । किञ्च हे अग्नयः । नमो वोऽस्तुः । अयं नमस्कारः वो युष्मभ्यं भवतु । मा मा हिꣳसिष्ट । तृहि हिंसि हिंसायाम् । मा हिंसिष्ट माम् । यदत्र पुनरुक्तं तदभ्यासे भूयांसमर्थं मन्यन्त इति परिह्रियते ॥ ३४ ॥

पृषदाज्यं गृह्णाति । ज्योतिरसि । यथा त्वं ज्योतिरसि आज्यत्वात् । यथा च विश्वरूपं वैचित्र्यात्त्वमसि । एवं विश्वेषां देवानां समित् समिन्धनमसि । वैसर्ज्जनानि जुहोति । त्वं सोम । सौमी

गायत्री अनवसानीया । हे सोम त्वं तनूकृद्भ्यः । कृती छेदने । तनूः शरीरं ये कृन्तन्ति वृकादयः ते तनूकृतस्तेभ्यो गोपायेत्येतदधिक्रियते ॥ द्वेषोभ्योऽन्यकृतेभ्यः ॥ यानि च द्वेषांसि अन्यकृतानि-दुर्जनकृतानि तेभ्यश्च गोपाय यतस्त्वम् । उरुयन्तासि । बहुप्रकारं नियन्ता नियामकोऽसि । किञ्च वरूथं गृहं यज्ञरूपं च गोपाय ॥ यद्वा तन्वा शरीरेण क्रियन्ते यानि द्वेषांसि अन्यकृतानि च पुत्रदारप्रभृतिभिः कृतानि तेभ्यो गोपायेति तुल्यम् ॥ द्वितीयं जुहोति । जुषाणः एकपदा विराट् अप्तुदेवत्या ॥ अप्तुश्चात्र सोमः ॥ जुषाणः सेवमानः प्रीयमाणो वा अप्तुः । आप्नोति तूर्णं पीतः सन् शरीरमित्यप्तुः सोमः आज्यस्य वेतु पिबतु ॥ ३५ ॥

वाचयति । अग्ने नयेति । द्वे आग्नेय्यौ त्रिष्टुभौ । हे भगवन्नग्ने नय प्रापय । सुपथा शोभनेन मार्गेण राये धनाय यज्ञफलाय अस्मान्-विश्वानि सर्वाणि । देव । दानादिगुणयुक्त वयुनानि प्रज्ञानानि विद्वान् । जानानः नहिते विज्ञानशक्तीनां प्रमाणमस्तीत्यभिप्रायः । किञ्च युयोधि । यु पृथग्भावे पृथक्कुरु । अस्मत् अस्मत्तः ॥ जुहुराणं हुर्छा कौटिल्ये हूर्छः सनो लुक् छलोपश्चेत्यानच् प्रत्ययः ॥ हूर्छितुमिच्छति कुटिलीकर्त्तुमिच्छति यदेनः पापम् अभिलषितक्रियाप्रतिबन्धि यत्पापम् ॥ किं कारणमिति चेत् भूयिष्ठां बहुतमां ते तव नमउक्तिं नम इत्यन्ननाम ॥ वच परिभाषणे ॥ अस्य स्त्रियां क्तिः । उक्तिर्भणनम् ॥ नमसा हविर्लक्षणेनाभ्युद्यतेन पुरोडाशपुरोनुवाक्यायाज्यावचनं नमउक्तिः । तां नमउक्तिं विधेम ॥ विदधातिः करोत्यर्थः ॥ करवाम ॥ ३६ ॥

आग्नीध्रीये जुहोति ॥ अयं नः ॥ अयं । अग्निः नः अस्माकं वरिवः धनं कृणोतु करोतु अयमेव च मृधः संग्रामान् प्रभिन्दन्पुर एतु अग्रतो यातु ॥ अयमेव च वाजानन्नानि जयतु वाज सातौ ॥ अन्नसंभजने निमित्तभूते अयमेव च ॥ शत्रून् जयतु जर्हृषाणः ॥ हृष तुष्टौ अत्यर्थं हृष्यन् ॥ ३७ ॥

आहवनीये जुहोति ॥ उरु विष्णो ॥ वैष्णवी अनुष्टुप् ॥ हे विष्णो यज्ञ उरु महत् विक्रमस्व व्याप्नुहि । देवयानाभिप्रायं त्रिलोकाभिप्रायं वा ॥ उरु विस्तीर्णशरीरं क्षयाय निवासाय । महद्गृहनिवासाय नः अस्मान्कृधि कुरु ॥ क्षयो निवास इत्याद्युदात्त-

त्वात् क्षयशब्दो निवासवचनः । किञ्च घृतं पिब ॥ घृतयोने अग्ने अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीदिति श्रुतिः ॥ प्र प्र यज्ञपतिं तिर ॥ प्रसमुपोदः पादपूरणा इत्यभ्यासः ॥ तिरतिर्वृद्ध्यर्थः ॥ प्रतिर वर्धय यज्ञपतिं यजमानं पुत्रपश्वादिभिः ॥ ३८ ॥

सोमं निदधाति ॥ देव सवितः ॥ हे देव सवितः अयं तव सोमः समर्पितः तं रक्षस्व गोपाय मा त्वा दभन् ॥ तस्मिंश्च रक्षणकर्म्मणि प्रवृत्तं त्वां मा असुरा दभ्नुयुः । दभ्नोतिर्बधकर्म्मा ॥ यजमान उपतिष्ठते ॥ एतत्त्वं हे देव सोम एतत्त्वं देवः सन् देवान् उप अगाः । उपगतवानसि । अभिनयेन दर्शयति ॥ इदमहं मनुष्यान् ॥ उपगच्छेयम् । इत्यनुषङ्गः । सह रायस्पोषेण सहितो धनपोषेण ॥ निष्क्रामति । स्वाहा निर्व्वरुणस्य ॥ स्वः अहं विगृह्य वचनम् । अनेन देवानां सोमप्रदानेनात्मानं विक्रीणीय स्व आत्मीयोऽहमस्मि अस्माच्च हेतोर्निर्मुच्ये निर्मुक्तोऽहं वरुणस्य संबन्धि नः पाशात् । यद्वा सुहुतः सोमोऽस्तु ॥ अहं तु इदानीमेव वरुणस्य पाशान्निर्मुच्ये ॥३९॥

समिधमादधाति ॥ अग्ने व्रतपाः ॥ यजमानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययो अधस्तनं कर्म्मकलापं कृत्वाथेदानीं यथास्वं शरीरे कुर्वाण आह ॥ अग्ने व्रतपाः त्वे व्रतपाः या तव तनूः ॥ व्रतपाशब्दस्यामन्त्रितस्याभ्यासे भूयांसमर्थं मन्यन्ते इत्यतिशयार्थः त्वे इति द्वितीयार्थे शेप्रत्ययः ॥ हे अग्ने अतिशयेन व्रतस्य गोपायितः त्वां ब्रवीमि । या तव संबन्धिनी तनूर्म्मयि अभूत अभिनयेन दर्शयति । एषा सा त्वयि भवतु ॥ यो मम तनूः या च मम तनूः त्वयि अग्ने अभूत इयं सा मयि भवतु ॥ किञ्च यथा यथं नौ व्रतपते । व्रतानि । यथास्वे यथायथं यथात्मीयम् । आवयोः हे व्रतपते अग्ने व्रतानि कर्माणि सन्तु । किञ्च अनु मे दीक्षां दीक्षापतिरमंस्त । अन्वमंस्त अनुमतवान् । मम दीक्षां दीक्षापतिः सोमः । अनुतपस्तपस्पतिः । अनुमतवांश्च तप उपसदः तपसः पतिः सोमः तपःप्रधानत्वात्तपःशब्देनोपसद उच्यन्ते ॥ ४० ॥

यूपाहुतिः । उरु विष्णो व्याख्यातम् ॥ ४१ ॥

अभिमृशति यूपम् । अत्यन्यान् अगाम् । अतीत्यान्यान् यूपलक्षणलक्षितान् वृक्षान् अगां त्वां प्रत्यागतः नान्यान् उपागाम् । भवन्तं च दृष्ट्वा नान्यान् यूपवृक्षान् उप अगाम् । उपागतामवस्मि

किञ्च अर्वाक्त्वा परेभ्योऽविदं त्वत्तः पराञ्चो ये वृक्षास्तेभ्यस्त्वा अर्वाक् अविदम् विदिर्ज्ञानार्थः । लाभार्थो वा । लब्धवानस्मि ज्ञातवान् वा परः परस्ताच्च अवरेभ्यः अविदमित्यनुवर्तते । तं त्वामुक्तलक्षणं जुषामहे सेवामहे हे देव दानादिगुणयुक्त वनस्पते देवयज्यायै देवयागाय किञ्च देवाश्च त्वां भवन्तं देवयागाय जुषन्तां सेवन्ताम् । उपस्पृशति । विष्णवे त्वा । तादर्थ्ये चतुर्थी । विष्णवे यज्ञाय त्वाम् । उपस्पृशामीति शेषः । कुशतरुणमन्तर्दधाति । ओषधे त्रायस्व व्याख्यातम् । प्रहरति । स्वधिते मैनं हिंसीः व्याख्यातः ॥ ४२ ॥

पतन्तमभिमन्त्रयते । द्यां मा लेखीः । लिख अक्षरविन्यासे । इह तु हिंसार्थः । द्युलोकं मा हिंसीः । अन्तरिक्षलोकं मा हिंसीः । पृथिव्या संभव संगतो भव । वज्ररूपत्वाद् यूपस्य लोकानां शान्तिराशास्यते । कस्मात्त्वमेवमुच्यसे । द्यां मा लेखीरित्यत आह अयं हीति ॥ हिशब्दो यस्मादर्थे । यस्मादयं स्वधितिर्वज्ररूपः कुठारः ॥ तेतिजानः ॥ तिज निशाने इह तूत्साहार्थः ॥ उत्सहमानः प्रणिनाय प्रणयति महते सौभगाय सुभगो यज्ञस्तस्य हि महदैश्वर्यं विद्यते । शोभनं च ॥ स्वार्थे अण् महते यज्ञायेत्यर्थः ॥ सौभाग्याय वा स्थाणौ जुहोति । अतस्त्वं देव वनस्पते । अतस्त्वम् अस्मात्स्थाणोः त्वं शतवल्शः बह्वङ्कुरः शतशाखो विरोह वयं च सहस्रवल्शाः । बह्वङ्कुराः पुत्रपौत्रादिभिः विरुहेम प्रजायेमहीत्याशीः ॥ ४३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चमोऽध्यायः ।

अथ षष्ठोऽध्यायः ॥

अभ्रिमादत्ते । देवस्य त्वा । परिलिखति । इदमहम् । यवानावपति । यवोऽसि ॥ प्रोक्षति । दिवे त्वा । शेषमासिञ्चति शुन्धन्तां लोकाः पितृषदनाः ॥ दर्भान् क्षिपति ॥ पितृषदनमसि । एतानि यजूंषि व्याख्यातानि ॥ १ ॥

प्रथमशकलं प्रास्यति ॥ अग्रेणीरसि । अग्रे प्रथमं यूपस्य छिद्यमानस्यापनीयत इत्यग्रेणीः ॥ यूपावयवभूत इत्यर्थः ॥ यद्वा अग्रेऽवस्थितो यूपमवटं प्रति नयतीति अग्रेणीः पुरःसर इत्यर्थः । यस्त्वमग्रेणीरसि स्वावेशश्च उन्नेतृणामध्वर्य्वादीनां स्वावेशः । ते ह्येनमवटे सुखेनावेशयन्ति स्थापयन्ति ॥ स हि लघुप्रमाणो भवति । स त्वं हे यूपशकल एतस्य वित्तात् । विद ज्ञाने । एतस्य कर्मणो विद्धि ।

विदितार्थो भव कतमं तत्कर्म इति चेत्। अधि त्वा स्थास्यति ॥ अधीत्युपरिभावमैश्वर्यं वा। अधि उपरि यूपस्त्वां स्थास्यति। यूपमनक्ति ॥ देवस्त्वा। देवः त्वां हे यूप सविता मध्वा मधुस्वादेनाज्येन अनक्तु अञ्जयतु। चषालं प्रति मुञ्चति। सुपिप्पलाभ्यः। पिप्पलं फलं शोभनफलाभ्य ओषधीभ्योऽर्थाय त्वां प्रतिमुञ्चामीति वाक्यशेषः ॥ उच्छ्रयति द्यामग्रेण ॥ यूपस्य महिमोच्यते द्यां द्युलोकम्। अग्रेण अस्पृक्षः स्पृष्टवानसि आ अन्तरिक्षं मध्येनाप्राः। प्रा पूरणे आप्राः पूरितवानसि। अन्तरिक्षं मध्येन पृथिवीमुपरेण उपरमित्यनेन प्रदेशेन यूप इत्युपरशब्देन अनिष्टप्रदेश उच्यते यूपस्य अदृंहीः दृढीकृतवानसि ॥ २ ॥

मिनोति ॥ या ते धामानि त्रिष्टुप्। यूपदेवत्या यूप उच्यते। या यानि ते तव सम्बन्धीनि धामानि स्थाननामजन्मज्योतिर्वचनो धामशब्दः स्थानानीहाभिप्रेतानि। उश्मसि कामयामहे। गमध्यै गमनाय। यानि त्वदीयानि स्थानानि कामयामहे वयं गमनायेति यद्वृत्तयोगादिह तदोऽनुप्रयोगो भवितुमर्हति तत्र तेषु स्थानेषु गावो रश्मयो भूरिशृङ्गा बहुदीप्तयः। ज्वलन्नामसु शृङ्गाणीति पठितम् ॥ अयासः अयनाः गन्तारः। अत्राह तदुरुगायस्य विष्णोः ॥ अत्रशब्दस्तत्रशब्दस्यार्थे परोक्षत्वात्। अह इति विनिग्रहार्थीयः। तत्रैतत् उरुगायस्य महागतेर्विष्णोः सम्बन्धि परममुत्कृष्टं पदं। आदित्यमण्डलाख्यम्। अवाचीनं भारि भाति तकारस्य रेफश्छान्दसः ॥ भूरि बहु प्रकारं पांशुभिः पर्यूषति ॥ ब्रह्मवनि त्वा ॥ व्याख्यातम्। पर्यूषति ब्रह्मदृꣳह। व्याख्यातम् ॥ ३ ॥

वाचयति। विष्णोः कर्माणि ॥ द्वे गायत्र्यौ ॥ वैष्णव्यौ ॥ हे ऋत्विजः विष्णोर्यज्ञस्य कर्माणि वीर्याणि पश्यत। यतस्तसिल्प्रकरणे आद्यादिभ्य उपसंख्यानं कर्त्तव्यम्। यतो यैर्वीर्यैः व्रतानि व्रतमिति कर्मनाम। आधानपशुसोमप्रभृतीनि कर्माणि आत्मनि। पस्पशे। स्पश बन्धने। बद्धवान्। विष्णुर्हि अधिष्ठात्री देवता यज्ञानाम्। यद्वा विष्णोर्वीर्याणि पश्यत। यो व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानिस्वान्यप्रमत्ता एतानि कुरुतेत्येवं पस्पशे निबद्धवान्। किञ्च यश्च विष्णुः इन्द्रस्य सखा वृत्रवधादिषु कर्मसु। कथम्भूतः सखा। युज्यः। युजिर् योगे योगार्हः अनुरूप इत्यर्थः ॥ ४ ॥

चषालमुदीक्षते । तद्विष्णोः । तदः प्रतियोगिनात्र पूर्वं यद्वृत्तेन भवितव्यम् । यद्विज्ञानघनमानन्दस्वभावं तद्विष्णोः परमं पदम् । सदा पश्यन्ति सूरयः पण्डिताः वेदान्तज्ञानरहस्यविवृतसम्पुटाः । कथम्भूतं पश्यन्ति । दिवीव । द्युलोकमध्यगतमिव चक्षुः । आदित्यमण्डलम् । आततं विस्तारितं चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते । एवं चक्षुर्मित्रस्य वरुणस्याग्नेः । तच्चक्षुर्देवहितमिति च । यद्वा यद्वृत्तसम्बन्धाद् द्वितीयोऽर्द्धर्चः प्रथमः क्रियते । परमपदशब्देनादित्य उच्यते । इवश्चानर्थकः । यद् दिवि चक्षुरादित्याख्ये विततं तद्विष्णोः परमं तुरीयं पदं सदा पश्यन्ति पण्डिताः । अधियज्ञविदः ॥ ५ ॥

परिव्ययति । परिवीरसि । व्येञ् संवरणे इत्यस्य क्तप्रत्ययार्थे क्विप् । सम्प्रसारणम् । अस्माभिः परिवीतः परिवारितः परिवेष्टितो वा त्वमसि । परिव्ययन्तां हे यूप त्वां दैवीर्विशः । दैव्यो वा एता विशो यत्पशव इति श्रुतिः । त्वत्प्रसादाच्च परिव्ययन्तां परिवारयन्तु इमं यजमानं रायो धनानि मनुष्यणां मध्ये निर्धारणे षष्ठी । स्वरुमवगूहति । दिवः सूनुरसि । द्युलोकाद्वर्षति तस्माद् यूपो जायते यूपात् स्वरुरिति अनया प्रणालिकया दिवः सूनुः स्वरुः । द्वादश उपशयस्तं निदधाति । एष ते पृथिव्याम् । एष ते तव पृथिव्यां लोक आश्रयः स्थानमित्यर्थः । पशवो वै यूपमुच्छ्रयन्तीति श्रुतेः । यूपस्य पशुना भवितव्यमित्यत आह आरण्यस्ते पशुः ॥ ६ ॥

तृणमादत्ते । उपावीरसि । उप समीपे ऽवस्थितः अवति रक्षतीत्युपावीः । द्वितीयः सखा त्वमसीत्यर्थः । पशुमुपस्पृशन्ति । उपदेवान् उपाशुः । उपगच्छन्तु देवान्प्रति । दैवीर्विशः । दैव्यो वा एता विशो यत्पशव इति श्रुतिः । कथम्भूतान् देवान् उशिजः मेधाविनः । वह्नितमान् वोढृतमान् वहन्ति हि ते यजमानं स्वर्गं प्रति कर्मण्यङ्गभावमुपगच्छन्तः । देव त्वष्टर्वसु रम । हे देव त्वष्टर्वसु रम पशुलक्षणं वसु रमय णिचो लोपश्छान्दसः । हव्या ते स्वदन्ताम् । एवं त्वष्टारमुक्त्वाथेदानीं पशुमाह हव्या ते हवींषि ते त्वदीयानि स्वदन्ताम् । स्वद स्वर्द आस्वादने । णिचो लोपः । आस्वादयन्त्विति शेषः ॥ ७ ॥

रेवती रमध्वम् । लिङ्गव्यत्ययः । हे रेवन्तो धनवन्तः पशवो रता भवत । त्वमपि । बृहस्पते । धारय निश्चलीकुरु वसूनि पशुलक्षणानि । पशुं बध्नाति । ऋतस्य त्वा । यज्ञस्य पाशेन त्वा त्वां हे देव हविः हे पशो प्रतिमुञ्चामि । प्रतिपूर्वो मुचिर्बन्धने वर्त्तते । बध्नाति । एवं पशुं सम्बोध्याथ मनुष्यस्य शमित्रादेः समर्पयति । धर्षा मानुषः । धर्षेति विकरणव्यत्ययश्छान्दसः प्रथमपुरुषस्य स्थाने मध्यमः पुरुषः । धृष्णोतु शक्नोतु शमयितुं मानुषः । यद्वा यस्माद्दतस्य यज्ञस्य त्वा देव हविः पाशेन त्वां प्रतिमुञ्चामि । प्रतिपूर्वो मुचिर्बन्धने वर्त्तते । बध्नामि । तस्मात्त्वां धृष्णोतु मानवः ॥ ८ ॥

यूपे बध्नाति पशुम् । देवस्य त्वा । व्याख्यातम् । अग्नीषोमाभ्यां जुष्टमभिरुचितम् । नियुनज्मि । निबध्नामि । पशुं प्रोक्षति । अद्भ्यस्त्वौषधीभ्यः । हे पशो अद्भ्यः त्वामारभ्य ओषधीभ्यश्च आरभ्यादितः सर्वं सम्पद्यते । अग्नीषोमाभ्यां त्वां जुष्टमभिरुचितं पशुं प्रोक्षामि मेध्यं करोमि । अमुमेवार्थं श्रुत्या स्पष्टयति । इदं हि यदा वर्षत्यथौषधयो जायन्ते इत्यादिकथा । अनु त्वेति व्याख्यातम् । इह त्वेवं सम्बन्धः । अद्भ्य आरभ्य अग्निषोमाभ्यां त्वां जुष्टं प्रोक्षामि हे पशो प्रोक्षमाणं त्वां मात्रादयोऽनुमन्यन्तामिति ॥ ९ ॥

आस्ये उपगृह्णाति अपां पेरुः । अपां पानशीलस्त्वमसि हे पशो अधस्तात् प्रोक्षति । आपो देवीः । आपो देव्यः स्वदन्तु आस्वादयन्त्वेतं पशुम् । को गुण इति चेत् स्वात्तश्चित्सद्देव हविः । आस्वादितं हि सन् शोभनं देवानां हविः पशुलक्षणं भूयात् । पशुं समनक्ति । सं ते प्राणः । सङ्गच्छतां तव प्राणो वातेन । हे पशो समङ्गानि यजत्रैः । सङ्गच्छन्तां हे पशो तवाङ्गानि यजत्रैर्यागैः । संयज्ञपतिराशिषा । सङ्गच्छतां यज्ञपतिर्यजमानः आशिषा यज्ञफलेन स्वरुशाखाभ्याम् ॥ १० ॥

पशोर्ललाटमुपस्पृशति । घृतेन स्वरुशाखावुच्येते । घृतेनाक्तौ उज्झितौ सन्तौ युवां पशून् पूजार्थे बहुवचनं त्रायेथां पालयेथां यजमानं वाचयति । रेवति । वाग्वै रेवती हे वाक् रेवति धनवति यजमाने प्रियं धा आविश अस्मिन्यजमाने प्रियमभिप्रेतं धाः धेहि आविश च । यजमानम् । उरोः महतोऽन्तरिक्षात् गोपाये-

ति शेषः । सजूर्देवेन वातेन समानप्रीतिः देवेन वातेन भूत्वा किञ्च अस्य पशुलक्षणस्य ॥ हविषः त्मना यज ॥ आत्मना यज मन्त्रेष्वङ्ग्यादेरात्मन इत्याकारलोपः ॥ समस्य तन्वा भव ॥ संभव च अस्य पशोस्तन्वा शरीरेण ॥ एतदुक्तं भवति ॥ यजमानरूपेण पशुरूपेण वा आत्मना च यज हे रेवति ॥ पश्चात्तृणमुपास्यति । वर्षो वर्षीयसि । तृणमुच्यते । हे वर्षो वर्षप्रभव ॥ अथवा विस्तीर्णवर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः धेहि ॥ जुहोति स्वाहा देवेभ्यः । जुहोति ॥ देवेभ्यः स्वाहा ॥ दैवे यजुषी ॥ ११ ॥

नियोजनीं चात्वाले प्रास्यति ॥ माहिर्भूः ॥ रज्जुरुच्यते मा सर्पाकारा भूयाः ॥ मा पृदाकुः भूयाः ॥ पृदाकुरजगरः ॥ पत्नीं पशुं प्रति नयन्वाचयति । नमस्त आतान ॥ पत्नी नमस्कारादिभिराशीर्भिर्यज्ञं पूजयति ॥ नमः ते तव हे आतान यज्ञ ॥ यज्ञो वा आतानो यज्ञं हि तन्वत इति श्रुतिः ॥ अनर्वा प्रेहि ॥ अनर्वा प्रत्यतोऽन्यस्मिन्ननाश्रितोऽन्यस्मिन् असपत्ने प्र इहि प्रगच्छ आसमाप्तेः ॥ घृतस्य कुल्याः ॥ कुल्या नद्यः घृतस्य नदीः उपतिष्ठमानाः प्रेहि । बह्वत्र घृतमाहितमित्यभिप्रायः । ऋतस्य पथ्यः अनु ॥ ऋतस्य पथिभवाः पथ्याः घृतस्य कुल्याः सान्नाय्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम् । अनुप्रगच्छ ॥ १२ ॥

एवं यज्ञं स्तुत्वेदानीमपः प्राह ॥ देवीरापः । हे देव्य आपः शुद्धाः सत्यो यूयं वोढुं वह प्रापणे ॥ वहत प्रापयत एनं पशुम् ॥ कथंभूताः सत्यः ॥ सुपरिविष्टाः ॥ साधु सर्वतो निविष्टाः पान्नेजनीपात्रे देवेषु पशुप्रापयतेति संबन्धः ॥ किञ्च वयमपि सुपरिविष्टाः ॥ देवेष्वितीहाप्यनुवर्त्तते ॥ देवेषु मध्येऽवस्थिताः तैरेव देवैः सुपरिविष्टाः तेषामेव देवानां परिवेष्टारो भूयाः स्म वयमित्याशीः ॥ १३ ॥

पशोः प्राणाञ्छुन्धति पत्नी यथालिङ्गम् । वाचं ते शुन्धामि शोधयामि ॥ उदकेन एवं सर्वत्र व्याख्येयम् ॥ मेढ्रशब्देन लिङ्गमुच्यते पायुशब्देन हदनप्रदेशः चरित्रशब्देन पादाः ॥ चरन्ति गच्छन्ति एभिरिति चरित्रशब्देन पादा उच्यन्ते ॥ १४ ॥

अध्वर्युयजमानौ पशुमाप्याययतः । मनस्ते ॥ मनः ते तव आप्यायताम् हे पशो ॥ एवं वागादीन्यपि व्याख्येयानि । अङ्गानि । यत्ते क्रूरं विकृतमशान्तं वा । यच्चावयवरूपमास्थितमध्यवसितं स्म-

मित्रा यत्र स्थितः शमितेत्यर्थः । तत्ते तव आप्यायतां निष्ट्याय-
ताम् । स्त्यै सङ्घाते । संहतं भवतु आनातं । तत्ते शुध्यतु । तच्च
तव शुध्यतु । जघनेन पशुमुदकं निनयतः । शमहोभ्यः शं सुखम् ।
अहरादिभ्यः कालविशेषेभ्यः अस्माकमस्त्विति शेषः । पशोर्वाहरा-
दिभ्यः सुखं भवतु । अग्रेण नाभिं तृणं निदधाति । ओषधे त्रायस्व ।
व्याख्यातः । प्रज्ञातयाभिनिदधाति । स्वधिते मैनम् । व्याख्यातम् ॥ १५ ॥

रक्षसां भागः । व्याख्यातम् । अपास्यति । निरस्तꣳ रक्षः ।
असु क्षेपणे निःक्षिप्तं रक्षः यजमानोऽभितिष्ठति । इदमहं यदेतत्तृण-
मभितिष्ठामि । तदिदमहं रक्षः अभितिष्ठामि । न केवलमभितिष्ठामि
किञ्च इदमहं रक्षः । अवाचीनम् । बाधे । एवमेव इदमहं रक्षः अ-
धमम् । अध्यानलक्षणं निकृष्टं तमो नयामि । वपाश्रयण्यावाच्छा-
दयति वपया । घृतेन द्यावापृथिवी वपाश्रयण्यौ द्यावापृथिव्यौ अ-
ध्यास्ते उच्येते । हे द्यावापृथिव्यौ युवां घृतेन उदकेन आत्मानं
प्रोर्णुवाथाम् । उर्णुञ् आच्छादने आच्छादयेथां परस्परमाहुतिपरि-
णामाभिप्रायमेतत् । तथा चोक्तं ते वा एते आहुती उत्क्रामतः इत्यु-
पक्रम्य आहुतिपरिणाममिदं जगदिति तृणाग्रमध्वर्युराहवनीये प्रा-
स्यति । वायो वे स्तोकानाम् हे वायो वेः विद ज्ञान इत्यस्य दश्वेति
रुत्वे कृते रूपम् । विद्धि अवगतार्थो भव । स्तोकानां विप्रुषां वपा
सम्बन्धिनाम् । ते ह्यत्र प्रतितिष्ठन्तीति वपामभिघारयति । अग्निरा-
ज्यस्य । आहवनीयोऽग्निः आज्यस्य वेतु पिबतु स्वाहा सुहुतमेत-
द्धविर्भवत्विति वपाश्रयण्यावनुप्रास्यति । स्वाहाकृते । हे वपाश्र-
यण्यौ युवां स्वाहाकृते सत्यौ आहुतिभावमुपगते सत्यौ ऊर्ध्वनभ-
सम् । ऊर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तमूर्ध्वनभसं मारुतं
वायुं गच्छतं प्राप्नुतम् । वायुर्हि प्रतिष्ठा यज्ञस्य ॥ १६ ॥

चात्वाले मार्जयन्ते इदमापः । त्र्यवसाना महापङ्क्तिरब्देवत्या
पावमानश्चान्त्यः पादः । हे आपः इदं पशुसंज्ञपननिमित्तं पापं
प्रवहत अपनयत किञ्च अवद्यम् । अवदनीयं च यत् अभिशापादि
मलं च यत् । यच्च मलं शरीरसंलग्नं प्रसिद्धं तच्च प्रवहत । य-
च्चाभिदुद्रोहानृतं द्रुह जिघांसायाम् । यदपि अभिदुग्धवानस्मि ।
असत्यमुच्चार्य यच्च शेपे अभीरुणम् । शप आक्रोशे । यच्च श-
पितवानस्मि अभीरुणमनपराधिनम् । अनपराधी हि न बिभेति ।

यद्वा अभिलुनाति छिनत्ति मर्माणि यदुच्चरितं सत् तदभीरुणम् । आपः मा मां तस्मात् एनसः पापात् पवमानश्च सोमः वायुर्वा मुञ्चतु पृथक्करोतु ॥ १७ ॥

पशुहृदयमभिघारयति । सं ते मनः । संगच्छतां तव मनः । मनसा अनेन पृषदाज्येनाभिघारितम् ॥ संगच्छतां च प्राणः प्राणेन ॥ अनेन पृषदाज्येनाभिघारितः सन् ॥ वसां गृह्णाति ॥ रेडसि । रिषतिर्हिंसार्थः ॥ या त्वं रिष्टा हिंसितेवाभासि अल्पत्वात् अल्पत्वं च पूष्णः श्रुतिः प्रतिपादयति ॥ रेडसीति लेलयेव हि द्यूः ॥ लेलयाशब्दश्चाल्पवचनः ॥ अग्निष्ट्वा श्रीणातु ॥ यां च त्वाम् ॥ अग्निः श्रपयन् भूयसीं करोति । आपस्त्वा समरिणन् । यां च त्वाम् । आपः समरिणन् समभरन् ॥ रिणातिर्बिभर्त्यर्थे । आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यो यं रसमुत्पादयन्ति सा वसेत्युच्यते ॥ तां त्वां वातस्य ध्राज्यै ॥ गृह्णामीति शेषः ॥ ध्राजिर्गतिः वातस्यान्तरिक्षेण गतिर्भवत्विति ॥ पूष्णो रंह्यै ॥ पूषा आदित्यः रंहतिर्गत्यर्थः ॥ आदित्यस्य । द्युलोकेन गतिर्भवत्विति गृह्णामि ॥ ऊष्मणो व्यथिषत् ॥ ऊष्मा अन्तरिक्षं तद्धि ब्रह्मण ऊष्मेव ॥ अन्तरिक्षार्थे च वसा गृह्यते होममन्त्रे अन्तरिक्षस्य हविरसीति लिङ्गात् ॥ ऊष्मणोऽन्तरिक्षस्य या भोक्त्री शक्तिस्तां व्यथिषत् व्यथयतु ॥ इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः ॥ अन्तरिक्षे च तृप्ते तत्प्रभवत्वात् वायुसूर्ययोरपि स्वकर्मक्षमता भवति तस्मादुच्यते वातस्य त्वा ध्राज्या इत्यादि ॥ प्रयौति ॥ प्रयुतं द्वेषः ॥ द्विष अप्रीतौ ॥ निवृत्तं पृथग्भूतं वसाया द्वेषः दौर्भाग्यम् ॥ १८ ॥

जुहोति । घृतं घृतपावानः ॥ वसायां हि घृतं विद्यते द्विरभिघारणस्य विहितत्वात् ॥ अत एवमाह घृतं पिबत हे घृतस्य पावानः ॥ पा पाने ॥ आतो मनिनित्यादिना वनिप् ॥ पातार उपभोक्तारः वसां पिबत । हे वसापावानः वसायाः पातारः हे वसे त्वम् । अन्तरिक्षस्य हविरसि स्वाहा सुहुतमेतद्धविर्भवतु ॥ दिशो व्याघारयति ॥ दिशः प्रदिशः । अत्र स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति कात्यायनः ॥ अत एवं व्याख्या ॥ दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः स्वाहा उदिग्भ्यः स्वाहा दिग्भ्यः स्वाहा ॥ १९ ॥

पशुꣳसंमृशति ॥ ऐन्द्रः प्राणः । इन्द्र आत्मा यस्य स्वभूतः प्राणः अस्य पशोः ॥ अङ्गे अङ्गे ॥ वीप्सा ॥ यावन्ति पशोरङ्गानि तेषु सर्वेषु ॥ निदीध्यत् ॥ दीधीङ् दीप्तिदेवनयोः ॥ अस्य धातोर्दधात्यर्थे वर्त्तमानात् कर्मणि लकारश्छान्दसः ॥ निधीयते निहितः ऐन्द्रश्च उदानः ॥ अङ्गे अङ्गे निधीतः निहितः ॥ एवं तावत् अनेन यजुषा पश्वङ्गेषु प्राणान् दत्वाथेदानीं देव त्वष्टरित्यादिकायाः त्रिष्टुभोऽर्द्धर्चेन त्वष्टारमाह । त्वष्टा हि रूपाणामीष्टे । हे देव त्वष्टः भूरि ते सꣳ समेतु बहुप्रकारं तव संबान्धि रूपं यद्विकृतमसिना तत्संगत्य एकीभवतु ॥ कथंभूतं सलक्ष्मा समानलक्षणं सत् ॥ यद्विषुरूपं नानारूपं भवति तत्समेत्विति संबन्धः ॥ एवं त्वां हे पशो प्राणैश्चाङ्गैश्चानेन मन्त्रेण दृढीकृतं सन्तं देवत्रा यन्तं देवान् प्रति गच्छन्तम् । अवसे अवनाय प्रीत्यै सखायः समानख्यानाः पशवः अनुमदन्तु अभ्यनुजानन्तु ॥ त्वा त्वां मातापितरश्च । बहुवचनं पूजार्थम् ॥ २०॥

प्रतिप्रस्थातोपयजति । समुद्रं गच्छ ॥ हविरुच्यते समुद्रं गच्छ तर्पणायेति शेषः ॥ एवमुत्तरेष्वपि योज्यम् ॥ मुखं विमृष्टे । मनो मे मम हार्दिं हृदये यच्छ निबध्नीहि निबध्यमानं हि मनः स्वादायतनान्न च्यवते तथोहोपयष्टात्मानं नानुप्रवृणक्तीति श्रुतेः ॥ स्वरुं जुहोति दिवं ते स्वरुरुच्यते द्युलोकं तव धूमो गच्छतु तृप्त्यै स्वर्ज्योतिः स्वःशब्देनादित्योऽभिधीयते ॥ ज्योतिश्चादित्यं गच्छतु तव ॥ पृथिवीं च भस्मनाऽऽपृण आपूरय स्वाहा ॥ २१ ॥

हृदयशूलमुपगूहति । मापो मौषधीः । हृदं वै पशोः संज्ञप्यमानस्येत्युपक्रम्य हृदयशूलं शुक्रमवैतीत्युक्तम् । अत एवमुच्यते मा हिꣳसीरपः मा च औषधीः हिंसीः इदानीं वरुणमाह ॥ हे वरुण राजन् धाम्नो धाम्नः धामशब्दः स्थानवचनः यतो यतः पाशसमन्वितात् स्थानात् बिभीमः ततस्ततः अस्मान्विमुञ्च यदाहुर्गायत्री वारुणी अनवसाना । यदाहुरघ्न्या इति अघ्न्या इति गोनाम ॥ प्रकरणादिहानूबन्ध्याविषयं बहुवचनम् ॥ अनूबन्ध्याबहुत्वेऽर्थवत् एकानूबन्ध्यापक्षे तु पूजार्थम् । यद्वेदस्मृतिलोकवाक्यान्याहुः अघ्न्याः अवध्याः वन्द्याः पूजनीयाः इति ॥ इतिकरणो वाक्यस्यार्थमभिनयेन दर्शयति । वयं तु हे वरुण शपामहे । इतिः करणप्रदर्शनार्थः शपतिर्हिंसार्थः एवमनेन विधिना हिंस्मः । अघ्न्याः अत

एव त्वां याचामहे । ततो वरुण नो मुञ्च । ततस्तस्मादेनसो वरुण नः अस्मान् विमुञ्च । अथाभिमन्त्रयन्ते । सुमित्रियाः साधुमित्रत्वेनावस्थिताः नः अस्माकमापश्च ओषधयश्च सन्तु दुर्मित्रियाः । दुष्टमित्रत्वेनावस्थिताः । तस्मै सन्तु योऽस्मान् द्वेष्टि स शत्रुः यश्च शत्रुं द्विष्मो वयम् ॥ २२ ॥

वसतीवरीर्गृह्णाति । हविष्मतीः । अनुष्टुप् लिङ्गोक्तदेवता । हविष्मतीः । हविषा संयुक्ताः इमा आपः । यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो हि द्रुत्वापः प्रविवेशेत्येतदभिप्रायम् । हविष्मान् हविषा संयुक्तो यजमान आविवासति । विवासतिः परिचर्यायां परिचरति इमा आपः हविष्मान् हविषा संयुक्तो देवोऽध्वरो यज्ञः आभिरद्भिः हविष्मानस्तु सूर्यः एतस्मै गृह्णाति य एष तपतीत्येतदभिप्रायम् ॥ २३ ॥

शालाद्वार्यमपरेण निदधाति । अग्नेर्वः । अग्नेः वः युष्मान् अपन्नगृहस्य पद्यतेरेतद्रूपम् । अपतितगृहस्येति पर्यायः । सदसि सीदन्त्यस्मिन्निति सदः निकटस्थाने सादयामि । दक्षिणस्यामुत्तरवेदिश्रोणौ निदधाति । इन्द्राग्न्योर्भागधेयी स्थ । इन्द्राग्न्योः सम्बन्धिनो भागस्य धारयित्र्यः स्थ हे आपः उत्तरस्याम् । उत्तरवेदिश्रोणौ निदधाति । मित्रावरुणयोर्भागधेयी स्थ । आग्नीध्रीये निदधाति विश्वेषां देवानां भागधेयी स्थ । ऋक् । अमूर्याः । आपः उप समीपे सूर्यस्येति विभक्तिव्यत्ययः । याभिर्वा सूर्यः सह । अथापि समुच्चयार्थे भवतीति वाशब्दः समुच्चयार्थीयः । याभिश्चाद्भिः सूर्यः सह याति ता आपः न अस्माकं हिन्वन्तु हिन्वतिस्तर्पणार्थः तर्पयन्तु । अध्वरं यज्ञम् ॥ २४ ॥

सोममुपावहरति । हृदे त्वा । सौम्यनुष्टुप् हृदे बुद्ध्यै निश्चयात्मिकायै कामाय एतन्मम स्यादिति त्वां हे सोम उपावहरामि । मनसे त्वा । त्वां सङ्कल्पविकल्पकात्मकाय मनसे त्वामुपावहरामि । दिवे त्वा हे सोम दिवे देवलोकप्राप्तये त्वा उपावहरामि । सूर्याय त्वा सूर्यप्रमुखेभ्यो देवेभ्यस्त्वामुपावहरामि त्वं चोपावहृतोऽभिषुतश्च ऊर्ध्वमिममध्वरं यज्ञं कृत्वा दिवि देवलोके देवेषु च होत्राः वषट्कारयाजिनो होत्रा उच्यन्ते यच्छ नियच्छ निबध्नीहि ॥ २५ ॥

किञ्च हे सोम राजन् विश्वाः सर्वाः त्वं प्रजाः उपावरोह आ-

धिपत्याय राज्याय विसृज्योपतिष्ठते विश्वास्त्वां प्रजा उपावरोहन्तु प्रत्युत्थानाभिवादनादिभिः । जुहोति शृणोत्वग्निः । त्रिष्टुप् लिङ्गोक्तदेवता शृणोतु अनुजानातु अग्निः समिधा समित्पूर्विकया आहुत्याहवमाह्वानं मे मम शृण्वन्त्वापः अनुजानन्त्वापः धिषणाश्च वाचो धीमानिन्यो धीसादिन्यो वा देवीः देव्यः । च शब्दः समुच्चयार्थः । श्रोता ग्रावाणः यूयमपि च शृणुत हे ग्रावाणः । कथमिव । विदुषो न यज्ञम् । उपमार्थीयः उपरिष्टादुपचारो नकारः विदितार्थ इव परिदृष्टार्थकारिणो यज्ञं प्रत्यक्षकृतः पादो मध्यमपुरुषयोगात् शृणोतु देवः सविता हवमाह्वानं मे मम स्वाहा ॥ २६ ॥

अप्सु जुहोति देवीरापः पङ्क्तिः अब्देवत्या हे देव्यः आपः आपाक्षपात्संज्ञकाः यः वः युष्माकम् । ऊर्म्मिः अप्सङ्घातः कल्लोलः हविष्यः यज्ञियः इन्द्रियावान् इन्द्रियशब्देन वीर्यमभिधीयते इन्द्रियावान् वीर्यवान् छान्दसं दीर्घत्वं मदिन्तमः मदयितृतमः तर्पयितृतमः । स्पृष्टत्वेन तमूर्म्मिं देवेभ्यः देवत्रा । देवमनुष्येत्यादिना त्राप्रत्ययः देवान् प्रति यायिनं दत्त प्रयच्छत शुक्रपेभ्यः शुक्रशब्द उपलक्षणार्थः शुक्रादिसोमग्रहपायिभ्यो देवेभ्यः येषां देवानां यूयं भागः स्थ भवथ तेभ्यो देवेभ्यो दत्तेति सम्बन्धः ॥ २७ ॥

कार्षिरसि । अनुष्टुप् यथाविनियोगं देवता । चमसेनाज्यमपोहति । कार्षिरसि । कृष विलेखने । हे आज्य आकृष्टं त्वमसि भवासि देवतया भक्षितमित्यर्थः । तेन गृह्णाति । समुद्रस्य त्वा । आपो वै समुद्र इति श्रुतिः । वसतीवरीलक्षणस्य समुद्रस्य त्वाम् । अक्षित्यै अनुपक्षीणतायै उन्नयामि । उपगृह्णामि वसतीवरीणां हि वर्द्धनाय एता आपो गृह्यन्ते । संस्पर्शयति समापोऽद्भिरग्मत । समापत सङ्गच्छतां च आपो वसतीवरीलक्षणाः आभिरद्भिर्मैत्रावरुणचमसस्थाभिः । ओषधीभिर्व्रीहियवादिभिः–ओषधीः मुद्गमसूरादिकाः । अपां कारणभूतत्वादोषधीनामपि तथोपयोगो भवत्वित्यभिप्रायः ॥ २८ ॥

जुहोति । यमग्ने । गायत्री । आग्नेयी हे अग्ने यं मर्त्यं मनुष्यं पृत्सु संग्रामेषु अवाः अवते रक्षणार्थस्यैतद्रूपम् अवासि रक्षसि । वाजेषु वाज इत्यन्न नाम हविर्लक्षणेष्वन्नेषु अभ्युद्यतेषु । यं च पुरुषं जुनाः जुनातिर्गत्यर्थः ॥ अभिगच्छति स पुरुषो यन्ता तृजन्तमेतदाद्युदात्तत्वात् लब्धा सततं भवति शश्वतीः शाश्वतिकतमाः

द्विषः अञ्जानि ॥ २९ ॥

अग्निमादत्ते देवस्य त्वा ॥ व्याख्यातम् । आददे गृह्णामि रावासि रासतेर्दानार्थस्य रावा एतद्ध्येषद्वयं रासत इति श्रुतेः । आहुतीनां च दक्षिणानां च दातासि । गभीरं गम्भीरं महान्तम् । इममध्वरं यज्ञं कृधि कुरु इन्द्राय इन्द्रार्थं सुषूतमम् । सुरुपसर्गः पूर्वः । षुञ् अभिषवे । अस्य निष्ठातकारलोपश्छान्दसः । दीर्घत्वं च तमपि प्रत्यये । अथ कोऽर्थः । साधु अभिषुतम् । आतिशयेन उत्तमेन उत्कृष्टेन पविना पावनेन सोमेन पवनशीलेन वा ऊर्जस्वन्तं रसवन्तं मधुमन्तं मधुस्वादुना रसेनोपेतं पयस्वन्तं पयःस्वादुना रसेनोपेतम् । अध्वरं कृधीति सम्बन्धः निग्राभ्यासु वाचयति । निग्राभ्या स्थ यस्मादिन्द्रेण यूयम् उरसि स्वयं गृहीताः तस्मान्निग्राभ्या उच्यन्ते । यस्मादेवं बहुमाननामधेयप्रतिलम्भयुक्ता भवथ देवश्रुतः देवैश्च श्रुताः तस्माद्बहुनामान्विताः सत्यः तर्पयत माम् ॥ ३० ॥

समासेनोक्त्वा व्यासेनाह । मनो मे । मम तर्पयत इति व्यासेनोक्त्वा समासेनाह आत्मानं पिण्डशरीरं प्रजां पशून् गणान्मनुष्यसङ्घान् गणाश्च मे मा वितृषन् मया द्रव्यदानेनापूरिता अपि सन्तो मा विगततृष्णा भवन्तु अनुरक्तगणोऽहं भवेयमित्यर्थः ॥३१॥

सोमं मिमीते । इन्द्राय त्वा । इन्द्राय त्वां वसुमते रुद्रवते मिम इति शेषः । इन्द्राय त्वाम् । आदित्यवते मिमे प्रातः सवनमाध्यन्दिनसवनतृतीयसवनदेवतायुक्तायेन्द्रायेत्यर्थः । इन्द्राय त्वाम् । अभिमातिघ्ने मिमे । सपत्नो वा अभिमातिरिति श्रुतिः । सपत्नस्य हन्त्रे । श्येनाय । श्येनरूपिण्यै गायत्र्यै त्वां सोमभृते । हृग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः । सोमहृते सोमस्य हर्त्र्यै गायत्र्यै मिमे । अग्नये त्वा रायस्पोषदे । रायो धनं तस्य पोषो वृद्धिः तं ददाति यः तस्मै रायस्पोषदे अग्निशब्देनात्र गायत्र्यभिधीयते । भक्त्या श्रुतिः । अथैतान्यग्निभक्तीन्ययं लोकः प्रातः सवनं वसन्तो गायत्रीति ॥ ३२ ॥

मितालम्भनम् । यत्ते सोम । सौमी विपरीता बृहती । श्रुत्युक्तमस्य मन्त्रस्य निदानम् । यदा किल देवानां हविर्भूत् सोमस्तदेषु लोकेषु तिस्रस्तनूर्विन्यस्य दधार तासामनेनाप्तिः क्रियते

यत् ते तव हे सोम दिवि द्युलोके ज्योतिः यच्च पृथिव्यां ज्योतिः यच्च उरौ विस्तीर्णे अन्तरिक्षे तेन तन्वाख्येन ज्योतिषा अस्मै यजमानाय अस्य यजमानस्य सम्बन्धिनि यज्ञे उरु विस्तीर्णं कृत्स्नं शरीरम् । आत्मनः कृधि कुरु । ऋत्विजां च राये दक्षिणाप्राप्तये उरु शरीरं कृधि स्वकीयम् । किञ्च अधिदात्रे वोचः । अधिवाचः अधिब्रूहि दात्रे यजमानाय कृत्स्नोऽहमागत इति ॥ ३३ ॥

आसिञ्चति निग्राभ्याः । श्वात्रा स्थ । उपरिष्टाद्बृहती निग्राभ्या आपो देवताः । या यूयं श्वात्राः स्थ श्वात्रमिति क्षिप्रनाम क्षिप्रकारिण्यौ भवथ शिवा वा भवथ । वृत्रतुरः । तुर्व्वतिर्बधकर्मा वृत्रस्य हन्त्र्यः । राधो गूर्त्ताः राधो धनम् उद्गिरन्तीति राधो गूर्त्ताः । अमृतस्य पत्नीः । अमृतस्य पालयित्र्यः ताः हे देवीः वा छन्दसीति दीर्घत्वम् । देव्यः देवत्रा देवान् प्रति इमं यज्ञं नयत प्रापयत । किञ्च अध्वर्युणा उपहूताः सत्यः सोमस्य पिबत ॥ ३४ ॥

प्रहरति । मा भेः । हे सोम मा त्वं भैषीः मा संविकथाः । ओविजी भयचलनयोः सम्पूर्वः कम्पनमभिधत्ते । मा च त्वं कम्पनं कृथाः । देवतर्पणार्थं ह्यहमभिषुणोमि । अत ऊर्जं धत्स्व रसं धेहि । एवं सोमं सम्बोध्याथेदानीं द्यावापृथिव्यौ सम्बोधयति अध्वर्युः । हे धिषणे हे द्यावापृथिव्यौ वीड्वी सती वीडयेथां वीड्वीशब्दो दृढवचनः । युवां स्वत एव दृढे सती वीडयेथां दृढमात्मानं कुरुतम् । अस्मात् ग्रावणः उद्यतात् । किञ्च ऊर्जं दधाथां रसं दधाथाम् । अस्मिन्सोमे । अनेन तु ग्राव्णा वज्रसंस्तुतेन पाप्मा यजमानस्य हतः नतु सोमः ॥ ३५ ॥

निग्राभं वाचयति प्रागपागुदक् । द्वाभ्यामृग्भ्यामुष्णिग्बृहतीभ्यां प्रथमा सौमी द्वितीयैन्द्री । सोमो दिग्भिर्म्मिथुनमिच्छति तं च देवाः सम्पादितवन्तः । तदेतदृचाभ्युक्तम् । हे सोम प्राक् प्रागञ्चनाः अपाक् अपागञ्चनाः उदक् उदगञ्चनाः अधराक् अधराञ्चनाः । एवं सर्वतः त्वां दिशः आधावन्तु अभिसमागच्छन्तु दिग्वासिनो वा जनाः । किमभिभाषमाणाः परस्परं त्वामभिधावन्तु ॥ अम्ब निष्पर ॥ हे अम्ब प्राच्यादिविशेषदिगभिधानेन निश्चित्य सोमं पर ॥ पृ पालनपूरणयोरित्यस्यैतद्रूपम् ॥ पूरय स्वैर्भागैः एतं सोमम् ॥ किं प्रयोजनमिति चेत् ॥ समरीविंदाम् ॥ प्रजा वा

अरीरिति श्रुतिः ॥ संविदां संविदताम् ॥ अरीः प्रजाः ॥ एतदुक्तं भवति ॥ सोमसमागमेऽस्माकं सन्ति नानादिग्वासिनोऽपि जनाः संजानन्त एव ॥ ३६ ॥

त्वमङ्ग ॥ हे इन्द्र यतस्त्वम् । अङ्ग अङ्गेति क्षिप्रनाम ॥ क्षिप्रं प्रशंसिषः ॥ प्रशंससि देवः सन् हे शविष्ठ ॥ हे बलिष्ठ मर्त्यं मनुष्यं यजमानम् । अतः अस्मात् कारणात् ॥ न त्वत् ॥ न त्वत्तः अन्यः हे मघवन् धनवन् अस्ति विद्यते मर्डिता मृड सुखने सुखयिता यजमानानाम् ॥ इन्द्र ब्रवीमि ॥ अत्यद्भुतं तव संबन्धि वचः वचनमार्षम् ॥ ३७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

अथ सप्तमोऽध्यायः ।

श्रीः । वाचस्पतये ॥ उपांशुग्रहस्य पुरोरुक् ॥ अनुष्टुप् प्राणदेवत्या ॥ गृह्णाति ॥ वाचस्पतये पवस्व ॥ प्राणो वै वाचस्पतिरिति श्रुतिः ॥ वाचस्पतये प्राणाय पवस्व पवनं गमनं देवतार्थां प्रवृत्तिः ॥ वृष्णो अꣳशुभ्यां गभस्तिपूतः । यस्त्वं वृष्णो वार्षितुः सोमस्यांशुभ्याम् । अध्वर्युगभस्तिभ्यां पूतः । पाणी वै गभस्ती इति श्रुतिः ॥ द्वितीयं गृह्णाति ॥ देवो देवेभ्यः पवस्व ॥ देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु ॥ न ह्यदेवो देवान् तर्पयितुमलम् ॥ केषां देवानां येषां त्वं देवानां भागोऽसि तान्देवान्प्रति गच्छेत्यर्थः ॥ १ ॥

तृतीयं गृह्णाति । मधुमतीर्न्नः ॥ मधुरस्वादोपेताः नः अस्माकम् इषः अन्नानि कृधि कुरु । गृह्यमाणः अंशून् सोमे निदधाति यत्ते सोम ॥ यत् ते तव हे सोम अदाभ्यन्नाम दभ्नोतिर्हिंसार्थः ॥ अनुपहिंसितं नाम ॥ जागृवि ॥ जागरणशीलं च अनुपहतं मानुषैर्धर्मैः ॥ तस्मै ते तव हे सोम सोमाय स्वाहा ॥ स्वाहेत्युक्त्वा निष्क्रामति ॥ उर्वन्तरिक्षमन्वेमि ॥ व्याख्यातम् ॥ २ ॥

जुहोति ॥ स्वाङ्कृतोऽसि स्वयंकृतोऽसीति प्राप्ते छान्दसो यकारलोपः स्वयमुत्पन्नोऽसि । प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जात इति श्रुतिः ॥ स्वयमुत्पन्नोऽसि विश्वेभ्य इन्द्रियेभ्यः सकाशात् स्वयमुत्पन्न इत्यनुवर्त्तते ॥ यतस्त्वमेवं स्वतन्त्रोऽकृतकस्त्वं मनः त्वाष्टु ॥ मनः प्रजापतिस्त्वां व्याप्नोतु प्रजापतिर्वै मनः प्रजापतिस्त्वा अश्नुतामिति श्रुतिः ॥ स्वाहा त्वा सुभव सूर्याय ॥ स्वाहा-

कारेण त्वां जुहोमीति शेषः ॥ हे शोभन भव ग्रहसूर्याय । प्रागुपमार्ष्टि मध्यमे परिधौ ॥ देवेभ्यस्त्वा ॥ देवेभ्यो मरीचिपेभ्योऽर्थाय त्वामुपमार्ज्मीति शेषः । बाह्वादिश्लिष्टमꣳशुमभिचरन् जुहुयात् ॥ देवाꣳशो हे देव सोमांशो यस्मै बधाय त्वा त्वाम् । ईडे ईडिरध्येषणकर्म्मा प्रार्थयामि तत्सत्यमस्तु इति शेषः ॥ उपरिप्रुता ॥ प्रवतिर्गत्यर्थः । उपर्युपरिगतेन भङ्गेन आमर्दनेन हतो निहतः असाविति नामदेशः फट् ञिफला विशरणे ॥ क्विबन्तस्यैतद्रूपं डलयोरेकत्वात् विशरयितु फडित्येतदभिचारे स्वाहाकारस्य स्थाने प्रयुज्यते ॥ पात्रासादनम् ॥ प्राणाय त्वा त्वां सादयामीति शेषः ॥ उपांशुसवनं सादयति ॥ व्यानाय त्वा सादयामीति शेषः ॥ ३ ॥

अन्तर्यामं गृह्णाति उपयामगृहीतोऽसि । उपयमयतीत्युपयामः उपयामेन गृहीतस्त्वमसि इयं वा उपयामः इयं वा इदमन्नाद्यमुपयच्छति इति श्रुतिः । अन्तर्यच्छ मघवन् ॥ अन्तर्मध्ये ग्रहपात्रे यच्छ निगृह्णीष्व ततः पाहि गोपाय पात्रस्थं सोमं ततो ऽनन्तरम् उरुष्य रायः उरुष्यतिर्गोपायनार्थः पशवो वै राय इति श्रुतिः ॥ गोपाय पशून् तत इषो यजस्व इषः अन्नानि तत्प्रभवत्वात् प्रजा लक्षणया इष उक्ताः । प्रजा वा इष इति श्रुतिः ॥ यजस्व यायजूकाः कुरु । अस्मिन्नर्थे श्रुत्या एतत्पदं व्याख्यातम् ॥ ४ ॥

अन्तस्ते ॥ अन्तर्यामपुरोरुक् त्रिष्टुप् मघवद्देवत्या ॥ यस्य तव प्राणरूपापन्नस्यान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि अन्तर्मध्ये च दधामि उरु विस्तीर्णमन्तरिक्षं स त्वं सजूः समानजोषणः सह प्रीयमाणः देवेभिः देवैः । अतो भिस् ऐस बहुलं छन्दसीति भिस् । अवरैः परैश्च अवरैः पृथिवीस्थानैः परैः द्युस्थानीयैः अन्तर्यामे अस्मिन् ग्रहे होमायोद्यते हे मघवन् मादयस्व हर्षयस्व आत्मानम् ॥ ५ ॥

जुहोति स्वांकृतोऽसि ॥ व्याख्यातम् ॥ पात्रमासादयति । उदानाय त्वा ॥ ६ ॥

ऐन्द्रावयवं गृह्णाति ॥ आ वायो भूष ॥ त्रिष्टुप् वायुदेवत्या । हे वायो आभूष अभ्याक्रमस्व हे शुचिपाः शुचिं पवित्रं सोमं प्रथमवषट्कारे वषट्कृतम् । अप्राप्तमन्यैर्देवताविशेषैः पिबतीति शुचिपाः । उप नः । उप समीपे अस्माकमभ्याक्रमेति संबन्धः ॥ केनाहम

भ्याक्रमे इति चेत् ॥ सहस्रं ते नियुतो विश्ववार ॥ वहवस्तव क्षिप्रगुणयुक्ता अश्वाः सन्ति हे विश्ववार विश्वं सर्वं वृणोति विश्वैः सर्वैर्वा व्रियते प्राणिभिरिति विश्ववारः तस्य सम्बोधनं विश्व-वार ॥ किञ्च । उपो ते अन्धो मद्यमयामि । उपगमयामि च ते तव स्व-भूतम् । अन्धोऽन्नं सोमलक्षणं मद्यं मदनीयम् । कथंभूतं यस्य सो-मस्य हे देव दधिषे धारयसि पूर्वपेयं प्रथमवषट्कारलक्षणं पूर्वपानं प्रथमवषट्कार एव ते सोमस्य राज्ञः इत्याशयः ॥ वायवे त्वेति देवतादेशः ॥ ७ ॥

द्वितीया पुरोरुक् ॥ इन्द्रवायू । ऐन्द्रवायवी गायत्री ॥ हे इन्द्र-वायू इमे अभिषुताः सोमाः अतः कारणात् ॥ उपप्रयोभिरागतम् ॥ उपेत्ययमुपसर्गः आगतमित्यनेन संबध्यते उपागतम् । उपगच्छतं प्रयोभिः ॥ प्रयःशब्दः इण् गतावित्यस्य धातोः शतृप्रत्ययान्तस्य रूपम् इणो यण् इति यणादेशो भिसि तकारस्य छान्दसः सकारः ॥ ततो रुत्वादि ततः प्रपूर्वस्य प्रयोभिरिति सिध्यति ॥ प्रयद्भिरश्वैः शीघ्रैः आगच्छतम् ॥ किञ्च ॥ इन्दवो वामुशन्ति हि ॥ हिशब्दो । यस्मा-दर्थे ॥ यस्मादिन्दवः सोमाः वां युवाम् । उशन्ति वश कान्तौ का-मयन्ते तस्मादिन्द्रवायू पिबतम् ॥ उपयामगृहीतोऽसि वायव इन्द्र-वायुभ्यां च त्वाम् । गृह्णामीति शेषः । सादयति । एष ते योनिः । एष पृथिवीलक्षणस्ते तव योनिः स्थानं योनिशब्दो हि स्था-नवचनः सजोषोभ्यां सहप्रीतिभ्यां त्वां सादयामीति शेषः ॥ ८ ॥

मैत्रावरुणस्य पुरोरुक् । अयं वाम् ॥ गायत्री मैत्रावरुणी ॥ हे मि-त्रावरुणौ अयं वां युव योः अभिषुतः सोमः आस्ते ऋतावृधौ सत्यवृधौ यज्ञवृधौ वा अतः कारणत् मम इत् इह श्रुतं हवम् । इदिति निपात एवा-र्थे ममैव इह यजमानानां मध्ये शृणुतं चाह्वानम् ॥ उपयामगृहीतो-ऽसि मित्रावरुणाभ्यां त्वाम् । देवतादेशः सहप्रीतिभ्यां त्वा साद-यामीति शेषः ॥ ९ ॥

पयः सोमे क्षिपति ॥ पयसा श्रीणानि । राया वयम् ॥ मैत्रा-वरुणी त्रिष्टुप् ॥ उपरितनेऽर्द्धर्चे तदः श्रवणादिह यदोऽध्याहारः ॥ इह कामदुघां प्रार्थयते मन्त्रदृक् यया धेन्वा गृहे सत्या । राया वयं ससवांसो मदेम ॥ राया धनेन वयं ससवांसः । वन् षण संभक्तौ । संभक्ताः सन्तः मदेम हृष्टाः स्याम कथमिव ॥ हव्येन देवाः । य-

देवा हविषा संभक्ताः हृष्यन्ति यथा च यवसेन गवाह्निकादिना गावः हृष्टा भवन्ति तां तथाभूतां धेनुं हे मित्रावरुणौ युवं युवां नः अस्मभ्यं विश्वाहा सर्वदा च धत्तं दत्तम् ॥ अनपस्फुरन्ती ॥ स्फुरतिर्गत्यर्थः ॥ अपेत्यापेत्य या पुरुषान्तरं गच्छति सा अपस्फुरन्ती न अपस्फुरन्ती अनपस्फुरन्ती ताम् । अनन्यगामिनीं धेनुमित्यर्थः ॥ विश्वाहेति संततदानक्रियार्थम् । एष ते योनिः ऋतायुभ्यां युवाभ्यां त्वां सादयामीति शेषः । ऋतशब्देनात्र मित्रोऽभिधीयते । आयुःशब्देन वरुणः अयं तावच्छ्रुत्यभिप्रायः येनैवमाह ॥ ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण एवायुरिति ॥ पदकारस्तु ऋतयुभ्यामित्येवं पदं कृतवान् तस्यायमभिप्रायः । ऋतं सत्यं यज्ञं वा यौ कामयेते तावृतयू ताभ्यामृतयुभ्याम् ॥ १० ॥

आश्विनस्य पुरोरुक् । या वां कशा । गायत्री आश्विनी । हे अश्विनौ या वां युवयोः कशा कशेति वाङ्नाम । सा प्रकाशयति । सतोऽर्थान् । मधुमती मधु ब्राह्मणोपनिषत्प्रशंसायुक्ता । सूनृतावती । शोभना प्रिया ऋतावती सत्यवती या वाक् सा सूनृतावती तया यज्ञं मिमिक्षतम् । मिह सेचने । सिञ्चतम् अश्विनौ हि यज्ञे अध्वर्यू अत एवमुच्यते ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वा गृह्णामीति शेषः । एष ते योनिर्माध्वीभ्यां त्वा सादयामि । दध्यङ् हवा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाचेत्युपक्रम्य तस्मान्मधुमत्यर्चा गृह्णामि माध्वीभ्यां त्वा सादयामीत्याह श्रुतिः । अत एवं व्याख्येयं मधुब्राह्मणं यौ अधीयाते तौ माध्वौ इत्युच्येते ईकारोऽत्र तद्धितः ॥ ११ ॥

शुक्रं गृह्णाति तस्य पुरोरुक् । तं प्रत्नथा । जगती अनिरुक्ता प्रकरणात्तु सोमः शुक्रोऽभिधीयते । अत्र हि व्यवहितैः पदैर्वाक्यं प्रयशः कल्पते हे सोम तमिन्द्रं ज्येष्ठतातिम ॥ उत्कृष्टविस्तारम् । अथवा वृकजेष्ठाभ्यां तिल्तातिलौ च छन्दसीति तद्धितः प्रशंसायां ज्येष्ठं प्रशस्यं बर्हिषदं यज्ञे बर्हिषि सीदतीति बर्हिषदं स्वर्विदं स्वःशब्देन द्युलोकोऽभिधीयते द्युलोकं जानाति तत्र हि तस्य निवासः धुनिं धुञ् कम्पने । कम्पयितारं शत्रूणाम् । आशु जयन्तं शीघ्रं जयन्तं जेतव्यानि वस्तूनि तमेवंगुणविशिष्टमिन्द्रं हे सोम यास्त्वनुवर्द्धसे यासु विक्षु येषु यजमानेषु वर्द्धसे पुनः पुनः संस्क्रियसे तासु तासु क्रियासु त्वमवस्थितः ॥ तत्र प्रतीचीनं वृजिनं दोहसे । प्रतीचीनमा-

त्मनोऽभिमुखमिन्द्रमवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मै यजमानाय वृजनं वृजनमिति बलनाम ॥ बलवद्यज्ञफलं दोहसे प्रक्षारयसि ॥ कथं पुनर्दोहसे प्रत्नथा प्रत्नशब्दः पुराणवचनः था उपमार्थीयः चिरन्तनानामिव ऋषीणां भृगुप्रभृतीनाम् । अस्य यजमानस्य दोहसे । पूर्वथा पूर्वेषामिव ऋषीणां साध्यादीनां दोहसे । विश्वथा सर्वेषामिव ऋषीणाम् ऋषिपुत्राणां च दोहसे । इमथा इदानीन्तनानामिव यजमानानां दोहसे । अस्य यजमानस्य । उपयामगृहीतोऽसि शण्डाय त्वां गृह्णामि । शण्डोऽसुरः एष ते योनिः वीरतां वीरत्वं पाहि गोपाय यूपशकलेनापमार्ष्टि अपमृष्टः शण्डः अपमार्जनीकृतोऽस्य ग्रहस्य शण्डोऽसुरः निष्क्रामति देवास्त्वा । देवाः हे ग्रहशुक्रपायिनः त्वा त्वां प्रणयन्तु यज्ञातिस्थानं प्रापयन्तु दक्षिणस्यां वेदिश्रोणावासादयति । अनाधृष्टासि अनुपहिंसितासि ॥ १२ ॥

यूपदेशं गच्छति ॥ सुवीरो वीरान् । हे ग्रह कल्याणवीरः सन् यजमानस्य वीरान् प्रजनयन् उत्पादयन् परि इहि परिगच्छ । किञ्च अभिरायस्पोषेण यजमानमभियोजयन् स्वधनस्य पोषेण यजमानं परीहीत्यनुवर्तते । अपरेण यूपमरत्नी सन्धत्तः । सञ्जग्मानो दिवा पृथिव्या । सञ्जग्मानः अयं शुक्रः सङ्गच्छमानः दिवा द्युलोकेन सङ्गच्छमानश्च पृथिव्या पृथिवीलोकेन । कोऽसौ शुक्रः शुक्रशोचिषा शुक्रदीप्त्या यूपं बिभर्त्तीति शेषः ॥ यूपशकलं निरस्यति । निरस्तः शण्डः निक्षिप्तः शण्डो यज्ञाद्बहिष्कृतः । आहवनीये प्रोक्षितं प्रास्यति शुक्रस्याधिष्ठानमसि शुक्रो ग्रहस्तस्याधिष्ठानम् । अधिकरणमसि ॥ १३ ॥

जपति ॥ अच्छिन्नस्य ते ॥ हे देव सोम अच्छिन्नस्य सन्ततस्यानवखण्डितस्य ते तव सुवीर्यस्य कल्याणप्रभावस्य रायस्पोषस्य धनपोषस्य दादितारो भवेम त्वत्प्रसादात् । भूयोभूयः करणं यज्ञस्याशास्यते । जुहोति । सा प्रथमा । त्रिष्टुप् । ऐन्द्री यस्येन्द्रस्य प्रथमा संस्कृतिः सः प्रथमः सोमस्य संस्कारः क्रियते सोमक्रये । सा दिवि देवमच्छेहीन्द्राय सोममिति कथम्भूता संस्कृतिः । विश्ववारा विश्वैः सर्वैर्यत्र सोमो व्रियते ऋत्विग्भिः देवैश्च सा विश्ववारा विश्वं वा वृणोति सोमः क्रीयमाणो यत्र जगदुत्पत्तिबीजत्वात् सा विश्ववारा संस्कृतिः स च प्रथमो वरुणः स च प्रथमो मित्रः स च

प्रथमोऽग्निः यस्येन्द्रस्य अन्येषां देवगणानां प्रभुः ॥ १४ ॥

स प्रथमः । स च प्रथमो बृहस्पतिः । चिकित्वान् चेतनावान् । उत्कृष्टश्रीरन्येषां मन्त्रिगणानां यस्येन्द्रस्य तस्मै इन्द्राय सुतमभिषुतं सोममजुहोत क्षारयत स्वाहाकारेण हे ऋत्विजः । जपति । तृम्पन्तु । तृप तृम्प तृप्तौ । तृम्पन्तु होत्राः । होत्राशब्देन होतृकायाज्याछन्दांस्यभिधीयन्ते । तृम्पन्तु होत्राः याज्याच्छन्दांसि मध्वः मधुसोममित्यौपमिकं माद्यतेर्म्मधुस्वादस्य सोमस्य याः स्विष्टाः याः शोभनमिष्टाः याः सुप्रीताः याः साधुप्रीताः कथमेतत् ज्ञायत इति चेत् सुहुता यत् स्वाहा साधु हुता यस्मात्स्वाहाकारेण प्रत्यङ्ङुपविशति । अयाडग्नीत् एवं होतुराचष्टे ॥ १५ ॥

मन्थिनं गृह्णाति । अयं वेनः सोमोऽनया त्रिष्टुभा अधिदैवमधियज्ञं चावस्थितः स्तूयते । अधिदैवं तावच्चन्द्रात्मना स्तूयते अयं वेनश्चोदयत्पृश्निगर्भाः । वेनो वेनतेः कान्तिकर्मणः । अयं चन्द्रमा वेनः कान्तः चोदयत् । चुद सञ्चोदने । प्रेरयति पृश्निगर्भाः द्युलोकः पृश्निरादित्यो वा साधारणत्वात् द्युलोकगर्भा आदित्यगर्भा वा आपः । ज्योतिर्जरायुः । ज्योतिरस्य जरायुस्थानीयं भवति चन्द्रमसः । रजसो विमाने । उदकं रज उच्यते । तस्य विनिर्माणकाले प्राप्ते ग्रीष्मान्ते इदानीमधियज्ञस्थितमुच्यते इममेव च सोमम् । अपां च सूर्यस्य च स्यन्दमानानां सङ्गमे गृहीताभिरद्भिर्वसतीवरीलक्षणाभिरभिषुतं सन्तं शिशुं न शिशुमिव मेधाविनो विप्रा ब्राह्मणाः मतिभिः मतिपूर्विकाभिर्वाग्भिः रिहन्ति स्तुवन्ति स्तोत्रशस्त्रैः । रिहतिर्हि अर्चनकर्मसु पठितः । वसतीवर्यश्चापः अपां सङ्गमे सूर्यस्य च गृह्यन्ते तत्र ह्येवं पठ्यते । ततो वै स्पन्दमानानां गृह्णीयाद्दिवागृह्णीयादिति च । उपयाम गृहीतोऽसि मर्काय त्वा । गृह्णामि । मर्कोऽसुरः ॥ १६ ॥

सक्तुभिः श्रीणाति । मनो न येषु । त्रिष्टुप् । शुक्रामन्थिप्रचाराधियज्ञानुवादिनी । मनो न मन इव क्षिप्रं येषु हवनेषु येषु सोमहोमेषु तिग्मं तिग्ममिति तेजतेरुत्साहकर्मणः उत्साहयुक्तं विपः विपश्चितौ मेधाविनौ अध्वर्यू छान्दसः प्रातिपदिकैकदेशलोपः । शच्या शचीति कर्मनाम । कर्मणा निमित्तभूतेन । वनुथः । प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः वनुथः वनुतः व्याप्नुतः यु-

गपत् शुक्रामन्थिग्रहौ द्रवन्तौ गच्छन्तौ तेष्वेव होमेषु कर्त्तव्ये-षु । आ यः शर्य्याभिस्तुविनृम्णो अस्याश्रीणीत । योऽध्वर्युराश्रीणीत शर्याभिरङ्गुलीभिः तुविनृम्णः तुवीति बहुनाम । नृम्ण इति धननाम । बहुधनो महादक्षिणः अस्येति ग्रहनिर्देशः । अस्य मन्थिनः आश्रीणीत आदिशं प्रतिदिशम् । कावस्थितस्य सतः गभस्तौ पाणौ यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः श्रपणं करोति स एव प्रधान इत्याशयः । एष ते योनिः प्रजाः पाहि यजमानसम्बन्धिनीः प्रजाः गोपाय यूपशकलेनापमार्ष्टि अपमृष्टो मर्कः अपमार्जनीकृतो मर्कोऽसुरः निष्क्रामति । देवास्त्वां मन्थिपाः प्रणयन्तु । प्रापयन्तु यजतिस्थानम् । मन्थीति ग्रहनाम । अनाधृष्टासि निर्विशेषं पूर्वेण ॥ १७ ॥

गच्छति । सुप्रजाः । यतस्त्वं सुप्रजाः हे मन्थिन् प्रजाः यजमानस्य प्रजनयन् परीहि परिगच्छ किञ्च अभियोजयंश्च धनस्य पोषेण यजमानं परीहीत्यनुवर्त्तते । अपरेण यूपमरत्नी सन्धत्तः । सञ्जग्मानः सङ्गच्छमानः दिवा द्युलोकेन सङ्गच्छमानश्च पृथिव्या पृथिवीलोकेन कोऽसौ । मन्थी मन्थिशोचिषा च मन्थिनः शोचिर्दीप्तिः मन्थिशोचिः तेन शोचिषा सञ्जग्मान इत्यनुवर्त्तते यूपशकलं प्रास्यति । निरस्तो मर्कोऽसुरः । आहवनीये प्रास्यति मन्थिनोऽधिष्ठानमसि मन्थिग्रहः अधिष्ठानमधिकारणम् ॥ १८ ॥

आग्रयणं गृह्णाति । देवासः वैश्वदेवी त्रिष्टुप् । ये यूयं हे देवासः देवा एव देवासः आज्जसेरसुक् छान्दसः दिवि द्युलोके एकादश संख्यया भवथ । पृथिव्याम् । अधि उपरि एकादश स्थ ये च यूयम् । अप्सु क्षितः अप्सु इत्यन्तरिक्षनामसु पठितम् । क्षियतिर्निवासार्थः । अन्तरिक्षनिवासिनः महिना महाभाग्येन एकादश स्थ । महिनेति त्रिष्वपि स्थानेषु सम्बध्यते । सर्वत्र हि महाभाग्याविशेषात् । ते यूयं हे देवासः यज्ञमिममाग्रयणलक्षणं जुषध्वम् । आसेवध्वम् ॥ १९ ॥

उपयामगृहीतोऽसि व्याख्यातम् । आग्रयणोऽसीति नाम्ना सम्बोधनं स्तुत्यर्थं नामप्रतिलम्भो ह्यस्य साधुक्रियायोगात् । स्वाग्रयणः यस्मिन् त्वयि गृहीते अग्रे प्रथमं वाचः अयनं गमनम् उत्सर्गः अध्वर्योः सञ्जातस्त्वमेवंसाधुकारी तं त्वां ब्रवीमि पाहि यज्ञं पाहि

यज्ञपतिं गोपाय यज्ञं गोपाय यजमानम्। किञ्च विष्णुस्त्वामिन्द्रियेण पातु विष्णुर्यज्ञस्याधिष्ठात्री देवता स त्वामिन्द्रियेण वीर्येण पातु त्वं च विष्णुं गोपाय अभिसवनानि पाहि । अभितः सर्वतः सवनानि पाहि त्रीण्यपि। सर्वेषु हि सवनेषु गृह्यते ॥ २० ॥

सोमः पवते। पवत इति गतिकर्मसु पठितम्। ग्रहपात्रेषु गच्छति स्वकीये कर्मणि प्रवर्त्तते अस्मै ब्रह्मणे उत्पत्तिस्थित्यर्थं पवते अस्मै क्षत्राय पूर्ववद्व्याख्यानम्। अस्मै सुन्वते यजमानाय काम प्राप्त्यर्थं पवते ईषे ऊर्जे अन्नाय तदुपसेचनाय च क्षीरादेः पवते। अद्भ्यः ओषधीभ्यः पवते । अद्भ्यो वृष्टिभ्यः ओषधीभ्यो व्रीहियवादिभ्यः उत्पत्तिस्थितये पवते । द्यावापृथिवीभ्यां प्रीणनाय पवते । सुभूताय पवते। किं वा बहुनोक्तेन सर्वस्मै साधुभवनाय पवते । विश्वेभ्यस्त्वा देवेभ्यः। देवतादेशः । एष ते योनिः विश्वेभ्यस्त्वा देवेभ्यः सादयामीति शेषः ॥ २१ ॥

उक्थं गृह्णाति। उपयामगृहीतोऽसि । इन्द्राय त्वां गृह्णामीति सम्बन्धः । कथंभूताय बृहद्वते बृहदिति सामाभिप्रायं वयस्वते विशिष्टयौवनलक्षणं वीर्यसमेतं सदाकालं वयो यस्य सः तथोक्तः। तस्मै वयस्वते । कथम्भूतं त्वां गृह्णामि। उक्थाव्यम् । उक्थानि मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकसम्बन्धीन्यवति गोपायत्युक्थाव्यं तत्र ह्यस्य विनियोगः। यच्च ते तव हे इन्द्र बृहत् महत् ऊर्जितं वयो यौवनलक्षणं तस्मै त्वां गृह्णामि। अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्षमिन्द्र उच्यते त्वेति च युष्मदादेशोऽपि प्रत्यक्ष उच्यते तयोः सामर्थ्यं कथमिति चेत् यस्येन्द्रस्य बृहद्वयः तस्मै त्वां गृह्णामीति पदद्वयस्य व्यत्ययेनेति ब्रूमः। ते इत्यस्य पदस्य अस्येत्यनेन व्यत्ययः इन्द्रेत्यस्य व्यत्ययः इन्द्रस्येत्यनेन पदेन। विष्णवे यज्ञाय च त्वां गृह्णामीति शेषः। एष ते योनिरुक्थेभ्यस्त्वां सादयामीतिशेषः विगृह्णाति । देवेभ्यस्त्वा देवेभ्योऽर्थाय त्वां देवाव्यं देवतर्पणं यज्ञस्यायुषे अनवच्छिन्ना आकस्मिकभ्रेषरहिता परिसमाप्तिर्यज्ञस्य समाप्तये गृह्णामि यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुराशास्यते ॥ २२ ॥

उक्थविग्रहणेषु द्वितीयो मन्त्रविकल्पो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां यथासंख्यम् । मित्रावरुणाभ्यां त्वा इन्द्राय त्वा

इन्द्राग्नीभ्यां त्वा एवमादयोमन्त्रा ऋजवः चरकाणां मन्त्रविकल्पाः । तदु ह चरकाध्वर्यवो विगृह्णातीत्यादिकया श्रुत्योक्ताः मन्त्रपाठेन पठिता इत्युपेक्षिताः । उक्थादिषु तृतीयसवने उक्थविग्रहणमन्त्राः। इन्द्रावरुणाभ्याम् । एतेऽपि ऋजवः ॥ २३ ॥

ध्रुवं गृह्णाति । मूर्धानं दिवः । वैश्वानरी त्रिष्टुप् । वैश्वानरश्चात्र सर्वात्मा स्तूयते । यं वैश्वानरमित्थम्भूतं जनयन्तः देवाः । मूर्धानं दिवः द्युलोकस्य सूर्यात्मना च स्थितं मूर्धानं शिर आहुर्ब्रह्मविदः। यं च अरतिं पृथिव्याः। पृथिवीशब्देनान्तरिक्षमभिधीयते। पठितं चैतदन्तरिक्षनामसु। एतदन्तरिक्षम् आकाशमापः पृथिवीति । अरतिम् । अलमतिं पर्याप्तमतिं पृथिव्या अन्तारिक्षलोकस्याहुः । तत्र ह्यसौ स्थितो यथाकालं वृष्ट्या पुष्ट्या पुष्णाति भूतानि । वैश्वानरमृत आजातमग्निम्। यं च वैश्वानरम् । ऋते यज्ञे आजातम् । उत्पन्नम् । अरणिद्वयाद् अग्निमाहुः। यं च कविं क्रान्तदर्शनमाहुः । सम्राजं सम्यगैश्वर्येण युक्तमाहुः। यं च अतिथिं जनानामाहुः। विज्ञायते हि अग्निरतिथिरूपेण गृहान् प्रविशति तस्मात् तस्योदकमाहरन्ति । आसन्नापात्रं जनयन्त देवाः । योऽयमुक्तगुणो वैश्वानरस्तमासन् । आस्यशब्दस्य पद्दन्न इत्यादिना आसन्नादेशः। सप्तम्याश्च छान्दसो लोपः। देवानाम् । आसनि आस्ये मुखे आभिमुख्येन पात्रं पीयतेऽनेनेति पात्रं विज्ञायते हि चमसो देवपान इति चमसेन ह वा एतेन भूतेन देवा भक्षयन्तीति जनयन्त देवाः इन्द्रादयः ॥ २४ ॥

उपयामगृहीतोऽसि ध्रुवोऽसि । नाम्ना क्रियासमेतं तव नामेति प्रशंसा । ध्रुवाक्षितिः ध्रुवाणां क्षितिः । क्षि निवासगत्योः। ध्रुवाणामपि त्वं ध्रुवक्षितिः ध्रुवनिवासः । ध्रुवतमोऽच्युतानाम अच्युतानामपि त्वमेव ध्रुवतमः । अच्युताक्षित्तमः । अच्युते क्षियतीत्यच्युताक्षित् । अतिशयेन अच्युते क्षियतीत्यच्युतक्षित्तमः। सादयति एष ते योनिः। वैश्वानराय त्वा सादयामीति शेषः । ध्रुवं निनयति । ध्रुवं ध्रुवेण। बृहती । पूर्वोऽर्द्धर्चो ध्रुवदेवत्यः उत्तर ऐन्द्रः। ध्रुवं त्वामवनयामि अवसिञ्चामि ध्रुवेण एकाग्रेण मनसा वाचा तन्मन्त्रोच्चारणप्रवणया सोमं प्रति । स हि होतृचमसेऽवसिच्यते द्वादशे शस्त्रे । अथा नः । अथ नः अस्माकम् । अवसिक्तसोमानाम् । इन्द्रः इत् । इदित्छब्द एवार्थे । इन्द्र एव विशः मनुष्यान् असपत्नान् सपत्नरहिता-

न् समनसः समनस्कान् धृत्या युक्तान् करोतु ॥ २५ ॥

विप्रुषां होमः । यस्ते द्रप्सः । सौमी त्रिष्टुप् यजुरन्ता स्वाहा देवानामुत्क्रमणमसीति यजुः। हे सोम यस्तव द्रप्सः विप्रुट् रसैकदेशः स्कन्दति भूमौ वा अन्यत्र वा पतति। यश्च तव अंशुः स्कन्दति ग्राव-च्युतः ग्राव्णः च्युतः पतितः अधिषणयोरुपस्थात्।अधिषवणफलक-योरुपस्थादुत्सङ्गात् । अध्वर्यो र्वा यः स्कान्दित । परिवायः पवित्रात् परिस्कन्दति वायः पवित्रात् यतः कुतश्चित् स्कन्दतीत्यभिप्रायः। तं ते जुहोमि । तं विप्रुषं ते तव सम्बन्धिनमंशुं चाग्नौ जुहोमि म-नसा सङ्कल्प्य वषट्कृतं स्वाहा। वषट्कारेण स्वाहाकारेण चेत्यर्थः। तृणं चात्वाले प्रास्यति । देवानामुत्क्रमणमसि । चात्वालमुच्यते। अतो हि देवाः स्वर्गलोकमुदक्रामन् ॥ २६ ॥

ग्रहान् दर्शयत्यवकाशान् वाचयन् यज्ञस्यैते प्राणा यजमानस्य चानूचानस्य उपांशुं प्राणरूपेण दर्शयति । प्राणाय मे वर्चोदाः। हे उपांशो यस्त्वं स्वभावत एव वर्चोदाः तं त्वां ब्रवीमि प्राणाय मे-मदीयाय वर्चसे पवस्व प्रवर्तस्व । अनेन तुल्यव्याख्याना अवकाश-मन्त्राः । उपांशुसवनम् । व्यानाय मे । अन्तर्यामम् । उदानाय मे । ऐन्द्रवायवम् । वाचे मे । मैत्रावरुणम् । क्रतूदक्षाभ्यां मे । कामः क्र-तुरुच्यते । तस्य समृद्धिर्दक्षः । आश्विनं श्रोत्राय मे । शुक्रामन्थिनौ युगपत् । चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथां शुक्रामन्थिवि-षयं द्विवचनम् ॥ २७ ॥

आग्रयणम् । आत्मने मे । उक्थम् । ओजसे मे । ओजस्वी स्यामित्याशंसा । ध्रुवम् । आयुषे मे । पूतभृदाहवनीयौ युगपत् । विश्वाभ्यो मे । यौ युवां स्वभावतः एव वर्चोदसौ तौ ब्रवीमि । वि-श्वाभ्यः सर्वाभ्यो मम प्रजाभ्यो वर्चोदसौ । वर्चसे पवेथाम् । प्रवृत्तिं कुरुतम् ॥ २८ ॥

अथ द्रोणकलशम् । कोऽसि । वर्द्धमान उष्णिक् । अनुष्टुप् वा अध्यस्तं प्रजापतिरूपं द्रोणकलशमाह कोऽसि । कः प्रजापतिः स त्वमसि ॥ कतमोऽसि अतिशयेन प्रजापतिरसि । अनन्यभूतः प्रजा-पतिना । कस्यासि । कस्य प्रजापतेरनन्यभूतोऽसि । को नामासि । प्रजापतिनामासि । किं च ते यस्य ते नामामन्महि । मन ज्ञाने । वि-जानीमः यं च त्वां सोमेनातीतृपाम । तर्पितवन्तः । सोऽस्मान् वि-

दितनाम्नः कुरु तर्प्पय च कामैरिति शेषः । जपति । भूर्भुवः स्वरिति । व्याख्यातम् ॥ २९ ॥

ऋतुग्रहांस्त्रयोदश गृह्णाति । त्रयोदशभिर्मन्त्रैः मन्त्राणां तु नामान्येव । उपयामगृहीतोऽसि मधवे त्वा उपयामगृहीतोऽसि माधवाय त्वा ॥ वासन्तिकौ । श्रुत्युक्ता व्युत्पत्तय उच्यन्ते । मधुप्रमुखमन्नं वसन्त उत्पद्यत इति मधुमाधवौ मासौ । शुक्राय शुचये ग्रैष्मौ मासौ उभावपि शोचतेः शुच्यत्यर्थस्य । नभसे नभस्याय वार्षिकौ मासौ नह्यत्र सूर्यो भाति मेघप्रचुरत्वात् तस्मान्नभो नभस्यश्च । इषे ऊर्जे शारदौ मासौ । इषमन्नम् । ऊर्ज तदुपसेचनं दध्यादि तदिह प्रचुरं भवति इति मतुपो लोपादभेदोपचाराद्वा ॥ द्वौ मासावुच्येते । सहसे सहस्याय । हैमन्तिकौ मासौ । सहतेः प्रसहनार्थस्य । अभिभवति ह्यसौ शीतेन । तपसे तपस्याय । शैशिरौ मासौ । एतयोर्हि वरिष्ठं तपति सूर्यः । अंहसस्पतये त्रयोदशो मासः । अंहः पापं तस्य पतिः अयं च द्वादशस्वपि तपति ॥ ३० ॥

ऐन्द्राग्नं ग्रहं गृह्णाति । इन्द्राग्नी आगतम् । गायत्री ऐन्द्राग्नी । हे इन्द्राग्नी आगतम् । आगच्छतं सुतम् । अभिषुतं सोमम् प्रति । गीर्भिर्नभो वरेण्यम् । गीर्भिस्त्रयीलक्षणाभिर्वाग्भिः नभो वरेण्यं नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभुः । लुप्तोपमानं चैतत् । नभ आदित्यमिव वरणीयं सोमम् । आगत्य च अस्य सोमस्य पातं पिबतं धियेषिता यजमानस्वान्धिन्या बुद्ध्या इषितौ प्रेषितौ सन्तौ उपयामगृहीतोसीन्द्राग्निभ्यां त्वां गृह्णामि एष ते योनिरिन्द्राग्निभ्यां त्वा सादयामि ॥ ३१ ॥

ग्रहस्य द्वितीयो मन्त्रविकल्पः । आ घा ये आग्नेन्द्री गायत्री आ घा ये अग्निमिन्धते । आ इन्धते इन्धी दीप्तौ । आदीपयन्ति येऽग्निम् । इष्टिपशुसोमचातुर्मास्यैर्यज्वानः घ इति निपातः अनर्थकः ये च स्तृणन्ति बर्हिरानुषक् । आनुषगिति नामानुपूर्वस्यानुषक्कं भवति आनुपूर्व्येण क्रमेण । किं तेषामिति येषामिन्द्रो युवा अनुपहतजरामृत्युशरीरः । सखा समानाख्यानः । नेतरेषामयज्वनाम् । उपयाम इत्यादि व्याख्यातम् ॥ ३२ ॥

वैश्वदेवं गृह्णाति । ओमासः । वैश्वदेवी गायत्री । हे ओमासः अवितारस्तर्पयितारः तर्प्पणीया वा चर्षणीधृतः चर्षणयो मनुष्याः ता-

न् धारयन्ति तैर्वा भ्रियन्त इति चर्षणीधृतः। हे विश्वेदेवासः विश्वे देवाः आगत इह आगच्छत । कथम्भूताः दाश्वांसः। दाशृ दाने दाश्वान् इति निपात्यते। दत्तवन्तो यजमानस्य कामान् पूरयन्त इत्यर्थः। किमर्थं पुरस्कृत्यागच्छत दाशुषः सुतं शतानि हवींषि दद्तो यजमानस्य सुतमभिषुतं सोमं पातुम् । उपयामगृहीतोऽसीति व्याख्यातम्॥ ३३॥

द्वितीयो मन्त्रविकल्पः। विश्वेदेवासः। वैश्वदेवी गायत्री। हे विश्वेदेवासः हे विश्वे देवाः इह आगत आगच्छत आगत्य च शृणुत मे मम इमं हवमाह्वानं श्रुत्वा च विचार्य्य च आनिषीदत इदमस्मदीयं बर्हिः उपयाम इति व्याख्यातम्॥ ३४॥

मरुत्वतीयं गृह्णाति। इन्द्र मरुत्वः। मरुद्भिः सहित इन्द्रो देवता इत उत्तरं चतसृणां ऋचां त्रिष्टुभाम्। इन्द्रार्थं प्राङ् माहेन्द्रात्। मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वं मरुद्भिः सहित इह अस्मदीये यज्ञे पाहि पिब सोमम्। कथं पिबेत्यत आह। यथा शार्याते अपिब शर्यातो मानवः तस्यापत्यं शार्यातिः शर्य्यातो ह वा इदं मानवो ग्रामेण चचारेति श्रुतिः। यथा येन प्रकारेण शार्य्याते राजनि। अपिबः पीतवानसि सुतस्य अभिषुतस्य सोमस्य स्वमंशम्। किं च तव प्रणीती तव प्रणीत्या प्रणयनेन तव च शूर शर्म्मन् शर्म्मणि शरणे यज्ञगृहे आविवासन्ति विवासतिः। परिचर्यायाम् । अभिमुख्येनावस्थितास्त्वां परिचरन्ति कवयः क्रान्तदर्शनाः। सुयज्ञाः कल्याणयज्ञाः । उपयाम इति व्याख्यताम्॥ ३५॥

द्वितीयं मरुत्वतीयं गृह्णाति। मरुत्वन्तं मरुद्भिः सहितम् इन्द्रं वृषभं वर्षितारम्। वावृधानं वर्द्धमानम् अकवारिम् अकुत्सितारिं शत्रवोऽपि यस्य अकुत्सिताः वृत्रादयः । अथवा ऽकुत्सितदानम्। अथवा ऽकुत्सितैश्वर्यं दिव्यं द्युलोकजं शासं प्रशासनवन्तं शासितारं वा । विश्वासाहम् । सहतिरभिभवार्थः । स्वधर्म्मच्युतस्य सर्वस्याभिभवितारम् । उग्रम् उद्गूर्णवज्रं सहोदाम् । बलस्य दातारं यमित्थम्भूतमिद्रमाहुः । तम् अवसे नूतनाय अवनाय अचिरन्तनाय इह यज्ञगृहे हुवेम । आह्वयामः। उपयाम इत्यादि व्याख्यातम्। तृतीयं यजुषां ग्रहं गृह्णाति॥ उपयामगृहीतोऽसि मरुतां त्वौजसे । गृह्णामीति शेषः । ओज इति बलनाम।

स्वकीयमोजो निधाय ये इन्द्रं प्रति मरुत आयाताः ततोऽनेन गृहीतेन सबला जाताः । तदेतद्यजुर्वदति ॥ ३६ ॥

द्वितीयो मन्त्रविकल्पः ॥ सजोषा इन्द्र । हे इन्द्र यस्त्वं सजोषाः समानजोषाः समानजोषणः समानपात्रभोजी तं त्वां ब्रवीमि । सगणो मरुद्भिः सोमं पिब । सगणो मरुद्भिर्भूत्वा सोमं पिब । वृत्रहा । वृत्रस्य हन्ता भविष्यामीति हे शूर विक्रान्त विद्वान् एतमर्थं जानानः ततः पीत्वा सोमं मरुद्भिः सह जहि शत्रून् वृत्रप्रमुखान् । अपमृधो नुदस्व अपनुदस्व मृधः । णुद प्रेरणे । मृधः संग्रामात् हत्वा शत्रून् ये हतावशिष्टाः शत्रवः तान् संग्रामात् प्रेरयस्व । अथाभयं कृणुहि विश्वतो नः । अथानन्तरम् अभयं कुरु सर्वतोऽस्माकम् । उपयाम इत्यादि व्याख्यातम् ॥ ३७ ॥

मरुत्वान् । इन्द्र । हे इन्द्र यस्त्वं मरुत्वान् मरुद्गणसंयुक्तः । वृषभश्च वर्षिता अपामन्तरिक्षेऽवस्थितः तं त्वां ब्रवीमि ॥ रणाय पिब सोमम् । रणं संग्रामं करिष्यामीति सोमं पिब अनुष्वधम् । अनु पश्चात् स्वधान्नं पुरोडाशधानामन्थदधिपयस्यालक्षणं यस्य सोमस्य स तथोक्तः मदाय मदे हि सति योद्धा भवतीन्द्रः । कथं पुनः पिब । आसिञ्चस्व जठरे मध्व ऊर्मिम् । अकृपणमासिञ्च स्वजठरे उदरे मध्वः मधुसोममित्यौपमिकं माद्यतेः मधुस्वादस्य सोमस्य ऊर्मिं महासंघातं विशिष्टस्य सोमपानस्य मन्त्रदृक् हेतुमाह । त्वं राजासि प्रतिपत्सुतानाम् । यतस्त्वमेव राजा ईश्वरोऽसि प्रतिपत्प्रभृतिष्वपि तिथिषु सुतानाम् अभिषुतानां सोमानां किमुत चतुर्दश्यन्तेऽभिषुतानाम् । त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः । छन्दोगानामपि प्रतिपद्विद्यते तदभिप्रायं चैतत् । उपयाम इत्यादि व्याख्यातम् ॥ ३८ ॥

माहेन्द्रं गृह्णाति । महान् इन्द्रः । त्रिष्टुप् माहेन्द्री । महान् प्रभावत इन्द्रः । तथापि नृवत् मनुष्यवदाहूयमान आगच्छति आचर्षणिप्राः । चर्षणयो मनुष्याः । प्रा पूरणे । आगत्य चर्षणीयानां मनुष्याणां पूरयिता कामैः । किं च उत द्विबर्हाः । अपि द्वयोः स्थानयोः परिवृढो मध्यमे च स्थाने उत्तमे च परिवृढः परिवृढः प्रभुः । अमिनः सहोभिः । अमिनोऽमितमात्रः सहोभिर्बलैः अप्राक्तोलितबलः । यद्वा अनुपहिंसितः शत्रुबलैः । अस्मद्र्यग्वावृधे ।

वीर्याय अस्मद्दर्शनोत्सुकः संवर्द्धते । वीर्याय वीरकर्मणे च यः इन्द्रः सोऽस्मदीयैः कर्तृभिः स्तूयमानः उरु प्रमाणतः पृथुश्च विस्तारेण सुकृतः शोभनकृताभिप्रायः भूत् भूयात् । उपयाम इत्यादि व्याख्यातम् ॥ ३९ ॥

द्वितीयो मन्त्रविकल्पः । महाँ इन्द्रः । गायत्री माहेन्द्री महानिन्द्रो यः स ओजसा बलेन प्रभावसाधनेन पर्जन्यो वृष्टिमानिव यथा हि वृष्टिमान् पर्जन्यो धाराभिरपरिच्छिन्नसंख्यः एवमोजसा असंख्यातः महाभाग्येन स्तोमैः स्तूयमानो वत्सस्य वसनशीलस्य यजमानस्य वावृधे वर्धते । उपयाम इत्यादि समानम् ॥ ४० ॥

दाक्षिणानि जुहोति । उदु त्यम् । सौरी गायत्री । उदित्ययमुपसर्गो वहन्तीत्यनेन संबध्यते । उद्वहन्ति त्यं तं सूर्यं जातवेदसं जातप्रज्ञानं देवं दातारं द्युस्थानं वा केतवो रश्मयः । किमर्थमूर्ध्वमुद्वहन्ति दृशे दर्शनाय विश्वाय षष्ठ्यर्थे चतुर्थी विश्वस्य जगतः ॥ ४१ ॥

द्वितीयं जुहोति चित्रं देवानाम् । सौरी त्रिष्टुप् । सूर्यश्चात्र परावररूपेणावस्थितः स्तूयते । चित्रं देवानामुदगादनीकम् । उदयकालादारभ्य तावदपररूपेण स्तूयते । चित्रमिति क्रियाविशेषणं यच्चित्रमुदगात् चित्रमाश्चर्यभूतमुदगमत् । आश्चर्यं हि स्वकीयेन ज्योतिषा शार्वरं तमोऽपहन्त्यन्येषां च ज्योतिषां ज्योतिरादायोद्गच्छति । यद्वा चायनीयं पूजनीयमुदगमत् देवानामनीकमित्यनयोः पदयोः संबन्धः देवानां रश्मीनाम् अनीकं मुखं यत् चक्षुर्मित्रादिकस्य सदेवमनुष्यस्य जगतः आदित्योदये हि रूपाण्यभिव्यज्यन्ते । य आप्रा द्यावापृथिवी अन्तरिक्षम् यश्च उदयसमनन्तरमेव आ अप्राः । प्रा पूरणे । आपूरितवान् स्वकीयेन प्रकाशेन द्यावापृथिव्यौ अन्तरिक्षं च । अधस्तनानि विशेषणानि मण्डलाभिप्रायाणि नपुंसकलिङ्गान्यनूद्याऽथेदानीं पररूपेण स्तौति । सूर्य आत्मा । पुरुषाभिप्रायमेतत् । जगतो जङ्गमस्य । तस्थुषः स्थितवतश्च स्थावरस्य चेत्यर्थः । तथा च श्रुतिः । यमेनमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म । सूर्यश्चैतमनेन मन्त्रेणाख्यायते । स सूर्य आत्मत्वेनोपास्यः । एवं तावदधियज्ञगतोऽप्ययं मन्त्रोऽधिदैवमाचष्टे । आध्यात्मं तु वक्ष्यति योऽसावादित्ये पुरुष इत्यादिना ॥ ४२ ॥

आग्नीध्रीये जुहोति । अग्ने नय । अयं नो अग्निरिति सूक्तार्थौ मन्त्रौ । चतस्रोऽप्येता ययुरन्ता स्वाहाकारेण । अग्रेण शालां तिष्ठन्नभिमन्त्रयते । दक्षिणतः स्थिताः दक्षिणाः ॥ ४३ ॥ ४४ ॥

रूपेण वो रूपमभ्यागाम् । अग्रे पशव आत्मनो दानमसहमाना अन्यानि रूपाण्यादधुरिति तान्देवाः स्वैरूपैः प्रत्युपातिष्ठन्तः ततस्तैः स्वैरूपैराजग्मुरेतन्निदानमस्य मन्त्रस्य । रूपेण मूर्त्या वः युष्मत्सम्बन्धि रूपमभ्यागाम् । अभ्यागतः । सर्वो हि स्वं रूपमागच्छतीत्यभिप्रायः । किं च । तुथो वो विश्ववेदाः विभजतु । तुथो ब्रह्मा प्रजापतिः वः युष्मान् । विश्ववेदाः सर्वज्ञः विभजतु यथार्हमृत्विजां विभागं करोतु । यूयं चैतज्जानानाः ऋतस्य यज्ञस्य पथा मार्गेण प्रस्तुतस्य प्रेत प्रगच्छत चन्द्रदक्षिणाः । चन्द्रं सुवर्णं यजमानहस्तगतं द्वितीयं यासां ताश्चन्द्रद्वितीयदक्षिणा इति प्राप्ते चन्द्रदक्षिणा इत्युक्ताः । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । सदो गच्छति । विस्वः पश्य । दक्षिणोच्यते । विपश्यामि त्वया दक्षिणया सोपानभूतया स्वः स्वर्गं देवयानमार्गं विपश्यामि च व्यन्तरिक्षलोकं पितृयानमार्गं विपश्येति मध्यमपुरुषस्थाने उत्तमपुरुषो व्याख्यातः श्रुत्या । सदसि स्थितान् ब्राह्मणान्प्रेक्षते । यतस्व सदस्यैः । दक्षिणोच्यते । तथाभूतं यत्नमातिष्ठ यथा सदस्यैः पूरितैरतिरिच्यसे ॥ ४५ ॥

आग्नीध्रीयं गच्छति । ब्राह्मणमद्य । ब्राह्मणम् । अद्य अस्मिन् द्यवि विदेयं लभेयम् । पितृमन्तम् । अनुशिष्टेन पित्रा जातं नहि कश्चिद्विना पित्रा जायते । पैतृमत्यं यस्य पितामहप्रभृतयोऽपि वंश्याः श्रोत्रियाः स एवमुच्यते । ऋषिमार्षेयम् । ऋषिर्मन्त्राणां व्याख्याता । आर्षेयो जात्या प्रवरैश्च जातः । सुधातुदक्षिणम् । शोभनो धातुः सुवर्णं तद्दक्षिणा यस्य स सुधातुदक्षिणः । सुवर्णं हि आग्नीध्रे दीयते । दक्षिणां ददाति । अस्मद्राताः । रा दाने । हे दक्षिणाः अस्माभिः राताः सत्यो देवत्रा गच्छत देवान्प्रति गच्छत । ततोऽनन्तरं यज्ञफले साधयन्त्यः प्रदातारमाविशत । प्रकर्षेण दातारं आविशत यजमानम् ॥ ४६ ॥

इत उत्तरं पञ्च प्रतिग्रहमन्त्राः । हिरण्यं प्रति गृह्णाति । अग्नये त्वा मह्यं वरुणो ददातु । अग्निरूपापन्नाय मह्यं हे हिरण्य त्वां वरुणो

ददातु। वरुणे न हि हिरण्यमग्नये पूर्वं दत्तम्। अतस्तेनैवात्मना गृह्णानो न रिष्यामीति देवतादेशः। सोऽमृतत्वमशीय। सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं प्राप्नुयाम्। आयुर्दात्र एधि। आयुष्मान् दाता भवतु। मयो मह्यं प्रतिग्रहीत्रे। मयः सुखम्। एधि भव मह्यं प्रतिग्रहीत्रे। गां प्रति गृह्णाति। रुद्राय रुद्रभूताय मह्यं हे गौस्त्वां वरुणो ददातु। सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम्। प्राणो दात्र एधि। प्राणरूपं दात्रे भव। वयो मह्यं प्रतिग्रहीत्रे वयोऽन्नं पशुर्वा। वासो गृह्णाति। बृहस्पतये बृहस्पतिरूपापन्नाय मह्यं त्वां वरुणो ददातु सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम्। त्वग्दात्र एधि भव। मयः सुखं भव मह्यं प्रतिग्रहीत्रे। अश्वं प्रतिगृह्णाति। यमाय त्वा यमरूपापन्नाय मह्यं त्वां वरुणो ददातु सोऽहं यमरूपापन्नः संगृह्णानोऽमृतत्वं व्याप्नुयाम्। हयोऽश्वो दात्रे भव वयोऽन्नं पशुर्वा भव मह्यं प्रतिग्रहीत्रे ॥ ४७ ॥

अथ यदन्यद्ददाति तदनेन प्रतिगृह्णाति। कोऽदात्। कः पुरुषः अदात् दत्तवान्। एकः प्रश्नः। कस्मै पुरुषाय अदात् दत्तवान्। द्वितीयः प्रश्नः। कामोऽदात् कामायादात्। द्वौ प्रतिप्रश्नौ यथासंख्यम्। एवंचेत् काम एव दाता कामश्च प्रतिग्रहीता अतो ब्रवीमि। हे काम एतत्ते तव द्रव्यं त्वमेव केनाचित् प्रयोजनेन ददासि त्वमेव केनाचित् प्रयोजनेन गृह्णासीति ॥ ४८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

---

## अथाष्टमोऽध्यायः।

---

आदित्यग्रहसंस्तवोऽत्यर्थं प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशावुपयामगृहीतोऽसीति गृहीत्वा द्विदेवत्यानजुहोति। तत्रैते मन्त्राः ॥ उपयामगृहीतोऽस्यादित्येभ्यस्त्वा गृह्णामीति शेषः। आदित्यस्थालीं पात्रेणापि दधाति। विष्ण उरुगाय। हे विष्णो उरुगाय उरुगमन एष ते तव सोमः समर्पितः तं गोपाय गोपायनप्रवृत्तं च त्वां मा दभ्नुयुः रक्षांसि। दभ्नोतिर्हिंसाकर्मा ॥ १ ॥

आदित्यग्रहं गृह्णाति ॥ कदाचन ॥ व्याख्यातोऽयं मन्त्रः ॥ इयां-स्तु विशेषः । अधस्तादैन्द्री इह त्वादित्यदेवता ॥ यजुरन्ता । आदि-त्येभ्यस्त्वेति यजुः ॥ २ ॥

द्वितीयं गृह्णाति । कदाचन बृहती । आदित्यदेवता यजुरन्ता । आदित्येभ्यस्त्वेति यजुः । कदाशब्दः कालवचनः । चनेति निपातः पुनरर्थे युच्छतिः प्रमादार्थः । हे भगवन्नादित्य कस्मिन्नहनि पुनः प्रमाद्यसि उदयतापपाकप्रकाशादीननुग्रहान् प्राणिषु कुर्वन् । न कदाचिदित्यभिप्रायः । एवं काकुगतेन विशेषणेन व्याख्येयम् । अ-थवा कदाचनेति व्यतिकीर्णमेतत्पदद्वयं व्याख्येयम् । न कदाचिद-पीत्यनेनार्थेनार्थवन्तं चकारगर्भं सवितुर्निधानम् । अस्य भाष्यं च-कारैनां गर्भनिधानीमिति यथा यास्केन दर्शितम् । न कदाचित्प्र-माद्यसि स्वकीयं कर्म । उभे च नितरां पासि गोपायसि देवमनु-ष्यसंबन्धिनी जन्मनी । तुरीयेत्यविभक्तिको निर्देशः । तुरीयं सवनं चादित्यं भवति । तृतीयं चादित्यसवनं ते तव इन्द्रियं च वीर्यं च तथैव आतस्थौ आस्थितम् । अमृतम् अनश्वरं विज्ञानानन्दस्वभावं दिवि द्युलोके आदित्यमण्डलान्तःस्थम् । तदुक्तं पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति । एवं परापररूपेणास्यामृच्यादि-त्यः स्तुतः । आदित्येभ्यस्त्वा गृह्णामीति शेषः ॥ ३ ॥

दध्ना श्रीणाति । यज्ञो । देवानाम् । त्रिष्टुप् यजुरन्ता आदित्य-देवत्या । आदित्येभ्यस्त्वेति यजुः । यस्मात् यज्ञो देवानाम् । आदि-त्यानां सुम्नं सुखं कर्त्तुं प्रत्येति । तस्माद्धेतोः हे आदित्यासः आ-दित्या एव आदित्यासः । आज्जसेरसुक् । भवता मृडयन्तः । मृड सुखने । तृचोऽर्थे शतृप्रत्ययश्छान्दसः । मृडयितारः सुखयितारो भवतास्माकम् । किं च आ वोर्वाची सुमतिर्ववृत्यात् । आववृत्यात् आवृता भवतु वः युष्मत्संबन्धिनी सुमतिः अर्वाची च अस्मदभि-मुखी च । अंहोश्चिद्या वरिवोवित्तरासत् । अंहुः पापकारी चिच्छ-ब्दोऽप्यर्थे । पापकारिणोऽपि या सुमतिः । वरिवोवित्तरा वरिव इति धननाम । अतिशयेन धनस्य लब्ध्री असत् भवतु । सा सुमतिः अस्मदभिमुखी आववृत्यादिति संबन्धः ॥ ४ ॥

उपांशुसवनेन ग्रहं भिश्रयति । विवस्वन्नादित्य । तमांसि वि-वासयतीति विवस्वान् आदित्य उच्यते । हे विवस्वन् आदित्य एष

ते तव सोमपीथः। एतत्तव सोमपानं तस्मिन्मत्स्व। मद् तृप्तौ। तृप्तिं कुरु तुष्टिं कुरु। क्षिप्तमासिनं सोममवेक्षयति पत्नी।अदस्मै नरः। जगती आशीः यजमानपत्नीविषया। अदिति सत्यनामसु पठितम्। अद्धातन अद्धात कुरुत नेत्यनर्थका उपसर्ज्जना भवन्तीति नकारोऽनर्थकः। श्रद्धां कुरुत। अस्मै वर्चसे। हे नरः ऋत्विग्यजमानाः। यत् किमित्यत आह। आशीर्दाः। आशिषो दातारौ दम्पती पत्नीयजमानौ। वामं वननीयम् अश्नुतः व्याप्नुतः यज्ञफलम्। किञ्च इहैव पुमान् पुत्रो जायते। दुहितापि पुत्रशब्देनोच्यते इत्यतः पुमानिति विशिष्यते। किञ्च। विन्दते वसु लभते धनम्। अधा अथ अपि छन्दसि समानार्थौ। अथानन्तरं विश्वाहा अरपः। रपो रिप्रमिति पापनामनी भवतः। अपापः सन्नेधते। एध वृद्धौ। वर्द्धते गृहे एवावस्थितः॥ ५॥

सावित्रं ग्रहं गृह्णाति। वाममद्य। सावित्री त्रिष्टुप्। हे सवितः वामं वननीयम् अद्य अस्मिन् द्यवि सावीरिति सम्बन्धः। वाममु श्वः। वामं च उपाशंसनीयकाले सावीः श्व उपाशंसनीयः काल इति यास्क आह। किं वा बहुनोक्तेन दिवे दिवे वाममस्मभ्यꣳसावीः। अहन्यहनि वाममस्माकं प्रसूयाः। किञ्च वामस्य हि क्षयस्य देव भूरेः। क्षयशब्दो निवासवचनः आद्युदात्तत्वात् क्षयो निवास इति हि पाणिनिराद्युदात्तत्वं स्मरति। वामस्य च निवासस्य हे देव दानादिगुणयुक्त भूरेर्बहुनो धनपूर्णस्य दाता भवेति शेषः। अनया धिया धीरिति कर्मनाम। अनेन च सोमाख्येन कर्मणा वामभाजः अभिलषितभागिनो वयं भवामः॥ ६॥

उपयामगृहीतोऽसि सावित्रोऽसि। सवितृदेवत्योऽसि। चनोधाः चनोधा असि। चन इत्यन्ननाम। अभ्यासे च भूयांसमर्थं मन्यन्ते। अतिशयेन चान्नस्य धारयितासि अतश्चनोऽन्नं मयि धेहि स्थापय। किञ्च जिन्व यज्ञम्। जिन्वतिः प्रीतिकर्मा। तर्पय यज्ञम्। तर्पय च यज्ञपतिं यजमानम्। भगाय यज्ञफलाय देवाय सवित्रे त्वां गृह्णामीति शेषः॥ ७॥

वैश्वदेवं गृह्णाति। उपयामगृहीतोऽसीति व्याख्यातम्। सुशर्मासि। स्वाश्रयोऽसि। सुप्रतिष्ठानः। शोभना प्रतिष्ठा अस्येति सुप्रतिष्ठानः। महत्साधनसम्पन्नः। प्राणो वै सुशर्मा सुप्रतिष्ठान

इति श्रुतिः । ग्रहस्यान्नरूपत्वात् अन्नस्य प्राणहेतुत्वात् प्राण इत्युच्यते । अन्नं हि ग्रहोऽन्नं च प्राणहेतुः । यस्मात्त्वं सुशर्मा सुप्रतिष्ठानश्च तस्माद् बृहदुक्षाय महासेचनाय जगदुत्पत्तिबीजाय प्रजापतये नमो भवितुमर्हतीति शेषः । नम इत्यन्ननामसु पठितम् । 'प्रजापतिर्वै बृहदुक्ष इति श्रुतिः । विश्वेभ्यस्त्वा देवेभ्य इति व्याख्यातम् ॥ ८ ॥

पत्नीवन्तं गृह्णाति उपयामगृहीतोऽसीति व्याख्यातम् । बृहस्पतिसुतस्य ब्राह्मणाभ्यनुज्ञातस्य हे देव सोम ते तव इन्दोः इन्द्रियावतः वीर्यवतः पत्नीवतः पत्नीसंयुक्तस्य सतो ग्रहान् अन्यान् उपांशुप्रभृतीन् ऋध्यासं वर्द्धयेयम् । श्रीणाति । अहं परस्तात् । त्रिष्टुप् । प्रजापतिरूपेणात्मानं पश्यन् श्रीणाति । अहं परस्तात् अस्य जगतः अहं चाधस्तात् यच्चेतदन्तरिक्षं तदु मे । तदेव मे पिता पाता भूत् । अहं च सूर्यमुभयतो ददर्श पुरस्तादधस्ताच्च पश्यामि । सूर्यस्य परस्तात् मच्छिर इत्यभिप्रायः । यच्च देवानां परमं गुहा तदप्यहमेव ॥ ९ ॥

जुहोति । अग्ना ३ इ पत्नीवन् । पचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुताविति प्लुतः । हे अग्ने पत्नीसंयुक्त सजूर्देवेन त्वष्ट्रा । समानप्रीतिः देवेन त्वष्ट्रा सोमं पिब स्वाहा । पत्न्युद्गातारमवेक्षते । प्रजापतिः । यस्त्वं प्रजापतिर्वृषा च सेक्ता असि रेतसश्च धारयितासि स्वभावत एव तं त्वां ब्रवीमि रेतो मयि धेहि स्थापय प्रजापतेश्च तव वृष्णः सेक्तुः रेतोधसः रेतसो धारयितुः स्वभूतं रेतोधां रेतसो धारयितारं पुंस्पुत्रमशीय व्याप्नुयाम् ॥ १० ॥

हारियोजनं गृह्णाति । उपयामगृहीतोऽसि । हरिरसि हरितवर्णोऽसि हरी रश्मिर्हरिः सोमो हरिवर्ण इति हारियोजनः । इन्द्राश्वौ हरितावत्र युज्येते इति हारियोजनः । हारियोज न एव हारियोजनः । स्वार्थे तद्धितः । ऋक्सामे वै हरी इति श्रुत्यपेक्षः । हरिभ्यां त्वां गृह्णामीति शेषः । धाना आवपति । हर्योर्धाना स्थ । हरितवर्णयोरिन्द्राश्वयोर्धाना भवथ । यूयं सोमसहिता इन्द्राय भवथ । प्राणभक्षः ॥ ११ ॥

यस्ते अश्वसनिः । यस्तव अश्वान् सनोति सम्भजते भक्षः । यश्च गाः सनोति सम्भजते भक्षः । तस्य तव सम्बन्धिनः इष्टयजुषः । इष्टानि हि यजूंषि भवन्ति स्तुतः स्तोमस्य अस्मिन्नवसरे

स्तुताः सोमा भवन्ति । शस्तोक्थस्य । शस्तानि उक्थानि भवन्ति । उपहूतस्य अभ्यनुज्ञातस्य उपहूतो ह्यनुज्ञातो भक्षयामि ॥ १२ ॥

शाकलाधानम् । देवकृतस्य देवविषये कृतस्य एनसः पापस्य अवयजनम् । अवपूर्वको यजिर्नाशने वर्तते । नाशनं भवसि । मनुष्यविषये कृतस्य पापस्य नाशनं भवसि । आत्मविषये कृतस्य पापस्य आत्मनिन्दादेर्नाशनमसि । एनस एनसः । यावन्ति पापानि तेषां सर्वेषां नाशनमसि । यच्चान्यदपि अहं पापं विद्वान् चकार कृतवान् यच्चाविद्वान् अजानानः । तस्य सर्वस्य नाशनमसि ॥ १३ ॥

चमसानभिमृशति संवर्च्चसेति व्याख्यातम् ॥ १४ ॥

नव समिष्टयजूंषि जुहोति । समिन्द्र णः इत्याद्याः षट् त्रिष्टुभः तत्र त्रिभिर्यजमानमाप्याययति । त्रिभिर्देवता विसृजति । समिन्द्र णः । ऐन्द्री । समित्ययमुपसर्गः नेषीत्यनेन क्रियापदेन संबध्यते । हे भगवन्निन्द्र संनेषि संगमयसि नः अस्मान् मनसा संगमयसि च गोभिर्वाग्भिः गवादिभिर्वा पशुभिः संगमयसि च । सूरिभिः पण्डितैः हे भगवन् संगमयसि च स्वस्त्या अविनाशेन स्वस्तीत्यविनाशनाम । संगमयसि च ब्रह्मणा देवकृतं देवदृष्टं त्रयीलक्षणम् । तदेव स्पष्टयति । यदस्ति यज्ञित्यमित्यर्थः । संगमयसि च देवानाम् सुमतौ । तृतीयया विपरिणामः । शोभनया मत्या यज्ञियानां यज्ञसंपादिनाम् । यस्त्वमस्मानेवं सर्वैर्मनःप्रभृतिभिः संगमयसि । तस्मै त एतद्धविः । सुहुतमस्त्विति शेषः ॥ १५ ॥

संवर्च्चसा व्याख्यातम् ॥ १६ ॥

धाता रातिः षड् देवता अस्यामृचि । धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः एते षट् निधिपा देवाः इदं समिष्टयजुर्लक्षणं रातिर्दानं जुषन्तं सेवन्तां जुषित्वा च प्रजया संरराणाः यजमानसंबन्धिन्या प्रजया संरममाणाः । यजमानाय च । द्रविणं धनं दधातीति प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः । दधतु स्थापयन्तु एवंतावदस्य मन्त्रस्य सम्यग्योजना ॥ १७ ॥

सुगा वः । हे देवाः । सुगमनीयानि वः युष्माकं सदनानि स्थानानि । अकर्म्म कृतवन्तो वयं ये यूयम् आजग्म आजग्मुः आगताः सवनमिदं जुषाणाः यज्ञमिमं सेवमानाः । अथेदानीं परिसमाप्ते

यज्ञे । भरमाणा वहमाणाः हवींषि । ये रथिनः ते रथेषु भरमाणा हवींषि । ये तु अरथिनः ते स्कन्धावसक्थिकासु हवींषि वहमानाः अस्मै धत्त वसवो वसूनि ॥ अस्मासु धत्त हे वसवो वासयितारः वसूनि धनानि ॥ १८ ॥

यान् आवह । अग्निरुच्यते । हे भगवन्नग्ने यान् आवहः आहूतवानसि उशतः कामयमानान् हे देव देवान् तान्प्रेरयस्व अनुव्रज्यादिभिः स्वे स्वकीये सधस्थे । सहस्थाने गृहे । किमुक्त्वा प्रेरयेति चेत् अत आह । ये यूयं जक्षिवांसः पशुं पुरोडाशं च पपिवाꣳसश्च सोमम् । विश्वे सर्वे ते इदानीं परिसमाप्ते यज्ञे । असुं घर्म्मꣳस्वरातिष्ठतानु । अनुर्लक्षण इति कर्मप्रवचनीयसंज्ञा । असुं प्राणं वातम् अन्वातिष्ठत । घर्म्मं वा आदित्यमन्वातिष्ठत । स्वर्वा द्युलोकम् अन्वातिष्ठत यस्य यत्र गृहा इत्यभिप्रायः ॥ १९ ॥

वयꣳहि त्वा । अग्निं व्यवसृजति । वयमेव त्वां प्रयति प्रगच्छति यज्ञेऽस्मिन् हे अग्ने होतारम् आवृणीमहि । वृतवन्तः इह मन्त्रे अग्निर्देवो । दैव्यो होतेति । त्वं च वृतः सन् ऋधगयाः ऋध्नोतेः पूर्वपदं यजतेरुत्तरपदम् । ऋध्नुवन्नयाक्षीः समर्द्धयन्निष्टवानसि किं च ऋधगुताशमिष्ठाः । उत अपि च ऋध्नुवन्नेव यज्ञं प्रायश्चित्तं शमितवानसि इदानीं प्रजानन् यज्ञसमाप्तिं गृहमुपयाहि । विद्वान् जानानः स्वमाधिकारम् ॥ २० ॥

देवा गातुविद इति व्याख्यातम् ॥ २१ ॥

यज्ञं व्यवसृजति । यज्ञ यज्ञम् । हे यज्ञ यज्ञमेव त्वं गच्छ । नहि त्वत्तोऽन्यदस्ति । सर्वात्मा हि त्वामित्यभिप्रायः । यज्ञपतिं यजमानं च गच्छ स्वां योनिं गच्छ । द्रव्यदेवते हि यज्ञस्य स्वा योनिः । एष ते यज्ञः अयं तव शरीरभूतो यज्ञः ऋत्विग्भिः संस्कृतः । हे यज्ञपते सह सूक्तवाकः । साङ्गः सर्वैर्वीरः सर्वैर्वीरैरुपेतः सोमः पशुः सवनीयाश्च पुरोडाशा वीरा उच्यन्ते । तं च जुषस्व सेवस्व ॥ २२ ॥

कृष्णविषाणमेखले चात्वाले प्रास्यति । माहिर्भूः व्याख्यातम् । वाचयति । उरुं हि । वारुणी त्रिष्टुप् । एकं तावत् उरुं विस्तीर्णं हि अतिशयेन राजा वरुणः सोऽवभृथाय चकार कृतवान् । सूर्याय । षष्ठ्यर्थे चतुर्थी । सूर्यस्य पन्थां पन्थानम् । अन्वेतं वा उ । अन्वहमागमनाय । अपरम् । अपदे पादा प्रतिधातवेऽकः । यत्र पदं दत्तं प्र-

तिमुद्रान्यायेन नोपलभ्यते तस्मिन्नपदे पथि अन्तरिक्षलोके । पादापादानां षष्ठीबहुवचनस्य स्थाने आकारः । प्रतिधातवे प्रतिनिधातवे प्रतिनिधानाय अकः कृतवान् आलम्बनमिति शेषः । सूर्यस्यैव । उतापवक्ता हृदयाविधश्चित् । उत अपि च अपवक्ता अपवदिता आक्षेप्ता हृदयाविधश्चित् । चिच्छब्दोऽप्यर्थे । हृदयं यो विध्यति मर्माण्युच्चार्योच्चार्य पिशुनः तस्याप्ययं वदिता किमुतान्येषामयुक्तकारिणामिति शेषः । य इत्यथम्भूतो वरुणः सोऽवभृथाय तीर्थं ददात्विति शेषः । अपोऽवक्रमयन् वाचयति । नमो वरुणाय अभिष्ठितः आक्रान्तः वरुणस्य पाशः नालं बन्धनाय ॥ २३ ॥

समिधं प्रास्याभिजुहोति । अग्नेरनीकम् । आग्नेयी त्रिष्टुप् । अग्नेरनीकमिति परोक्षलिङ्गम् । दमे दमे समिधं यक्ष्यग्ने इति प्रत्यक्षलिङ्गमेकस्मिन्वाक्ये अत एवं व्याख्यायते । यस्य तवाग्नेः सतः अनीकं मुखम् । अपः उदकम् आविवेश प्रविष्टम् । अपान्नपात्संज्ञकं प्रति रक्षन्नसुर्यम् । असुरस्य स्वं मायादिक सत्यम् । इदानीं दमे दमे । दम इति गृहनाम । यज्ञगृहे । अश्वमेधविषया वीप्सा तत्र हि नानावभृथान्यहानि भवन्ति । समिधं यक्षि यजतिः सङ्गतिकरणार्थः समिधं सङ्गतां कुरु आत्मसात्कुरु ततोऽनन्तरं घृतं प्रति ते तव जिह्वा ज्वाला उच्चरण्यतु । उच्चरतु समिधः सकाशात् ॥ २४ ॥

ऋजीषकुम्भं सम्प्लावयति । समुद्रे ते । सौमी विराट् । नमोवाके विधेम यदित्ययं निपातो हृदयशब्देन सह सम्बध्यते समानलिङ्गत्वात् । सोम यद् हृदयं समुद्रे ते तव हृदयम् । आदिष्टं निवासस्थानम् । अप्सु अन्तः अपां च मध्ये वर्तते तत्र त्वां गमयामि तत्रस्थं च त्वां संविशन्तु ओषधीः उत अपि च आपः । किं च यज्ञस्य सुक्तौ शोभनवचनोच्चारणे च नमोवाके नमस्कारवचने च विधेम विदधातिः स्थापनार्थः हे यज्ञपते सोम ॥ २५ ॥

विसृज्योपतिष्ठते । देवीरापः । पङ्क्तिर्वा बृहती वा । अपां च सोमस्य च सङ्गातं वदति हे देव्य आपः एष सोमो वः युष्माकं गर्भो वर्त्तते । तं सुप्रीतं साधुतर्पितं सुभृतं सुपुष्टम् । बिभृत धारयत हे देव सोम एष ते तव लोकः स्थानं तस्मिन्नवस्थितः शं च वक्ष्व परि च वक्ष्व शं सुखम् । अस्मान्प्रति वह प्रापय । परिवह च अस्मत्तः सर्वा आर्त्तीः इति शेषः । तस्मिन्नः शश्चैधि सर्वाभ्यश्च न आ-

त्तिभ्यो गोपायेति श्रुतिः ॥ २६ ॥

मज्जयति । अवभृथेति व्याख्यातम् । समिधमादधाति । देवानां देवताभूतानामस्माकं सामिन्धनं त्वमसि भवसि ॥ २७ ॥

इत उत्तरम् । अनूबन्ध्या यदि गर्भिणी स्यात्तत्र प्रायश्चित्तिरुच्यते । आतिष्ठेत्येतस्मात्प्राक् । निरुह्यमाणं गर्भमभिमन्त्रयते । एजतु त्र्यवसाना महापङ्क्तिः । एजतु दशमास्यः । एजृ कम्पने । एजतु कम्पयतु दशमास्यः । दशमासकालावच्छिन्न इव गर्भो जरायुणा सह । जरायुर्गर्भवेष्टनम् । कथं चलत्वित्यत उपमया दर्शयति । यथायं वायुरेजति यथा च समुद्रश्चलति एतौ हि सदा चलनौ । एवमयं हि दशमास्यः । तं तस्य दशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोतीति श्रुतिः अस्रत । स्रंसतेरेतद् रूपम् । स्रवतेर्वा । स्रंसतु स्रवतु वा जरायुणा सह गर्भवेष्टनेन सह ॥ २८ ॥

अवदानान्यनुजुहोति । यस्यैते अनुष्टुप् । वशोच्यते । यस्यास्ते तव यज्ञियो गर्भः । यज्ञार्हो गर्भः तस्याश्च तव योनिर्हिरण्ययी हिरण्मयी क्रियते ब्रह्मणा यजुषा तां त्वां गर्भेण सङ्गमयामि । यस्य च गर्भस्य अङ्गानि अङ्गानि अह्रुता अह्रुतानि अनवखण्डितानि ह्रुः ह्वरेश्छन्दसीति ह्रुः आदेशः तं गर्भं मात्रा अनुबन्ध्या लक्षणया समजीगमं सङ्गमयामि ॥ २९ ॥

अध्वर्योरनुहोममेधं जुहोति । गर्भः स्तूयते इन्दुसंस्तवेन । पुरुदस्मो बहुदानो विषुरूपः । बहुरूपा हि गर्भा भवन्ति । इन्दुः सोमः पशोर्हि सोमभावो विद्यते अन्तः उदरे व्यवस्थितो महिमानं महाभाग्यम् । आनञ्ज । अञ्जतेर्व्यक्तीकरणार्थस्यैतद्रूपम् । व्यक्तीकरोति धीरः मेधावी इत्थं भूतं महिमानम् । आनञ्ज धीरो येनैकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टपदीमपि वशां गणयित्वा भूतरूपेण भुवनानि भूतजातानि अनुप्रथन्तामागमयन्तु यथा ते वृद्धिरेवम्भूतानामपि भविष्यतीत्याभिप्रायः । कथमियं वशा चतुष्पदी सती एकपद्यादिभिर्भेदैरुच्यते । अवयुज्य स्तूयत इति ब्रूमः । वशेत्येकपदी वपया अङ्गैश्च द्विपदी उपयट् होमैश्च त्रिपदी चतुष्पदी पत्नीसंयाजैः चतुर्भिर्वा पादैः । अष्टापदी तु गर्भसम्बन्धिभिः पादैः ॥ ३० ॥

जुहोति मरुतो यस्य । मारुती गायत्री । हे मरुतः यस्य क्षये निवासे गृहे । क्षयो निवास इत्याद्युदात्तः । पाथः पा पाने शपो लुक्

पिबथ पानादीन्कुरुथ हे दिवो विमहसः द्युलोकस्य विमहयितारः पूजयितारः । स सुगोपातमो जनः । स सुगुप्ततमो यजमानो जनः युष्मद्गुप्तानां न भयमित्यभिप्रायः ॥ ३१ ॥

अङ्गारैरभिसमूहति । मही द्यौः महती द्यौः पृथिवी च नः अस्मा कमिमं यज्ञं मिमिक्षताम् । मिह सेचने । सिञ्चतां स्वैः स्वैर्भागैः पिपृतां नः प्रीणयतं च अस्मान् भरीमभिः भरणैः हिरण्यपशुधान्यादिभिः समासोऽग्निष्टोमः ॥ ३२ ॥

अथ षोडशी अग्ने पवस्वेत्येतस्मात्प्राक् । आतिष्ठ तिस्र ऐन्द्योऽनुष्टुभः आतिष्ठ अधितिष्ठ आरोह । हे वृत्रहन् हे वृत्रस्य हन्तः रथं युक्ता युक्तौ तव ब्रह्मणा त्रयीलक्षणेन इन्द्रागच्छेत्यादिना हरी हरितवर्णौ अश्वौ तौ हि आह्वानानीन्द्रस्योपश्रुत्य प्राप्त आवयोर्योजनकाल इति मन्यमानौ स्वयमेवात्मानं रथे नियुञ्जाते । अत एवमाह । युक्ता ते ब्रह्मणा हरी इति । अथेदानीं रथारूढस्य अर्वाचीनम् । अस्मदभिमुखं सु साधु ते तव मनः हे इन्द्र ग्रावा सोमाभिषवकारी कृणोतु करोतु वग्नुना वग्नुरिति वाङ्नामसु पठितम् । सोमाभिषवध्वनिना उपयामगृहीतोऽसि । इन्द्राय त्वा षोडशिने गृह्णामि । एष ते योनिः इन्द्राय त्वा षोडशिने ॥ ३३ ॥

द्वितीयो ग्रहणमन्त्रः युक्ष्वा हि । युजिर् योगे । युङ्ग्धि हि यस्मात्केशिना प्रलम्बकेशरौ । हरी हरितवर्णावश्वौ वृषणा वर्षितारौ सेक्तारौ तरुणौ । कक्ष्यप्रा । कक्ष्या अश्वस्य सन्नाहरज्जुः । प्रा पूरणे । कक्ष्या यावापूरयतः तावेवमुच्येते । तौ युक्त्वा रथे तमास्थाय अथ समनन्तरमेव नोऽस्माकं हे इन्द्र सोमपाः सोमपानशीलः गिरामुपश्रुतिं चर । स्तुतिलक्षणां गिरं वाचमुप श्रुत्य चर आगच्छास्मद्गृहम् । उपयाम इत्यादि समानम् ॥ ३४ ॥

तृतीयो मन्त्रविकल्पः ॥ इन्द्रमिद्धरी । इच्छब्द एवार्थे इन्द्रमेव हरितवर्णावश्वौ वहतः प्रापयतः कथंभूतमिन्द्रम् । अप्रतिधृष्टशवसं न प्रतिधर्षयितुं शक्यते शवो बलं यस्य सः अप्रतिधृष्टशवाः तमप्रतिधृष्टशवसं क्व वहत इत्यत आह । ऋषीणां च वशिष्ठप्रभृतीनां च स्तुतीः उप समीपे यज्ञं च मानुषाणां मनुष्याणां यजमानानामुप समीपे वहत इति वर्त्तते उपयाम इत्यादि समानम् ॥ ३५ ॥

षोडशिग्रहमुपातिष्ठते । यस्मान्न । त्रिष्टुप् षोडशी परब्रह्मरूपेण

स्तूयते यस्मादन्यः परः उत्कृष्टः जातो देवादिर्नास्ति न विद्यते महिम्ना यश्च आविवेश आविशति भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि । अन्तर्यामिरूपेण । तथा च श्रुतिः । यः सर्वेषु भूतेषु तिष्ठति यश्च प्रजापतिर्भवति । प्रजया संरराणः संरममाणः । क्रीडन् । यश्च त्रीणि ज्योतींषि अग्निवायुसूर्यलक्षणानि सचते सेवते परमात्मरूपेण सोऽयं षोडशीग्रहः ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥ ३६ ॥

षोडशिनं भक्षयति । इन्द्रश्च सम्राट् । त्रिष्टुप् यज्जुरन्ता । सह प्राणेनेति यजुः । इन्द्रावरुणौ देवता षोडशिग्रहो वा इन्द्रश्च सम्राट् यो वाजपेययाजी वरुणश्च । चकारौ समुच्चयार्थीयौ । राजा यो राजसूययाजी । राजा वै राजसूयेनेष्ट्वा भवति सम्राड् वाजपेयेनेति श्रुतिः । तौ इन्द्रावरुणौ ते तव षोडशिग्रहभक्षं चक्रतुः कृतवन्तौ । अग्ने प्रथमम् । एतमिति भक्षेण संबन्धः । तयोर्भक्षमनुकुर्वन्नहं भक्षयामि । मदीयेन च भक्षणेन वाग्देवी जुषाणा सेवमाना सोमस्य तृप्यतु सह प्राणेन ॥ ३७ ॥

अथातिग्राह्याः पुरोरुचस्तिस्रो गायत्र्योऽग्नीन्द्रसूर्यदेवत्याः । अग्ने पवस्व । हे भगवन्नग्ने पवस्व । पवतिः प्रवृत्त्यर्थोऽन्तर्भावितण्यर्थः पवस्व प्रवर्त्तयस्व यस्त्वं स्वपाः सुकर्मा अप इति कर्म्मनामसु पठितम् । अस्मे अस्मासु वर्च्चः ब्रह्मवर्च्चसं सुवीर्यं शोभनवीर्यं दधद्रयिं मयि पोषम् । दधत् धारयन् स्थापयन् मयि रयिं धनं मयि पोषं पुष्टिं च प्रवर्त्तयस्वेति संबन्धः । उपयामगृहीतोऽस्यग्नये त्वा वर्च्चसे । एष ते योनिरग्नये त्वा वर्चसे । व्याख्याते । भक्षमन्त्रः । अग्ने वर्च्चस्विन् । हे अग्ने ब्रह्मवर्च्चसा संयुक्त यथा त्वं देवेष्वसि वर्च्चः संयुक्त एवमहं मनुष्येषु वर्च्चोयुक्तो भूयासं भवेयम् । स्वयंभूरसीत्येतस्मिन्मन्त्रे वर्च्चोदा असीति वर्च्चःशब्दो ब्रह्मवर्च्चसपर्यायो वर्णितः श्रुत्या तद्ध्येव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्च्चसी स्यादिति अतोऽस्मिन्मन्त्रे वर्चश्शब्दो ब्रह्मवर्चसपर्यायो दर्शितः ॥ ३८ ॥

उत्तिष्ठन्नोजसा । मातुरुत्सङ्गादुत्तिष्ठन् ओजसा बलेन सह पीत्वी पीत्वा शिप्रे अवेपयः शिप्रे हनू नासिके वा टुवेपृ कम्पने । अतिपानोद्वेगान्नासिके कम्पितवानसि । किं तद् द्रव्यं यत्पीत्वा अवेपयः इत्यत आह सोमम् । भगवन्निन्द्र चमूसुतम् । अधिषवणचर्म्म च-

भूशब्देनोच्यते । अधिषवणचर्मणि अभिषुतं सोमं पीत्वा अवेपय इति संबन्धः । उपयामगृहीतोऽसीन्द्राय त्वौजसे एष ते योनिरिन्द्राय त्वौजसे । प्रगुणं ग्रहं भक्षयति । हे इन्द्र ओजिष्ठ अतिशयेन ओजसा युक्त । यथौजिष्ठस्त्वं देवेष्वसि एवमोजिष्ठोऽहं मनुष्येषु भूयासम् ॥ ३९ ॥

अदृश्रमस्य । दृशिर् प्रेक्षणे । अस्य कर्मणि प्रथमपुरुषबहुवचनस्य स्थाने छान्दसं रूपमदृश्रमिति । दृश्यन्ते अस्य सूर्यस्य प्रज्ञाकृतत्वात् केतवो रश्मयः । केतुरिति प्रज्ञानामसु पठितम् । वीत्यनर्थकः । यद्वा अदृश्रमित्यनेन संबन्धः । व्यदृश्रं जनान् अनुगताः । भ्राजन्तो दीप्यमानाः कथंभूता दृश्यन्ते । अग्नयो यथा अग्नय इव । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वां भ्राजाय । भक्षयति । हे सूर्य भ्राजिष्ठ अतिशयेन भ्राजिष्ठ । यथा भ्राजिष्ठस्त्वं देवेष्वसि एवं भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ॥ ४० ॥

विषुवति ग्रहं गृह्णाति । उदुत्यं जातवेदसं व्याख्यातं देवार्षन्तु ॥ ४१ ॥

अथ रोहिणीगोरभिमन्त्रणं द्वाभ्यामृग्भ्यां महापङ्क्तिप्रस्तारपङ्क्तिभ्यां द्रोणकलशं जिघ्रत्या कुसुरुविन्दोरार्षम् आजिघ्र । महीति गोनामसु पठितम् । आभिमुख्येन जिघ्र द्रोणकलशं हे महि किञ्च आ त्वा विशन्त्विन्दवः आविशन्तु त्वामिन्दवः सोमाः य एते द्रोणकलशसंबन्धिनः किं च पुनरपि ऊर्जा अन्नेन सहिता अस्मान्प्रति निवर्त्तस्व यां त्वामेवं स्तुमः । सा नः अस्माकं सहस्रं गवां यदेतदस्माभिर्दत्तं तत् धुक्ष्व । दुहतिर्दानार्थः । तत्पुनर्देहि त्वत्प्रसादाच्च । उरुधारा बहुधारा पयस्वती पयसा संयुक्ता पुनरपि माम् । आविशतात् विशतु रयिः धनम् ॥ ४२ ॥

दक्षिणेऽस्याः कर्णे यजमानो जपति । हे इडे इडा नाम मनोर्दुहिता तया गौरुपमीयते इडेव त्वमसि । रन्ते रमयतीति रन्ता । हव्ये हूयन्तेऽस्या विकारा यज्ञेष्विति हव्या । काम्ये काम्या मनुष्याणां ह्येतासु कामाः प्रविष्टाः । चन्द्रे चन्द्र इवाह्लादयतीति चन्द्रो ज्योते तस्यैव ज्योतिर्ज्योत्स्ना । द्युत दीप्तौ । अस्य ज्योता । अदिति अदीने सरस्वति । सर इत्युदकनाम । सर्त्तेः तद्वति महि । महति विश्रुति विविधं श्रूयते स्तूयते इति विश्रुति एतानि ते तव हे अघ्न्ये अहन्तव्ये नामानि अतिशयगुणयुक्तानि तैरेतैरभिहिता सती

देवेभ्यो मा मां सुकृतं सुकृतकारिणं ब्रूतात् ब्रूहि ॥ ४३ ॥

महाव्रतीयं ग्रहं गृह्णाति । वि न इन्द्र । अनुष्टुप् । इन्द्रो विमहद्गुणयुक्तो देवता । विन इन्द्र मृधो जहि । विनाशय नः अस्माकं हे इन्द्र मृधः संग्रामान् किञ्च नीचा यच्छ पृतन्यतः । ये पृतनां संग्राममिच्छन्ति ते पृतन्यतः तान्पृतन्यतः मनुष्यान् नीचा यच्छ नीचैर्निगृह्णीष्व यश्च अस्मान् अभिदासति । दासृ उपक्षये ॥ उपक्षिपति । तमधरं निकृष्टम् अर्वाचीनं तमो गमय । उपयामगृहीतोऽसीन्द्राय त्वा विमृधे एष ते योनिरिन्द्राय त्वा विमृधे । व्याख्यातम् ॥ ४४ ॥

द्वितीयो मन्त्रविकल्पः । वाचस्पतिम् । त्रिष्टुप् वैश्वकर्मणी । स नो विश्वानीति तदः श्रवणात् यदोऽध्याहारः कर्त्तव्यः ॥ नित्यसंबन्धौ हि यत्तदौ । वाचोऽधिपतिं प्राणरूपेण इन्द्ररूपेण वा विवक्ष्यते । तस्मादाहुरिन्द्रो वागिति श्रुतेः । विश्वकर्माणं सर्वस्य कर्तारम् । ऊतये अवनाय तर्पणाय वा मनोजुवं मनस इव यस्य जवः स एवमुच्यते । मनोगतिमित्यर्थः । वाजे अन्ने अस्मिन्महाव्रतीयलक्षणे विषयभूते अद्य अस्मिन् द्यवि हुवे आह्वयामः स आहूतः सन् नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि जोषत् जुषतां सेवतां विश्वशम्भूः शमिति सुखनाम सर्वस्य सुखेन भावयिता अवसे अव इत्यन्ननाम । अस्माकमन्नदानाय साधुकर्मा । उपयामगृहीत इत्यादि व्याख्यातम् ॥ ४५ ॥

अपरो मन्त्रविकल्पः विश्वकर्म्मन् हविषा । त्रिष्टुप् । ऐन्द्री वैश्वकर्मणी वा । हे विश्वकर्मन् अनेन हविषा महाव्रतीयलक्षणेन वर्द्धनेन वर्द्धयित्रा । त्रातारं जगतः इन्द्रमकृणोः कृतवानसि अवध्यं च तस्मै एवंप्रभावाय इन्द्राय विशो मनुष्याः समनमन्त सन्नताः पूर्वीः पूर्वे वशिष्ठप्रभृतयः इदानीन्तना अपि सन्नताः । अयमेव हि इन्द्रः उद्गूर्णवज्रः विहव्यश्च । विविधेषु कार्येषु आहूयत इति विहव्यः । यथा असत् । पञ्चम्यर्थे थाल्प्रत्ययः । यतः कारणात् असत् अभवन् हे विश्वकर्म्मन् त्वद्धविःसामर्थ्यादिन्द्रस्यायं प्रभाव इत्यभिप्रायः । उपयाम इत्यादि व्याख्यातम् ॥ ४६ ॥

अदाभ्यं गृह्णाति । उपयामगृहीतोऽसि । देवानामार्षम् । अग्नये त्वा गायत्रच्छन्दसं गृह्णामि। एकं ग्रहणम् । इन्द्राय त्वां त्रिष्टुप्छन्द-

सं गृह्णामि । द्वितीयं ग्रहणम् । विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि । तृतीयं ग्रहणम् । एवं सवनदेवताभ्यः स्वछन्दस्कं सोमं गृह्णामि । अथेदानीमाह । अनुष्टुप् ते । तव हे सोम अभिगरः । गॄ स्तुतौ । अभिष्टव इत्यर्थः । यद्वा ऊर्ध्वं सवनेभ्यस्तदानुष्टुभमिति श्रुतिः ॥ ४७ ॥

ग्रहपात्रस्थासु निग्राभ्यासु अंशूनाधुनोति त्रेशीनां त्वा पत्मन्नाधूनोमि । मेघस्य व्रजत उदरे शेरते इति व्रेश्यः उदरस्था आप उच्यन्ते । हे सोम व्रेशीनामपां त्वां पत्मन् पतने आधूनोमि कम्पयामि कुकूननानां त्वा । कुङ् शब्दे । अत्यर्थं कुर्वन्त्यः शब्दं कुर्वाणा नमन्ते प्रह्वीभवन्ति कुकूननाः मेघ्या आपः । भन्दनानाम् । भदि कल्याणे सुखे च । कल्याणकारिण्यः सुखयित्र्यो वा भन्दनाः । मदिन्तमानाम् । अत्यर्थं मदयन्ति तर्प्पयन्तीति मदिन्तमाः नाद्घस्येति नुमागमः । मधुन्तमानाम् । अतिशयेन मधुस्वादोपेताः मधुन्तमाः । शुक्रं त्वा । शुक्रम् अक्लिष्टकर्माणं शुक्रे अक्लिष्टकर्मणि निग्राभ्यालक्षणे उदके आधूनोमि । अह्नो रूपे दिवसस्य रूपे तदपि शुक्रमेव भवति । सूर्यस्य च रश्मिषु । रश्मयस्तु प्रकाशरूपत्वादेवं भवन्ति ॥ ४८ ॥

ककुभं रूपं वृषभस्य रोचते । बृहत् । ककुभ इति महन्नामसु पठितम् । अस्य सोमलक्षणस्य वृषभस्य ककुभमादित्यलक्षणं रूपं रोचते देदीप्यते । बृहत् महत् प्रभावतः शुक्रः शुक्रस्य पुरोगाः । शुक्र आदित्यः शुक्रस्य आदित्यस्य पुरोगामी सोम एव सोमस्य पुरोगामी भवितुमर्हति यस्मात् अतः कारणात् यत् ते हे सोम अदाभ्यम् । अनुपहिंस्यं नाम । जागृवि जागरणशीलं तस्मै त्वां गृह्णामि । जुहोति । तस्मै ते तव हे सोम सोमाय स्वाहा । तत्सामेमेवैतत्सोमाय जुहोतीति श्रुतिः ॥ ४९ ॥

अंशून्सोमे निदधाति—उशिक् त्वम् । वश कान्तौ । अस्य क्विपि उशिगिति भवति । यतः उशिक् कान्तः वल्लभस्त्वं हे देव सोम अस्माकम् । अतोऽग्नेः प्रियं पाथोऽन्नम् अपि इहि अपिगच्छ वशी च त्वम् । वश कान्तौ । शेषं व्याख्यातम् । अस्मत्सखा । अस्माकं सखा शेषं प्रगुणम् ॥ ५० ॥

सत्रोत्थानं देवानामार्षम् । गार्हपत्ये द्वे । आहुती जुहोति । इह रतिः । उत्क्रमन्तः पशवो नियम्यन्ते । इह यजमानेषु भवतां रतिः

रमणम् । रमणातिः संयमनकर्मा यत एवमत इहैव रमध्वम् । इह धृतिर्भूयात् । इह स्वधृतिः । यत एवमत इहैव साधुधारणं भूयात् । पशूनां यजमानविषया धृतिः प्रार्थ्यते । द्वितीयां जुहोति । उपसृजन् उष्णिक् आग्नेयी उपसृजन् धरुणं धारयितारम् अग्निं मात्रे पृथिव्यै माताऽत्र पृथिव्युच्यते । धरुणः धारयिताग्निः मातरं पृथिवीं धयन् पिबन् रायस्पोषम् । पशवो वै रायस्पोष इति श्रुतिः । पशून् अस्मासु दीधरत्- धारयतु ॥ ५१ ॥

सत्रस्यर्द्धि गायन्ति । सत्रस्य ऋद्धिरसि । बृहती यजमानानां संस्तवः सत्रस्य समृद्धिस्त्वमसि यत अगमत् आगताः ज्योतिः आदित्यलक्षणम् । अमृताश्च अभूम भूताः । दिवं च अध्यारुहाम अध्यारूढाः पृथिव्याः सकाशात् द्युलोकं चारूढाः सन्तः । अविदाम देवान् जानीमः । पश्यामो देवान् । स्वः स्वर्गं पश्यामः ज्योतिः आदित्यलक्षणम् । ज्योतिः अविदामेत्यनुवर्त्तते ॥ ५२ ॥

दक्षिणस्य हविर्धानस्याधोक्षं सर्पन्ति ॥ युवं तमिन्द्रापर्वता । अतिच्छन्दा अष्टिः अत्यष्टिर्वा । त्र्यवसाना । ऐन्द्री प्रथमोऽर्द्धर्चे ऐन्द्रापर्वतः । हे इन्द्रापर्वतौ । युवं- तं यत्नमनुतिष्ठतं येन यत्नेन पुरोयुधा पुरोऽग्रतो यत् युध्यति । तत्पुरोयुत्- तेन पुरोयुधा बलेन । यो नः पृतन्यादपतन्तमिद्धतामिति । तन्तमिति तदो वीप्साश्रवणात् यदो वीप्सा क्रियते । यो यः शत्रुर्नोऽस्मान्पृतन्यात् संग्रामयेत् योधयेत् अप तं तमिद्धतम् । अपहतं विनाशयतं तं शत्रुम् । इच्छब्दोऽनर्थकः । वज्रेण तं तम् इत् हतम् । वज्रेणेत्यायुधनियमः शत्रूणामुन्मूलनाय । व्याख्यातमन्यत् । इत उत्तरामिन्द्रः प्रत्यक्षी वज्रस्य-तु कर्तृत्वं विवक्षितं परोक्षस्य सतः । दूरे चत्ताय छन्त्सत् । चततिर्गतिकर्मा दूरे गताय चत्ताय शत्रवे । छत्सन् छन्दतिः कामनार्थः कामयतां हे इन्द्र त्वदीयो वज्रः शत्रवे विनाशं कामयतां कथमेवं शत्रुर्नश्यतामिति चेत् आत्मैवैषां रथो भवति आत्माश्वः आत्मा आयुधमित्यदोषः । गहनं यदिनक्षत् । गहनं वनमुच्यते उदकं वा । इनक्षतिर्व्याप्तिकर्मा । इनक्षत् इति रूपसादृश्यात्-उदकं वनं वा यत् इनक्षत् व्याप्नोति शत्रुर्ग्रहरूपेण तस्य॥प नाशंकामयतां त्वदीयो वज्रः । अस्माकं शत्रून्परिशूर विश्वतः दर्मा दर्षीष्ट । हे शूर त्वदीयो वज्रः अस्माकं ये शत्रवः तान्परिदर्षीष्ट द

विदारणे। परिदारयतु। कथम्भूतो वज्रो दर्मा दारणशीलः कुतोऽव-स्थितान्- शत्रून् विश्वतः सर्वतः। हे इन्द्र त्वदीयो वज्रः शत्रवे विनाशं दधाति। जपन्ति भूर्भुवः स्वः। सुप्रजाः। प्रजाभिः स्याम सुवीरा वीरैः। सुपोषाः पोषैः। एकवचनान्तो व्याख्यातः इह तु बहुवचनान्तः सत्रोत्थानं समाप्तम्॥ ५३॥

परमेष्ठ्यभिधीतः आ अध्यायपरिसमाप्तेर्नैमित्तिकानि वाशिष्ठ-स्यार्षम्। परमेष्ठ्यादिश्रुतिश्चतुस्त्रिंशत्सु सोमावस्थासु चतुस्त्रिंशद्दे-वताभिधायिनी ऋज्वर्था अभिधीतः अभिध्यातः संकल्पितो यजमा-नेन सोमेनोपनमेत् वाचाभिव्याहृतः अहं सोमेन यक्ष्ये इत्युक्तं भ-वति अच्छतः अच्छाभेराप्तुमिति शाकपूणिः। सोममभि इतो गतः। सोमं व्याप्तुम् इतो गतः अन्धोऽन्नमुच्यते। सविता सन्यां सनोतिः संभजनार्थः सोमसंभक्तौ सत्याम्॥५४॥५५॥५६॥५७॥५८॥

सलिलः प्रप्लुतः प्रप्लुतोऽप्सु निमग्नः। शेषं प्रगुणम्। स्कन्न-मभिमृशति। ययोरोजसा। वैष्णववारुणी त्रिष्टुप्। ययोर्विष्णुवरु-णयोः ओजसा बलेन स्कभिता रजांसि स्कभ्नोतिः स्तम्भनार्थः। लोका रजांस्युच्यन्ते स्तम्भिता लोका न चलन्ति। यौ च वीर्यैः स्वकीयैर्वीरतमौ शविष्ठौ बलिष्ठौ च यौ च श्येनाविव परबलेषु प-ततः अप्रतीतौ अप्रातिगतौ अनन्याश्रितौ सहोभिः स्वकीयैरेव बलैः तौ विष्णुवरुणौ तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ द्वितीयाद्विवचनमेतत्। अगन् अगच्छत्। गतो यज्ञः यज्ञसाधनभूतं स्कन्नं द्रव्यं यज्ञशब्देनोच्यते। पूर्वहूतौ पूर्वस्मिन्नाह्वानं यावत्प्रधानं न हूयते तावत् विष्णुं वरुणं च प्रतियज्ञो गत इत्यर्थः। यद्वा पूर्वं हूयेते इति पूर्वहूतौ विष्णुवरुणौ प्रति अगच्छन् ततो यज्ञ इति सम्बन्धः॥ ५९॥

द्वितीयो मन्त्रविकल्पः। देवान् दिवम्। देवान् प्राप्य दिवं द्युलो-कम् अगन् गतो यज्ञः। ततो मा द्रविणमष्टु। ततो द्युलोकात् द्रविणं यज्ञफलमुत्पन्नं माम् अष्टु व्याप्नोतु मनुष्यान् प्राप्यान्तरिक्षलोकं गतो यज्ञः ततोऽन्तरिक्षलोकादुत्पन्नं यज्ञफलं मां व्याप्नोतु अन्यमपि यं कं च लोकं गतो यज्ञः फलविशेषः। ततो लोकान् मे मम भद्रम्। अभूत् भवतु॥ ६०॥

महावीरभेदे होमः। चतुस्त्रिंशत्-पङ्क्तिर्वा त्रिष्टुब्वा-चतुस्त्रिंश-

त्तन्तवो यज्ञस्य परमेष्ठ्यादयः ये यज्ञं वितन्विरे ये च इमं यज्ञं स्वधया अन्नेन ददन्ते । दद दाने इत्यस्यैतद्रूपम् । पुष्यत्यर्थस्य पुष्णन्ति तेषां वितन्वतां यच्छिन्नं तदेतत्संदधामि ॥ उकारोऽनर्थकः । स्वाहा सुहुतमस्तु ॥ असौ घर्म्मो महावीरो देवानपि गच्छतु ॥ ६१ ॥

यज्ञस्य दोह इति वाचयति त्रिष्टुप् ॥ प्रथमेऽर्द्धर्चे परोक्षो यज्ञो द्वितीये प्रत्यक्षोऽतो यत्तच्छब्दाभ्यां वाक्यपरिपूर्त्तिः क्रियते ॥ यस्य तव यज्ञस्य सतः दोहः आहुतिपरिणामो विततः प्रसारितः पुरुत्रा बहुधा ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इत्याशयः ॥ स एव दोहो दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान भूमिमन्तरिक्षं चावाप्य द्युलोकमन्वाततान स त्वं हे यज्ञ धुक्ष्व क्षर दोहम् । महि महान्तं मे मम प्रजायाम् अहं च रायस्पोषं धनस्य पुष्टिं विश्वं सर्वं चायुः अशीय व्याप्नुयां त्वत्प्रसादात् ॥ ६२ ॥

ध्वाङ्क्षारोहणे यूपस्य होमः ॥ आपवस्व ॥ गायत्री सौमी पावमानी । हे सोम आपवस्व प्रक्षर हिरण्यवत् क्रियाविशेषणान्येतानि हिरण्यसंयुक्तम् । अश्ववत् अश्वसंयुक्तं वीरवत् वीरैः संयुक्तं वाजमन्नं च गोमन्तं गोभिः संयुक्तम् । आभर हृग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः । अपकृपणमाहर ॥ ६३ ॥

उव्वटकृतौ मन्त्रभाष्येऽष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः ।

देव सवितः । वाजपेयिका मन्त्राः ॥ एष ते निर्ऋते भाग इत्येतस्मात्प्राक् बृहस्पतेरार्षम् । इन्द्रस्य वा कर्मणः कर्मणः पुरस्तदाहुतिं जुहोति । सावित्र्या त्रिष्टुभा ॥ हे देव सवितः प्रसुव अभ्यनुजानीहि । वाजपेयलक्षणं यज्ञम् । अभ्यनुजानीहि च यज्ञपतिं यजमानं भगाय भजनीयाय यज्ञफलाय एवं पुरुषमुक्त्वेदानीं मण्डलमवयुत्याह त्वत्प्रसादाच्चायं मण्डललक्षणो दिव्यो दिवि भवो गन्धर्वो वा रश्मीनां धारयिता केतपूः ॥ केतशब्देनान्नमुच्यते ॥ अन्नस्य पावयिता ॥ नः अस्माकं पुनातु शोधयतु त्वत्प्रसादाच्च वाचस्प-

तिः वाजमन्नं नः अस्माकं स्वदतु । स्वद स्वर्द आस्वादने ॥ आस्वादयतु ॥ १ ॥

पञ्च वाजपेयिका ग्रहा गृह्यन्ते ऐन्द्राः ध्रुवसदं त्वा ॥ सोमाहुतिपरिणामभूतो रस एषु लोकेषु आवर्त्तमान इह गृह्यते सोमाध्यस्तः ध्रुवेऽस्मिन् लोके सीदति ॥ ध्रुवसत् तं ध्रुवसदं त्वां नृषदं मनुष्यसदं मनसि सीदतीति मनः सदं इन्द्राय त्वा जुष्टमभिरुचितं गृह्णामि । उपयामगृहीतोऽसीत्ययं भिन्नक्रमः ॥ आदौ मन्त्रावयवो द्रष्टव्यः अर्थसम्भवात् । सादयति एष ते योनिरिन्द्राय त्वाम् अभिरुचिततममिति ॥ द्वितीयं गृह्णाति अप्सुषदम् उदकसदं त्वां घृतसदं व्योमसदं व्योमशब्देनान्तरिक्षमुच्यते शेषं व्याख्यातम् ॥ तृतीयं गृह्णाति पृथिविसदं त्वान्तरिक्षसदं दिवि सदं देवसदं नाकसदं कमिति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्यते यत्र वसतां स्वल्पमप्यसुखं न विद्यते स नाको लोकः स्वर्गविशेषः शेषमृजु ॥ २ ॥

चतुर्थं गृह्णाति । अपाᳬरसम् । रसदेवत्यानुष्टुप् । रसः सारः सोऽयं वायुः । एष वा अपां रसो योऽयं पवत इति श्रुतिः । उद्वयसम् । उद्गतं वयोऽन्नं यस्माद्वायोस्तमुद्वयसं वायुम् । सूर्ये सन्तᳬसमाहितमित्यनयोः पदयोर्व्यत्ययोऽर्थसंबन्धात् । सूर्ये समाहितं सन्तं समारोपितं गृह्णामीति वक्ष्यमाणेन संबन्धः । अपां रसस्य यो रसस्तं वो गृह्णामीत्युत्तमम् । अपां रसो वायुस्तस्यापि रसः सारः प्रजापतिः स हि यज्ञलोककालाग्निवायुसूर्यऋग्यजुःसामादिवपुः । तं वः शब्देनाह । हे आपः गृह्णामि । उत्तममुत्कृष्टतमम् । यद्वा वःशब्दोऽनर्थकः । अपां रसस्य वायोर्यो रसः प्रजापतिः तं गृह्णामीति तस्मिन्पक्षे योजना । उपयामगृहीतोऽसीत्यादि समानम् ॥ ३ ॥

पञ्चमं गृह्णाति । ग्रहा ऊर्जाहुतयः । अनुष्टुप् । हे ग्रहाः ऊर्जाहुतयः ऊर्जमन्नं रसमाह्वयन्ति ये ते ऊर्जाहुतयः । व्यन्तः पश्यन्तः जानन्तः विप्राय मेधाविने इन्द्राय मतिं विशिप्रिया भवतेति शेषः । शिप्रे हनूनासिके वा इत्युक्तम् । इह तु हनू एव गृह्येते विगतं हन्वोः कर्म येषु ग्रहेषु ते विशिप्रियाः । शोभनाभिषवसंस्कृताः सुपूताश्च ते विशिप्रिया उच्यन्ते । तत्र हि हन्वोर्व्यापारो न भवति । तेषां च विशिप्रियाणां सतां वः सम्बधिनामहम् । इषमन्नम् । ऊर्जं च रसं समग्रभं संगृह्णामि । शेषं व्याख्यातम् । उपयाम इत्यादि व्या-

ख्यातम् उपर्युपर्यक्षं सोमग्रहं करोत्यध्वर्युः । अधोऽधोऽक्षं नेष्टा सुराग्रहं करोति संपृचौ स्थः । पृची संपर्के । यौ युवां ग्रहौ संपृक्तौ स्थः तौ संपृक्तं संसृजतं मा भद्रेण भन्दनीयेन कल्याणेन तौ पुनर्विहरतः । विपृचौ स्थः यतो युवां विगतसंसर्गौ स्थः । ततो विमा पाप्मना पृङ्क्तम् । विगतसंसर्गं पाप्मना मां कुरुतम् ॥ ४ ॥

रथमुपाहरति । इन्द्रस्य वज्रोऽसि । इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयं वा यावद्धेति यदुक्तं तदिदमभिधीयते. यस्त्वमिन्द्रस्य वज्रोऽसि वाजसास्त्वया । वाजमन्नं सनोतीति वाजसाः तं त्वां ब्रवीमि त्वया वज्रीभूतेनायं यजमानो वाजमन्नं सेत् । सनोतेः सिनोतेर्वा एतद्रूपं सनुयात् संभजेदित्यर्थः । यद्वा सिनुयाद्बध्नीयादित्यर्थः । धूर्गृहीतमत्यावर्त्तयति । वाजस्य नु । जगत्याति जगती वा पार्थिवी । चतुर्थपादः सावित्रः वाजस्यान्नस्य । नु अनर्थकः । प्रसवे अभ्यनुज्ञायां वर्त्तमाना इति शेषः । या मातरं जगन्निर्मात्रीं महीं महतीम् अदितिमदीनां नाम । ताम् अनुकूलां वचसा वेदवाक्येनानेन करामहे कृतवन्तः साहसिकाः ॥ आत्मनेपदं करोतेः । यस्यां च इदं विश्वं भुवनं भूतजातम् । आविवेश आविष्टं तस्यां च पृथिव्यां नः अस्माकं देवः दानादिगुणयुक्तः सविता सर्वस्य प्रसविता धर्म्म धारणम् अवस्थानं साविषत् । प्रसुवतम ॥ ५ ॥

अश्वान् अद्भिरभ्युक्षति । अप्स्वन्तः । अनवसाना पुर उष्णिक् अश्वदेवत्या । अप्सु अन्तः अमृतम् । अन्तःस्थितम् । अप्सु च भेषजम् अन्तः अवस्थितं तत्र हे अश्वाः यूयं भवत वाजिनः । वाज इत्यन्ननाम । तद्येषु विद्यते ते वाजिनः अन्नवन्तो यूयं तत्र भवतेत्यर्थः । अपामुत प्रशस्तिषु । उत अपि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु भवतेत्यनुषज्यते । द्वितीयः प्रोक्षणमन्त्रः । देवीरापः हे देव्य आपः यो व ऊर्मिः प्रतूर्त्तिः यो वो युष्माकम् । ऊर्म्मिः कल्लोलः महानुदकसंघातः प्रतूर्तिः प्रत्वरणः । ककुन्मान् ककुच्छब्देन वृषभस्य स्कन्ध उन्नतदेश उच्यते । तत्सामान्यादुदकसंघातोऽप्युन्नतः ककुच्छब्देनोच्यते बहुभिरुदकनिचयैः संयुक्तो महान् प्राग्भार इत्यर्थः । वाजसाः अन्नस्य संभक्ता तेनायम् अश्वः प्रोक्षितो वाजमन्नं सेत् सनोतेः सिनोतेर्वा लिङ्येतद्रूपम् । सनुयात् संभजेत् । सिनुयात् बध्नीयात् ॥ ६ ॥

अश्वं युनक्ति । वातो वा । उष्णिक् । अश्वस्तुतिः । वाशब्दः समुच्चयार्थीयः । वातश्च मनश्च गन्धर्वाः सप्तविंशतिर्नक्षत्राणि । एते त्वां युञ्जन्तु त्वयि च जवमादधतु । यतस्तेऽग्रे प्रथमम् अश्वे अयुञ्जन्- ते अस्मिन् जवमादधुः । ते च अस्मि जवं वेगम् । आहितवन्तः ॥ ७ ॥

द्वितीयं युनक्ति । वातरंहा भव । त्रिष्टुप्- । अश्वस्तुतिः । रंहतिर्गत्यर्थः । वातजवो भव हे वाजिन् युज्यमानः सन् इन्द्रस्येव दक्षिणोऽश्वः श्रिया एधि भव अस्य यजमानस्य । युञ्जन्तु च त्वां मरुतो विश्ववेदसः सर्वधना वा सर्वज्ञाना वा । आदधातु च ते तव त्वष्टा पत्सु पादेषु जवं वेगं संयुक्तस्य सतः ॥ ८ ॥

तृतीयं युनक्ति । जवो यस्ते । जगती अश्वस्तुतिः । जवो वेगे यस्ते तव हे वाजिन् निहितः स्थापितः गुहा गुहायामिति विभक्तिव्यत्ययः गुहाशब्दो रहस्यवचनः यश्च श्येने पक्षिणि परीतः परिपूर्वस्य तनोतेरेतद्रूपम् । परिततो व्यवस्थितः अचरच्च वाते यश्च वाते त्वदीयो जवः अचरत् तेन नो वाजिन् बलवान्बलेन तेन वेगलक्षणेन बलेन बलवान् भूत्वा हे वाजिन् नः अस्माकं वाजजित् त्वं भव अन्नस्य जेता भव । समने च पारयिष्णुः समने च संग्रामे पारयिता भव बार्हस्पत्यमश्वानवघ्रापयति । वाजिनो वाजजितः । हे वाजिनोऽश्वाः वाजजितः अन्नस्य जेतारः । वाजमन्नं जेतुं सरिष्यन्तः बृहस्पतेर्भागं चरुमवजिघ्रत ॥ ९ ॥

ब्रह्मा रथचक्रमारोहति । देवस्याहम् । सवितुः सवे अभ्यनुज्ञायां सत्यसवसः सत्याभ्यनुज्ञातस्य वर्त्तमानः बृहस्पत्तेः संबन्धि उत्तमम् उत्कृष्टं नाकं स्वर्गलोकं रुहेयम् । आरोहामि । देवस्याहꣳसवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳरुहेयमिति देवतामात्रे विशेषः । रथचक्रादवतरति । देवस्याहꣳसवितुः सवे सत्यप्रसवो बृहस्पतेरुत्तमं नाकमरुहम् । प्रशब्दः प्रकर्षद्योतनार्थः । अरुहमिति च भूतकालाभिधायी । भूतो हि कालः आरूढवानस्मीत्यर्थः । शेषमारोहणमन्त्रेण समानम् । इन्द्रस्येत्युत्तरमन्त्रे विशेषः ॥ १० ॥

दुन्दुभिमाहन्त्येकं सर्वेषां तु संस्कारो बहुवचनत्वान्मन्त्रस्य । बृहस्पते वाजं जय । हे दुन्दुभयः । यूयमुच्यध्वं बृहस्पते वाजमन्नं जय । इत्थंभूतां वाचं बृहस्पतयेऽर्थाय वदत बृहस्पतिं वाजमन्नं जे-

ष्यामीति जापयत । जप जल्प व्यक्तायां वाचि । जपतेर्हेतुमति चेति णिच् । लोट् मध्यमपुरुषबहुवचनम् । जापयत- उद्वादयत व्यक्तं वाचयत । इन्द्र वाजं जयेति देवतामात्रे विशेषः ॥ ११ ॥

दुन्दुभिमवहरति । एषा वः सा । एषा युष्माकं सत्या अवितथा संगतवादिनी वाक् अभूत् भूता यया वाचा बृहस्पतिं वाजमन्नं जेष्यामीति इत्थमीदृशम् । अजीजपत् । जपतेर्णिचि लुङि चङि एतद्रूपं भवति । जापितवन्तः । उद्वादितवन्त इत्यर्थः । यच्च यूयम् । अजीजपत । बृहस्पतिं वाजमन्नं जेष्यामीति । तच्च बृहस्पतिना जितमतो यूयं कृतकृत्याः सन्तो हे वनस्पतयो वानस्पत्या दुन्दुभयः विमुच्यध्वम् । उत्तरोऽपि मन्त्रोऽनेनैव व्याख्यातः । देवतामात्रे विशेषः ॥ १२ ॥

रथमारोहति यजमानः । देवस्याहम् । देवस्य सवितुः सत्यप्रसवसः प्रसवेऽहं वर्त्तमानः बृहस्पतेर्वाजस्य जेतुः संबन्धि वाजमन्नं जेषम् । वाचयति । वाजिनो वाजजितः । अश्वा उच्यन्ते । हे वाजिनः । वाजजितः अश्वस्य जेतारः अध्वनो मार्गान् स्कभ्नुवन्तः क्षोभयन्तः स ह्यश्वानां स्वभावः । योजना योजनानि । अतिशयेन शीघ्रतया मिमानाः परिच्छिन्दन्तः । शीघ्रं काष्ठाम् । आज्यन्तं गच्छत आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा स्थिता भवन्ति ॥ १३ ॥

द्वाभ्यां जगतीभ्यामश्वदेवत्याभ्यां जुहोति । एष स्य वाजी । अयं स वाजी वेजनवान् । क्षिपणिं तुरण्यति । क्षिपणिमनुकशाघातमनु तुरण्यति । तूर्णमश्नुतेऽध्वानम् । कथम्भूतः सन्नित्यत आह ग्रीवायां बद्धोऽपि कक्ष आसनि । ग्रीवायाम् उरोवध्रेण बद्धोऽपि कक्षे पर्याणप्रदेशे सन्नाहरज्ज्वा बद्धः आसनि आस्ये च मुखे कविकया बद्धः किं च क्रतुं दधिक्रानुसंसनिष्यदत् क्रतुं कर्म्म प्रज्ञां वा दधिक्रा अश्वः । स हि अश्ववारं दधत् क्रामति संसनिष्यदत् स्यन्दतेस्तनोत्यर्थे वर्त्तमानात् यङ्लुकि निपात्यते । अथ कोऽर्थः । स्वकीयं कर्म्म प्रज्ञां वा दधिक्रा अत्यर्थमनुसंतनोति । किं च । पथामङ्कांस्यन्वापनीफणत् । पथां कुटिलानि चक्राणि अतिशीघ्रतया क्षिप्रं प्राप्नोति । अनुपूर्वस्याङ्पूर्वस्य च फणतेर्गत्यर्थस्य चर्करीतवृत्तम् ॥ १४ ॥

उत स्मास्य । यजमानरथस्याघुक्तभ्रतुर्थोऽश्वोऽनुगच्छति । क-

विकापर्याणयुक्तस्तदभिप्रायेणाधस्तनो मन्त्रो व्याख्यातः। अथेदानीं रथयुक्ताश्वानेकशः स्तौति । अपि चाश्वरथे युक्तस्याश्वस्य द्रवतो गच्छतस्त्वध्वानं तुरण्यतः तूर्णमश्नुवानस्याध्वानं पर्णं न वेरनुवाति प्रगर्द्धिनः। विरिति शकुनिनाम। पर्णं पत्रं पक्षः पर्णमिव शकुनेः रथोऽनुवाति। वातोद्धूतः । प्रगर्द्धिनः । आजिं जेतुं प्रगर्द्धोऽस्यास्तीति प्रगर्द्धी अश्वः तस्यः प्रगर्धिनः । यद्वा शकुनिविशेषणम्। आमिषं गर्धिनः शकुनेः । स हि आमिषग्रहणार्थमतिशयेन धावति अतस्तेनोपमीयते । दक्षिणापृष्टिं स्तौति । उत्तरार्द्धर्चेन। श्येनस्येव ध्रजतः । यथा श्येनस्य ध्रजतोऽतिशयेन गच्छतः अङ्कसम्। अङ्कशब्देन शरीरं शरीरसक्तं परिपश्यन्ति । पक्षिणं भक्षणाय गृहीतं तथास्य दधिक्राव्णः अश्वस्य रथं सक्तं परिपश्यन्ति। सहोर्जा तरित्रतः सहोर्ज्जा अन्नेन तरतोऽतिशयेनाध्वानम् । नैवारं चरुमवजिघ्रति तदभिप्रायेण सहोर्ज्जेत्युक्तम् ॥ १५ ॥

उत्तरेण ऋचेन एतानेवाश्वांस्तौति । शं नो भवन्तु। त्रिष्टुप्। विराड् वा। शमिति सुखनाम । सुखरूपा भवन्तु नः अस्माकं वाजिनः अश्वाः हवेषु आह्वानेषु देवताता देवतातौ च यज्ञे मितद्रवः। ते हि मितं द्रवन्ति गच्छन्ति सुखकरं स्वर्काः सुरोचनाः । स्वञ्चना वा। किञ्च जम्भयन्तः क्षोभयन्तः । अहिं सर्प्पं वृकं च रक्षांसि च सनेमीति पुराणनाम। इह तु क्षिप्रवचनः। एवं वाक्यवशात् सनेमि क्षिप्रम्। अस्मत् अस्मत्तः । युयवत् । यु पृथग्भावे। पृथक् कुर्वन् अमीवाः व्याधीन् ॥ १६ ॥

ते नोऽर्वन्तः । जगती । तेऽर्वन्तः अश्वाः नः अस्माकं हवनश्रुतः । हवनमाह्वानं ये स्वभावत एव शृण्वन्ति त एवमुच्यन्ते। हवमाह्वानं विश्वे सर्वे शृण्वन्तु वाजिनोऽश्वाः मितद्रवः यजमानं परिच्छिन्नं ये गच्छन्ति ते एवमुच्यन्ते। हे मितद्रवः । शोभनगमना वा सहस्रसाः सहस्रस्य सनितारः संभक्तारः मेधसाता मेधो यज्ञः स यत्र सन्यते संभज्यते स मेधसातिः तत्र मेधसातौ सप्तम्यर्थे आकारः । सनिष्यवः संभक्तारः महो महान्तः । ये धनं समिथेषु संग्रामेषु जभ्रिरे आजभ्रिरे आहृतवन्तः । ते नोऽर्वन्त इत्यतिक्रान्तं प्रतिवचनम् ॥ १७ ॥

वाजे वाजे। त्रिष्टुप्। वाजे वाजे अन्ने अन्ने उपस्थितेषु अवत

पालयत । हे वाजिनः अश्वाः नः अस्मान् धनेषु उपस्थिते पालयत । हे विप्राः मेधाविनः । परिदृष्टकारिणः अमृताः । अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा । किञ्च अस्यैव च नीवारचरुलक्षणस्य मध्वः मधुनः पिबत मादयध्वं तृप्यध्वं नैवारं चरुमवजिघ्रन्त्यश्वास्तदभिप्रायमेतत् । तृप्ताश्च सन्तो यात पथिभिर्देवयानैः देवाध्यासितैः ॥ १८ ॥

यजमानो नैवारं चरुमालभते । आ मा वाजस्य । त्रिष्टुप् । आजगम्यात् आगच्छेत् मा मां प्रति वाजस्यान्नस्य प्रसवोऽभ्यनुज्ञा आ इमे द्यावापृथिवी विश्वरूपे सर्वरूपे । आ मा गन्ता पितरा मातरा च । आगन्ता आगच्छेतां च मां प्रति मातापितरौ । पितरा मातरा च छन्दसीति द्विरूपैकशेषो निपात्यते । आ मा सोमोऽमृतत्वेन गम्यात् । आगम्यात् आगच्छतु मां प्रति सोमोऽमृतत्वेन सहितः अश्वानाघ्रायपति नैवारं चरुम् । वाजिनो वाजजितः । हे वाजिनोऽश्वा वाजस्यान्नस्य जेतारः वाजमन्नं जेतुं सस्रवांसः सृप्तवन्तः सन्तो बृहस्पतेः संबन्धिनं भागम् ।अवजिघ्रत निमृजानाः । मृजूष् शुद्धौ । संशोधयन्त एनं चरुं यजमानं च ॥१९॥

द्वादश आप्तीर्जुहोति । आपये स्वाहा । प्रजापतेः संवत्सरस्य यज्ञस्य चैतानि नामानि । अप्नोतीत्यापिः । शोभनमाप्नोतीति स्वापिः । अपिजायत इति अपिजः क्रतुः सङ्कल्पो यज्ञो वा । वसुः वासयिता अह्नः पतिरहर्पतिः । अह्ने मुग्धाय । मुह वैचित्ये । दिनाय मुग्धाय । मुग्धाय वैनंशिनाय विनाशसंयुक्तेषु वसतीति वैनंशिनः । आन्त्यायनाय । अन्त्ये अयने भव आन्त्यायनः । अन्त्याय भौवनाय अन्ते भवः अन्त्यः । भुवने भवो भौवनः । उभयविशेषणविशिष्टमेवैकैकं नाम । भुवनस्य पतये । अधिपतये । प्रकटार्थे नामनी ॥ २० ॥

षट् क्लृप्तीः । आयुर्यज्ञेन कल्पताम् । मदीयमायुः । अनेन यज्ञेन क्लृप्तं भवतु एवमुपरितनानि व्याख्येयानि । मुखनासिकाप्रभवो वायुः प्राणः चक्षुः श्रोत्रं प्रकटार्थौ । पृष्ठं रथन्तरादि शरीरस्य वा पृष्ठम् । अयं चास्मदीयो यज्ञो यज्ञेन वाजपेयाख्येन क्लृप्तो भवतु । यूपं यजमान आरोहति । प्रजापतेः प्रजा अभूम । कृतमिदमस्माभिः कर्म अतो वयं प्रजापतेरपत्यभूताः सञ्जाताः गोधूमानुपस्पृशति । स्वर्देवा अगन्म

हे देवाः स्वः स्वर्गं लोकम् । अगन्म गताः वयम् । शिरसा यूप-मत्युज्जिहीते । अमृता अभूम । अमृताश्च सञ्जाताः ॥ २१ ॥

दिशोऽनुवीक्षते । अस्मे वो अस्त्विन्द्रियम् । अस्मे अस्मासु युष्मत्सम्बन्धि अस्तु भवतु इन्द्रियं वीर्यम् । अस्मे नृम्णम् । अस्मासु च धनं युष्मत्सम्बन्धि भवत्वित्यनुषङ्गः । उत क्रतुः । अपि च क्रतुः कर्म युष्मत्सम्बन्धि अस्तु । अस्मे वर्चाꣳसि सन्तु वः । अस्मासु च वर्चांसि तेजांसि भवन्तु वः युष्मत्सम्बन्धीनि । पृथिवी-मवेक्षते यजमानः । नमो मात्रे पृथिव्यै । पृथिवीं मातरं ब्रवीति नमस्करोति च । अभ्यासे भूयांसमर्थं मन्यन्ते इति द्विर्वचनम् । औदुम्बरीमासन्दीं बस्तचर्म्मणा स्तृणाति । इयं ते राट् । इय-मिति लिङ्गव्यत्ययः इदं ते तव राट् राज्यम् । अभिषिक्तासि त्व-मित्येतत्कथयति । सुन्वन्तमस्यामुपवेशयति यन्तासि नियन्ता त्व-मसि यमनः तव अनवच्छिन्नं यमनं कालान्तरेऽपि ध्रुवोऽसि स्थिरोऽसि । धरुणः धारकोऽसि । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषायत्वा । कर्षणाय त्वां क्षेमाय च धनाय च पुष्ट्यर्थं चोपवेश-यामीति शेषः ॥ २२ ॥

वाजप्रसवीयानि जुहोति । वाजस्येमम् । तिस्रस्त्रिष्टुभः । वा-जप्रसवीयदेवत्याः । अत्र प्रायशो व्यवहितानां पदानां सम्बन्धः वाजस्येमं प्रसवः सुषुवे । वाजस्यान्नस्य सम्बन्धी प्रसवः अभ्य-नुज्ञानम् । इमं सोमं राजानम् । अग्रे प्रथमं सुषुवे । षूङ् प्राणि-गर्भविमोचने इत्यस्यैतद्रूपम् । जनितवानित्यर्थः । कुतः सुषुवे । ओषधीस्वप्सु । ओषधीषु वर्तमानम् । अप्सु च वर्त्तमानम् । या इत्थम्भूताः सोमस्य जनयित्र्यः ओषधयः आपश्च ता अस्मभ्य-म् । अस्मदर्थं मधुमतीः रसवत्यो भवन्तु । भाग्योपभोग्या भवन्तु वयं च ताभिरद्भिरभिषिक्ताः सन्तः स्वकीये राष्ट्रे जागृयामः अ-प्रमत्ताः स्याम । पुरोहिताः अग्रतोऽवस्थिताः प्रधाना इत्यर्थः ॥ २३॥

वाजस्य इमां प्रसवः । यस्य वाजस्यान्नस्य सम्बन्धी प्रसवः अभ्यनुज्ञातं शिश्रिये आश्रयति इमां पृथिवीं दिवे द्युलोकम् इमा च विश्वा भुवनानि सम्राट् । इमानि च सर्वाणि भूतजातानि शिश्रिये आश्रयति सम्राड्लक्षणः । यश्चादित्सन्तं दापयति अदातुमिच्छन्तं दापयति प्रजानन् स्वमधिकारं स नो रयिं सर्ववीरं नियच्छतु

सोऽस्मभ्यं धनं सर्वैर्वीरैः संयुक्तं नियच्छतु निगृह्णातु ददात्वि-त्यर्थः ॥ २४ ॥

वाजस्यनु प्रसव आबभूव । योऽसौ वाजस्यान्नस्य प्रसवः अ-भ्यनुज्ञानं विसर्गो वा । नु इति विस्मयार्थः । आबभूव ब्राह्मेण रूपेण सम्बभूव । इमा च विश्वा भुवनानि सर्वतः । इमानि च विश्वानि भूतानि हिरण्यगर्भप्रभृतीनि स्तम्बपर्यन्तानि आबभूवेत्यनुवर्त्तते । सर्वतः सर्वतोऽवस्थितानि । सनेमि राजा परियाति विद्वान् । सनेमीति पुराणवचनः सोऽयमन्नस्य प्रसवश्चिरन्तनो राजा परि-याति सर्वतो याति स्वेच्छाचारी सन् विद्वान्स्वमधिकारं जानानः प्रजां च पुष्टिं च वर्द्धयमानः अस्मे अस्माकम् ॥ २५ ॥

सोमꣳराजानम् । अनुष्टुप् । लिङ्गोक्तदेवता । सोमं राजानम् । अवसे तर्पणाय अग्निं च अन्वारभामहे अन्वारम्भश्च तर्पणार्थमेव । आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् । अन्वारभामहे तर्पणायेति सर्वेषां शेषः ॥ २६ ॥

अर्यमणं बृहस्पातिम् । अनुष्टुप् । लिङ्गोक्तदेवता अर्यमणं बृहस्पतिम् । इन्द्रं दानाय दानार्थं चोदय प्रेरय । आहुतिरुच्यते । वाचं विष्णुं सरस्वतीं सवितारं वाजिनं वाजिनो देवा विश्वाः॥२७॥

अग्ने अच्छ । अनुष्टुप् । आग्नेयी अच्छाभेराप्तुमिति शाकपूणिः । हे अग्ने अभिवद इहावस्थितान् नः अस्मान् । प्रति नः सुमना भव । प्रति न इत्यनयोः पदयोर्व्यत्ययः कर्तव्यः । अस्मान्प्रति सु-मनाः शोभनमनस्को भव । प्र नो यच्छ सहस्रजित् । प्रयच्छ देहि नोऽस्मभ्यं हे सहस्रजित् बहुनो वसुनो जेतः त्वं हि धनदा असि । हिशब्दो यस्मादर्थे । यस्मात्त्वमेव धनस्य दातासि नान्यः कश्चिद्देवताविशेषः ॥ २८ ॥

प्र नो यच्छतु । गायत्री लिङ्गोक्तदेवता । प्रयच्छतु नः अस्म-भ्यम् । अर्यमा प्रयच्छतु च पूषा प्रयच्छतु च बृहस्पतिः प्रवाक् प्रकर्षेण च वाग्देवी दानादिगुणयुक्ता ददातु नः अस्मभ्यम् ॥२९॥

अथैनं परिशिष्टेनाभिषिञ्चति । देवस्य त्वा । व्याख्यातम् । सरस्वत्यै वाचो यन्तुः । सारस्वत्याः वाचो नियमनकर्त्त्र्याः यन्त्रिये नियमने । ऐश्वर्ये दधामि स्थापयामि । बृहस्पतेष्ट्वा । बृह-

स्पतेश्च त्वां साम्राज्येन सम्राड्भावेन अभिषिञ्चामि । असाविति नामग्रहणम् ॥ ३० ॥

अथोज्जितीर्वाचयति । अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषम्। ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम्। यजति द्व्यक्षरम् । य यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः । स एष सप्तदशप्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते । अग्निः एकाक्षरेण छन्दसा प्राणमुदजयत् तमहमपि एकाक्षरेण छन्दसा उज्जेषम्। एवं सप्तदशोज्जितीर्व्याख्येयाः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

वाजपेयः समाप्तः ।

अथ राजसूयः। वरुणोऽपश्यत । एष ते निर्ऋते भागः। स्वयं प्रदीर्णे ईरिणे वा जुहोति । पृथिव्यत्र निर्ऋतिशब्देनोच्यते । एष ते तव हे निर्ऋते भागः तं च सेवस्व। पञ्चधा हवनीयं व्यूह्य प्रतिदिशं जुहोति अग्निनेत्रेभ्यो देवेभ्यः देवार्षं प्रागध्यायत् । अग्निनेत्रेभ्यः । अग्निर्नेता येषान्ते अग्निनेत्राः । तेभ्यो देवेभ्य इति चतुर्थी । पुरःसद्भ्यः पुरः सीदन्तीन्ति पुरःसदः तेभ्यः सुहुतमस्तु । अथ दक्षिणार्द्धे जुहोति । यमनेत्रेभ्यो देवेभ्यः शेषं तुल्यव्याख्यानम् । अथ पश्चार्द्धे जुहोति। विश्वदेवनेत्रेभ्यो देवेभ्यः अथोत्तरार्द्धे जुहोति। मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यः। अथ मध्ये जुहोति । सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यः। दुवस्वद्भ्यः। दुवःशब्देन हविरभिधीयते तद्येष्वस्ति ते दुवस्वन्तः तेभ्यो दुवस्वद्भ्यः ॥ ३५ ॥

सार्द्धं समुह्य जुहोति । ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा तुल्यव्याख्यानाः पञ्च मन्त्रा ऋजवः ॥ ३६ ॥

अथापामार्गहोमः उल्मुकमादत्ते। अग्ने सहस्व पृतनाः । आग्नेय्यनुष्टुप्। हे भगवन्नग्ने सहस्व अभिभव पृतनाः संग्रामान् किञ्च। अभिमातीरपास्य सपत्नोऽभिमातिरुच्यते । सपत्नांश्चापास्य असु क्षेपणे अस्यैतद्रूपम् । अपक्षिप । कस्मात्पुनरेवं त्वमुच्यसे यत आह । दुष्टरस्तरन्नरातीः । तरतेस्तृणातेर्वा दुस्तरः अशक्यप्रतिक्रियो दुर्निवारस्त्वम् । किं कुर्वन् तरन् अरातीः विनाशयन् शत्रुसेनाः। किञ्च वर्चोधा यज्ञवाहसि। वर्च्च इत्यन्ननामसु पठितम् । अन्नस्य

धाता दाता वा वर्च्चसस्तेजसः । ओजसो वा धारयितासि । यज्ञं वहतीति यज्ञवाहास्तस्मिन् यज्ञवाहासि ॥ ३७ ॥

यजमानो जुहोति । देवस्य त्वा व्याख्यातम् । उपांशोर्वीर्येण जुहोमि । उपांशुर्नाम प्रथमो ग्रहः । तस्य वीर्येण जुहोमि । अतो हतं हिंसितं रक्षः स्वाहा सुहुतं चैतद्धविर्भवतु । ध्रुवं प्रास्यति रक्षसां त्वां वधाय बधार्थं प्रास्यामीति शेषः । प्रत्यागच्छति । अवाधिष्म रक्षः हतवन्तो वयं रक्षः जातावेकवचनम् । अवाधिष्म अमुमिति नामग्रहणम् । असाविति च । अथ कोऽर्थः हतवन्तो वयं खादिरवर्माणम् । खदिरवर्मा च हतोऽस्माभिः ॥ ३८ ॥

गृहीत्वा दक्षिणयजमानबाहुं जपति । सविता त्वा । सविता त्वां सवानां प्रसवानाम् आधिपत्ये सुवताम् । अभ्यनुजानातु स हि तेषामीष्टे अग्निर्गृहपतीनामाधिपत्ये सुवतामित्यनुवर्तते सोमो वनस्पतीनामाधिपत्ये सुवताम् । बृहस्पतिर्वाचे वागर्थमभ्यनुजानातु । इन्द्रो ज्यैष्ठ्याय ज्येष्ठभावाय सुवताम् । रुद्रः पशुभ्यः पश्वर्थं सुवतां मित्रः सत्यः सत्यायेति विभक्तिव्यत्ययः । सत्यार्थं सुवतां वरुणो धर्मपत्नीनाम् आधिपत्याय सुवताम् ॥ ३९ ॥

इमं देवाः । इमं राजानं हे देवाः असपत्नं सुवध्वं सपत्नरहितं कृत्वा सुवध्वं महते क्षत्राय महते ज्यैष्ठाय ज्येष्ठभावाय महते जनानां राज्याय इन्द्रस्य इन्द्रियाय वीर्याय सुवध्वमिति प्रत्येकंसम्बन्धः । इमममुष्य पुत्रम् । अमुष्येति यजमानस्य पितुः षष्ठ्यन्तं नाम गृह्यते अमुष्यै पुत्रः । अमुष्या इति यजमानस्य मातुर्नामग्रहः । अस्यै विशे । विश इति जनपदनामग्रहः । एष वः अमी राजा । एष वः कौरवो राजा सोमस्त्वमस्माकं ब्राह्मणानां राजा ॥ ४० ॥

उव्वटकृतौ मन्त्रभाष्ये नवमोऽध्यायः ॥ ९ ॥

आनन्दपुरवास्तव्यवज्रटस्य च सूनुना ।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ॥ १ ॥

## अथ दशमोऽध्यायः ॥ १० ॥

अपो देवाः । वारुणाम् । प्राक् चरकसौत्रामण्याः अब्देवत्या त्रिष्टुप् । या अपः देवाः मधुमतीः मधुस्वादोदकाः आगृभ्णन् गृहीतवन्तः । ऊर्जस्वतीः अन्नवतीः । राजस्वः । राजानं याः सुवते जनयन्ति ताः राजस्वः चितानाः चेतयमानाः परिदृष्टकारिणीः किञ्च याभिरद्भिर्मित्रावरुणौ अभ्यषिञ्चन् अभिषिक्तवन्तः देवा इत्यनुवृत्तिः । याभिश्च इन्द्रमनयन् नीतवन्तः । अत्यरातीः । अतीत्य अरातीः अदानवतीः शत्रुसेनाः । प्रकृतत्वाद्देवाः ता गृह्णामीति शेषः ॥ १ ॥

अनेन मन्त्रेण सारस्वतीर्गृहीत्वानन्तरं हुत्वा षोडशापो गृह्यन्ते। तत्र प्रथमं होममन्त्राः द्वितीया ग्रहणमन्त्राः । नदीप्रवाहेऽवस्थितस्य पशोर्वा पुरुषस्य वा यौ ऊर्म्मी वर्द्धेतां तौ गृह्णाति स यः प्राङुर्दति प्राङ् उद्गच्छति तं गृह्णाति वृष्ण ऊर्म्मिरसि यस्त्वं वृष्णः वर्षितुः सेक्तुर्वा संबन्धी ऊर्म्मिरसि वृषा हि यदि पुरुषो यदि पशुः राष्ट्रदाश्च राष्ट्रं जनपदः तस्य स्वभावत एव दातासि तं त्वां ब्रूमो राष्ट्रं मे मह्यं देहि। स्वाहा गृह्णाति। वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै अमुष्मै इति यजमानस्य नामग्रहणम् । देहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः । द्वितीयाम् ऊर्म्मिं गृह्णाति । वृषसेनोऽसि वृषा युवोच्यते । वृषप्रधाना सेना यस्य स वृषसेनः स्यन्दमानाः ॥ २ ॥

अर्थेत स्थ । अर्थं प्रयोजनं निष्पादयितुं याः यन्ति गच्छन्ति ता अर्थेतः । अस्तेर्बहुवचनं स्थ इति राष्ट्रदाः। एतदपि बहुवचनम् । राष्ट्रं मे दत्त । दत्तेति ददातेर्बहुवचनं व्याख्यातमन्यत् । प्रतिलोमाः ओजस्वतीः ओजसा बलेन युक्ताः सत्य एताः प्रतिलोमाः स्यन्दते । अपयतीः आपः परिवाहिनीः । हे आपः या यूयं परिवाहिनीः परि सर्वतो वहनशीलाः स्थः। उक्तमन्यत् । नदीपतिः अपां पतिरसि । ऋज्वर्थः। निवेष्ट्यम्। वेष्ट वेष्टने। अस्य निपूर्वस्य यप्रत्ययो निवेष्ट्य आवर्त्त उच्यते अपां गर्भोऽसि स्यन्दमानानां स्थावराः प्रत्यागताः॥३॥

सूर्यत्वचसः । सूर्यस्येव त्वग्यासां ताः सूर्यत्वचसः । आतपवर्षाः । सूर्यवर्चसः सूर्यस्येव वर्चो यासां ताः सूर्यवर्चसः । सरस्याः

मान्दा स्थ मन्दतेर्मोदनार्थस्य मन्दः । तत्र हि मोदन्ते भूतानि बहूदकत्वात् । तत्र भवा आपो मान्दाः । कूप्या गृह्णाति व्रजक्षित स्थ । व्रज इति मेघनामसु पठितम् । इह तूदकवत्त्वसामान्यात् कूप उच्यते । व्रजे क्षियन्ति निवसन्ति व्रजक्षितः । प्रुष्वा अवश्यायाः । वाशा स्थ । वश कान्तौ कामिता अभिलषिता स्थ । ता हि सर्व एव कामयन्तेऽन्नहेतुत्वात् । मधुशविष्ठा स्थ । शव इति बलनाम । शविष्ठाः बलिष्ठाः बलिष्ठं हि मधु त्रिदोषशमनत्वात् । उक्तं च । त्रिदोषघ्नं मधु प्रोक्तं केचिदिच्छन्ति वातुलमिति । गोतुल्याः शक्वरी स्थ । शक्लृ शक्तौ । आतो मनिन्क्वनिब्वनिपश्च । अन्येभ्योऽपि दृश्यन्ते इति वनिप् । वनो र चेति ङीप् । रेफश्च । शक्नुवन्ति हि गावो जगदुद्धर्तुं वाहदोहादिभिः । पयः जनभृत स्थ । जनान् हि पयो बिभर्त्ति बालभावे । घृतं विश्वभृतः । विश्वं सर्वं देवाद्यपि घृतं बिभर्त्ति । मरीचीः आपः स्वराज स्थ । हे आपः या यूयं स्वराज स्थ स्वकीयमेव राज्यं यासां तास्तथोक्ताः । अनन्याश्रितराज्या इत्यर्थः । व्याख्यातमन्यत् । औदुम्बरे पात्रे समासिञ्चन्त्येताः । मधुमतीः मधुरसवत्यः मधुरसवतीभिः अद्भिः पृच्यन्तां संसृज्यन्तां महि महत् क्षत्रं क्षत्रियाय राज्ञे वन्वानाः । वनोतिः संभजनार्थः । संभजमानाः मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति । अनाधृष्टाः अनाधर्षिताः रक्षोभिः सीदत उपविशत सहौजसः सवीर्याः सहबलेन किं कुर्वाणाः महि महत् क्षत्रं क्षत्रियाय राज्ञे दधतीः स्थापयन्त्यः ॥ ४ ॥

व्याघ्रचर्मारोहति । सोमस्य त्विषिः । सोमस्य दीप्तिर्भवसि यतः अतः तव इव यथा तव त्विषिरेवं मे मम त्विषिर्भूयात् । यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिरिति श्रुतिः । षट्पुरस्तादभिषेकस्य पार्थानि जुहोति । अग्नये स्वाहेति प्रतिमन्त्रम् । षडुपरिष्टादिन्द्राय स्वाहेति प्रतिमन्त्रम् ॥ ५ ॥

पवित्रे करोति । पवित्रे स्थः । व्याख्यातम् । उत्पुनाति । सवितुर्वः । व्याख्यातम् । अनिभृष्टमसि । अत्र मन्त्रावयवा एकवचनान्ताः । श्रुत्या तु बहुवचनान्ता व्याख्याताः । आपो ह्यत्राभिधेया इति कृत्वा अतोऽस्माभिरपि श्रुत्यर्थोऽनुगृह्यते । भ्रस्ज पाके । इत्ययं धातुः धृष्टिना व्याख्यातः अनिभृष्टमसीति क्रोऽर्थः । अनाधृष्टा स्थ

रक्षोभिः। वाचो बन्धुः । वाचो बन्धुभूताः यावद्वै प्राणेष्वापो भव-न्ति तावद्वाचा वदतीति श्रुतिः । तपोजाः । तपःशब्देनाग्निरुच्यते तस्माज्जायन्ते अग्नेर्वै धूमोऽजायते इत्यादिश्रुतिः । सोमस्य दात्रम-सि सोमस्य दात्र्यः स्थ। यदा वा एनमेताभिरभिषुण्वन्ति । अथा-हुतेर्भवतीत्यादिश्रुतिः । स्वाहा राजस्वः । स्वाहाकारेण पूताः स-त्यः राजस्वो भवथ। राज्ञानं याः सुवते जनयन्ति ताः राजस्वः॥६॥

अभिषेंचनीयेष्वेनां व्यानयति । सधमादो द्युम्नीः । अब्देव-त्या वारुणी त्रिष्टुप् । या एताः सधमादः सहमदनः सह एकस्मि-न्पात्रे माद्यन्ति नाभिमानं कुर्वन्ति । द्युम्नीर्वीर्यवत्य आप एता अ-नाधृष्टाः। अनभिभूता रक्षोभिः अपस्यः अप इति कर्म्मनाम। तत्र साधुः अपस्यः। वसानाः । वस आच्छादने। आच्छादयन्त्यः पा-त्राण्यवस्थिताः। तास्वप्सु। पस्त्यासु । पस्त्यमिति गृहनामसु प-ठितम्। गृहसंभूतासु विश्वरूपेणावस्थितासु चक्रे कृतवान् वरुणः राजाः सधस्थम्। सहस्थानं प्रतिष्ठाम्। कथंभूतो वरुणः अपां शि-शुः। अपां वा एष शिशुर्भवति यो राजसूयेन यजत इति श्रुतिः। मातृतमासु। अतिशयेन निर्म्मात्रीषु । अन्तर्मध्ये स्थानं चक्र इति संबन्धः॥ ७॥

ताप्यं परिधापयति। क्षत्रस्योल्वमसि। उल्वं गर्भाधानमुदकम्। पाण्ड्वं परिधापयति। क्षत्रस्य जराय्वसि । जरायुर्गर्भवेष्टनम्। अ-धोवासं प्रतिमुञ्चति। क्षत्रस्य योनिरसि। गर्भसंभवस्थानं योनिः। उष्णीषं संहृत्य पुरस्तादवगूहति। क्षत्रस्य नाभिरसि। नाभ्या सन्न-द्धा गर्भा जायन्त इत्याहुः । धनुरधितनोति । इन्द्रस्य वार्त्रघ्नम-सि। इन्द्रस्य संबन्धि यद्वार्त्रघ्नं वृत्रोऽनेन हत इति वार्त्रघ्नं धनुरसि तत्तनोमीति शेषः । बाहू विमार्ष्टि मित्रस्यासि । मित्रस्य संबन्धी त्वमसि दक्षिणं वरुणस्यासि । वरुणसंबन्धी त्वमसि। सव्यं धनुः प्रयच्छति त्वयायं त्वया धनुषायं यजमानो वृत्रं शत्रुं बधेत् हन्या-त्। तिस्र इषूरादत्ते दवासि । दृ विदारणे। दृणातीति दवा रुजा-सि। रुजो भङ्गे। अस्य रुजा । क्षुमासि । क्षमायी विधूनने। अस्य क्षुमा यजमानाय प्रयच्छति। पातैनं प्राञ्चम्। पात पालयत एनं य-ज्ञमानं प्रागञ्चनम्। प्रत्यगञ्चनम्। तिर्यगञ्चनम् । दिग्भ्यः पात अ-न्याभ्योऽपि दिग्भ्यः पालयत॥ ८॥

आविदो वाचयति । आविर्मर्याः । आवेदयति ज्ञापयति यजमानमेतासां देवतानामित्याविदः । आविर्मर्याः मर्या इति मनुष्यनाम । हे मर्याः । आविः प्रकाशः प्रकटोऽयं यज्ञपतिर्यजमानो युष्मत्समक्षं च कथ्यते । कथिते च श्रुतिः प्रयोजनं वदति । सोऽस्मै सवमनुमन्यत इत्याद्येकवचनादिभिः । सवो जन्म उत्पत्तिरिति यावत् । आवित्तोऽग्निर्गृहपतिः । श्रुत्युक्तैर्विभक्तिव्यत्ययैर्व्याख्यायते । आवेदितो ज्ञापितोऽग्नये गृहपतये यजमानः । आवित्त इन्द्रः आवेदित इन्द्राय वृद्धश्रवसे वृद्धं श्रवो धनं यस्य स वृद्धश्रवाः । आवित्तौ मित्रावरुणौ आवेदितो मित्रावरुणाभ्यां धृतव्रताभ्याम् । व्रतमिति कर्म्मनाम । धारितकर्म्मभ्याम् । आवित्तः पूषा आवेदितः पूष्णे विश्ववेदसे सर्वज्ञाय सर्वधनाय वा आवित्ते द्यावापृथिवी आवेदितो द्यावापृथिवीभ्यां विश्वशम्भूभ्यां सर्वस्य सुखेन संभावयित्रीभ्याम् । आवित्तादितिः । आवेदितोऽदितये उरुशर्म्मणे उरु पृथु महत् शर्म्म शरणं यस्याः सा उरुशर्मा । सर्वा एवाविदः श्रुत्या लक्षणया व्याख्याताः । तद्यथा आविर्म्मर्य्या इति अनिरुक्तं प्रजापतिर्वा अनिरुक्त इत्यादिः अतस्तथा व्याख्येयाः एवमपि मन्त्राणां प्रत्यक्षवृत्तित्वात् ॥ ९ ॥

केशवास्ये लोहाय समाविध्यति । अवेष्टाः । अवपूर्वो यजिर्नाशने वर्त्तते नाशिता दन्दशूकाः । अत्यर्थे दशनशीलाः मृत्यव इहाभिप्रेताः । तद्यो मृत्युर्यो बधस्तमेवैतदभिनिनयतीति श्रुतिः । सुन्वन्तमाक्रमयन्दिशो वाचयति । प्राचीमारोह । प्राचीं दिशमाक्रमस्व आक्रममाणं च त्वां गायत्री अवतु पालयतु रथन्तरं च साम त्वाम् अवतु । त्रिवृत् स्तोमः त्वाम् अवतु । वसन्तः ऋतुः त्वाम् अवतु । ब्रह्म द्रविणं ब्राह्मणजातिर्धनभूतां त्वाम् अवत्विति वाक्यशेषः । ब्राह्मणजातेः साधनभावाद्धनत्वमुच्यते ॥ १० ॥

एवं दक्षिणामारोहेति चतस्रः कण्डिका व्याख्येयाः । छन्दः साम स्तोम ऋतुद्रविणप्रभृतिभिर्भेदैश्चतुर्थ्यां कण्डिकायां फलं द्रविणमिति पठ्यते । तत्र धान्यं फलं यज्ञफलं वाभिप्रेतं वर्च्चो द्रविणमित्यत्रापि तेजो वा ब्रह्मवर्च्चसं वाभिप्रेतम् । सीसं निरस्यति । प्रत्यस्तम् असु क्षेपणे । प्रतिगृह्य क्षिप्तम् । नमुचेरसुरस्य शिरः ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥

व्याघ्रचर्मारोहयति । सोमस्य त्विषिरसि । व्याख्यातम् । रुक्ममधः पदं कुरुते । हे रुक्म मृत्योः सकाशात् मां गोपाय । शिरसि च रुक्मं करोति । ओजोऽसि । ओज इति मनोवृत्तिः । जेष्यास्यमुमिति या प्रतिज्ञा सा उच्यते । सह इति बाह्यं बलमुच्यते । अमृतमसि प्रकटार्थः ॥ १५ ॥

बाहू उद्गृह्णाति । हिरण्यरूपौ । मैत्रावरुणी त्रिष्टुप् । यजुरन्ता । मित्रोऽसि वरुणोऽसीति यजुः । हे हिरण्यरूपौ मित्रावरुणौ यौ युवाम् । उषसो व्युत्थानकाले उभावपि । हे इन्द्रौ । इदि परमैश्वर्ये । परमेश्वरौ उदिथः उद्गच्छथः सूर्यश्च ययोश्च युवयोः कार्यसम्पादनाय सूर्यश्च उदेति तौ युवाम् । आरोहतम् । हे वरुण हे मित्र गर्तम् पुरुषम् । बाहु वै मित्रावरुणौ पुरुषो गर्त इति श्रुतिः । अध्यात्मविषयं व्याचष्टे । अधिदैवं तु गर्तो रथः । ततश्चक्षाथामदितिं दितिं च । ततोऽनन्तरं पश्यतम् । अदितिं च अदीनं स्वकर्मविहितानुष्ठातारं दितिं दीनं नास्तिकवृत्तिम् । अमुमेवार्थं श्रुतिराह ततः पश्यतं स्वं चारणं चेत्येवैतदाह । अपरो मन्त्रविकल्पः । मित्रोऽसि वरुणोऽसि । बाहू उच्येते । मित्रश्च त्वमसि वरुणश्च त्वमसि ॥१६॥

यजमानमभिषिञ्चति । सोमस्य त्वा द्युम्नेन । द्युम्नं द्योततेः । यशो वा अन्नं वा सोमस्य त्वां द्युम्नेनाभिषिञ्चामि । अग्नेर्भ्राजसा । अग्नेर्दीप्त्या सूर्य्यस्य वर्चसा सूर्यस्य रोचिष्णुतया इन्द्रस्येन्द्रियेण वीर्येण । श्रुत्यां तु सर्वाण्येव वीर्याणि व्याख्यातानि । अभिषिञ्चामीति सर्वशेषः । क्षत्राणां क्षत्रपतिरेधीति च सर्वशेषः । त्वं च एतैराभिषिक्तः सन् क्षत्राणां सर्वेषां क्षत्रपतिः एधि भव । अतिदिद्यून्पाहि । अतीत्यातिक्रम्य दिद्यून् इषून्पाहि गोपाय आत्मानम् । इषवो वै दिद्यव इषुवधमेवैनमेतदातिनयतीति श्रुतिः ॥ १७ ॥

इमं देवा इति व्याख्यातम् ॥ १८ ॥

कण्डूयनाभिषेके कणान् प्रलिम्पते । प्र पर्वतस्य । अब्दैवत्या त्रिष्टुप् । या एता आहुतिपरिणामभूताः आपः ताः पर्वतस्य पर्ववतोऽग्नेः पार्थिवस्य । स हि पर्ववान् पौर्णमास्यमावास्याचातुर्मास्यादिपर्वभिः । वृषभस्य वर्षितुः पृष्ठात् उत्थायेति शेषः । नावः । णु स्तुतौ । नूयन्ते सूयन्ते स्तोत्रशस्त्रहोममन्त्रैरिति नावः आहुतिपरिणामभूता आपः । चरन्ति गच्छन्ति । आदित्यमण्डलं प्रति

स्वसिचः स्वयमेव सिञ्चन्तीति स्वसिचः । इयानाः इण् गतौ । ताच्छील्यवयोवचनशक्तिषु चानश् । गमनशीलाः । ता हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति मध्यस्थानात्पृथिवीम् ।

तथा चोक्तम् ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । इति

ता आववृत्रन्नधरागुदक्ताः । आववृत्रन् । आदित्यमण्डलं प्राप्य ता एवावर्त्तन्ते । अधराञ्चः अधोऽञ्चनाः । उदक्ताः उन्दी क्लेदने । क्तिप् । उन्दनेन क्लेदनेनाभ्यक्ताः आपः । आहिर्बुध्न्यम् । आहिर्मेघः बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः । तं बुध्न्यं मेघं मध्यस्थानम् । अनुरीयमाणाः रियतिर्गत्यर्थः । अनुप्रविश्य मध्याच्छिद्रैर्गच्छन्त्यो भूमिं प्राप्नुवन्तीति शेषः । अथवा आदित्यः पर्वतशब्देनोच्यते । या एताः पर्वतस्थादित्यस्य वृषभस्य वर्षितुः । पृष्ठात् इयानाः निर्गच्छन्त्यः नाव्या आपः सुषिरैः चरन्ति नावा तार्याः महानद्यः । सर्वतो गच्छन्ति स्वसिचः स्वयं सिक्ताः । नाव्या इति आदित्यस्योपरिस्थिता आपस्ता उच्यन्ते । तथा च श्रुतिः । नाव्या एव यजुष्मत्य इष्टका इत्युपक्रम्य षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिरक्षन्तीत्याह । ताः प्रावृट्काले आवर्त्तन्ते अधरागुदक्ताः । व्यक्ताः । अथवा याः पर्वतस्य हिमवद्विन्ध्यादेः वृषभस्य वर्षितुः सेक्तुः पृष्ठात् इयानाः । नावश्चरन्ति नावा तार्याः महानद्यः प्रचरन्ति स्वयं सिक्ताः । ता एव राजसूययाजिनोऽर्थायेत आववृत्रन् आवर्त्तन्ते । गृह्यमाणा अभिषेकपात्रेषु उदक्ताः । उत्क्षिप्ताः उत्पूर्वस्याञ्चतेरेतद्रूपम् । अधराञ्चः । अधोऽञ्चनाः अहिम् अहन्तारं शत्रूणां बुध्न्यं बुध्नशब्देन मूलमुच्यते । तत्र भवं यजमानं बुध्न्यं प्रधानमित्यर्थः । अनुरीयमाणाः । यजमानं प्रति अनुषिच्यमानाः ता आववृत्रनित्यादि सम्बन्धनीयम् । चर्मणि त्रिर्विक्रमयति यजमानम् । विष्णोर्विक्रमणम् । विष्णोर्यज्ञस्य यद्विक्रमणं यच्च विक्रान्तं तत्सर्वं त्वमसीति योजना ॥ १९ ॥

जुहोति । प्रजापते । प्राजापत्या त्रिष्टुप् । यजुर्मध्या । अयममुष्य पितासावस्य पितेति यजुः । हे प्रजापते न त्वदेतान्यन्यो

विश्वा रूपाणि परिताबभूव। त्वत्तोऽन्यो देवताविशेष एतानि सर्वाणि रूपाणि नानाजातीयानि वर्त्तमानकालसंम्बन्धीनि परि समन्ततः। ता तानि च यान्युत्पन्नानि उत्पत्स्यन्ते वा बभूव । अत्र नकारः सम्बध्यते न भवत्यात्मरूपत्वेन यस्मात् अतो ब्रवीमि । यत्कामास्ते जुहुमस्तन्नो अस्तु । येन कामेन तव जुहुमस्तत्कामरूपमस्माकमस्तु। यजुःकारणभूतं व्याख्यायते। अयममुष्य पिता अयं पुत्रः अमुष्य यजमानस्य पिता असावस्य पिता असौ यजमानः अस्य पुत्रस्य पिता सर्वथा सपुत्रा वयमेव स्याम भवेम। पतयो रयीणां धनानां स्वाहा सुहुतमस्तु। जुहोति। रुद्र यत् ते तव क्रिवि। क्रिवि हिंसाकरणयोः । कर्तृ हिंसितृ वा परमुत्कृष्टं नाम नमनम् । एवं रुद्रं संम्बोध्याथेदानीं हव्यमाह। तस्मिन्नग्नि हुतमसि। अमेष्टमसि अमाशब्दो गृहवचनः । गृहे इष्टमसि स्वाहा ॥ २० ॥

रथमुपावहरति। इन्द्रस्य वज्रोऽसीति व्याख्यातम् । मित्रावरुणयोर्देवयोः त्वा त्वां प्रशास्त्रोः प्रशिषा प्रशासनेन युनज्मि तमातिष्ठति। अव्यथायै व्यथ दुःखभयचलनयोः । अभयाय अचलनाय वा त्वामभितिष्ठामि स्वधायै अन्नरसाय त्वामभितिष्ठामीति शेषः। अरिष्टः। अनुपहिंसितः अर्जुनः। अर्जनशीलः। अर्जुनो ह वै नामेन्द्र इति श्रुतिः। दक्षिणधुर्यं प्राजयति । मरुतां प्रसवेन जय मरुतां संम्बन्धिन्यामभ्यनुज्ञायां वर्तमानः शत्रून् जय मध्ये गवामुद्यच्छति। अपाम मनसा । व्याप्तवन्तो मनसा वयम् । यदुपक्रान्तभर्गो धनुरात्न्या गामुपस्पृशति । समिन्द्रियेण संगताः स्म वयम्। इन्द्रियेण वीर्येण ॥ २१ ॥

अग्रेण शालामुद्यच्छति। मा त इन्द्र। ऐन्द्री त्रिष्टुप्। अत्र द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते । यच्छन्दयोगात्। तिष्ठा रथमधि यं वज्रहस्त । लडर्थे लोट् यं रथमधितिष्ठसि हे वज्रहस्त यस्मिंश्चावस्थितः आरश्मीन् देवयमसे आयमसि रश्मीन् प्रग्रहान्। हे देव स्वश्वान् शोभनाश्वान् । इदानीं प्रथमोऽर्द्धर्चो व्याख्यायते व्यवहितपदसंवन्धप्रायः । तस्मिन् रथे ते तव स्वभूते वयम् अयुक्तासः अयुक्ता एव अयुक्तासः आज्जसेरसुक् । मा विदसाम ॥ दसु उपक्षये। कर्मणि लकारः । मा विदस्येमहि मा उपक्षयिमहि। हे इन्द्र तुराषाट् तूर्णं सहते इति तुराषाट् तस्य सबोधनं हे

तुराषाट् ते इति द्वे पदे । अत्रानुदात्ततयोरेकोऽनर्थकः । मा विद-स्येमहीत्युक्तम् । तदुपमया दर्शयितुमाह अब्रह्मता । लुप्तोपममे-तत् । अब्रह्मतेव ब्रह्म विज्ञानानन्दस्वभावमनश्वरम् तस्य भावो ब्र-ह्मता न ब्रह्मता अब्रह्मता यथा ब्रह्मभावादन्यद्विदस्येत् । एवं मा वि-दस्येमहीत्युपमार्थः ॥ २२ ॥

चत्वारि रथविमोचनीयानि जुहोति अग्नये गृहपतये स्वाहा । सोमाय वनस्पतिरूपाय मरुतां संबन्धिने । ओजसे इन्द्रस्य संब-न्धिने इन्द्रियाय वीर्याय । भूमिमवेक्षते । पृथिवि मातः । हे पृथि-वि मातः मा हिंसीः । मां मो अहं त्वां मा च त्वामहं हिंसिषम् ॥२३॥

अवतरति । हꣳसः शुचिषत् । सप्रपञ्चपरब्रह्माभिधायिनी अति-च्छन्दा अतिजगतीति श्रुतेः । हꣳसः शुचिषत् । सविषयं हन्त्यह-ङ्कारमिति हंसः । हन्त्यध्वानमिति वा हंसः । भगवानादित्यः शुचौ दीप्तौ सीदतीति शुचिषत् आदित्यरूपेण दुरोणे गृहे सीदति । यश्च नृषु मर्त्येषु प्राणभावेन सीदति । यश्च वरेषु उत्कृष्टेषु सीदति । यश्च ऋते सत्ये सीदति यश्च व्योमसु अन्तरिक्षेषु सर्वेषु सीदति । एवं सर्वत्र स्थितिभावेन स्तुत्वाऽथेदानीं सर्वत्रोत्पत्तिद्वारेण स्तौ-ति । यश्च अब्जा । अप्सु जायन्त इत्यब्जाः यश्च गवि पृथिव्यां चतु-र्विधभूतग्रामरूपेण जायते यश्च ऋते सत्ये जायते यश्चाद्रौ पाषाणे अग्निरूपेण जायते । मेघोऽप्यद्रिरुच्यते । मेघे वा उदकरूपेण जा-यते । ततः ऋतम् । ऋ गतौ । सर्वत्र गतं परं ब्रह्म बृहत् महत् । परिवृढम् अनन्तम् अपर्यन्तम् एवं परब्रह्मवाचिताऽस्य मन्त्रस्य तत्परं ब्रह्म प्रत्यवतरामीति वाक्यशेषः ॥ २४ ॥

उपस्पृशति शतमानौ । इयदसि । इयदिति परिमाणवचनोऽयं शब्दः । शतमानमसि । आयुरसि । आयुर्हिरण्यमिति श्रुतेः । आयु-र्मयि धेहि । यो हि यदात्मको भवति स तद्दातुमुत्सहते यस्माच्छ-तमानं हिरण्यं त्वमसि तस्माच्छताब्दपरिमाणम् आयुर्मयि धेहि । युङ्ङसि । युनक्ति यज्ञं संभारनिधानेन दक्षिणादानेन चेति युङ् । वर्चोऽसि वर्चः तेजः यस्मात्त्वं वर्चो नोऽस्माभिः प्रार्थ्यसे वर्चो म-यि धेहि । औदुम्बरीं शाखामुपस्पृशति । ऊर्गस्यूर्जं मयि धेहि । ऊर्जमन्नमुच्यते । अवहरति बाहू । इन्द्रस्य वाम् । यौ इन्द्रस्य य-जमानस्य वां युवां वीर्यकृतः वीर्यकारिणः संबन्धिनौ बाहू तौ अ-

भ्युपावहरामि। मैत्रावरुणीं पयस्यां प्रति ॥ २५ ॥

आसन्दीं निदधाति। स्योनासि। स्योनमिति सुखनाम। स्योनासि सुखरूपासि। सुषदासि। सुखेन यस्यां सीदन्ति सा सुषदा। अधीवासमस्यामास्तृणाति। क्षत्रस्य योनिरसि। योनिः स्थानमसि। सुन्वन्तमस्यामुपवेशयति। स्योनामासीद सुखरूपामासन्दीमासीद अधिरोह। सुखदामधिरोह क्षत्रस्य स्थानमारोह ॥ २६ ॥

यजमानस्य उरोऽभिमृश्य जपति। निषसाद वारुणी गायत्री। अधियज्ञं यजमानो वरुणः निषसाद निषण्णः। धृतव्रतः। धृतं व्रतं कर्म येन स तथोक्तः। धृतव्रतो वै राजा न वा। एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्म्मणे। यदेव साधु वदेद् यत् साधु कुर्यात्तस्मै वा एष च श्रोत्रियश्चेति श्रुतिः। वरुणः पस्त्यास्वा। पस्त्यासु विक्षु आ आधिपत्येनेत्युपसर्गार्थपरिपूर्त्तिः। साम्राज्याय सम्राड्भावाय राज्यायेति श्रुतिः। सुक्रतुः सुकर्म्मा शोभनप्रज्ञो वा ॥ २७ ॥

पञ्चाक्षान्पाणावावपति। अभिभूरसि। कृतत्रेताद्वापरकलयश्चत्वारोऽक्षाः पञ्चमो रमणस्तत्र कलिः सर्वानभिभवति। स उच्यते। यजमानो वा। तत्संबन्धेन अभिभूरसि अभिभवितासि। एतास्तव पञ्च दिशः कपर्दकोपलक्षिताः कल्पन्तां क्लृप्ता भवन्तु। ब्रह्मन् प्रथममामन्त्रयते यजमानो ब्रह्माणं त्वं ब्रह्मासि सवितासि सत्यप्रसव इति। ब्रह्मा प्राह। त्वमेव ब्रह्मासि। भवसि सविता चासि। सत्याभ्यनुज्ञः। द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोऽसि। सत्यौजाः। सत्यम्। ओजो यस्य सत्ये वा ओजो यस्य स सत्यौजाः। तृतीयं प्रत्याह त्वं ब्रह्मासि। इन्द्रोऽसि विशौजाः। इन्द्रस्त्वमसि विष्णुः। ओजो यस्य स विडौजाः इति प्राप्ते विशौजा इत्यन्याय्यसमासः। अत एव पदकारो नावगृह्णाति। चतुर्थं प्रत्याह त्वं ब्रह्मासि रुद्रोऽसि सुशेवः। रुद्रस्त्वमसि। सुशेव इति सुखनाम शोभनं सुखयिता सुमङ्गलनामानं ह्वयति। बहुकारः बहुकरोतीति बहुकारः श्रेयः करोतीति श्रेयस्करः। भूयः करोतीति भूयस्करः तेषां संबोधनं हे बहुकार श्रेयस्कर भूयस्कर। स्फ्यमस्मै प्रयच्छति। इन्द्रस्य वज्रोऽसि। यतः इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य तस्य स्फ्यस्तृतीयं चेत्यादिना श्रुतिग्रन्थेनोक्तम्। अतस्त्वां ब्रवीमि। तेन हेतुना मे मम यजमानं रध्य रध्यतिर्वशगमने वशव-

र्त्तिनं कुरु। यो वै राजा ब्राह्मणादबलीयान् अमित्रेभ्यो वै स बलीयान् भवतीति श्रुतिः ॥ २८ ॥

हिरण्यमस्मिन्निधायाभिजुहोति । अग्निः पृथुः । योऽयं देवानामग्निः पृथुः इतरस्मादग्नेर्धर्म्मणस्पतिः । धारणस्य पतिः । जुषाणः सेवमानः । प्रीयमाणो वा । अग्निः पृथुर्द्धर्मणस्पतिराज्यस्य घृतस्य वेतु पिबतु स्वाहा सुहुतं चैतद्धविर्भवतु ।.अक्षान्निवपति । स्वाहाकृताः हे अक्षाः । स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिर्यतध्वं स्पर्द्धां कुरुत । सजातानां समानजन्मनां च भ्रातृणां क्षत्रियाणां च मध्यमेष्ठ्याय । मध्यान्मः । मध्ये भवो मध्यमः । मध्यमे प्रदेशेऽवस्थिताय यजमानस्य यतध्वमित्यनुवर्त्तते ॥ २९ ॥

सर्पति । सवित्रा प्रसवित्रा । सवित्रा अभ्यनुज्ञानस्य कर्त्रा प्रसूतः प्रसर्पामि । एवं सरस्वत्यादिभिर्योजनीयम् । इन्द्रेणास्मे । अस्मे इति तृतीयान्तम् । इन्द्रेण मया । शेषं सुबोधम् ॥ ३० ॥

इत उत्तरं चरकसौत्रामणी अश्विनोरार्षम् । सुरां संदधाति । अश्विभ्यां पच्यस्व । पाको नाम अन्नविपरिणामज्येष्ठता । सरस्वत्यै इन्द्राय शोभनत्राणाय सुत्राम्णे सुत्रातव्याय वा भैषज्यं हीन्द्रस्य कर्त्तव्यम् । सौत्रामण्यां सुरां पुनाति वायुः पूतः । सौमी गायत्री । यः सोमः वायुना पूतः सोमः प्रथमं पूतिगन्ध आसीत्ततो देवैर्वायुरुक्तः । अपहतविरूपं सुगन्धं सोमं कुर्विति । ततो वायुना अपहृतः सोमस्य गन्धः । ऐन्द्रवायवब्राह्मणे एतत्प्रतिपादितं यदेवं तदस्माभिर्व्याख्यातं विभक्तिव्यत्ययेन । यतोऽसौ वायुरूपः पूतश्च पवित्रेण प्रत्यङ् । नीचैः अतिस्रुतः । स्रु गतौ । अतिक्रम्य गतः । स सोमः इन्द्रस्य युज्यः । समानयोगी सखा । समानख्यातः कथमिन्द्रं हिनस्तीति शेषः ॥ ३१ ॥

गृहं गृह्णाति । कुविदङ्ग । अनिरुक्ता सौमी त्रिष्टुप् । कुविदिति बहुनाम । अङ्गेति क्षिप्रनाम । हे सोम यथा केचिज्जनपदाः । क्वचित् अङ्ग क्षिप्रं बहुक्षेत्रं यवमन्तः बहुयवाः यवं चित् । चिच्छब्दो वितर्के यवं वितर्क्य यथा दान्ति दाप् लवने । लुवन्ति । अनुपूर्वम् । आनुपूर्वेण वियूय पृथक्कृत्य निश्चित्य । एवमिहेहैषां कृणुहि भोजनानि । इह च आदाय धनानि एषां यजमानानां कुरु भोजनानि भोग्यानि

वस्तूनि ये बर्हिषो नमउक्तिं यजन्ति ये यजमाना बर्हिषः उपरिस्थिताः नमउक्तिं नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणमन्नमादाय उक्तिं याज्यामभिधाय यजन्ति यागं कुर्वन्ति । उपयामेत्यादि निगदव्याख्यातम् ॥ ३२ ॥

युवं सुरामम् । अनुवाक्या । पुत्रमिव अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवत्ये । तत्रेतिहासमाचक्षते । नमुचिर्नामासुर इन्द्रस्य सखिभूत आस । स यत इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ सोऽश्विनौ च सरस्वतीं चोवाच यत् पीतवीर्योऽहं नमुचिना ततोऽश्विनौ सरस्वती चापां फेनं वज्रमसिञ्चत् ततस्तेनेन्द्रो नमुचिशिरश्चिच्छेद ततो लोहितमिश्रः सुरासोम उदतिष्ठदत उच्यते । हे अश्विनौ युवां सुरामयं सोमं सुरमणीयं वा नमुचावासुरेऽवस्थितं सचा सह भूत्वा एकीभूय च विपिपाना विविधं पिबन्तौ हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु आवतं पालयतं स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥

पुत्रमिव पितरौ । यथा मातापितरौ पुत्रं पालयतः । एवमुभावप्यश्विनौ हे इन्द्र त्वाम् आवथुः । पुरुषव्यत्ययः पालितवन्तौ । काव्यैः कविकर्मभिः मन्त्रदर्शनैरित्यर्थः । दंसनाभिः दंश इति कर्मनाम । कर्मभिश्च मन्त्रः । कथमवगम्यते । अश्विनौ त्वां पालितवन्तावित्याह यत्सुरामं व्यपिबः शचीभिः । यस्मात्त्वं सुरामयं पीतवानसि शचीभिः कर्मभिः नमुचिशिरश्छेदनं कर्म कृत्वा स्ववीर्येण न ह्यन्य एतत्कर्मकर्त्तुं शक्य इत्यभिप्रायः । सरस्वती त्वा मघवन्नभिष्णक् । सरस्वती च त्वां हे मघवन् अभिष्णक् भैषज्यं कृतवती । अनुषक्ता अभवत् । अभिष्णक्शब्द कण्ड्वादिषु पठ्यते ॥३४॥

उव्वटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ।

आनन्दपुरवास्तव्यवज्रटस्य च सूनुना ।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ॥ १ ॥

# शुक्लयजुर्वेदसंहिता

## वाजसनेयिमाध्यन्दिनशाखीया ।

---

श्री म दु व्व टा चा र्य वि र चि त म न्त्र भा ष्ये ण
श्री म न्म ही ध रा चा र्य वि र चि त-
वे द दी पे न च स हि ता ।
तस्याः
२१-३० अध्यायात्मकं तृतीय खण्डम् ।

पण्डित श्रीरामसकलमिश्रशर्मणा संशोधितम् ।

---

# VÂJASANEYI-SAMHITÂ,

of the
WHITE YAJURVEDA,
With the Commentaries of
Uvvata and Mahidhara,
PART III,
Containing Twentyone to Thirty Chapters.
Edited by
PANDIT RAM SAKALA MISRA.

---

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.
BENARES CITY:
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares.*

---

1913.

## एकविंशोऽध्यायः ।

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ १ ॥

इमम्मे । इमम्मेनानुवाकमैष्टिकं हौत्रम् । प्रथमे वारुण्यौ गायत्रीत्रिष्टुभौ वारुणस्य हविषो याज्यानुवाक्ये । हे वरुण त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु च अपरम् अद्य मृडय सुखय कालविलम्बनं मा कृथाः यतः अहम् अवस्युः आत्मनोऽवनं पालनमिच्छन् त्वाम् आचके । आचक इति कान्तिकर्मा । कामये ॥ १ ॥

प्रणम्य शिरसा देवं लक्ष्मीकान्तमुमापतिम् ।
एकविंशेऽधुनाध्याये वेददीपो वितन्यते ॥

का० ( १९, ७, १३ ) इमे मे तत्त्वेत्येककपालस्य । अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य द्वे पुरोऽनुवाक्यायाज्ये इत्यर्थः ॥ वरुणदेवत्ये गायत्रीत्रिष्टुभौ शुनःशेपदृष्टे । हे वरुण ! त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु शुश्रूण्विति होर्धिः संहितायां हीर्घः । च पुनः अद्य दिने मृडयास्मान् सुखय यतोऽहं त्वामाचके कामये आचक इति ( निघ० २, ६ ) कान्तिकर्मा । कीदृशोऽहम् अवस्युः अवनमवः पालनमवतेरसुन् तदिच्छति अवस्युः सुपः आत्मनः क्यच् ( पा० ३, १, ८, ) क्याच्छन्दसीति उप्रत्ययः आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः ॥ १ ॥

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ २ ॥

तत्त्वा यामि ॥ २ ॥

व्याख्याता ( १९, ४९ ) ॥ २ ॥

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अव-

भूतान् प्रीणामि । पूर्यते पुरीतत् हृदयाच्छादकमन्त्रं तेनान्तरिक्षं देवं प्रीणामि । उदरे भवमुदर्यमुदरस्थं मांसं तेन नभो देवं प्रीणामि शरीरावयवाद्यत् । ग्रीवाधस्ताद्भागास्थितहृदयोभयपार्श्वस्थे अस्थिनी मतस्ने ताभ्यां चक्रवाकौ देवौ प्रीणामि । वृक्काग्रमांसमित्यमरः ( २, ६, ६४ ) वृक्क आदाने वृक्यते स्वादुतया गृह्यते वृक्कान्तः पुस्ययं स्त्रीत्येके इति क्षीरस्वामी वृक्का मुख्यं मांसं तेन दिवं देवतां प्रीणामि वृक्कौ कुक्षिस्थौ मांसगोलकावाम्रफलाकृती इति याज्ञिकाः । प्रकर्षेणाश्नन्ति भुञ्जतेऽन्नानीति प्लाशयः शिश्नमूलनाड्यः तन्नाडीद्वारैवान्नस्य देहे सञ्चारात् रलयोरभेदः ताभिर्गिरीन् देवान् प्रीणामि । गुल्मस्तु प्लीहा पुंसीति ( २, ६, ६६ ) अमरः हृदयवामभागे शिथिलो मांसभागः पुप्पुससंज्ञः प्लिह गतौ प्लेहते प्लीहा नान्तः तेन उपलान् देवान् प्रीणामि । तिलकं क्लोमेत्यमरः ( २, ६, ६५ ) क्लोमति क्लोमा उदर्यो जलाधारः । हृदयस्य दक्षिणे यकृत् क्लोमा वामे प्लीहा पुप्पुसश्चेति वैद्या इति क्षीरस्वामी क्लोमा गलनाडीति कर्कः तैर्वल्मीकान् देवान् प्रीणामि । ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः ताभिर्गुल्मान् देवान् प्रीणामि । हरन्त्यन्नरसमिति हिरा अन्नवाहिन्यो नाड्यः ताभिः स्रवन्तीः देवताः प्रीणामि । पिचण्डकुक्षी जठरोदरतुण्डामित्यमरः ( २, ६, ७७ ) जठरस्य दक्षवामभागौ कुक्षी ताभ्यां ह्रदान् देवान् प्रीणामि । उदरेण जठरेण समुद्रं प्रीणामि । भस्मनाङ्गोत्थेन वैश्वानरं देवं प्रीणामि ॥ ८ ॥

विधृतिं नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं वसया प्रुष्वा अश्रुभिर्ह्रादुनीर्दूषीकाभिरस्ना रक्षाꣳसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीं त्वचा जुम्बकाय स्वाहा ॥ ९ ॥

अवभृथे अप्सु मग्नस्य पिङ्गलखलति विक्लिधशुक्लस्य मूर्द्धनि जुहोति । जुम्बकाय स्वाहा इति । वारुणी द्विपदा औदन्य शुण्डिभदृष्टा । वरुणो वै जुम्बक इति श्रुतिः ॥ ९ ॥

नाभ्या उदराधःस्थग्रन्थिना विधृतिं देवतां प्रीणामि । रसो ग-न्धरसे स्वादे तिक्तादौ विषरागयोः शृङ्गारादिरसे वीर्ये देहधात्वम्बु-पारदे इति विश्वः रसेन वीर्य्येण धातुविशेषेण वा घृतं देवं प्रीणा-मि । यूषः क्वथितो रसः पद्दन्नित्यादिना ( पा० ६, १, ६३ ) यूषन्ना-देशः यूष्णा पक्वान्नरसेनापो देवताः प्रीणामि । पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रिय इत्यमरः ( १, २, २१ ) विप्रुड्भिर्वसाविन्दु-भिर्मरीचीर्देवताः प्रीणामि । ऊष्माणस्तु निदाघोष्णग्रीष्माः शष्प-सहा अपीति विश्वः ऊष्मणा शरीरगतेनौष्ण्येन नीहारं देवं प्रीणा-मि । मेदस्तु वपा वसेति ( २, ६, ६४ ) अमरः वस्ते मांसमिति व-सा शुद्धमांसस्य यः स्नेहः सा वसेति वैद्या इति स्वामी वसया मां-सस्नेहेन शीनं देवं प्रीणामि । अश्रु नेत्राम्बु रोदनमित्यमरः ( २, ६, ९३ ) अश्रुभिर्नेत्राम्बुभिः प्रुष्वाः देवताः प्रीणामि । दूषिका नेत्र-योर्मलमित्यमरः ( २, ६, ६७ ) दूषीकाभिर्नेत्रमलैर्ह्रादुनीर्देवताः प्री-णामि । रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितमित्यमरः (२, ६,६४) अस्यते सृज्यते इति वा असृक् रुधिरं पद्दन्न इत्यसन्नादेशः ( पा० ६, १, ६३ ) अस्ना रक्षांसि प्रीणामि । अङ्गैः पूर्वानुक्तावयवैः चित्राणि देवतानि प्रीणामि । रूपं स्वभावे सौन्दर्य्ये नाणके पशुशब्दयोरिति विश्वः रूपेण सौन्दर्य्येण नक्षत्राणि देवतानि प्रीणामि । त्वचा च-र्मणा पृथिवीं देवीं प्रीणामि स्वाहेति मन्त्रैराज्यं जुहोतीत्यर्थः ॥ अ-त्र अग्निं हृदयेनाशनिं हृदयाग्रेणेत्यादि द्यावापृथिवीभ्यां स्वाहे-त्यन्ता अपि ( ३९, ८, १३ ) आहुतीर्जुहुयात् आश्वमेधिकत्वात् ॥ का० ( २०, ८, १८ ) अवभृथेष्ट्यन्तेऽप्सु मग्नस्य पिङ्गलस्य खल-तिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति । अवभृथया-गान्ते एवं विधस्य पुंसो मूर्धनि जुम्बकायेति मन्त्रेणाज्यं सकृ-द्गृहीतं जुहुयात् कीदृशस्य पुंसः जले मग्नस्य पिङ्गलाक्षस्य खलतेः खल्वाटस्य विक्लिधस्य दन्तुरस्य शुक्लस्यातिगौरस्येति सूत्रार्थः ॥ वरुणदेवत्या द्विपदा यजुर्गायत्री उदन्यपुत्रमुण्डिभदृष्टा । जुम्ब-काय वरुणाय स्वाहा हुतमस्तु वरुणो वै जुम्ब इति श्रुतेः । ( १३, ३, ७, ५ ) एषा चान्तर्जले जप्ता पापनाशिनी तदुक्तं हारीतेन ।

जुम्बका नाम गायत्री वेदे वाजसनेयके ।
अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहतीति ॥ ९ ॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकं आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १० ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ११ ॥

(१)हिरण्यगर्भः सम् । चतस्रस्त्रिष्टुभः काय्यः(२) । हिरण्यगर्भः यः प्राणत इति व्याख्याते ॥ १० ॥ ११ ॥

चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वादीनां याज्यानुवाक्याः ॥ द्वे व्याख्याते ( २३, १, ३ ) ॥ १० ॥ ११ ॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ १२ ॥

(३)यस्येमे । यस्य कसंज्ञकस्य प्रजापतेः इमे हिमवन्तः बहुवचनादन्येऽपि गृह्यन्ते हिमवत्प्रभृतयः पर्वताः महित्वा महित्वं महाभाग्यं विभूतिः रसया रसा नदी रसतेः शब्दकर्मणः नद्या सह समुद्रं यस्य विभूतिमाहुस्तद्विदः । इमाः प्रदिशः दिशः यस्य

---

( १ ) एतदौव्वटभाष्यं वाराणसी० पु० अस्ति । मुम्बईमुद्रितपुस्तके नास्ति ।

( २ ) कदेवत्याः ।

( ३ ) एतदौव्वटभाष्यं वाराणसी० पु० अस्ति । मुम्बईमु० पु० एतन्नास्ति ।

बाहू । एकं यस्येति पदमनर्थकं निर्देशाभावात् । तस्मै कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः ॥१२॥

वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः कशब्दस्य सर्वनामत्वमार्षम् । इमे हिमवन्तः बहुवचनादन्येऽपि हिमाचलप्रभृतयः पर्वताः प्रथमा द्वितीयार्थे सुपां सुपो भवन्तीति वचनात् इमान् हिमवत्प्रभृत्यद्रीन् यस्य प्रजापतेर्महित्वं महिमानमाहुर्बुधाः महित्वेति विभक्तेराकारः । रसा नदी रसतेः शब्दकर्मण इति ( निरु० ११, २५ ) यास्कः । रसया नद्या सह समुद्रं यस्य महित्वमाहुः । इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः यस्य बाहू भुजौ जगद्रक्षणाविति शेषः । सर्वं जगत् यस्य प्रजापतेर्विभूतिरित्यर्थः ॥ १२ ॥

य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिष॒ं यस्य॑ दे॒वाः । यस्य॑ छा॒यामृत॒ं यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ १३ ॥

(१)य आत्मदाः यश्चात्मनं ददाति उपासकानां तदनुगृहीता हि उपासकाः सायुज्यं सालोक्यं वा प्राप्नुयुः । यश्च बलदाः बलार्थिनां बलं ददाति विश्वे मनुष्या असुराश्च यस्य प्रशिषं प्रशासनमुपासते देवाः यस्य प्रशासनमुपासते आह च "यस्य ज्ञेयावधि ज्ञानं शिष्यावधि च शासनम् । कार्यावधि च कर्तृत्वं स स्वयम्भूः पुनातु वः" इति । किञ्च यस्य छाया आश्रयः परिज्ञानपूर्वकमुपासनम् अमृतम् अमृतत्वप्राप्तिहेतुभूतं यस्य च अपरिज्ञानं मृत्युः मृत्युप्राप्तिहेतुभूतम् उक्तं च "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीति" कस्मै इति व्याख्यातं प्राजापत्यानां याज्यानुवाक्या उक्ताः ॥ १३ ॥

---

( १ ) एतदौव्वटभाष्यं वाराणसी० पु० आस्ते । मुम्बईमुद्रित पुस्तके चैतन्नास्ति ।

कस्मै देवाय हविषा विधेमेति व्याख्यातम् । आत्मानं ददाति आत्मदाः उपासकानां सायुज्यप्रदः बलं सामर्थ्यं ददाति बलदाः भुक्तिमुक्तिप्रद इत्यर्थः । विश्वे सर्वे मनुष्याः यस्य प्राशिषं शासनमुपासते देवाश्च यस्य प्रशिषमुपासते । तदुक्तम् यस्य ज्ञेयावधि ज्ञानं शिक्षावधि च शासनम् । कार्य्यावधि च कर्तृत्वं स स्वयम्भूः पुनातु च इति । किञ्च यस्य छाया आश्रयो ज्ञानपूर्वमुपासनम् अमृतं मुक्तिहेतुः यस्य अज्ञानमिति शेषः मृत्युः संसारहेतुः तदुक्तम् ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीति ( श्वेताश्वतरोपनिष० ३, १० ) ॥ १३ ॥

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ । दे॒वा नो॒ यथा॒ सद॒मिद् वृ॒धे अ॒सन्नप्रा॑युवो र॒क्षि॒तारो॑ दि॒वे दि॑वे ॥ १४ ॥

(१)आ नो भद्राः । वैश्वदेवानां पशूनां याज्यानुवाक्याः दश पञ्चाद्याः सप्तमी च जगत्यः त्रिष्टुभोऽन्याः । नोऽस्माकं भद्राःभन्दनीयाः स्तुत्याः । क्रतवः यज्ञाः संकल्पा आयन्तु आगच्छन्तु किं भूताः । विश्वतः सर्वतः अदब्धासः अनुपहिंसिताः । अपरीतासः न परीता अपरिगताः अपरिज्ञाताः केनचित् । उद्भिदः उद्भेत्तारोऽन्येषां क्रतूनाम् किञ्च देवाः नोऽस्माकं सद इत् सदैव यथा । वृधे वर्द्धनाय असन् भूयासुः तथा भूयादिति वाक्यशेषः किं देवाः अप्रायुवः अप्रमाद्यन्तः दिवे दिवे अहन्यहनि रक्षितारः ॥ १४ ॥

वैश्वदेवपशुवपापुरोडाशपशूनां याज्यानुवाक्या दश ऋचो विश्वदेवदेत्या गोतमदृष्टाः तत्रादौ पञ्च जगत्यः । क्रतवो यज्ञाः सङ्कल्पा वा नोऽस्मान् प्रति आयन्तु आगच्छन्तु यज्ञकर्त्तारो वयं भवेमेत्यर्थः । कीदृशाः क्रतवः भद्राः भन्दनीयाः भदि कल्याणे

(१) अयं पाठक्रमः वाराणसी० पु० अस्ति ।

कल्याणकारिणः तथा विश्वतः अदब्धासः सर्वतोऽनुपहिंसिता निर्विघ्ना इत्यर्थः । अपरीतासः न परीता अपरीताः अपरिगता अज्ञाताः केनचित् फलानुमेया इत्यर्थः । उद्भिदः उद्भिन्दन्ति प्रकटयन्ति उद्भिदः उद्भेत्तारो यज्ञान्तराणां प्रकटीकर्त्तार इत्यर्थः । किञ्च यथा येन प्रकारेण देवा नोऽस्माकं सदमित् सदैव वृधे वृद्धै असन् भवन्ति तथा क्रतवः आयन्त्वित्यर्थः । सदामित्यव्ययं सदार्थे । कीदृशा देवाः अप्रायुवः प्रकर्षेणायुवन्ति प्रमाद्यन्ति ते प्रायुवः यौतेः क्विप् तुगभाव आर्षः न प्रायुवः अप्रायुवः अनालसा अस्माकं वृद्धै भवन्त्वित्यर्थः तथा दिवे दिवे अहन्यहनि प्रत्यहं रक्षितारः पालकाः ॥ १४ ॥

**दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वाना॑ᳬ रा॒तिर॒भि नो॒ निव॑र्त्तताम् । दे॒वाना॑ᳬ स॒ख्यमुप॑सेदिमा व॒यं दे॒वा न॒ आयु॒ः प्रति॑रन्तु जी॒वसे॑ ॥ १५ ॥**

(१)देवानाम्भद्रा । देवानां भद्रा सुमतिः नोऽभिनिवर्तताम् । अस्मान्प्रत्यभिमुखीभवतु किं देवानाम् । ऋजूयताम् ऋजूयन्ति ते तथा ऋजुगामिनाम् । यद्वा ऋजुकामिनाम् । ऋजु प्रगुणम् यजमानं कर्तुम् ये कामयन्ते ते तथोक्ताः । किञ्च । देवानां रातिः दानम् नः अभिनिवर्तताम् । ततो लब्धदाना वयं देवानां संख्यम् उपसेदिम प्राप्नुयाम ततो भक्तानामस्माकं देवाः आयुः प्रतिरन्तु वर्धयन्तु किमर्थं जीवसे चिरं जीवनाय ॥ १५ ॥

भद्रा कल्याणकारिणी देवानां सुमतिः शोभना बुद्धिः नोऽस्मान् प्रति अभिनिवर्त्ततामस्मदभिमुखी भवतु । कीदृशानां देवानाम् ऋजूयताम् ऋजु अवक्रं यान्ति गच्छन्ति ऋजूयन्तस्तेषाम् इणः शतृप्रत्ययः अवक्रगामिनाम् यद्वा ऋजुमवक्रं साधुं यजमानं कामयन्ते

(१) वाराणसीस्थराजकीसंस्कृतपाठशालीयौव्वटभाष्यालिखितपुस्तकसंमतोऽयं पाठः ।

ते ऋजूयन्ति सुष आत्मनः क्यच् ऋजूयन्ति ते ऋजूयन्तस्तेषाम् क्यजन्ताच्छतृ साधुं यजमानं कामयमानानामित्यर्थः । किञ्च देवानां रातिः दानं नोऽस्मानभिनिवर्त्ततताम् देवा अस्मभ्यं ददत्वित्यर्थः । देवेभ्यो लब्धदाना वयं देवानां सख्यं मैत्रीमुपसेदिम प्राप्नुयाम सदेर्लिटि उत्तमबहुत्वे रूपं संहितायां दीर्घः । देवा नोऽस्माकं सखीनामायुः जीवसे जीवितुं प्रतिरन्तु प्रवर्धयन्तु ॥ १५ ॥

तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणꣳसोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ १६ ॥

(१)तान् पूर्वया । पूर्वया अकृत्रिमया स्वयम्भुवा । निविदा निविच्छब्दो वाग्वचनः वाचा वयं तान् देवान् हूमहे आह्वयामः तान् कानित्यत आह । भगं मित्रम् अदितिं दक्षम् अस्रिधम् स्रेधते स स्रित् न स्रित् अस्रित् तम् अच्युतसद्भावम् दक्षस्यैतद्विशेषणम् । अर्य्यमणं वरुणं सोमम् अश्विनौ । एतैः सहिता सुभगा सुभजनीया सरस्वती नः अस्माकं मयः सुखङ्करत् करोतु ॥ १६ ॥

पूर्वया प्राचीनया अकृत्रिमया स्वयम्भुवा निविदा वाचा वेदरूपया वयं तान् प्रसिद्धान् देवान् हूमहे आह्वयामः । निविच्छब्दो वाग्वाचकः । तान् कान् तत्राह भगं मित्रमदितिं देवमातरम् दक्षं प्रजापतिम् अर्य्यमणं वरुणं सोममश्विना अश्विनौ । अस्रिधमिति भगादीनां विशेषणम् न स्रेधते च्योतते सोऽस्रित् तमच्युतसद्भावम् । किञ्च शोभनं भगं भाग्यं यस्याः सा सुभगा भजनीया सरस्वती भगादिसहिता नोऽस्माकं मयः करत् सुखं करोतु ॥ १६ ॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी

(१) वाराणसी० पुस्तकसंमतोऽयं पाठक्रमः ।

तत्पिता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ १७ ॥

(१)तन्नः वातः नोऽस्माकं मयोभु सुखस्य भावयितृ तत् भेषजं हितं वातु । अनुगृह्णातु । माता पृथिवी च तद् भेषजं वातु पिता तद् भेषजं वातु सोमसुतः सोमाभिषवकारिणः मयोभुवः सुखस्य भावयितारः ग्रावाणः तद्भेषजं वान्तु हे अश्विनौ हे धिष्ण्या धारयितारौ युवं युवामपि तद्भेषजं शृणुतं श्रुत्वा च अनुगृह्णीतम् ॥ १७ ॥

वातः पवनः नोऽस्माकं भेषजमौषधं हितं यथा तथा वातु वा गतिगन्धनयोः लोट् प्रवातु अनुगृह्णात्वित्यर्थः ददात्विति यावत् । कीदृशं हितं मयोभु मयः सुखं भवति यस्मात् तन्मयोभु सुखोत्पादकं हितं ददातु । माता जगन्निर्मात्री पृथिवी तत् हितं वातु । पिता पालको द्यौः स्वर्गः तत् हितं वातु । सोमं सुन्वन्ति सोमसुतः सोमाभिषवकारिणो ग्रावाण : दृषदः तत् भेषजं वान्तु ददतु । कीदृशा ग्रावाणः मयोभुवः मयः सुखं भावयन्ति ते मयोभुवः सुखस्य दातारः । हे अश्विना अश्विनौ ! युवं युवां तत् वातादिभ्यो भेषजप्रार्थनं शृणुतं युवामपि हितं दत्तमित्यर्थः । कीदृशौ युवां धिष्ण्या धिष्ण्यौ गृहवद्धारयितारौ ॥ १७ ॥

तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ १८ ॥

(२)तमीशानम् । वयं तम् इशानं रुद्रम् हूमहे आह्वयामः ।

( १ ) अयं पाठक्रमः वाराणसी० पुस्तकसंमतः ।

( २ ) वाराणसी० लिखितपुस्तकसंमतोऽयं पाठक्रमः ।

किंभूतम् जगतो जङ्गमस्य तस्थुषः स्थावरस्य पतिं धियञ्जिन्वम् । धिया बुद्ध्या संकल्पमात्रेण जिन्वति प्रीणाति इति धियञ्जिन्वः यद्वा धिया कर्मणा जिन्वति तं किमर्थं हूमहे । अवसे अवनाय तर्पणाय । पूषा यथा येन प्रकारेण नः अस्माकम् वेदसान्धनानाम् वृधे वर्द्धनाय । स्वस्तये च असत् भूयात् तथा हूमहे किं पूषा रक्षिता धनस्य पायुः पाताऽस्माकम् अदब्धः अनुपहिंसितः केनापि ॥ १८ ॥

वयं तं प्रसिद्धमीशानं रुद्रं हूमहे आह्वयामः । कीदृशं तं जगतः जङ्गमस्य तस्थुषः स्थावरस्य च भूतजातस्य पतिं पालकम् । धियञ्जिन्वं धियं बुद्धिं जिन्वति प्रीणातीति धियञ्जिन्वस्तम् अलुक् बुद्धिसन्तोषकारकम् जिन्वतिः प्रीणनार्थः । किमर्थं हूमहे अवसे अवितुं तर्पयितुं तुमर्थे असेप्रत्ययः यथा येन प्रकारेण पूषा नोऽस्माकं वृधे वृद्ध्यै स्वस्तये कल्याणाय च असत् भवतु तथा हूमहे इत्यर्थः । कीदृशः पूषा वेदसां धनानां ज्ञानानां वा रक्षिता रक्षकः । पायुः पालकः पुत्रादीनाम् । अदब्धः अनुपहिंसितः ॥ १८ ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १९ ॥

(१)स्वस्ति नः । वृद्धश्रवाः प्रभूतधनः महाशब्दो महाकीर्तिर्वा । इन्द्रः नोऽस्माकं स्वस्ति स्वस्त्ययनं दधातु स्थापयतु विश्ववेदाः सर्वधनः सर्वज्ञो वा पूषा नः स्वस्ति दधातु । अरिष्टनेमिः अनुपहिंसितरथनेमिः तार्क्ष्यः नः स्वस्ति दधातु बृहस्पतिश्च नः स्वस्ति दधातु ॥ १९ ॥

विराट्स्थाना । आद्यौ पादौ नववर्णौ तृतीयो दशकः तुर्यो व्यूहेनैकादशकः नवकौ वैराजस्त्रैष्टुभश्चेति वचनात् । इन्द्रः नोऽस्मभ्यं

(१) अयं पाठक्रमः वाराणसी० लिखितपु० संमतः ।

स्वस्ति अविनाशं शुभं दधातु ददातु । कीदृशः वृद्धश्रवाः वृद्धं महत् श्रवः कीर्त्तिर्यस्य सः । पूषा नः स्वस्ति ददातु कीदृशः विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य विश्वं वत्तीति वा विश्ववेदाः । तार्क्ष्यो रथो गरुडो वा नः स्वस्ति दधातु कीदृशः अरिष्टनेमिः अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः । बृहस्पतिः देवगुरुर्नोऽस्मभ्यं स्वस्ति ददातु ॥ १९ ॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह ॥ २० ॥

(१)पृषदश्वा मरुतः । पृषन्तः शवला अश्वा येषां ते पृषदश्वाः । पृश्निमातरः । पृश्नि द्यौ माता येषान्त एवमुच्यन्ते । शुभंयावानः शुभङ्कर्तुञ्जनान्प्रति ये यान्ति ते शुभंयावानः । आतो मनिन्क्वनिप्वनिपश्चेति वनिप् । विदथेषु यज्ञेषु जग्मयः-गमनशीलाः । आदृगमहनेति किः । य इत्थंभूता मरुतस्ते अवसा अन्नेन हविर्लक्षणेन आहूताः सन्तः आगमन् आगच्छन्तु इहेत्यनुषङ्गः । ये च अग्निजिह्वा अग्निमुखा हुतादा इत्यर्थः । मनवः चतुर्दश ते च अवसागमन्निह । ये च सूरचक्षसः आदित्यदर्शनाः

---

(१) वाराणसीस्थ संस्कृतपाठशालीयौव्वटभाष्यलिखितपुस्तकसंमतोऽयं पाठक्रमः तद्यथा नोऽस्माकम् इह यज्ञे अवसा अन्नेन हविर्लक्षणेन आहूताः सन्तः आगमन् आगच्छन्तु किं मरुतः पृषदश्वाः पृषतः शवलाः अश्वाः येषां ते पृश्निमातरः पृश्नि द्यौः गौर्वा माता येषां ते शुभंयावानः । शुभं कर्तुं जनान् प्रति यान्तु ते शुभंयावानः आतो मनिन्क्वनिप्वनिपश्चेति वनिप् विदथेषु यज्ञेषु जग्मयः । गमनशीलाः । आदृगमहनेति किः मनवः चतुर्दश ते च इहागमन् किं मनव अग्निजिह्वाः अग्निमुखा हुताद इत्यर्थः विश्वे सर्वे देवाश्च अवसा इह आगमन् किं देवाः सूरचक्षसः आदित्यदर्शनाः ॥ २० ॥

विश्वदेवाः ते च नःअस्माकम् अवसागमन्निह यज्ञे ॥ २० ॥

जगती । मरुतो देवाः अवसान्नेन हविर्लक्षणेन हेतुना इहयज्ञे आगमन्नागच्छन्तु । कीदृशा मरुतः पृषदश्वा पृषत्यः पृषतीसंज्ञा अश्वा वडवा वाहनं येषां ते पृषदश्वाः पुंवद्भावः पृषत्यो मरुतामिति ( निघ० १, १५, ६ ) वचनात् । यद्वा पृषन्तः शबलाः अश्वाः येषां ते । पृश्निर्द्यौर्गौर्दितिर्वा माता जननी येषां ते पृश्निमातरः । शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः आतो मनिन्निति ( पा० ३, २, ७४ ) वनिप्प्रत्ययः । विदथेषु यज्ञगृहेषु जग्मयः गमनशीलाः आदृगमहनेति ( पा० ३, २, १७१ ) किः । अग्निजिह्वाः अग्निर्जिह्वा भोजनसाधनं येषां ते अग्निमुखा वै देवा इति श्रुतेः हुताद इत्यर्थः । मन्यन्ते जानन्ति मनवः सर्वज्ञाः । सूरः सूर्यश्चक्षः चक्षुः येषां ते सूर्यं चक्षते पश्यन्ति वा सूरचक्षसः । किञ्च न केवलं मरुतः विश्वे सर्वे देवाः च नोऽस्माकं यज्ञे आगमन्नागच्छन्तु ॥ २० ॥

भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॑र्यजत्राः । स्थि॒रैरङ्गै॑स्तुष्टु॒वाᳬसंस्त॒नूभि॒र्व्यशेमहि दे॒वहि॑तं॒ यदायुः ॥ २१ ॥

(१)भद्रं कर्णेभिः हे देवाः वयं कर्णेभिः कर्णाभ्यां भद्रमनुकूलं शृणुयाम हे यजत्राः यजनीयाः देवाः अक्षभिः अक्षिभ्यां वयं भद्रं पश्येम । किं च स्थिरैः अशिथिलैः अङ्गैः तुष्टुवांसः देवान् स्तुवन्तः सन्तः तनूभिः भार्यापुत्रपौत्रादिवपुर्भिः सहिता देवहितं देवैः स्थापितं मनुष्याणां यत् आयुः तत् व्यशेमहि वयं व्यश्नुवीमहि ॥ २१ ॥

तिस्रस्त्रिष्टुभः । हे देवाः ! कर्णेभिः कर्णैः भद्रं कल्याणमनुकूलं वयं शृणुयाम । हे यजत्राः ! यजन्तं त्रायन्ते रक्षन्ति यजत्राः यजमा-

(१) अयं पाठक्रमः वाराणसी० लिखितपुस्तकेऽस्ति ।

नपालकाः अक्षभिः नेत्रैः भद्रं वयं पश्येम बहुलं छन्दसीति ( पा० ७, १, ७६ ) हलादौ अक्षिशब्दस्यानङ्ङादेशः । किञ्च देवहितं देवैः स्थापितं देवानां हितं देवोपासनयोग्यं वा यदायुः जीवनं तद्व्यं व्यशेमहि व्यश्नुवीमहि प्राप्नुयाम । कीदृशा वयं स्थिरैः दृढैरङ्गैः अवयवैः करचरणादिभिः तनूभिः शरीरैश्च पुत्रादिभिर्वा युताः तुष्टुवांसः भवतः स्तुवन्तः सन्तः ॥ २१ ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ २२ ॥

(१)शतमित् । हे देवा शतम् इत शतमपि शरदः अन्ति अन्तिके भवथ। आकल्पकालमिति भावः यत्र यस्मिन् शरदां शते नोऽस्माकं तनूनां यूयं जरसं जरानिमित्तामशक्तिं चक्र कृतवन्तः। करोतेर्लिण्मध्यमबहुवचनम् । किञ्च यत्र शरदां शते । पुत्रासः पितरो भवन्ति पुत्रा अग्नयः ते हि यजमानस्य पितरो जनितारो भवन्ति । तदुक्तम् यत्र वै प्रजापतिः प्रजाः ससृजे इत्युपक्रम्य। तमाजनयित्वा बिभृहीति । यत्र पितरो भवन्ति एतदप्युक्तमेव। स यत्र म्रियते यत्रैनमग्नावभ्यादधाति तदेषो अग्नेरधिजायते स एष पुत्रः सन्पिता भवतीति । अथवा यत्र शरदां शते पुत्राः और्ध्वदैहिकं कुर्वाणाः पितरो भवन्ति पुत्राणां पुत्राः स्युरित्यर्थः। यतो यूयमन्तिकेऽतो ब्रूमः मध्या मध्ये अकाले एव नोऽस्माकमायुः मा रीरिषत मा हिंसिष्ट किंभूतमायुः गन्तोः गन्तृ गमनशीलम् । उक्तञ्च ॥

सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य।

---

( १ ) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति ।

वर्षासु सिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्तीति ॥ २२ ॥

हे देवाः ! शतमित् शतमपि शरदो वर्षाणि शतवर्षपर्य्यन्तं यूयमन्ति अन्तिके समीपे भवतेति शेषः यत्र शरच्छते नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुतं करोतेर्लिटि मध्यमबहुवचनम् द्व्यचोऽतस्तिङ इति ( पा० ६, ३, १३५ ) चक्रेत्यत्र संहितायां दीर्घः निपातस्य चेति ( पा० ६, १३६ ) यत्रेत्यत्र दीर्घः वार्द्धकावधि यूयं समीपे भवतेत्यर्थः । यत्रास्माकं जरायां पुत्रासोऽस्मत्पुत्राः पितरो भवन्ति पुत्रवन्तो भवन्ति यावदस्माकं पौत्रा भवन्तीत्यर्थः तावत् मध्या मध्ये नोऽस्माकमायुर्मा रीरिषत मा हिंसिष्ट रिषतेर्हिंसार्थस्य णिजन्तस्य चाङि रूपम् । कीदृशमायुः गन्तोः गन्तृ गमनशीलम् तदुक्तम् सञ्चिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षासु सिक्ता इव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्तीति ॥ २२ ॥

अदि॑तिर्द्यौरदि॑तिरन्तरि॑क्षमदि॑तिर्माता स पिता स पुत्रः । विश्वे॑ दे॒वा अदि॑तिः पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ २३ ॥

(१)सर्वात्मकत्वेनादितिं मन्त्रदृक् स्तौति अदितिर्द्यौः द्यौः अन्तरिक्षं माता सः सा पिता पुत्रः सः सा अदितिरिति छान्दसो लिङ्गव्यत्ययः विश्वे च देवाः पञ्चजनाः मनुष्याः सर्वम् अदितिरेव किम्बहुनोक्तेन जातं भूतं जनित्वं जनिष्यमाणं च अदितिरेव । अथवानेन मन्त्रेणादितिर्नोच्यते । किं तु द्यौःप्रभृतीन्येतानि अदीनानि महाभाग्ययुक्तानि ॥ २३ ॥

मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति । द्यौः स्वर्गोऽदितिः तदधिष्ठातृत्वात् एवमग्रेऽपि अन्तरिक्षमदितिः माता पिता पुत्रश्च सः

( १ ) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति ।

सादितिरिति लिङ्गव्यत्ययः । विश्वे सर्वे देवाः अदितिः । पञ्च जनाः मनुष्या अप्यदितिः । किं बहुना जातमुत्पन्नं प्राणिजातं जनित्वं जनिष्यमाणं च सर्वमदितिरेव । यद्वादितिर्मन्त्रेण नोच्यते द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि महाभाग्ययुक्तानि सन्तु ॥ २३ ॥

मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् । यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥ २४ ॥

(१)मा नः । अश्वस्तोमीयं जुहोति । द्वाविंशत्या ऋग्भिस्त्रिष्टुब्भिः । तृतीयाषष्ठ्यौ जगत्यौ । दीर्घतमा ऋषिः । अश्वस्य स्तूयमानत्वात् या तेनोच्यते सा देवतेति न्यायेन अश्वो देवता । तृतीयःपादःप्रथमंव्याख्यायते यच्छब्दयोगात् । यत् वाजिनः अश्वस्य । देवजातस्य देवैर्जनितस्य । सूरादश्वं वसवो निरतष्ट इत्येतदभिप्रायम् । सप्तेःसरणस्य वाजिनोऽश्वस्य वीर्याणि चरित्राणि । विदथे यज्ञे प्रवक्ष्यामः उच्चारयामः तत्र मित्रादयो नोऽस्मान् मा परिख्यन् परिख्यानं निन्दा मा परिगर्हन्तु नः अस्माकं देवाः स्तुत्याः नत्वश्वप्रभृतयस्तिर्यञ्च इति स्याद्गर्हा । अतो ब्रवीमि मा परिख्यन्निति । यद्यपि गर्होचिताः तथापि अश्वादिरूपेण देवानामेव स्तुतत्वादित्याशयः । के ते देवाः मित्रः वरुणः अर्यमा आयुर्वायुः वकारलोपेन । इन्द्रश्च ऋभुक्षा मरुतश्च ॥ २४ ॥

का० ( २०, ८, ७ ) मा नो मित्र इति च प्रत्यृचमनुवाकाभ्याम् । मा न इत्यादिषोडशकण्डिकात्मकेनानुवाकद्वयेन पूर्ववच्चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । मा नो यदश्वस्याष्टकावित्युक्तेः षोडश

( १ ) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति ।

श्वस्तोमीया जुहोतीति श्रुतेश्च । द्वाविंशतिर्ऋचोऽश्वस्तुतिपरत्वादश्वदेवत्यास्त्रिष्टुभो दीर्घतमोदृष्टा अत्र एष छाग इति ( २६ ) तृतीया यूपव्रस्का इति ( २९ ) षष्ठी एते द्वे जगत्यौ । ततः षोडशभिर्होमः षड्भिः स्तुतिः सर्वाभिर्वा होमः अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोतीति श्रुतेः ॥ अथ मन्त्रार्थः । विदथे यज्ञे वाजिनोऽश्वस्य वीर्य्याणि चरित्राणि यत् वयं प्रवक्ष्यामः उच्चारयिष्यामः तत्र मित्रादयो देवा नोऽस्मान्मा परिख्यन् मा निन्दन्तु परिख्यानं निन्दा अस्यतिवक्तिख्यातिभ्योऽङिति ( पा० ३, १, ५२ ) च्लेरङ् न माङ्योग इति ( पा० ६, ४, ७४ ) अडभावः अस्माभिर्देवाः स्तुत्या न त्वश्वादयास्तिर्य्यञ्च इति यद्यपि निन्दोचिता तथाप्यश्वरूपेण देवानामेव स्तुतिः क्रियते । कीदृशस्य वाजिनः देवजातस्य देवात् सूर्य्याज्जातस्योत्पन्नस्य देवैर्जनितस्य वा सूरादश्वं वसवो निरतष्टेत्युक्तेः ( २९, १३ ) । सप्तेः सप सम्बन्धे सपति देवैः सह युज्यत इति सप्तिस्तस्य । के मा निन्दन्तु तानाह मित्रः अहरभिमानी देवः वरुणः रात्र्यभिमानी देवः । अर्य्यमा आदित्यः । आयुः एति सततं गच्छतीति आयुर्वायुः । इन्द्रः देवराजः । ऋभुक्षाः ऋभवो देवाः क्षियन्ति निवसन्ति यस्मिन् स ऋभुक्षाः देवाधारः प्रजापतिः यद्वा इयर्त्ति व्याप्नोति सर्वमिति ऋभुक्षाः अर्तेर्भुक्षिन् प्रत्ययः पथिमथ्यृभुक्षामादिति ( पा० ७, १, ८५ ) सावाकारः । इन्द्रविशेषणं वा ॥ २४ ॥

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥ २५ ॥

(१)यन्निर्णिजा । यत् यदा निर्णिजा निर्णेजनेनोदकस्नानेन संस्कृतस्य आलम्भनकाले यत्स्नापनमश्वस्य तदेतदुक्तम् । तथा रेक्णसा रेक्ण इति धननाम धनेन मणिकाख्येन प्रावृतस्य केसरपुच्छेषूपचितस्य अश्वस्य । सौवर्णान्मणीन्केसरपुच्छेषु

( १ ) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति ।

पत्न्य आवयन्ति तदभिप्रायमेतत्। एवं विधस्याश्वस्य गृभीतां गृहीतां रातिन्दानम् आज्यसक्तुधानालाजालक्षणम् उदरतो नयन्ति मुखाग्रे प्रापयन्ति। अश्वाय रात्रिहुतशेषं प्रयच्छन्तीत्येतदभिप्रायम्। तत् तदा अश्वस्य सुप्राङ् सुष्ठु प्रागञ्चनः ललाटे बद्धः अजः अप्येति अभ्यागच्छति किं भूतः अजः मेम्यत् मेम्यदिति शब्दानुकरणम्। मेमे इति शब्दं (२)कुर्वाणः। विश्वरूपः नानावर्णः कृष्णग्रीव आग्नेयो रराटे पुरस्तादित्येतदभिप्रायमेतत्। किञ्च इन्द्रापूष्णोः इन्द्रस्य पूष्णश्च प्रियं पाथः अन्नं पशुलक्षणम् श्यामाख्यम् अश्वस्य नाभिबद्धं तदप्येति अभ्यागच्छति। यदिह पठ्यते सौमापौष्णः श्यामो नाभ्याम्। तदयं मन्त्रोऽभिवदति। इन्द्रापूष्णोः प्रियमप्येति पाथ इति हुतशेषमन्नमश्वाग्रे भक्षार्थं यदा नीयते तदा ललाटनाभिबद्धौ अजौ आगच्छत इत्यर्थः॥ २५॥

यत् यदा विप्रा अश्वस्य मुखतो मुखाग्रे गृभीतां गृहीतां रातिं दानमाज्यसक्तुधानालक्षणं नयन्ति प्रापयन्ति अश्वाय रात्रिहुतशेषं प्रयच्छतीत्युक्तेः तदा अजः छागःअप्येति भक्षणायागच्छति। कीदृशोऽजः सुप्राङ् सुष्ठु प्राञ्चति पूर्वं गच्छति सुप्राङ् ललाटे बद्ध इत्यर्थः कृष्णग्रीव आग्नेयो ललाटे पुरस्तादित्युक्तेः (२४, १) तथा मेम्यत् शब्दानुकरणम् मे मे इति शब्दं कुर्वन्। विश्वरूपः विश्वानि रूपाणि यस्य नानावर्ण इत्यर्थः। किञ्च इन्द्रापूष्णोः इन्द्रश्च पूषा च इन्द्रपूषणौ तयोः देवताद्वन्द्वेति (पा० ६, ३, २६) इन्द्रपदस्य दीर्घः इन्द्रस्य पूष्णश्च प्रियंमिष्टं पाथोऽन्नं पशुलक्षणं तदप्येति भक्षाय नाभिबद्धोऽप्यागच्छति सौमापौष्णः श्यामो नाभ्यामित्युक्तेः (२४. १)। हुतशेषमन्नं यदाश्वाय दीयते तदा ललाटनाभिबद्धावजौ भक्षणायागच्छत इत्यर्थः। कीदृशस्याश्वस्य निर्णिजा निर्णेजनेन स्नानेन प्रावृतस्य संस्कृतस्य आलम्भनकाले स्नापितस्य

(२) कुर्वन् इति पाठान्तरम्।

निर्णेजनं निर्णिक् तथा निजतेः सम्पदादित्वाद्भावे क्विप् । तथा रेक्णसा प्रावृतस्य आच्छादितस्य रेक्ण इति धननाम ( निघ० २, १०, २ ) धनेन सौवर्णमणिलक्षणेन प्रावृतस्य अश्वस्य सौवर्णान्मणीन् केसरपुच्छेषु पत्न्य आवयन्तीत्युक्तेः ॥ २५ ॥

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः । अभिप्रियं यत् पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ॥ २६ ॥

(१) एष छागः । एष आग्नेयश्छागः पुरः अग्रतः स्थितः नीयते अश्वेन वाजिना व्यापकेन सहितः । पूष्णश्च पोषकस्याग्नेश्च भागो भजनीयः नीयते अश्वैः सह । सोऽपि पर्य्यङ्ग्य एव । विश्वेदेव्यः विश्वेभ्यः सर्वेभो देवेभ्यः हितः अग्नेःसर्वदेवात्मकत्वात्सर्वदेवप्रियत्वम् । कस्मात् अभि प्रियम् अभिप्रेतं यत् । यच्च पुरोडाशम् । पुरोडाशङ्कर्तुम् अर्वत । अश्वेन सहितम् । अश्वस्तस्मिन्काले संज्ञप्यते पशुपुरोडाशः क्रियते तदेतदुक्तम् । त्वष्टा च एनमजम् । तदा सौश्रवसाय शोभनान्तकरणाय जिन्वति प्रीणाति । स हि तस्याधिकार इति ॥ २६ ॥

यत् यदा एषः छागोऽजः वाजिना वेगवताश्वेन पुरः पुरस्ता-

---

(१) अयं पाठक्रमः वाराणसी० लिखितपु० आस्ति मुम्बई मु० पु० नास्ति । तद्यथा एष छागः । एषः छागः शृङ्गरहितोऽजः वाजिना शीघ्र व्यापकेन अश्वेन सह पूष्णः पोषकस्याग्नेः भागः भजनीयः विश्वदेव्यः सर्वदेवार्हः अग्नेः सर्वदेवात्मकत्वात् दर्हत्वेन सर्वदेवप्रियत्वम् एवंविधोऽजः पुरः पुरस्तात् नीयते प्राप्यते यत् यस्मात् एवं क्रियते तस्मादभिप्रियं समन्तात् प्रीडयितारं पुरोडाशं पुरस्ताद् दातव्यम् । एनमजं त्वष्टा इत् त्वष्टैव सर्वोत्पादको देवः अर्वता अरणवता अश्वेन सह सौश्रवसाय शोभनान्नकरणाय जिन्वति प्रीणाति स हि तस्याधिकारः ॥ २६ ॥

तु नीयते प्राप्यते ललाटबद्धत्वात्। कीदृशः छागः पूष्णो भागः पुष्णाति देवानिति पूषाग्निस्तस्य भागः भजनीयः आग्नेयो रराटे इत्युक्तत्वात् ( २४, १ )। तथा विश्वदेव्यः विश्वेभ्यो हितः सर्वदेवार्हः अग्नेः सर्वदेवात्मकत्वात्। तदा त्वष्टा इत् त्वष्टैव प्रजापतिरेव अर्वता अश्वेन सह एनं छागं जिन्वति प्रीणाति। किमर्थं सौश्रवसाय शोभनं श्रवः कीर्तिर्यस्य सः सुश्रवास्तस्य भावः सौश्रवसं तस्मै सुकीर्त्तये यज्ञेऽमृतानां स्वर्गाप्तेरुक्तत्वात्। किम्भूतमेनम् अभिप्रियम् अभिप्रीणातीति तम् समन्ताद्देवानां प्रीणयितारम्। पुरोडाशं पुरो डाशन्ते ददति एनं स पुरोडाशः तम् पुरस्ताद्दातव्यम्॥२६॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति। अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ २७ ॥

यद्धविष्यम्(२)। यदा हविष्यम् ऋतुशः ऋतावृतौ स्वचारिणं देवयानम् देवानाम् प्रापणीयम् देवयानमार्गगामिनम्वा आदित्यवदनिवारितगतिं वा। त्रिःसंस्कृतम्। स्नापनं व्यजनसुवर्णमणिकप्रवारैः मानुषाः ऋत्विग्यजमानाः परिणयन्ति अश्वम्। अत्र तत्रेत्यर्थः। तस्मिन् काले पूष्णः पोषकस्याग्नेः प्रथमो भागोऽजाख्यः एति यज्ञम् देवेभ्यःप्रतिवेदयन् अजः स्वकीयेन शब्देन। चरकश्रुतौ पूष्णो ललाट इति पठ्यते तदाभिप्रायमेतत्॥२७॥

मानुषा मनुष्या ऋत्विजो यत् यदा अश्वं त्रिः परिणयन्ति वारत्रयं पर्य्यग्नि कुर्वन्ति। कीदृशमश्वं हविष्यं हविषे हितं हविर्योग्य-

---

(२) यद्धविष्यम् हविष्यं हविर्योग्यं देवयानं देवानां प्रपणीयं देवयानमार्गगामिनं वा आदित्यवदनिवारितगतिं वा अश्वं यत् यदा काले काले त्रिः त्रिवारं परिणयन्ति पर्यग्नि कुर्वन्तीत्यर्थः अत्र अस्मिन् समये ऋचि तनुघेति दीर्घः पूष्णः पोषकस्याग्नेर्भागोऽजः प्रथमः पुरोगामी सन् एति गच्छति किं कुर्वन् देवेभ्यः यज्ञं प्रति वेदयन्। प्रख्यापयन् स्वशब्देन चरकश्रुतौ पूष्णो ललाटे इति पठ्यते तदभिप्रायमेतत॥२७॥

म् । ऋतुशः ऋतौ ऋतौ यज्ञकाले देवयानं देवानां प्रापणीयं देवेषु यानं गमनं यस्य तम् देवयानमार्गगामिनं वा यद्वा देववदादित्यवद्यानं गतिर्यस्य अनिवारितगतिमित्यर्थः । अत्रास्मिन् समये पर्य्यग्निकरणकाले पूष्णः पोषकस्य वृद्धस्य वाग्नेर्भागोऽजः प्रथमः पुरोगामी सन् एति गच्छति । किं कुर्वन् देवेभ्यः यज्ञं प्रतिवेदयन् प्रख्यापयन् स्वशब्देन ज्ञापयन् पुष वृद्धौ पूषति वर्धते पूषाग्निः ॥ २७ ॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः । तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम् ॥ २८ ॥

(३)होताध्वर्युः । होता तत्र शंशिता सुविप्र इति संबन्धः । यस्मिन्यज्ञे होता विशंसिता । शस्त्राणामपि साधु मेधावी साधुब्राह्मणो वा अध्वर्युश्च यस्मिन्यज्ञे आवयाः आभिमुख्येन वयतिकर्मणीत्यावयाः अग्निमिन्धः अग्निदीपकः ग्रावग्राभः । ग्रवग्राहः

(३) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति मुम्बई मुद्रित पुस्तके नास्ति । तद्यथा होताध्वर्युः । होता देवानामाह्वाता तन्नामक ऋत्विक अध्वर्युः अध्वरयुः अध्वरस्य नेता सोऽपि आवयाः । आभिमुख्येन वयति तनोति कर्माणीति आवयाः अध्वर्योर्विशेषणमेतत् यद्वा आभिमुख्येन अवयष्टा प्रति प्रस्थातोच्यते अव यजः इति ण्विन् अवाप्योरुपसर्गयोरिति अवशब्दस्याल्लोपः अवयाः श्वेतवाः पुराडाश्चेति निपातितः अग्निमिन्धोऽग्नीत् अग्नेर्दीपकः अष्ट्राग्न्योरिध इति मुम् । ग्रावग्राभः ग्रावणः स्तुत्या गृह्णातीति ग्राहः ग्रावस्तुत् कर्मण्यण् उत अपि शंस्ता प्रशास्ता सुविप्र इति मेधाविनामशोभनमेध्योपेतो ब्रह्म ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीत्युक्तत्वात् ब्रह्मैव सुविप्रशब्देनाभिधेयः स चानुक्त ऋत्विगुपलक्षकः एते सर्वे तेन प्रसिद्धेन स्वरं कृतेन सुष्ठु अलंकृतेन स्विष्टेन सुष्ठु इष्टेन यज्ञेन वक्षणाः नदीः घृतकुल्याद्याः प्रवहणस्वभावाः आपृणध्वं सर्वतः पूरयत यज्ञं सम्यग् निर्वर्त्य फलं साधयतेत्यर्थः ॥ २८ ॥

सोमाभिषवाय ग्रावग्रहणशीलः उत अपि शंस्ता । तेन यज्ञेन स्वलङ्कृतेन स्विष्टेन साधु इष्टेन च । वक्षणाः नदीः देवानां तुष्टिकराः । पयोदधिपयस्या पुरोडाशमांसैः । आपृणध्वम् आपूरयध्वम् अकृपणन्दातव्यमित्यभिप्रायः ॥ २८ ॥

हे होत्रादय ऋत्विजः ! तेन प्रसिद्धेन यज्ञेनाश्वमेधेन वक्षणाः नदीः घृतकुल्याद्याः आपृणध्वं घृतपयोदधिपयस्यापुरोडाशमांसैः पूरयत । वहन्तीति वक्षणाः । यज्ञं सम्पाद्य फलं साधयतेत्यर्थः । कीदृशेन यज्ञेन स्वलङ्कृतेन रलयोरैक्यं सुष्ठु अलंकृतेन विप्रहविर्दक्षिणादिभिः शोभितेन । स्विष्टेन सुष्ठु इष्टेन । के ऋत्विजस्तानाह होता आह्वाता देवानां तन्नामक ऋत्विक् । अध्वर्युः अध्वरमिच्छति अध्वर्यति सुप आत्मनः क्यच् कव्यध्वरपृतनस्यार्चि लोप इति ( पा० ७, ४, ३९ ) टिलोपः ततः क्याच्छन्दसीति ( पा०३,२, १७० ) उप्रत्ययः । आवयाः आभिमुख्येनाधयजतीत्यावयाः श्वेतवाहोक्थशासेति उम् आवयाः प्रतिप्रस्थाता अवे यज इति ( पा० ३, २ ७२ ) ण्विन् अवाप्योरिति अवस्याल्लोपः । अग्निमिन्धः अग्निमिन्द्धे दीपयति अग्निमिन्धः अग्नीत् ग्राष्ट्राग्न्योरिन्ध इति ( पा० ६, ३, ७० वा० ६ ) मुम् । ग्रावग्राभः ग्रावग्राहः ग्राव्णो गृह्णाति स्तौति ग्रावग्राभः कर्मण्यण् हस्य भः ग्रावस्तोता । उतापि शंस्ता शंसति स्तौति शंस्ता प्रशास्ता । सुविप्रः शोभनो विप्रो मेधावी सुविप्रो ब्रह्म ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीत्युक्तेः । अयमनुक्तर्त्विगुपलक्षकः । एते यज्ञेन वक्षणाः पृणध्वमिति सम्बन्धः ॥ २८ ॥

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ २९ ॥

(४) यूपव्रस्का उत यूपं ये व्रश्चन्ति त एवमुच्यन्ते उत अपि

(४) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति । मुम्बईमु० पु० ना० तद्यथा यूपव्रस्काः यूपार्हवृक्षस्य व्रश्चनकर्तारः छत्तारः उत वे

च ये यूपवाहाः यूपं ये वहन्ति चषालं ये अश्वयूपाय तक्षन्ति ये जनाः अश्वबन्धनयूपाय चषालं यूपाग्रभागन्तक्षति । तक्षन्तीति प्राप्ते छान्दसमेकवचनम् साधु सम्पादयन्ते। ये च अर्वते अश्वाय पचनमुपच्यते ऽनेनेति पचनकाष्ठादिसम्भरन्ति । अतो अपि च तेषाञ्जनानां संबन्धिनी अभिगूर्त्तिः गुरी उद्यमने । आगूरणमभिगूर्त्तिः स्वकाले सर्वं करणीयमिति बुद्धिः इन्वतु व्याप्नोतु ॥ २९ ॥

तेषामृत्विजामभिगूर्तिः अभिगोरणमभिगूर्तिरुद्यमः नोऽस्मानिन्वतु प्रीणातु व्याप्नोतु वा अस्माकं यज्ञं सम्यक् साधयत्वित्यर्थः इवि व्याप्तिप्रीणनयोः लोट् शपि इदितो नुम् धातोरिति (पा० ७, १, ५८) नुमागमः । तेषां केषाम् ये यूपव्रस्काः यूपाय व्रश्चन्ति तरुं छिन्दन्ति ते यूपव्रस्काः । उतापि च ये यूपवाहाः यूपं वहन्ति ते यूपवाहाः कर्मण्यण् छिन्नस्य यूपस्य वोढारः । ये च अश्वयूपाय अश्वबन्धनयूपार्थे चषालं तक्षति यूपाग्रे भागे स्थाप्यं काष्ठं तक्षन्ति वचनव्यत्ययः । चषालो यूपकटक इत्यमरः ( २, ७, १८ ) तक्षू तनूकरणे साधु सम्पादयन्तीत्यर्थः । उतो अपि च ये नराः अर्वते अश्वाय पचनं पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकं सम्भरन्ति संहरन्ति आनयन्ति तेषामुद्यमोऽस्मान् प्रीणात्वित्यर्थः॥२९॥

उप॒ प्रागा॑त् सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒मा॒शा॒ उप॑

---

यूपवाहाः छिन्नस्य वोढारः ये च चषालं यूपस्योपरि स्थाप्यं यूपाग्रभागं चषालमाहः तत् अश्वयूपाय अश्वबन्धनयूपाय तक्षति तक्षन्ति इति प्राप्ते वचनव्यत्ययः साधु सपादयन्ति ये च अर्वते अरणवतेऽश्वाय पचनं पाकसाधनं काष्ठभाण्डादिकं संभरन्ति उतो अपि च नोऽस्मत्सम्बन्धिनं तेषां ऋत्विजाम् अभिमूर्त्तिः सकाले सर्वं करणीयमितिबुद्धिः इन्वतु व्याप्नोतु इन्वतिर्व्याप्तिवचनः यद्वा तेषामभिमूर्तिः गुरी उद्यमे आगोरणन् अभिगुतिः नोऽस्मान् इन्वतु याग साधु पारं प्रापय्य बलेन योजयत्वित्यर्थः ॥ २९ ॥

वीतपृष्ठः। अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ३० ॥

(५) उपप्र। उपप्रागात् उपैतु सुमत् स्वयमित्यर्थ इति यास्कः। मे मम अधायि निहितम्। यत् मत् मननम् किं तदिति चेत्। देवानाम् आशाः शंसनानि साधु साध्वयं पशुरागच्छेदित्येवमादीनि। उप आगतः वीतपृष्ठः साधुपोषणेन प्राप्तपश्चाद्भागः। कामितपृष्ठो वा। अश्वपृष्ठं हि सर्व एवारोढुं कामयन्ति। यत एवमतो ब्रवीमि। अन्वेनं विप्रा ऋषयो मदन्ति। अनुमदन्ति अनुमोदन्ति एनमश्वं विप्रा ऋषयश्च स्वयश्च देवानां पुष्टे पोषणाय। चकृम कृतवन्तः। सुबन्धुं शोभनबन्धनम् शोभनार्थवादं वा ॥ ३० ॥

मन्म मननीयं फलं सुमत् स्वयमुपप्रागात् उपगच्छतु सुमदित्यव्ययं स्वयमित्यर्थे सुमत् स्वयमित्यर्थे इति यास्कोक्तेः (निरु० ६, २२) तन्मन्म फलं मे मया अधायि धृतमित्यर्थः। किञ्च अयं वीतं पुष्टं पृष्ठं यस्य यद्वा वीतं कामितं पृष्ठं यस्य अश्वपृष्ठमारोहणाय सर्वे कामयन्ते स वीतपृष्ठोऽश्वो देवानामाशाः मनोरथान् पूरयितुमिति शेषः उप गच्छतु उपसर्गेण क्रियावृत्तिः। किञ्च देवानां पुष्टे

---

(५) अयं पाठक्रमः वाराणसी० पु० अस्ति। उपप्रागात् मन्म मननीयं फलं सुमत् उपप्रागात् उपैतु सुमत् स्वयमित्यर्थ इति यास्कः। यद्वा सुमत् स्वयमेव मन्म फलभूतोऽश्वः मे मयि आगतः स च मया अधायि धृत इत्यर्थः किमर्थं वीतपृष्ठः साधु पोषणेन प्राप्तपश्चाद्भागः कामितपृष्ठो वा अश्वपृष्ठं हि सर्व एवारोढुं कामयन्ते तादृशोऽयमश्वः देवानामाशाः पूरयिन्तुमुपगच्छतु यागार्थमागतमेनं सुबन्धुं शोभनबन्धनम् अश्वं देवानाम् आवतां पुष्टे पोषाय चकृम कुर्मः तं च विप्रा मेधाविनः ऋत्विजः ऋषयोऽतीन्द्रियद्रष्टारः अन्ये वा विप्रा ऋषयश्च अनुमदन्ति अनुमोदतां सम्यक कृतमिति परितुष्यन्तु ॥ ३० ॥

पोषणं पुष्टम् भावे निष्ठा निमित्ते सप्तमी देवपुष्टिनिमित्तं यमश्वं व-यं सुबन्धुं चकृम कृतवन्तः संहितायां दीर्घः शोभनो बन्धुर्बन्धनं यस्य तम् यमश्वं बद्धवन्तः एनमश्वं विप्रा मेधाविनः ऋषयो मन्त्र-दर्शिन ऋत्विजोऽनुमदन्ति अनुमोदन्तां तुष्यन्तु ॥ ३० ॥

यद् वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥ ३१ ॥

(१)यद्वाजिनः । वेजनवतः । दाम ग्रीवाबन्धनरज्जुः सन्दानं सम्यगवच्छेदकं पादबन्धनम् अर्वतः अश्वस्य पञ्चशीर्षण्या शिरसि बद्धा नियोजनीया रज्जुः अस्याश्वस्य । यद्वा घः पाद-पूरणे । अस्याश्वस्य प्रभृतम्प्रहृतं निक्षिप्तम् आस्ये मुखे तृणम् सर्वाणि तानि ते तव हे यजमान । अपि देवेषु अपि प्रजापतये अस्तु । सन्त्विति प्राप्ते वचनव्यत्ययः ॥ ३१ ॥

वाजिनो वेगवतोऽर्वतोऽश्वस्य यत् दाम ग्रीवाबद्धा रज्जुः यच्च-सन्दाने पादबन्धनरज्जुः । या च शीर्षण्या शीर्षे भवा शीर्षण्या शिरोबद्धास्याश्वस्य रज्जुः शिरःशब्दाद्भवे छन्दसीति ( पा० ४; ४, ११० ) यत् । ये च तद्धित इति पा० ६, १, ६१ ) शीर्षन्नादेशः तित्

(१)अयं पाठक्रमः वाराणसी०लि०पु० अस्ति । मुम्बई मु०पु०नास्ति ॥ यद्वाजिनः वाजिनो गमनवतोऽर्वतोऽश्वस्य यत् दाम ग्रीवाबद्धा रज्जुः यच्च संदानं सम्यगवच्छेदकं बन्धकं पादबन्धनं दामास्ति या च अस्याश्वस्य शीर्षण्या शिरसि बद्धा रशना नियोजनीया र-ज्जुरस्ति शिरःशब्दाद्भवे छन्दसीति यत् ये च तद्धित इति शीर्षभावः तित्स्वरितः यद्वा अस्याश्वस्य आस्ये मुखे प्रभृतं प्रहृतं प्र-क्षिप्तं तृणमस्ति घशब्दो हार्थे स च प्रसिद्ध्यर्थः सर्वा सर्वाणि अपि ता तानि ते तव हे यजमान देवेषु मध्ये अस्तु सन्तु देवत्वं प्राप्नुव-न्तु वा वचनव्यत्ययः अत्रोपयुक्तानां सर्वेषां देवत्वं किलाशास्यते अश्वस्य तत्प्राप्तिर्नाशङ्कनीया ॥ ३१ ॥

स्वरितम्। कटिस्था रशना रज्जुः अस्यान्यापि या रज्जुः। अस्याश्वस्य च प्रसिद्धम् आस्ये मुखे प्रभृतं प्रहृतं प्रक्षिप्तं यत् तृणं हे अश्व! ते तव सर्वा सर्वाणि ता तानि देवेषु अस्तु सन्तु देवोपयोगीनि भवन्तु देवत्वं प्राप्नुवन्तु वा। अत्रोपयुक्तानां सर्वेषां देवत्वमाशास्यते॥ ३१॥

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति। यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु॥ ३२॥

(१) यदश्वस्य। यत् अश्वस्य क्रविषः अश्वाङ्गभूतस्य क्रव्यस्य मांसस्य क्रव्यं विकृन्ताज्जायत इति नैरुक्ताः। अङ्गम्। मक्षिका आश अशितवती। यद्वा। स्वरौ स्वधितौ रिप्तमस्ति। यच्च स्वरोपश्वञ्जनकाले स्वधितौ शासे छेदनकाले लिप्तं लग्नमस्ति। यच्च हस्तयोः शमितुः रिप्तम् यच्च नखेषु रिप्तम्। सर्वा ता ते अपि देवेष्वस्तु इति व्याख्यातम्॥ ३२॥

मक्षिका अश्वस्य क्रविषः क्रविः यदाश भक्षितवती अश्नातेर्लिट् क्रविषः इति कर्मणि षष्ठी वाथवा यत् मांसं स्वरौ पश्वञ्जनकाले रिप्तं लिप्तमस्ति स्वरुणा पशुमनक्तीति श्रुतेः। यत् स्वधितौ शा

---

(१) वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मु० मुद्रितपुस्तके नास्ति। यदश्वस्य। अश्वस्य अवयवभूतस्य क्रविषः आममांसस्य यत् अङ्गं मक्षिका आश भक्षयति अश् भोजने यद्वा कर्मणि षष्ठी अश्वस्य यत् मांसं भक्षयति वा अथवा स्वरौ पश्वञ्जनकाले यत् रिप्तं लिप्तमस्ति स्वरूणां पशुमनक्तीति श्रुतेः। अथवा स्वधितौ शासे छेदनकाले अवदानकाले यत् लिप्तमास्ति शमितुर्हस्तयोर्यल्लिप्तमस्ति विशसनकाले यच्च नखेषु लिप्तं तानि सर्वाणि ते तव हे अश्व देवेषु सन्तु तेषामर्थाय भवन्तु अतिपक्वम् ईषत् पक्वं च मा कुर्वन्त्वित्यर्थः॥ ३२॥ ३३॥

शे लिप्तमस्ति छेदनकालेऽवदानकाले च । यच्च शमितुर्हस्तयोः लिप्तं यच्च शमितुर्नखेषु लिप्तम् हे अश्व ! सर्वा ता सर्वाणि तानि अपि देवेषु अस्तु भवन्तु वचनव्यत्ययः सर्वं त्वदीयं देवभोग्यं भवतु ॥३२॥

**यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु ॥ ३३ ॥**

यदूवध्यम् यत् ऊवध्यम् भक्षितमपरिणतमामाशयस्थमूवध्यमुच्यते । उदरस्य अयुतं पृथग्भूतम् अपवाति गन्धायते । यश्च आमस्य पक्वस्य क्रविषः मांसस्य गन्धः अस्ति विद्यते । सुकृता तच्छमितारः कृण्वन्तु । तत्सर्वं शमितारः विशसनकर्तारः सुकृतानि सुसंस्कृतानि दोषरहितानि कुर्वन्तु । उत अपि च मेधं मेध्यं यज्ञार्हम् । शृतपाकं देवयोग्यपाकं पचतु अतिपक्वमीषत्पक्वञ्च मा कुर्वत्वित्यर्थः ॥ ३३ ॥

उदरस्य ऊवध्यमीषज्जीर्णतृणपुरीषं यत् अपवाति अपगच्छति । भक्षितमपक्वमामाशयस्थमूवध्यमुच्यते । आमस्यापक्वस्य क्रविषो मांसस्य यो गन्धो लेशोऽस्ति शमितारः विशसितारः तत्सर्वं सुकृता सुकृतं सुसंस्कृतं कृण्वन्तु कुर्वन्तु । उतापि च मेधं मेध्यमश्वं शृतपाकं यथा पचन्तु शृतो देवयोग्यो जातः पाको यस्मिन् कर्मणि तथा पचन्तु अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः ॥ ३३ ॥

**यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति । मा तद् भूम्यानाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ३४ ॥**

(१) यत्ते । शूले सशेषश्रपणम् तदभिवदत्ययं मन्त्रः । यच्च-

---

(१) वाराणसी० लिखितपु०संमतोऽयं पा०मुम्बईमु० पु० नास्ति तद्यथा यत्ते । हे अश्व ते तव अग्निना पच्यमानात् गात्रात् यत्

ते तव गात्रादवयवात् अग्निना पच्यमानात् । ऊष्मरूपं रसो वा अवधावति गच्छति तथा निहतस्य निःशेषेण हतस्य यदङ्गरसरूपम् अभिशूलं शूलमभिलक्ष्य मांसादुत्कृष्टं धावति गच्छति । मा श्रिषत् मा श्लिषत् तदङ्गभूम्याम् मा च तृणेषु । किं तु देवेभ्यः तत् उशद्भ्यः वश कान्तौ कामयमानेभ्यः रातन्दानम् अस्तु ॥३४॥

हे अश्व ! अग्निना पच्यमानात्ते तव गात्रात् शरीरात् यत् ऊष्मा रसो वा अवधावति अधस्ताद् गच्छति । तथा निहतस्य निःशेषेण हतस्य यत् अङ्गशूलमभि अवधावति शूलेन पाके क्रियमाणे यन्निर्गच्छति तन्निर्गतमूष्माङ्गादिकं भूम्यां मा आश्रिषत् भूम्याश्लिष्टं मा भूत् श्लिषेः पुषादित्वात् च्लेरङ् । तथा तृणेषु मा श्रिषत् विशसनसमये तृणलग्नं मास्तु । किं तर्हि तत्पतितं तृणलग्नं सर्वं देवेभ्यो रातं दत्तमस्तु रा दाने । कीदृशेभ्यो देवेभ्यः उशन्ति कामयन्ते ते उशन्तः तेभ्यः हविः कामयमानेभ्यः वश कान्तौ लटः शत्रादेशः ॥ ३४ ॥

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति । ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वन्तु ॥ ३५ ॥

(१) ये वाजिनम् । ये जनाः वाजिनमश्वं परिपश्यन्ति पक्वं

---

उष्मरूपं रसो वा यत् किञ्चिदवधावति गच्छति तथा निहतस्य निःशेषेण हतस्य ते तव यदङ्गं रसरूपं शूलम् अभिलक्ष्यावधावति निर्गच्छति तदङ्गं भूम्यां मा आश्रिषत् आश्लिष्टं मा भूत् श्लिषः पुषादित्वादङ् पाकसमये तथा तृणेषु विशसनसमये दर्भेषु मा श्रिषत् मापगच्छतु तर्हि तत्पतितं कुत्र गच्छत्विति चेत् उच्यते तत् ईदृशमुशद्भ्यः कृत्स्नं हविः कामयमानेभ्यो देवेभ्यो रातं दत्तं हुतमस्तु॥३४॥

(१) वाराणसी० लिखितपु०संमतोऽयं पा० मुम्बईमु० पु० ना० । ये वाजिनं पक्वं वाजिनमश्वमश्वावयवं ये परिपश्यन्ति ये ईमू ये चैनं

सन्तम् । ये च एनमश्वम् आहुः । किमाहुः सुरभिरयमश्वः अतो-निर्हर किंचिदस्मभ्यं देहीति । इतिशब्दःप्रकारवचनः ये च अ-र्वतोऽश्वस्य संबन्धिनीं मांसभिक्षामुपासते हुतशिष्टमांसयाच्ञां काङ्क्षन्ते । उतो तेषाम् अपि च तेषां संबन्धिनी या अभिगूर्त्तिः सा नः अस्मान् इन्वतु व्याप्नोतु । यद्वा देवपरोऽयं मन्त्रो व्याख्येयः । ये देवाः वाजिनं परिश्यन्ति पक्वम् कदा होष्यतीति विलम्बं दृष्ट्वा ये च सुरभिरयमश्वोऽतो निर्हर निःशेषेणास्मभ्यं देहीत्याहुः । ये चार्वतो मांसभिक्षामुपासते लिप्सन्ते उतो तेषामभिगूर्त्तिर्न्न इन्वतु । वयन्तु देवानामन्यभूता इत्त्यभिप्रायः ॥ ३५ ॥

ये जनाः पक्वं वाजिनमश्वं परिपश्यन्ति अयं पक्व इति जानन्ति । य ईम् ईमित्यव्ययं चार्थे ये च इत्याहुः एवं कथयन्ति किम् सुर-भिः सुगन्धः पाको जातः अतो निर्हर अग्नेः सकाशादुत्तारयेति । ये च जनाः अर्वतोऽश्वस्य मांसभिक्षामुपासते हुतशिष्टमांसयाचनां कुर्वते । उतो अपि च तेषां पाकद्रष्ट्रादिजनानामभिगूर्त्तिः उद्यमो नो-ऽस्मानिन्वतु प्रीणातु । यद्वायं मन्त्रो देवपरो व्याख्येयः । ये देवाः पक्वं वाजिनं परिपश्यन्ति कदा होष्यतीति ये च विलम्बं दृष्ट्वा सु-रभिः पाको जातोऽस्मभ्यं निर्हर देहीत्याहुः ये चार्वतो मांसभिक्षा-

---

सुरभिः शोभनोऽतो निर्हर किञ्चिदस्मभ्यं देहीत्याहुः । यद्वा निः शेषेण देवेभ्यो हरेत्याहुः यतः सुरभिः अतो देवयोग्य इति किञ्च ये नराः अस्यार्वतोऽश्वस्य मांसभिक्षामुपासते हुतशिष्टमांसयाचनां काङ्क्षन्ति । उतो अपि च तेषामुक्तविधानामभिगूर्त्तिः अभित उद्यम-नं सङ्कल्पो नोऽस्मान् इन्वतु व्याप्नोतु यदस्माभिरश्व उपालभ्य एवं स्पृहयन्ति तदा यज्ञो निर्वहत्वित्यर्थः यद्वा अयं मन्त्रो देवपरो व्या-ख्येयः ये देवाः वाजिनं पक्वं परिपश्यन्ति कदा होष्यतीति विलम्बं-दृष्ट्वा ये च सुरभिः एनं निर्हर निः शेषेणास्मभ्यं देहीत्याहुः ये चार्व-तोऽश्वस्य मांसभिक्षामुपासते तेषामभिगूर्त्तिर्नः इन्वतु सङ्कल्पः सफलो भवत्वित्यर्थः ॥ ३५ ॥

मुपासते मांसं याचन्ते तेषामभिगूर्त्तिः सङ्कल्पोऽस्मान् प्रीणातु सफलो भवत्वित्यर्थः ॥ ३५ ॥

यन्नीक्षणं माᳫंस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परिभूषन्त्यश्वम् ॥ ३६ ॥

(१) यन्नीक्षणम् । यत् नीक्षणम् निरतामीक्ष्यते शृताश्च तव संबिन्धनोऽर्था इति येन दध्यादिना तत् नीक्षणम् । मास्पचन्याः मांसस्य पचि युट्घञोरित्यकारलोपः । उखायाः यानि च पात्राणि यूष्णः वसायाः यूषशब्दस्य यूषन्नादेशः षष्ठ्येकवचने उपधालोपश्च । आसेचनानि आसिच्यते येष्विव्यासेचनानि । ऊष्मण्या ऊष्मशब्दस्य धारणार्थे यत्प्रत्ययः । यानि च ऊष्मण्यानि । पिधाना । पिधानानि च चरूणां स्थालीनाम् । ये च अङ्काः अङ्कोपलक्षकाः । शरीरवचनोऽङ्कशब्दः । याश्च सूनाः अश्वविशसनाधिकरणभूताः वेतसमय्यः तानि सर्वाणि । परि·

(१०) वाराणसी०लिखितपु०संमतोऽय पा०मुम्बईमु०पु०नास्ति । यत् नीक्षणं मांस्पचन्याः मांसपचन्याः पचतेरधिकरणे ल्युट् मांसस्य पचि युट्घञोरित्यलोपः उखायाः स्थाल्याः यत् नीक्षणं नितरामीक्षणं पाकपरीक्षार्थम् । तथा या यानि पात्राणि यूष्णो रसस्य क्वथितस्य आसेचनानि यूषशब्दस्य यूषन्नादेशः षष्ठ्येकवचने उपधालोपः आसिच्यन्तेऽस्मिन्निति आसेचनम् आसेचनसाधनानि तथा उष्मण्या उष्मन् शब्दस्य धारणार्थे यत्प्रत्ययः यानि उष्मण्यानि उष्मधारणार्हाणि पात्राणि तथा चरूणां पात्राणां मांसपूर्णानाम् अपिधाना अपिधानानि तत्साधनानि तथा अङ्काः हृदयाद्यवयवाङ्ककर्मसाधनभूताः वेतसमय्यः सूनाः अश्वविशसनाधिकरणभूताः स्वधिन्यादयः तानि सर्वाणि एवमश्वम् अश्वावयवं परिभूषन्ति परितो भूषयन्ति स्वस्वव्यापारेण साधयन्तीत्यर्थः । भूष अलङ्कारे भौवादिकः ॥ ३६ ॥

भूषन्ति । भूष अलङ्कारे । अलं कुर्वन्ति । परिरक्षन्ति वा । अश्वम् ॥ ३६ ॥

एते पदार्था अश्वं परिभूषन्ति अलंकुर्वन्ति स्वव्यापारेण साधयन्तीत्यर्थः भूष अलङ्कारे भौवादिकः । एते के तानाह यत् उखायाः स्थाल्याः नीक्षणं नितरामीक्षणं पाकपरीक्षार्थं दर्शनम् । कीदृश्या उखायाः मांस्पचन्याः मांसं पच्यते यस्यां सा मांस्पचनी तस्याः मांसपाकाधिकरणभूतायाः करणाधिकरणयोश्चेति ( पा० ३, ३, ११७ ल्युट् मांसस्य पचि युड्घञोरिति ( काशिका० पा० ६, १, १४४ ) मांसस्याकारलोपः टिड्ढाणञ्ञिति ( पा० ४, १, १५ ) ङीप् । तथा यूष्णः पक्वरसस्य आसेचनानि आसिच्यन्ते येषु तानि आसेचनसाधनानि या यानि पात्राणि पद्न्निति यूषशब्दस्य यूषन्नादेशः । यानि च चरूणां मांसपूर्णपात्राणामपिधाना अपिधानानि आच्छादनपात्राणि । कीदृशानि आच्छादनपात्राणि । कीदृशानि तानि ऊष्मण्या ऊष्माणं धारयन्ति तानि ऊष्मण्यानि ऊष्मन्शब्दाद्धारणार्थे यप्रत्ययः आच्छादने ऊष्मा बहिर्न यातीत्यर्थः। तथा अङ्काः चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि । सूनाः विशसनकरणभूता स्वधित्यादयः । एतेऽश्वं परिभूषयन्ति ॥ ३६ ॥

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः । इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ३७ ॥

(१) मा त्वाग्निः । मा त्वा हे अश्व अग्निः ध्वनयीत् ।

---

(१)अयं पाठक्रमः वाराणसी०लिखितपु०समतः मुम्बईमु०पु०ना०॥ हे अश्वपच्यमानावयव त्वा त्वां धूमगन्धिः धूमेन व्याप्तोऽग्निः अल्पधूमावरणो वा अग्निः मा ध्वनयीत् मा ध्वनयतु मा शब्दं कारयेत् ध्वनौ सति भाण्डभङ्गः स्यात् दह्यमानं मांसं सिमासिमाशब्दं करोत्यत एवमुच्यते नोनयतीत्यादिना चङ्प्रतिषेधः ह्म्यन्तक्षणेति ण्यन्तत्वाद्वृद्ध्यभावः किञ्च भ्राजन्ती अत्यन्ताग्निसंयोगेन दीप्यमाना उखा

ध्वनिः शब्दकर्मा शब्दं कारयेत् कथम्भूतः धूमगन्धिः अल्पधूमावरणः मांसं हि पचन्नग्निर्दहन्नप्यल्पधूमावरणो भवति। तच्च दह्यमानं समसिमाशब्दङ्करोत्यत एवमुच्यते। मा च उखा भ्राजन्ती सन्दीपिता अत्यन्ताग्निसंयोगेन। अभिविक्त ओविजी भयचलनयोः अभिविनक्तु। अभिनष्टा विदीर्येत वा। उख्रा वा वृद्धा मांसरसं तदिहोच्यते। जग्घ्रिः ग्रहणशीला उखा। नन्वचेतनोखा कथं गन्धाञ्जिघ्रति। उच्यते। आधिष्ठात्र्योऽत्र देवताः सन्तीति पुरस्तात्प्रतिपादितम् तच्चात्र पुनः स्मार्य्यते इष्टं योगेन सङ्गतीकृतम् वीतं कामितम् अभिगूर्तम् अभ्युद्यतम् वषट्कृतं चादानकाले। यद्वा इष्टं प्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्त्तं ये यजामह इत्यागूर्त्योक्तम् वषट्कृतं वषट्कारेण संस्कृतम्। तन्तादृशम् देवा एव देवासः प्रतिगृभ्णन्ति प्रतिगृह्णन्ति अश्वम्॥ ३७॥

हे अश्व पच्यमानाश्वावयव! अग्निः त्वा त्वां मा ध्वनयीत् ध्वनिं मा कारयतु ध्वनौ सति भाण्डभङ्गः स्यात् दह्यमानं मांसं सिमसिमेति शब्दं करोति तन्मास्तु नोनयतिध्वनयतीत्यादिना (पा० ३, १, ५१) ण्यन्ताच्चङ्प्रतिषेधः ह्म्यन्तक्षणोति (पा० ७, २, ५) वृद्ध्यभावः। कीदृशोऽग्निः धूमगन्धिः धूमस्य गन्धो लेशो यत्र सः अल्प

---

स्थाली मा अभिविक्त अभितो मा चीचलत् तापातिशयेन मा नीनशदित्यर्थः। ओविजी भयचलनयोः लुङि झलो झलीति सलोपः किम्भूता उखा जग्घ्रिः जिघ्रन्ती गन्धग्रहणशीला घ्रा गन्धोपादाने आदृगमहनेति किप्रत्ययः। नन्वचेतनोखा कथं जिघ्रति अधिष्ठात्र्योऽत्र देवताः सन्तीत्यतस्तत्प्रतिपादितम् अत्र पुनः स्मार्यन्ते तं तादृशमश्वमिष्टं भोक्तुमिषितं वीतं होमायानीतम् अभिगूर्तम् अभ्युद्यतं यद्वा इष्टं प्रयाजैः वीतम् आप्रीभिः पर्यग्निकृतम् अभिगूर्त्तं ये यजामह इत्यागूर्त्य युक्तं वषट्कृतं वषट्कारेण संस्कृतम् एवम्भूतं देवासो देवाः प्रतिगृभ्णन्ति प्रतिगृह्णन्ति॥ ३७॥

धूमवानित्यर्थः अल्पाख्यायामिति ( पा० ५, ४ १३६ ) धूमादिकारः । किञ्च भ्राजन्ती अतितापेन दीप्यमाना उखा स्थाली मा अभिविक्त मा चलतु ओविजी भयचलनयोः लुङि तङि झलो झलीति ( पा० ८, २, २६ ) सिलोपे रूपम् न माङ्योग इति (पा० ६, ४, ७४ ) अडभावः । कीदृशी उखा जघ्रिः जिघ्रति गन्धं गृह्णातीति जघ्रिः आदृगमेति ( पा० ३,२, १७१ ) किन्प्रत्ययः अधिष्ठात्र्या देवताया घ्राणम् । तमेवंविधमश्वं देवासः देवाः प्रतिगृभ्णन्ति प्रतिगृह्णन्तु । कीदृशमश्वम् इष्टं प्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्त्तं ये यजामह इत्यागूर्त्योक्तम् वषट्कृतं वषट्कारेण संस्कृतम् ॥ ३७ ॥

निक्रमणं निषदनं विवर्त्तनं यच्च पड्वीशमर्वतः । यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ ३८ ॥

(१)निक्रमणं निषदनम् । निक्रमणं गमनम् वसातिस्थानात् । निषदनं तत्रैव स्थितिः । विवर्तनं भ्रमणम् । यान्येतानि चेष्टितानि । यच्च पड्वीशम् । पादेषु विशतीति पड्वीशम्पादबन्ध-

---

(१)अयं पा०वाराणसी०लिखितपु०अस्ति मुम्बईसु०पु०ना० । निक्रमणं यत् । निक्रमणं नितरां क्रमते यत्र तत् निक्रमणं स्थानं नितरां सीदन्त्यस्मिन्निति निषदनं विवर्त्तनम् इतस्ततो लुण्ठनं यत्र तत् सर्वत्राधिकरणे ल्युट् यश्चावर्तोऽश्वस्य पड्वीशं पादबन्धनं यद्वा बन्धनं पट् तद्वन्तं प्रदेशम् अत्र सर्वत्र देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वाभावाय तत्स्थानमपि स्वीक्रियते यद्वा क्रियापरा वा अवगन्तव्याः आलम्भसमये निग्रहणे या निक्रमणादयश्चेष्टाः सन्ति ता इत्यर्थः यत्र पपौ यदुदकमपि तत् यच्च घासिम् अदनीयम् तृणादिकं घासं जघास अभक्षयत् घस्लृ अदने हे अश्व ते तव ता तानि सर्वा सर्वाणि निक्रमणादीनि देवेष्वस्तु सन्तु देवेषु प्राप्नुवन्तु तान्यपि निरर्थकानि मा भूवन्नित्यर्थः ॥ ३८ ॥

नमुच्यते । अर्वतः अश्वस्य यच्च पपौ पीतवानुदकम् । यच्च घासिं यवसं जघास । घस्लृ अदने भक्षितवान् । सर्वाणि तानि निक्रमणादीनि ते तव हे अश्व अपि देवेषु अपि प्रजापतये अस्तु सन्तु तान्यपि निरर्थकानि मा भूवन्नित्याशयः ॥ ३८ ॥

यत् निक्रमणं नितरां क्रमते यत्र तत् निक्रमणस्थानम् निषदनं नितरां सीदत्यस्मिन्निति निषदनमुपवेशनस्थानम् विवर्त्तनं विविधं वर्त्तते यत्र तत् इतस्ततो लुण्ठनस्थानम् सर्वत्राधिकरणे ल्युट् यच्चार्वतोऽश्वस्य पड्वीशम् पदेषु विशति पड्वीशं पादबन्धनम् । क्रियापरा वा निक्रमणादयः शब्दाः आलम्भसमये यानि अश्वस्य निक्रमणादीनि चेष्टितानि । किञ्च यच्च पपौ यज्जलं पीतवान् यच्च घासिमदनीयं तृणादिकं जघास भक्षितवान् घस्लृ अदने लिट् हे अश्व ! ता तानि सर्वाणि ते तव निक्रमणादीनि देवेषु अस्तु सन्तु । देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वं मास्त्वित्यर्थः ॥ ३८ ॥

यदश्वा॑य॒ वास॑ उपस्तृ॒णन्त्य॑धीवा॒सं या हिर॑ण्यान्यस्मै । स॒न्दा॒नमर्व॑न्तं पड्वी॑शं प्रि॒या दे॒वेष्वा या॑मयन्ति ॥ ३९ ॥

( १ ) यदश्वाय । यत् अश्वाय संज्ञप्यमानाय वासः उपस्तृणन्ति । सर्वत आच्छादयन्ति । यच्च अधीवासम् उपर्याच्छादनयोग्यं वास उपस्तृणन्ति । यानि च हिरण्यानि उपस्तृ-

---

(१)अयं पा०वाराणसी०लिखितपु०आस्ति मुम्बईमु०पु०ना० । यदश्वाय अस्मै अश्वाय संज्ञप्यमानाय अधीवासम् उपर्याच्छादनयोग्यं यत् वासः उपस्तृणन्ति सर्वत आच्छादयन्ति स्तृञ् आच्छादने क्रैयादिकः तथा अस्मै अश्वाय या यानि हिरण्यानि सौवर्णशकलानि उपस्तृणन्ति तथा अर्वन्तं षष्ठ्यर्थे द्वितीया अर्वतोऽश्वस्य सन्दानं सन्दीयतेऽनेनेति सन्दानं शिरोबन्धनं पड्वीशं पादेषु प्रविष्टं पादबन्धनम् एतानि प्रिया देवानां प्रियतराणि चात्वाले बध्वा स्थापितानि देवेषु आयामयन्ति आगमयन्ति प्रापयन्ति ॥ ३९ ॥

णन्ति अस्मै अश्वाय । यच्च सन्दानं सन्दीयतेऽनेनेति सन्दानं शिरोबन्धनम् अर्वन्तम् अर्वते इति विभक्तिव्यत्ययः अश्वाये-ति सामानाधिकरण्यात् । यच्च पड्वीशम्पादवासः एतानि प्रि-याणि देवेषु आयामयन्ति गमयन्ति ॥ ३९ ॥

प्रिया प्रियाणि एतानि वस्तूनि देवेषु आयामयन्ति आगमयन्ति ऋत्विजोऽश्वस्यैतानि देवेष्वेव प्रापयन्तीत्यर्थः । कानीत्यत आह अश्वाय यत् अधीवासमाच्छादकं वासो वस्त्रमुपस्तृणन्ति स्तृञ् आच्छादने क्र्यादिकः तथा या यानि हिरण्यानि सौवर्णशकलानि-अस्मै अश्वाय उपस्तृणन्ति । तथा अर्वन्तम् षष्ठ्यर्थे द्वितीया अर्व-तोऽश्वस्य सन्दानं शिरोबन्धनं पड्वीशं पादबन्धनम् । एतानि दे-वेषु प्रापयन्ति । कीदृशानि प्रिया प्रियाणि देवानामिष्टानि ॥ ३९ ॥

यत्ते॒ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्ण्या॑ वा॒ कश॑या वा तु॒तोद॑ । स्रु॒चेव॒ ता ह॒विषो॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्र-ह्मणा सूदयामि ॥ ४० ॥

(१) यत्ते सादे । हे अश्व यत् ते तव सादे । सीदन्त्य-श्वचारा अस्मिन्निति सादोऽश्वपृष्ठम् तस्मिन्सादे अवस्थितोऽश्व-

---

(१) अयं पाठक्रमः वाराणसी० लिखितपुस्तकेऽस्ति । मुम्ब ईमुद्रितपुस्तके नास्ति । तथा हि । यत्ते सादे । हे अश्व महसा बले न शूकृतस्य शब्दानुकरणमेतत् शूत्कारं कुर्वतस्ते तव सादे सदने गमने निमित्तभूते सति सदेर्भावे घञ् । दर्पतो गमनकृतत्वात् शू-त्कारं कुर्वतस्ते त्वां पार्ष्ण्या कशया तुतोद व्यथयति अश्वचारः यत् यस्मात् यद्वा सीदन्त्यस्मिन्नश्वचारा इति सादोऽश्वपृष्ठं यत् तव सादे स्थितोऽश्वचारः महसा महत्त्वेनान्वितः सन् शूकृतस्या-नन्तरं पार्ष्ण्या कशया वा तुदति ते तव ता तानि सर्वाणि अध्वरेषु यागेषु ब्रह्मणा सूदयामि क्षारयामि आहुतित्वेन कल्पयामीत्यर्थः । तत्र दृष्टान्तः अध्वरेषु हविषः हविः आज्यादिकं स्रुचेव स्रुचा यथा सूदयति तद्वत् एकं ता इति पदं पादपूरणम् ॥ ४० ॥

चारः। महसा महत्वेनान्वितः सन् कथम्भूतस्य शूकृतस्य शब्दानुकरणमेतत् शूत्कारं कुर्वतः अनन्तम् पार्ष्ण्या वा कशया वा तुतोद। तुद व्यथने। तुदति व्यथयति स्रुचा इव ता तानि यथा स्रुचा हविषः हविरिति विभक्तिव्यत्ययः अध्वरेषु यज्ञेषु जुह्वति एवं सर्वाणि ते तव ब्रह्मणा त्रयीलक्षणेन सूदयामि क्षारयामि आहुतित्वेन कल्पयामीत्यर्थः ॥ ४० ॥

हे अश्व! अश्वचारः सादे गमने यत्ते तव त्वां पार्ष्ण्या पादाधोभागेन कशया वा तुतोद पीडितवान् तुद व्यथने लिट् सदनं सादः घञ् कीदृशस्य तव महसा बलेन शूकृतस्य शूकृतमस्यास्ति शूकृतः तस्य शब्दानुकरणमेतत् शूकारं कुर्वतः। अध्वरेषु ता सर्वा तानि सर्वाणि ते तव पार्ष्णिकशाताडनानि ब्रह्मणा मन्त्रेणाहं सूदयामि षूद क्षरणे चुरादिः क्षारयामि यज्ञे आहुतित्वेन कल्पयामीत्यर्थः। तत्र दृष्टान्तः हविषः स्रुचेव हविराज्यादिकं यथा स्रुचा जुह्वा सूदयामि तद्वत्। एकं तापदं पादपूरणार्थं ॥ ४० ॥

**चतु॑स्त्रि॒ꣳश॒द् वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति। अ॒च्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ प॑रुष्परुरनु॒घुष्या॒ वि श॑स्त ॥ ४१ ॥**

(१) चतुस्त्रिंशत्। चतुस्त्रिंशत् वङ्क्रयः वाजिनः वेजनवतोऽश्व-

---

(१) वाराणसी० लिखितपु० संमतोऽयं पाठक्रमः। मुम्बईमुद्रितपु० नास्ति। तथा हि * चतुस्त्रिंशद्वाजिनः वाजिनो वेगवतः देवबन्धोर्देवानां प्रियस्य देवा बन्धवो यस्येति वा भावी निर्देशः ईदृशाश्वस्य चतुस्त्रिंशत् एतत्संख्याकाः वङ्क्रीः उभयपार्श्वास्थीनि स्वधितिः छेदनसाधनोऽसिः समेति सम्यगागच्छति छेदनाय इतरेषामजादीनां षड्विंशतिरेव षड्विंशतिरस्य वङ्क्रय इत्युक्तत्वात् हे विशसनकर्त्तारः अस्य गात्राणि शरीरावयवान् अच्छिद्रा अच्छिद्राणि यथा भवति तथा वयुना वयुनानि प्रज्ञातानि वयुनमिति प्र-

स्य देवबन्धोः देवानां प्रियस्य । देवा बन्धवोऽस्य इति वा भावी देवबन्धुः । देवो ह्यसौ भविष्यति एवम्भूतस्याश्वस्य वङ्क्रीः वङ्क्रयः उभयपार्श्वस्थास्थीनि स्वाधितिः छेदनसाधनोऽसिः स-मेति एकमकृत्वा सङ्गच्छति यतः अतो ब्रवीमि । अच्छिद्रा गा-त्रा अच्छिद्राणि अनवखण्डितानि गात्रा गात्राणि वयुना प्र-ज्ञानेन कृणोत कुरुत हे शमितारः । किञ्च परुः परुः पर्वपर्व हृदयाद्यङ्गम् अनुघुष्य इदमिदमिति संशब्द्य विशस्त विशसन-ङ्कुरुत उत्तरार्द्धस्यैव मन्त्ररूपसम्बन्धः ४१ ॥

स्वाधितिः पशुच्छेदनसाधनोऽसिः अश्वस्य चतुस्त्रिंशत् वङ्क्रीः चतुस्त्रिंशत्संख्याकान्युभयपार्श्वास्थीनि समेति सम्यगागच्छति छेदनाय । कीदृशस्याश्वस्य वाजिनः वजति गच्छतीति वाजी तस्य वेगवत इत्यर्थः । देवबन्धोः देवानां बन्धुः प्रियस्तस्य देवा बन्धवो यस्येति वा । भावी निर्देशः । अश्वस्य चतुस्त्रिंशद्वङ्क्रयः अजादी-नां षड्विंशतिः । अतो हे ऋत्विजः ! वयुना वयुनेन ज्ञानेनाश्वस्य गात्रा गात्राणि अच्छिद्रा अच्छिद्राणि छिद्रहीनानि यूयं कृणोत-कुरुत स्वधितिना छिन्नानि सच्छिद्राणि वर्त्तन्ते तान्यच्छिद्राणि कु-रुत । किञ्च परुः परुः ग्रन्थिर्ना पर्वपरुषीति अमरः नित्यवीप्सयो-रिति ( पा० ८, १, ४ ) द्वित्वम् प्रतिपर्व प्रत्यवयवम् अनुघुष्य इद-मिति नाम्ना संशब्दय यूयं विशस्त विशसनं छेदं कुरुत शसु हिं-सायाम् छान्दसः शपो लुक् । कृणोत कृ करणे स्वादिः तप्तनबिति ( पा० ७, १, ४५ ) मध्यमबहुवचनस्य तबादेशः ततो गुणः । अनु-घुष्य घुषिर् शब्दे क्त्वो ल्यप् ॥ ४१ ॥

एकस्त्वष्टुरश्वस्याविशस्ता द्वा यन्तारा भवतस्तथा

---

ज्ञाननाम वयुनमभिख्येति तन्नामसूक्तत्वात् कृणोत कुरुत तप्तनप्तन-थनाश्चेति तनादेशः हृदयजिह्वाचक्षुःप्रभृतीनि ज्ञानं विना मध्ये छिन्नानि मा कुरुतेत्यर्थः तदर्थं परुः परुः प्रतिपर्व । प्रतिहृदयाद्य-वयवम् अनुघुष्य इदमिदमिति संशब्द्यैव विशस्त विशसनं कुरुत शसु हिंसायाम् छान्दसः शपो लुक् ॥ ४१ ॥

ऋतुः । या ते गात्रा॑णामृतुथा कृणोमि ता ता पिण्डानां प्रजु होम्यग्नौ ॥ ४२ ॥

(१)एकस्त्वष्टुः । एकः । अश्वस्य विशस्ता विशसिता संवत्सरः । तदुक्तम् संवत्सरस्य तेजसेति त्वष्टुः आदित्यादुत्पन्नस्याश्वस्य तदुक्तम् सूरादश्वं वसवो निरतिष्ठदिति । द्वा यन्तारा । द्वौ नियन्तारौ अहोरात्रौ द्यावापृथिव्यौ वा भवतः । तथ ऋतुः द्वितीयो मासानां नियन्तेति शेषः । एवमश्वस्य विशसितान् उक्त्वा अथेदानीं स्वकीयं कर्माध्वर्युराह । या ते यानि तव हे अश्व गात्राणामङ्गानाम् ऋतुथा ऋतावृत्तौ कालेकाले बन्धनानि कृणोमि करोमि । ता ता तानि तानि पिण्डानां मांसपिण्डानां मध्ये प्रजुहोमि प्रज्ञानानुरोधेन जुहोमि । अग्नौ ॥ ४२ ॥

अश्वस्य विशस्ता विशनकर्त्ता एकः ऋतुः । कीदृशस्याश्वस्य त्वष्टुः दीप्तस्य । ऋतूपलक्षितः कालात्मा प्रजापतिरेवाश्वस्य शस्तेत्यर्थः शसस्तृच् । तथा यन्तारा यन्तारौ नियमकर्त्तारौ द्वा द्वौ द्यावापृथि-

---

( १ ) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति-मुम्बईमुद्रितपुस्तके नास्ति * तथा हि * एकस्त्वष्टुः । त्वष्टुः त्वष्टा संवत्सरः तदुक्तं "संवत्सरस्य तेजसेति" त्वष्टुरादित्यादुत्पन्नस्याश्वस्य तदुक्तं 'सूरादश्वं वसवो निरतिष्ठदिति' यद्वा त्वष्टुः दीप्तस्याश्वस्य विशस्ता विशसनकर्त्ता एकः एक ऋतुः ऋतूपलक्षितः कालात्मा तस्यैव तस्यैव सर्वेषामपि । पर्यवसितत्वात् तथा द्वौ यन्तारौ यमितारौ अहोरात्रदेवौ द्यावापृथिव्यौ भवतः तथ ऋतुरित्यत्र ऋत्यक इति प्रकृतिभावो ह्रस्वत्वं च । एवमश्वस्य विशसितार उक्ताः-अथाध्वर्युः स्वकीयं कर्माह हे अश्व ते तव गात्राणां मध्ये अङ्गानि हृदयादीनि ऋतुथा काले काले कृणोमि छिनद्मि सम्पादयामि पिण्डानां मांसपिण्डानां मध्ये ता ता तानि तानि प्रज्ञातानुरोधेनाग्नौ प्रजुहोमि प्रकर्षेण हुतानि करोमि ॥ ४२ ॥

ऽभिमानिदेवौ भवतः तयोरेव सर्वेषां नियन्तृत्वादिति भावः । तथा ऋतुः अत्र ऋत्यक इति ( पा० ६, १, १२८ ) ह्रस्वप्रकृतिभावौ । एवमश्वस्य विशसितृयन्तृनुक्त्वाध्वर्युः स्वकर्माह हे अश्व ! ते तव गात्राणां पिण्डानां गात्रसम्बन्धिनां मांसपिण्डानां या यानि अङ्गानि अहं कृणोमि हन्मि छिनद्मि कृञ् बधे स्वादिः ऋतुथा ऋतौ ऋतूपलक्षिते वसन्तादियज्ञकाले ता-ता तानि-तान्यङ्गानि अग्नौ प्रजुहोमि प्रकर्षेण हुतानि करोमि ॥ ४२ ॥

मा त्वा तपत् प्रिय आत्मापियन्तं मा स्वधितिस्तन्व आतिष्ठिपत्ते । मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥ ४३ ॥

(१) मा त्वा तपत् । मा त्वान्तपत् । त्वाशब्देनात्र विज्ञानात्मोच्यते सुखदुःखयोर्भोक्ता प्रिय आत्मा प्राण उक्तः । स हि श्रुतौ प्रियमित्येतदुपासीतेत्युक्तः । देवानाम् पियन्तम् देवलोकगमनप्रवृत्तं सन्तम् । मा च स्वधितिः शस्त्रन्तन्वः शरीरस्य अतिष्ठिपत् अस्थापयत् एकादशमवदानभूतम् ते तव । मा च ते तव गृध्नुः मांसग्रहणे गर्द्धा लुब्धः । अविशस्ता विशसने

(१) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति मुम्बईमुद्रित पुस्तके नास्ति । मा त्वा । हे अश्व त्वामपियन्तं देवान् प्रति गच्छन्तं प्रियः आत्मा भोगायतनत्वात्तव प्रियतमो देहो मा तपत् तप्तं मा कार्षीत् वियोगजनिता व्यथा मा भूदित्यर्थः त्वाशब्देनात्र विज्ञानात्मोच्यते स्वधितिः शस्त्रं ते तव तन्वः तनूः अङ्गानि मा अतिष्ठिपत् त्वयि चिरं स्थितानि मा कार्षीत् । स्थापयतेर्लुङि तिष्ठतेरिदितीत्वं गृध्नुः केवलमांसग्रहणेच्छुः अविशस्ता विशसने अकुशलः शमितानि तव गात्राणि अतिहाय न्यूनातिरेकभावेण तत्तङ्गमतिक्रम्य मध्ये मिथु मिथ्याः अव्ययम् असिना छिद्रा छिद्राणि तिर्यक् छिन्नानि मा कः मा कार्षीत् करोतेर्लुङि । मन्त्र ,घसेति' च्लेर्लुक् गुणे हल्ङ्याब्भ्य इति तिपो लोपः ॥ ४३ ॥

अकुशलः। आतिहाय अतिक्रम्य। छिद्रा छिद्राणि गात्राणि असिना मिथू कः मिथ्या अकार्षीत् ॥ ४३ ॥

हे अश्व! प्रियः वल्लभो भोगायतनत्वात् तवात्मा देहः त्वा त्वां मा तपत् तप्तं दुःखितं मा कार्षीत् तव देहवियोगजनिता व्यथा मा भूदिति विज्ञानात्मानं प्रत्युच्यते। किम्भूतं त्वाम् अपियन्तम् अप्येतीत्यपियन् तम् देवलोकं गच्छन्तं अपिपूर्वादेतेः शतृप्रत्ययः। किञ्च स्वधितिः शस्त्रं ते तव तन्वः तनूः अङ्गानि मा आतिष्ठिपत् मा स्थापयतु सर्वाणि छित्त्वा देवेभ्यो ददत्वित्यर्थः। तिष्ठतेर्ण्यन्तस्य लुङि चङि तिष्ठतेरिदिति ( पा० ७, ४, ५ ) इकारे कृते द्वित्वादि। किञ्च शमिता ते तव गात्राणि अङ्गानि अतिहाय त्यक्त्वा शास्त्रोक्तक्रमं त्यक्त्वा असिना शासेन मिथु मिथ्या छिद्रा छिद्राणि अपथाच्छिन्नानि मा कः मा कार्षीत् करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना ( पा० २, ४, ८० ) च्लेर्लुक् गुणे हल्ङ्याबिति ( पा० ६. १, ६८ ) तिपो लोपे विसर्गः। मिथु इति मिथ्यार्थेऽव्ययम् संहितायां दीर्घः। कीदृशः शमिता गृध्नुः गृध्यतीति गृध्नुः लुब्धः केवलं मांसग्रहणेच्छुः अतः एवाविशस्ता न विशेषेण शसति हिनस्ति अविशस्ता विशसने अकुशलः अत एवान्यथा मा छिदत् सम्यगवदानानि करोत्वित्यर्थः॥ ४३ ॥

न वा उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ२॥ इदे॑षि प॒थिभि॑ः सु॒गेभि॑ः। हरी॑ ते॒ युञ्जा॒ पृष॑ती अभू॒तामुपा॑स्थाद्वा॒जी धुरि॒ रास॑भस्य ॥ ४४ ॥

(१)न वै। नवा उ एतदिति व्याख्यातम्। अन्यच्च हरीन्द्रा-

---

(१) अयं पाठक्रमः वाराणसी० लिखितपु० अस्ति मुम्बई मुद्रित पुस्तके नास्ति। न वै। न वा उ नैव खलु एतन्म्रियसे वै एवार्थे उ अवधारणे नैवेदानीम् इतराश्ववन्मृतो भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् अत एवं न रिष्यसि न हिंसस्ये व्यर्थहिंसाया अभावात्। ननु प्रत्यक्षतः मृतिरवयवनाशश्च दृश्यते कथमेवमुच्यत इति चेत् उच्यते। सुगेभिः शोभनगमनसाधनैः पथिभिर्मार्गैः देवयानलक्षणैः

श्वौ ते तव । युञ्जा योजनार्हौ वोढारौ प्रतिधुरौ अभूताम् पृषती च मरुतां संबन्धिनावश्वौ प्रतिधुरावभूताम् । तदुक्तम् अश्वरथयाने युञ्जन्त्यश्वकाम्या हरी इति । एभिर्दिव्यैस्त्वं समानं लोकं संज्ञात इत्यभिप्रायः । एनमुपश्रुत्य स्वयमेव उपास्थात् उपस्थितः वाजी धुरि रासभस्य आश्विसबन्धिनः । रासभावश्विनोरित्यादिष्टं प्रयोजनम् ॥ ४४ ॥

वै एवार्थे उ अवधारणे हे अश्व ! त्वमेतन्नैव म्रियसे इतराश्ववत् मृतो न भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् अत एव न रिष्यसि हिंस्यसे व्यर्थहिंसाया अभावात् रिषतेर्यकि परस्मैपदमार्षम् । ननु प्रत्यक्षत्वे मरणमङ्गनाशश्च दृश्यते तर्हि कथमेवमुच्यते तत्राह सुष्ठु गम्यते यत्र ते सुगाः तैः सुगेभिः सुगैः साधुगमनैः पथिभिर्मार्गैः देवयानरूपैः देवान् इत् एषि देवानेव गच्छसि अतो युक्ता मदुक्तिः । कथं देवान् प्रति गमनम् तत्राह हे अश्व ! ते तव हरी इन्द्राश्वौ युञ्जा युञ्जौ रथे युक्तौ अभूतां भविष्यतः आशंसायां भूतवच्चेति ( पा० ३, ३, १३२ ) भूतकालप्रयोगो भविष्यदर्थे । हरी इन्द्रस्येति यास्कः ( निघ० १, १५, १ ) तथा पृषती मरुतां वाहनभूते तव युञ्जौ अभूताम् पृषत्यो मरुतामिति ( निघ० १, १५, २ ) । युङ्क्तस्ते युञ्जौ ऋत्विग्दधृगित्यादिना ( पा० ३, २, ५९ ) क्विन् देवान् इदेषि देवानेव प्राप्नोषि अतो युक्तैषोक्तिः । कैः साधनैरितितत्राह ते त्वां यत् हरी एतन्नामानाविन्द्रस्याश्वौ ते तव युञ्जा रथे युक्तौ अभूतां भविष्यतः आशंसारूपत्वाद्भूतार्थनिर्देशः हरी इन्द्रस्येति निरुक्तं तथा पृषती मरुतां वाहनभूतौ युञ्जा अभूतां युक्तौ भविष्यतः। पृषत्यो मरुतामिति निरुक्तं युजे ऋत्विग्दधृगित्यादिना क्विन् युजेरसमासे इति नुम् । सुपां सुलुगित्याकारः । तथा रासभस्य अश्ववाहनस्य एतन्नामकस्याश्वस्य धूरि स्थाने वर्तमानः कश्चिद्वाजी उपास्थात् उपस्थास्यति वहतीत्यर्थः । यद्वा रासभस्य भानोर्धूरि वर्त्मनि युक्तो वाजी अश्वम् उपस्थास्यति । देवत्वं गच्छतस्तव गमनाय इन्द्रादयः स्वस्ववाहनानि प्रेषयन्तीत्यर्थः । यद्वा तत्तद्देवभावमापन्नं त्वां तानि वाहनानि वहन्ति ॥ ४४ ॥

क्विन्प्रत्ययस्य क्रुरिति ( पा० ८, २, ६२ ) कुत्वम् युजेरसमासे इति ( पा० ७, १, ७१ ) नुम् सुपां सुलुगिति ( पा० ७, १, ३९ ) विभक्तेरात्वम् । किञ्च रासभस्याश्विवाहनस्य धुरि अश्विवाहन-स्थाने वाजी कश्चिदश्वः उपास्थात् उपस्थास्यति । देवत्वं प्राप्तस्य तव वहनाय इन्द्रादयो निजवाहनानि प्रेषयिष्यन्तीति भावः । यद्वा तत्तद्देवभावं प्राप्तं त्वां तानि तानि वाहनानि वक्ष्यन्तीत्यर्थः ॥ ४४ ॥

सुगव्यं नो वाजी स्वश्व्यं पुꣳसः पुत्राँ२॥ उत विꣳ-श्वापुषꣳ रयिम् । अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनताꣳहविष्मान् ॥ ४५ ॥

(१)इदानीं याच्ञा । सुगव्यन्नः । शोभनगव्यं नोऽस्माकं वाजी कृणोतु करोतु । स्वश्व्यं शोभनाश्वञ्च करोतु । पुंसः पुत्रान्करोतु । दुहितरः पुत्राश्च पुत्रसब्देनोच्यन्ते इत्यतो विशेषणं पुंस इति । उत अपि च विश्वापुषम् सर्वस्य पोषकं रयिन्धन-ङ्करोतु । किञ्च अनागाः अनपराधम् त्वञ्च । नोऽस्माकम् आदितिर्देवमाता च करोतु । नैघण्टुको वा अदितिशब्दः । अ-

---

( १ ) वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई० पुस्तके नास्ति तथा हि—इदानीं याच्ञा सुगव्यं नः वाजी नोऽस्माकं सुगव्यं शोभनगोसमूहं कृणोतु करोतु 'खलगोरथादिति' समूहार्थे यः । तथा स्वश्व्यं शोभनाश्वसमूहं च करोतु । तथा पुंसः पुत्रान् पुत्र शब्दः स्त्रीपुमपत्यसाधारणः अतः पुमपत्यानीत्यर्थः । यद्वा पुंसो बन्ध्वादीन् पुत्रान् पुरुरक्षकान् आत्मजान् पुमपत्यानि स्त्र्यपत्या-नीत्यर्थः । उत अपि विश्वापुषः विश्वपोषणसमर्थं रयिं धनं च करोतु संहितायां दीर्घः । किञ्च अदितिरदीनोऽश्वः नोऽस्माक-म् अनागास्त्वं सर्वतो निष्पापत्वं कृणोतु उक्तानां फलानां पाप-क्षयाभावे असम्भवदपापत्वं प्रार्थ्यते किञ्च हविष्मान् हविर्भूता-वयवोऽश्वो नोऽस्माकं क्षत्रं बलं तेजो वा वनतां करोतु करो-त्यर्थो वनतिः ॥ ४५ ॥

नागास्त्वं नः अदितिः अदीनोऽश्वः करोतु । किञ्च । क्षत्रं नोऽस्माकं वनताम् । करोत्यर्थे वनतिः । करोतु । हविष्मान् । अश्वः । सर्वे अश्वावयवाः हवींषि ॥ ४५ ॥

इदानीं याच्ञा क्रियते । वाजी देवत्वं प्राप्तोऽश्वः नोऽस्माकं सुगव्यं शोभनं गोसमूहं कृणोतु गवां समूहो गव्यम् खलगोरथादिति ( पा० ४, २, ५० ) यत्प्रत्ययः शोभनं गव्यं सुगव्यम् । तथा स्वश्व्यं कृणोतु अश्वानां समूहः अश्व्यम् केशाश्वेति ( पा० ४, २, ४८) विकल्पात् पक्षे यत् शोभनमश्व्यं स्वश्व्यम् । तथा पुंसः पुत्रान् करोतु पुत्रशब्दाऽपत्यवाचक इति पुंस इति विशेषणम् । यद्वा पुंसः पुरुषार्थसाधकान् पुत्रान् करोतु।उतापि च रयिं धनं करोतु ।कीदृशं रयिं विश्वपुषम् पुष्णाति पुषः इगुपधेति (पा० ३, १, १३५) कप्रत्ययः विश्वस्य सर्वस्य पुषस्तम् सर्वजनपोषणसमर्थं धनं करोत्वित्यर्थः संहितायां विश्वशब्दस्य दीर्घः । किञ्च नोऽस्माकमनागस्त्वं करोतु नास्ति आगः अपराधः पापरूपो यस्य सोऽनागाः तस्य भावोऽनागस्त्वम् दीर्घश्छान्दसः निष्पापत्वं करोतु पापसद्भावे उक्तफलाप्राप्तेः । किञ्च अश्वो नोऽस्माकं क्षत्रं क्षतत्राणं बलं पराभवाद्रक्षणं वा करोतु । कीदृशोऽश्वः अदितिः नास्ति दितिः खण्डनं दैन्यं वा यस्य सः । हविष्मान् हविरस्यास्ति हविष्मान् तदस्यास्तीति (पा० ५, २, ९४ ) मतुप् हविर्भूतावयवः यद्वा देवत्वाप्त्या हविष्मान् । ईदृशोऽश्वो नः क्षत्रं वनतां करोतु वनतिः करोत्यर्थः ॥ ४५ ॥

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः । आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधाति ॥ ४६ ॥

(१) इमा नु । षड् द्विपदाः विराजः तिस्रो वैश्वदेव्यास्तिस्र

---

( १ ) अयं पाठक्रमः वारणसी० लिखितपु० अस्ति–मुम्बईमुद्रितपु० नास्ति।तथा हि । इमा नु षड्द्विपदा विराजस्तिस्रो वैश्वदे-

आग्नेय्यः । द्विपदा उत्तमा जुहोतीति श्रुतिः । नु कम् इति निपातावनर्थकौ इमानि भुवनानि भूतजातानि । सीषधाम साधयाम वयम् । ततोऽनन्तरम् इन्द्रः ऐश्वर्यवान् विश्वे च देवाः आदित्यैः सहितः इन्द्रः सगणः मरुद्भिश्च सहितः अस्मभ्यमस्माकं भेषजा भेषजानि करत्करोतु । किञ्च यज्ञश्च नोऽस्माकं तन्वञ्च शरीरञ्च आदित्यैः सह इन्द्रः सीषधाति साधयतु वश्यं करोतु ॥ ४६ ॥

का० (२०, ८, १२) इमा नु कमिति च द्विपदाः । अयस्मयपात्रेणाश्वलोहितहोमानन्तरामिमा नु कमित्याद्याः षट् द्विपदाः जुहोति । कण्डिकाद्वयस्य षडर्धानि सन्ति तैः षडाहुतीर्जुहोतीति सूत्रार्थः ॥ द्विपदाच्छन्दस्का विश्वदेवदेवत्या आप्त्यपुत्रभुवनदृष्टास्तिस्र ऋचः । नु कम् एतौ निपातौ पादपूरणौ इमा इमानि भुवना भुवनानि भूतजातानि वयं सीषधाम साधयामः वशीकुर्म इत्यर्थः साधयतेर्लुङि उत्तमबहुवचने रूपम् अडभाव आर्षः । किञ्च इन्द्रः इदि परमैश्वर्ये ऐश्वर्य्यवान् सगणो निजगणैः परिवारैः सहित इन्द्रो देवेशो विश्वे देवाश्च आदित्यैः द्वादशभिः मरुद्भिः एकोनपञ्चाशत्संख्यैश्च सहिताः अस्मभ्यं भेषजा भेषजानि औषधानि हितानि करत् कुर्वन्तु सर्वे देवा अस्माकं हितकारिणो भवन्त्वित्यर्थः किञ्च इन्द्रः आदित्यैः सह नोऽस्माकं यज्ञमश्वमेधं तन्वं शरीरं प्रजां पुत्रादिकां च सीषधाति साधयतु वशीकरोत्वित्यर्थः । नीरोगाः सपुत्रा वयं यज्ञं सम्यक् कुर्म इति भावः ॥ ४६ ॥

अग्ने॒ त्वं नो॒ अन्त॑म उ॒त त्रा॒ता शि॒वो भ॑वा वरू॒-

---

व्यस्तिस्र आग्नेय्यः द्विपदा उत्तमा जुहोती ति श्रुतिः । नु कम् इत्यनर्थकौ वयम् इमा इमानि भुवना भुवनानि भूतजातानि सीषधाम साधयाम साधयतेर्लुङि उत्तमबहुवचनम् अडभाव आर्षः । ततोऽनन्तरम् इन्द्रः ऐश्वर्यवान् विश्वे देवाः आदित्यैर्मरुद्भिश्च सहितः सगणः इन्द्रः अस्मभ्यं भेषजानि करत् करोतु यज्ञं नोऽस्माकं तन्वं शरीरं प्रजां च आदित्यैः सह इन्द्रः सीषधाति साधयतु । वश्यं करोतु ॥ ४६ ॥

ध्यः । वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑नक्षि द्यु॒मत्त॑मꣳर॒यिं दाः । तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ ४७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

अग्ने त्वन्न इति व्याख्यातम् ॥ ४७ ॥
इति उव्वटकृतौ मन्त्रभाष्ये पञ्चविंशतितमोऽध्यायः॥ २५ ॥

---

तिस्रो द्विपदा व्याख्याताः ( ३, २५—२६ ) ॥ समिद्धो अञ्जन् ( २९, १ ) आश्वमेधिकोऽध्याय इति वचनादत्र हौत्रे तन्मन्त्राणां विनियोगः ॥ समाप्तोऽश्वमेधः सप्तविंशत्युत्तरवर्षसाध्यः ॥ ४७ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
अध्यायः पञ्चविंशोऽयमश्वमेधगतोऽगमत् ॥ २५ ॥

---

## षड्विंशोऽध्यायः।

अग्निश्च पृथिवी च संनते ते मे संनमतामदः। वायुश्चान्तरिक्षश्च संनते ते मे संनमतामदः। आदित्यश्च द्यौश्च संनते ते मे संनमतामदः। आपश्च वरुणश्च संनते ते मे संनमतामदः। सप्त सꣳसदो अष्टमी भूतसाधनी। सकामाँ२॥ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना॥ १॥

(१) इषे त्वेति प्रारभ्य दर्शपौर्णमासाग्निहोत्रपशुचातुर्मा-

---

(१) अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालीयौव्वटभाष्यलिखितपुस्तकसंमतोऽयं पाठक्रमः मुम्बईमुद्रितपुस्तके नास्ति। तथा हि- इषे त्वेति प्रारभ्य दर्शपौर्णमासाग्निहोत्रपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधपुरुषमेधपितृमेधप्रवर्ग्योपनिषत्सम्बद्धा मन्त्रा व्याख्येयास्ते इहोच्यन्ते अत्र च ये यत्र सम्बद्धामन्त्रास्तेषां तदेवार्षम्। असम्बद्धानाम् आदित्य एव "आदित्यानीमानि यजूंषीति वा आहुरिति" श्रुतिः। याज्ञवल्क्यो वा "याज्ञवल्क्येनाख्यायन्ते इति श्रुतेः। अविनियुक्तानां। मन्त्राणां लैङ्गिको विनियोगः लिङ्गं प्रकाशनसामर्थ्यमुच्यते। यो हि यमर्थं वदितुं समर्थः स तत्र श्रुत्या विनियुज्यते। तद्यथा अग्निश्च पृथिवी चेति। सप्त सन्नतिमन्त्राः अग्निश्च पृथिवी च संनमनं सन्नतिः प्रह्वीभावः आनुकूल्येन प्रवृत्तिः। अग्निपृथिव्यौ सम्भोगार्थं सङ्गते यस्माद्‌तो ब्रवीमीति। अग्निपृथिव्यौ मे मम अदः अमुकं संनमतां अत्र णिचो लोपश्छान्दसः संनमयतां वशवर्त्तिनं कुरुतामित्यर्थः। अद इति पुरुषादेर्विशेषनामोपलक्षणम् द्वितीयान्तं चोपलक्षयति कर्मभावात्। एवमुत्तरेष्वपि योज्यं वायुस्त्वान्तरिक्षं च आदित्यश्च द्यौश्च आपश्च वरुणश्च सप्तसꣳसदः परपात्मोच्यते। यस्य तव सप्त संसदः सप्त संसदनानि प्रकृतानीत्येव अग्निपृथिवीवाय्वन्तरि-

स्याऽग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा म-न्त्रा व्याख्याताः । नामाख्यातोपसर्गनिपातजानिता वाक्यार्थाश्च । अथेदानीं खिलान्यनुक्रमिष्यामः । अग्निष्टोमाग्निसौत्रामण्यश्वमेधपुरुषमेधसर्वमेधपितृमेधप्रवर्ग्योपनिषत्संबद्धा मन्त्रा व्याख्येयाः त इहोच्यन्ते । अत्र च ये अत्र संबद्धा मन्त्रस्तेषां तदेवार्षम् । असंबद्धानान्तु आदित्य एव । आदित्यानीमानि यजूꣳषीति वा आहुरिति श्रुतेः । याज्ञवल्क्यो वा याज्ञवल्क्येनाख्यायन्त इति श्रुतेः । अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः तद्यथा अग्निश्च पृथिवी चेति सप्त सन्नतिमन्त्राः । लिङ्गं नाम प्रकाशनसामर्थ्यमुच्यते । यो हि यमर्थं वदितुं समर्थः स तत्र श्रुत्या विनियुज्यते । अग्निश्च पृथवी च सन्नते । सन्नमनं सन्नतिः प्रह्वीभावः । आनुकूल्येन प्रवृत्तिः । अग्निश्च पृथिवी च संभोगार्थं संनमते यस्मादतो ब्रवीमि ते अग्निपृथिव्यौ मे मम सन्नमताम् । अत्र णिचो लोपश्छान्दसः । सन्नमयतां वशवर्तिनङ्कुरुतामित्यर्थः । अद इति पुरुषादेर्विशेषनामोपलक्षणम् द्वितीयान्तं चोपलक्षयति कर्मभावात् । एवमुत्तरेष्वपि योज्यम् । वायुश्चान्तरिक्षश्च

---

क्षादित्यद्युलोकाम्बुवरुणान्तानि । तत्र सप्त संसदः अष्टमी भूतसाधनी पृथिवी बभूव भूतानां साधयित्री । न हि पृथिवीमन्तरेण भूतानामुत्पत्तिरस्ति ततस्त्वं प्रार्थ्यसे अध्वनो मार्गान् सकामान् कुरु । यदा हि तैर्लभ्यते तदा मार्गाः सकामाः स्युः मे मम अमुना विशेषनामाभिप्रायमेतत् । संज्ञानं सङ्गतं ज्ञानं चास्तु विज्ञानात्मा वोच्यते । यस्य तव सप्त संसदः पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्च अष्टमी भूतसाधनी भूतप्रज्ञप्तिकरी वाक् अध्वनः मम सकामान् कुरु अमुना मे संज्ञानम् अस्तु ॥ १ ॥

आदित्यश्च द्यौश्च आपश्च वरुणश्च । सप्त सꣳसदः । परमात्मोच्यते । यस्य तव सप्त संसदः सप्त संसदानि प्रकृतानीत्येवम् अग्निपृथिवीवाय्वन्तरिक्षादित्यद्युलोकाम्बुवरुणान्तानि । यस्य च तव अष्टमी बभूव भूतानां साधनी पृथिवी । नहि पृथिवीमन्तरेण भूतानामुत्पत्तिरस्ति । तत्त्वं प्रार्थ्यसे । सकामान् अध्वन कुरु सकामान्मार्गान् अस्माकं कुरु । यदा हि तैर्लभ्यते तदा सकामा मार्गाः स्युः । संज्ञानश्च सङ्गतश्च ज्ञानम् अस्तु मे मम अमुना । विशेषनामाभिप्रायमेतत् । विज्ञानात्मा वोच्यते । यस्य तव सप्तसंसदः । मनश्च बुद्धिश्च पञ्चबुद्धीन्द्रियाणि च । अष्टमी च वाक् भूतसाधनी भूतप्रज्ञप्तिकरी । तन्त्वां ब्रवीमि सकामान् अध्वनः कुरु अस्माकम् संज्ञानं च । अस्तु । मे मम अमुना ॥ १ ॥

इषे त्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थानपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा मन्त्रा व्याख्याताः । इदानीं खिल्यान्युच्यन्ते क्वचिद्विनियोगानुक्तेः । तेषां विवस्वानृषिरन्यस्यानुक्तेः आदित्यानीमानि यजूंषि व्याख्यायन्त इति श्रुतेः ( बृहदारण्य५, ५, ३३ ) याज्ञवल्क्यो वा याज्ञवल्क्येन व्याख्यायन्त इति श्रुतेः ॥ अग्निश्च । सप्त लिङ्गोक्तानि यजूंषि । चतस्र ऋग्गायत्र्यः । सप्त संसदः आसुर्य्यनुष्टुप् । सकामान् प्राजापत्यानुष्टुप् ः यथेमाम् ब्राह्मी गायत्री ॥ अग्निश्च पृथिवी च सन्नते सन्नमनं सन्नतम् आनुकूल्येन प्रवृत्तिः अग्निपृथिव्यौ भोगाय सङ्गते अतो ब्रवीमि ते अग्निपृथिव्यौ मे ममादः अमुकं सन्नमताम् सन्नमयतां वशवर्त्तिनं कुरुतामित्यर्थः । अद इति पुरुषादेर्नाम द्वितीयान्तं प्रयोज्यम् ( छन्दस्युभयथेति ( पा० ३, ४, ११७ ) शपोऽप्यार्धधातुकत्वाण्णेरनिटीति ( पा० ६, ४, ५१ ) णिचो लोपः सन्नमतामित्यत्र । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । वायुरन्तरिक्षं च सन्नते ते-

ममामुकं सन्नमयताम् । आदित्यः द्यौश्च सन्नते ते म० । आपश्च वरुणश्च सन्नते ते म० ॥ परमात्मानं प्रत्युच्यते हे स्वामिन् ! यस्य तव सप्त संसदः संसदनानि अधिष्ठानानि अग्निवाय्वन्तरिक्षादित्यद्युलोकाम्बुवरुणाख्यानि तत्राष्टमी भूतसाधनी पृथ्वी भूतानि साधयति भूतसाधनी भूमिं विना भूतोत्पत्तेरभावात् अतः सर्वाधिष्ठानभूतस्त्वमध्वनो मार्गान् सकामान् कुरु येषु मार्गेषु मया गम्यते तत्रास्माकं कामप्राप्तिरस्त्वित्यर्थः । किञ्च मे ममामुना देवदत्तादिना संज्ञानं सङ्गतं ज्ञानमस्तु इष्टेन मम प्रीतिरस्तु ॥ विज्ञानात्मा वोच्यते यस्य तव सप्त संसदः पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्चेति सप्तायतनानि अष्टमी भूतसाधनी भूतानि साधयति वशीकरोति भूतसाधनी वाक् स त्वं नोऽस्माकमध्वनः सकामान् कुरु अमुना सह मे संज्ञानं सङ्गतमस्तु ॥ १ ॥

यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याँ शूद्राय चार्याय च स्वाय चारणाय । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु ॥ २ ॥

( १ ) यथेमाम् । यथा इमां वाचं कल्याणीम्

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा यथेमाम् । यथा अहम् इमां कल्याणीम् अनुद्वेगकरीं वाचं दीयतां भुज्यतामित्येवमादिकाम् आवदानि जनेभ्योऽर्थाय के ते जना इत्याह ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय च शूद्राय अर्याय वैश्याय स्वाय आत्मीयाय अरणाय चारणोऽपगतोदकःपर इत्यर्थः । आवदानीति सर्वत्र सम्बध्यते प्रियो देवानाम् अवसानरहिता अनुष्टुप् । यथेमां वाचमिति यथायोगादत्र तथाशब्दोऽध्याहर्तव्यः । तथा तेन प्रकारेण अहं देवानां प्रियो भूयासम् दक्षिणायै दक्षिणाया दातुश्च इह अस्मिन्नेव काले प्रियो भूयासम् अयं मे कामः समृध्यताम् अयमिति कामनामग्रहणम् । तद्यथा ग्रा-

अनुद्वेजिनीम् दीयतां भुज्यतामित्येवमादिकाम् । आवदानि । जनेभ्यो ऽर्थाय । के ते जना इत्यत आह । ब्रह्मराजन्याभ्याम् ब्राह्मणाय राजन्याय च शूद्राय च अर्याय च अर्यो वैश्यः । स्वाय चात्मीयाय च अरणाय च । अरणः अपगतोदकः पर इत्यर्थः । आवदानीति सर्वत्र संबध्यते ॥ प्रियो देवानाम् । अवसानरहितानुष्टुप् । यथेमां वाचमिति यथाशब्दयोगात्तथाशब्दो ऽत्राध्याहर्तव्यः । तथा तेन प्रकारेण प्रियो देवानां भूयासम् । दक्षिणायै दक्षिणाया दातुश्च इहास्मिन्नेव काले प्रियो भूयासम् अयमिति कामनामग्रहणम् । तद्यथा अयं ग्रामलाभकामः अस्मै मे समृध्यताम् । किं च उप मा अदः नमतु । अद इति यः काम इष्यते स उच्यते । तद्यथा उपनमतु मां प्रति देवदत्तः ॥ २ ॥

इमां कल्याणीमनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि । केभ्यस्तदाह ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वायात्मीयाय अरणाय पराय अरणोऽपगतोदकः शत्रुः नास्ति रणः शब्दो येन सह वाक्सम्बन्धरहितः । शत्रुरिति वा ॥ प्रियो देवानाम् मध्येऽवसानरहितानुष्टुप् लौगाक्षिदृष्टा ।यथेति पूर्वोक्तेरत्र तथाशब्दोऽध्याहार्यः यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततोऽहं देवानां प्रियः भूयासम् इह संसारे दक्षिणायै दक्षिणायाः दातुश्च प्रियः भूयासम् देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्त्वित्यर्थः । किञ्च मे ममायं कामः समृध्यतां सफलो भवतु अयमिति नामनिर्देशः धनपुत्रादिलाभकामो मे सम्पद्यतामित्यर्थः किञ्च अदो मा मामुपनमतु अद इति इष्टनामग्रहणम् देवदत्तादि मां प्रीणयतु ॥ २ ॥

---

मलाभकामोऽसौ समृध्यतां । किञ्च अदो मामुपनमतु । अद इति इष्ट उच्यते । तद्यथा उपनमतु मां प्रति देवदत्तः ॥ २ ॥

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । उपयामगृहीतोऽसि बृहस्पतये त्वा । एष ते योनिर्बृहस्पतये त्वा ॥ ३ ॥

(१) बृहस्पते अति बृहस्पतिसवेऽनया त्रिष्टुभा बृहस्पतिदेवतया ग्रहो गृह्यते गृत्समदस्यार्षम् बृहस्पतेर्वा । हे बृहस्पते । अतिशयेन यत् द्रविणं धनम् । अर्य ईश्वरः अर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः । अर्हात् पूजयेत् । यच्च द्युमद्विभाति । द्युमत् द्युतिमत् विभाति भासते । क्रतुमज्जनेषु । यच्च क्रतुमत् यज्ञवत् जनेषु विभातीत्यनुवर्त्तते यत् दीदयत् शवसा यच्च दीप्यते शवसा बलेन । रक्षितारोऽपि यस्य सन्तीत्यभिप्रायः । हे ऋतप्रजात ऋतात्सत्यादविनाशिनः प्रजायत इति ऋतप्रजातः तत्संबुद्धौ हे ऋतप्रजात तत् द्रविणम् अस्मासु धेहि स्थापय चित्रं नानारूपम् । उपयामगृहीतोसि बृहस्पतये त्वा । एष ते योनि-

(१) अत्र वाराणसी लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा हे बृहस्पते अति बृहस्पतिसवेऽनया त्रिष्टुभा बृहस्पतिदेवत्यया ग्रहो गृह्यते बृहस्पतेरेवार्षं हे बृहस्पते अर्य ईश्वरः अर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः । स्वामी यत् द्रविणं धनम् अति अर्हात् अतिशयेन पूजयेत् । यत् जनेषु विभाति भासते कीदृशं धनं द्युमत् द्युतिमत् क्रतुमत् यज्ञवच्च यच्च धनं शवला बलेन दीदयत् दीप्यते रक्षितारोऽपि यस्य सन्तीति भावः । ऋतात् सत्यात् अविनाशिनस्तत्त्वात्प्रजायते इति ऋतप्रजातः तस्य सबम्बोधनं हे ऋतप्रजात तत् चित्रं नानाविधं द्रविणम् अस्मासु धेहि स्थापय उपयाम एष ते स्थापय उपयाम एष ते स्थापनमन्त्रः ॥ ३ ॥

बृहस्पतये त्वा । स्थापनमन्त्रः ॥ ३ ॥

ब्रह्मदेवत्या त्रिष्टुप् गृत्समदद्दष्टा बृहस्पतिसवे बार्हस्पत्यग्रहणेऽस्याः सोपयामाया विनियोगः : ऋतात् सत्यात् हे ऋतप्रजात ! ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य ऋतप्रजातः हे बृहस्पते बृहतां वेदानां पते पालक ! चित्रं नानाविधं तत् द्रविणमस्मासु यजमानेषु धेहि धारय स्थापय देहीत्यर्थः । तत्किम् अर्य्यः स्वामी यद्धनमर्हति अर्हति पूजयति लेटोऽडाटाविति ( पा० ३, ४, ९४ ) आडागमः अर्य्यः स्वामिवैश्ययोरिति (पा० ३, १, १०३) अर्य्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः ईश्वरयोग्यं धनं देहीत्यर्थः । यद्धनं जनेषु लोकेषु विभाति विविधं शोभते । कीदृशं धनं द्युमत् द्यौः कान्तिरस्यास्ति द्युमत् दिव उच्चेति ( पा० ६. १, १३१ ) उकारः । क्रतुमत् क्रतवो यज्ञा विद्यन्ते येन तत् येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः । यत् धनं शवसा बलेन दीदयत् दापयति प्रापयति वा धनान्तरम् तद्धनं देहीत्यर्थः दय दानगतिहिंसादानेषु अस्माण्णिजन्ताल्लुङि रूपम् अडभाव आर्षः ॥ उपयामेन पात्रेण गृहीतोऽसि बृहस्पतयेऽर्थाय त्वा गृह्णामि । स्थापयति एष ते योनिः स्थानम् बृहस्पतये त्वां सादयामि ॥ ३ ॥

इन्द्र गोमन्निहायाहि पिबा सोमंᳪ शतक्रतो । विद्यद्भिर्ग्रावभिः सुतम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा गोमते । एष ते योनिरिन्द्राय त्वा गोमते ॥ ४ ॥

( १ ) इन्द्र गोमन् । द्वाभ्यां गायत्रीभ्यामिन्द्राय गोमते

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा इन्द्र गोमन्।द्वाभ्यां गायत्रीभ्यां इन्द्राय गोमते ग्रहो गृह्यते गोसवे आदित्यस्यार्षं याज्ञवल्क्यस्य वा हे इन्द्र हे गोमन् गोमन् गोभिः धेनुभिः संयुक्त स्तुतिभिर्वा इह यज्ञे आयाहि आगच्छ आगत्य च हे शतक्रतो बहुकर्मन् सोमं पिब । किम्भूतं सोमं विद्यद्भिः ग्रावभिः सुतम् अभिषुतम् विशेषेण द्यन्ति खण्डयन्ति ते विद्यन्तः तैः । दो अवखण्डने । अस्य शतरि विद्यन्त इति रूपम् । उप० । गोमते इन्द्राय त्वां गृह्णामि सादयति एष ते ॥ ४ ॥

ग्रहो गृह्यते गोसवे । आदित्यस्यार्षं याज्ञवल्क्यस्य वा । हे इन्द्र गोमन् । गोभिः संयुक्त । स्तुतिभिर्वा । इह यज्ञे आयाहि आगच्छ एत्य च पिब सोमम् हे शतक्रतो बहुकर्मन् कथंभूतं सोमम् विद्यभिर्ग्रावभिः सुतम् दो अवखण्डने । अस्य शतरि विद्यन्त इति रूपम् तैः विद्यद्भिः विशेषेणावखण्डयाद्भिः ग्रावभिः सुतमभिषुतं सोमम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा गोमते गृह्णामि । एष ते योनिरिन्द्राय त्वा गोमते सादयामि ॥ ४ ॥

द्वे इन्द्रदेवत्ये गायत्र्यौ ! रम्याक्षिदृष्टे गोसवे यज्ञे ग्रह ग्रहणे नियुक्ते सोपयामे । शतं क्रतवः कर्माणि यस्य स शतक्रतुः हे शतक्रतो ! हे इन्द्र ! हे गोमन् ! गावो धेनवः स्तुतयः किरणा वा विद्यन्ते यस्य स गोमान् त्वमिह यज्ञे आयाहि आगच्छ सोमं च पिब द्व्यचोऽतस्तिङ इति ( पा० ६, ३, १३५ ) दीर्घः । कीदृशं सोमं ग्रावभिः सुतमश्मभिरभिषुतम् कीदृशैर्ग्रावभिः विद्यद्भिः विशेषेण द्यन्ति खण्डयन्ति ते विद्यन्तः तैः दो अवखण्डने दिवादित्वाच्छ्यन् शतरि ओतः श्यनीति ( पा० ७, ३, ७१ ) ओकारलोपः ॥ उपया० गोमते इन्द्राय त्वां गृह्णामि । सादयति एष ते० ॥ ४ ॥

इन्द्रायाहि वृत्रहन् पिबा सोमꣳ शतक्रतो । गोमद्भिर्ग्रावभिः सुतम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा गोमते । एष ते योनिरिन्द्राय त्वा गोमते ॥ ५ ॥

(१) इन्द्रायाहि । हे इन्द्र आगच्छ हे वृत्रहन् । वृत्रस्य हन्तः एत्य च सोमम्पिब हे शतक्रतो बहुकर्मन् । कथंभूतं सोमम् । गोमद्भिः स्तुतिमद्भिः । ग्राव्णासंयुतैर्वा अंशुवचनो वा गोशब्दः ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा इन्द्रायाहि हे इन्द्र हे वृत्रहन् हे शतक्रतो त्वम् आयाहि । सत्यं च सोमं पिब किंसोमं । गोमद्भिः स्तुतिमद्भिः ग्रावभिः सुतम् । उप० ॥ ५ ॥

ग्रावभिः सुतमभिषुतम् उपयामेति व्याख्यातम् ॥ ५ ॥

वृत्रं दैत्यं हन्ति वृत्रहा शतं क्रतवो मखा यस्य स शतक्रतुः । हे वृत्रहन् ! हे शतक्रतो ! हे इन्द्र ! त्वमायाहि आगच्छ सोमं च पिब । कीदृशं सोमं ग्रावभिः सुतम् । कीदृशैर्ग्रावभिः गोमद्भिः गौः स्तुतिर्विद्यते येषां ते गोमन्तस्तैः ॥ उप० एष ते० व्याख्याते ॥ ५ ॥

ऋतावा॑नं वैश्वान॒रमृ॒तस्य॒ ज्योति॑ष॒स्पति॑म् । अज॑स्रं घ॒र्ममी॑महे ॥ उ॒प॒याम॑गृहीतोऽसि वैश्वान॒राय॑ त्वा ए॒ष ते॒ योनि॑र्वैश्वान॒राय॑ त्वा ॥ ६ ॥

(१) ऋतावानम् । तिस्रो वैश्वानरीयाः पुरोरुचः गायत्रीत्रिष्टुप्गायत्र्यः । अधस्तन एव ऋषिः । ऋतावानं सत्यव्रतं यज्ञवन्तमुदकवन्तं वा वैश्वानरम् ऋतस्य वा । उदकस्य यज्ञस्य सत्यस्य वा ज्योतिषश्च पतिम् । अथवा ऋतस्य सर्वगतस्य ज्योतिषः पतिमधिपतिम् । अजस्रम् अनुपक्षीणं घर्मम् अक्षरणं दीप्तं वा ईमहे याचामहे । आयज्ञसमाप्तिमिति शेषः सामर्थ्यात् । उपयामेति व्याख्यातम् ॥ ६ ॥

तिस्रो वैश्वानरीयाः पुरोऽनुवाक्याः । आद्या गायत्री प्रद्युराक्षिदृष्टा । वयं वैश्वानरमीमहे याचामः यज्ञसमाप्तिमिति शेषः ईमहे याच्ञाकर्मसु पठितः । कीदृशं वैश्वानरम् ऋतवानम् ऋतं सत्यं यज्ञो जलं वास्यास्ति ऋतवा तम् छन्दसी वनिपौ वाच्याविति ( पा० ५, २, १०९ वा० २ ) अस्त्यर्थे वन्प्रत्ययः संहितायामृतस्य दीर्घः ।

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा ऋतावानम् । तिस्रो वैश्वानरीयाः पुरोरुचः गायत्रीत्रिष्टुप्गायत्र्यः अधस्तन एव ऋषिः वयं वश्वानरम् ईमहे याचामहे यज्ञसमाप्तिमिति शेषः सामर्थ्यात् । किं वैश्वानरम् ऋतावानं सत्यवन्तं यज्ञवन्तमुदकवन्तं वा । ऋतस्योदकस्य यज्ञस्य सत्यस्य वा ज्योतिषश्च पतिम् । अथवा ऋतस्य सर्वगतस्य ज्योतिषः पतिम् अजस्रम् अनुपक्षीणं घर्मम् अपक्षरणं दीप्तं वा ॥ ६ ॥

ऋतस्य सत्यस्याविनाशिनो ज्योतिषः तेजसः पतिं पालकम् तेजोऽधिष्ठानमित्यर्थः अजस्रं न जस्यति नश्यति अजस्रस्तमनुपक्षीणम् जसु हिंसायाम् नमिकम्पीति ( पा० ३, २, १६७ ) रप्रत्ययः घर्मं घृ क्षरणदीप्त्योः जिघर्ति क्षरति जलं घर्मस्तम् दीप्तं वा ॥ उपया० वैश्वानराय त्वा गृह्णामि । एष ते० सादयामि ॥ ६ ॥

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ॥ उपयामगृहीतोऽसि वैश्वानराय त्वा । एष ते योनिर्वैश्वानराय त्वा ॥ ७ ॥

( १ ) वैश्वानरस्य सुमतौ । द्वितीयः पादः पूर्वं व्याख्यायते । यः वैश्वानरः राजा दीप्तः हि कमिति निपातसमाहारोऽनर्थः । यश्च वैश्वानरः भुवनानां भूतजातानामभिश्रीः अभ्याश्रयणीयः सर्वोपकारसामर्थ्यात् । यश्च इतो जातः इतोऽरणितः कुतश्चिद्वा उत्पन्नः सन् विश्वमिदं सर्वमिदं विचष्टे अभिविपश्यति । यथाद्रष्टव्यं कर्मानुरूपेण । यश्च वैश्वानरः यतते स्पर्द्धते सूर्येण सह स्वकीयदीप्त्या तस्य वैश्वानरस्य सुमतौ कल्याणमतौ वयं स्यामेति प्रार्थना । उपयामेति समञ्जसम् ॥ ७ ॥

त्रिष्टुप् कुत्सदृष्टा । वैश्वानरस्य सुमतौ शोभनबुद्धौ वयं स्याम

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा वैश्वानरस्य।तस्य वैश्वानरस्य सुमतौ कल्याणमतौ वयं स्यामेति प्रार्थना हि कम् इति । निपातद्वयमनर्थकम् । यः भुवनानां भूतजातानाम् अभिश्रीः अभ्याश्रयणीयः सर्वोपकारकसामर्थ्यात् राजा दीप्तिश्च यश्च इतोऽरणितो जातः सन् इदं विश्वं सर्वं विचष्टे अभिपश्यति यथाद्रष्टव्यं कर्मानुरूपेण यश्च वैश्वानरः सूर्येण सह यतते स्पर्द्धते उपयाम० ॥ ७ ॥

भवेम। कं निपातः पादपूरणः। हि यस्माद्धेतोर्वैश्वानरः इतोऽरणितो जातः उत्पन्नः सन् इदं विश्वं सर्वं विचष्टे कर्मानुरूपं पश्यति सूर्य्येण सह यतते स्पर्धते च सूर्यसमतेजा इत्यर्थः। कीदृशोऽग्निः राजा राजते दीप्यते राजा। भुवनानां भूतजातानामभिश्रीः आश्रयणीयः अभि समन्तात् श्रीयते सेव्यतेऽभिश्रीः कर्मणि क्विप्। उप० एष ते उक्ते ॥ ७॥

वैश्वानरो न ऊतय आ प्रयातु परावतः। अग्निरुक्थेन वाहसा ॥ उपयामगृहीतोऽसि वैश्वानराय त्वा। एष ते योनिर्वैश्वानराय त्वा ॥ ८॥

(१) वैश्वानरो नः वैश्वानरोऽग्निः नोऽस्मान् ऊतये अवनाय पालनाय आप्रयातु आगच्छतु परावतः दूरात्। यो हि दूरादागच्छेत् आगच्छेदप्यसौ समीपादित्यभिप्रायः। केन आप्रयातु। उक्थेन स्तोमेन। वाहसा बाहनभूतेन। अन्यत्रापि स्तोमो बाहन इत्युच्यते। वाहिष्ठो वाहना स्तोम इति। उपयामेति समानम् ॥ ८॥

गायत्री। नोऽस्माकमूतयेऽवनाय परावतः दूरदेशाद्वैश्वानरः आ प्रयातु आगच्छतु केन वाहसा वाहनभूतेन उक्थेन स्तोमेन वाहिष्ठो वाहनानां स्तोमो दूतो हुतं नरा इति श्रुत्यन्तरे स्तोमस्य वाहनत्वमुक्तम्। उप० एष० उक्ते ॥ ८॥

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। त-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा वैश्वानरो नः। वैश्वानरोऽग्निः नोऽस्माकम् ऊतये अवनाय पालनाय परावतो दूरतः आप्रयातु यो हि दूरादागच्छति स समीपादागच्छत्येवेति भावः। केन आयातु वाहसा वाहनभूतेन। उक्थेन स्तोमेन अन्यत्रापि स्तोमो वाहनमित्युच्यते। वाहिष्ठो वाहनानां स्तोम इति। उपयाम० ॥ ८॥

मीमहे महागयम् ॥ उपयामगृहीतोऽस्यग्नये त्वा व-र्चसे एष ते योनिरग्नये त्वा वर्चसे ॥ ९ ॥

( १ ) अग्निर्ऋषिः । आग्नेयी गायत्री पुरोरुक् । ऋषिरुक्तः । यः अग्निः ऋषिः द्रष्टा मन्त्राणाम् पवमानः । इतश्चेतश्च गच्छन् । पाञ्चजन्यः पञ्चजनेभ्यो हितः । चत्वारो वर्णा निषादपञ्चमाः पञ्चजनाः । तेषां हि यज्ञेऽधिकारोऽस्ति । पुरोहितः । पुर एनन्दधति यज्ञं कुर्वाणाः । तम् ईमहे याचामहे । महागयम् महान्तं गृहम् । महत्त्वं च गृहस्य द्रव्यनिबन्धनम् उपयामगृहीतो ऽस्यग्नये त्वा वर्चस इति व्याख्यातम् ॥ ९ ॥

अग्निदेवत्या गायत्री वसिष्ठभरद्वाजदृष्टा पुरोरुक् । महान् गयः स्तुतिर्यस्य स महागयो महागृहरूपो वा तमग्निं वयमीमहे याचयामः । तं कं योऽग्निर्ऋषिः मन्त्रद्रष्टा । पवमानः पव गतौ पवत इतस्ततो गच्छति पवमानः यद्वा पूङ् शोधने पवते शोधयति पवमानः । पाञ्चजन्यः पञ्चजनेभ्यो हितः विप्रादयश्चत्वारो वर्णा निषादश्चेति पञ्चजनास्तेषां यज्ञाधिकारात् पुरोहितः पुरोऽग्रे हितः स्थापितः दधातेर्निष्ठा ॥ उप० वर्चसे तेजोरूपायाग्नये त्वां गृह्णामि । एष० ॥ ९ ॥

महाँ२॥ इन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु । हन्तु पाप्मानं योऽस्मान् द्वेष्टि । उपयामगृहीतोऽसि

---

(१) अत्रायं पाठक्रमः वाराणसी० लि०पु० संमतः मुम्बईमु० पु० नास्ति। तद्यथा अग्निर्ऋषिः आग्नेयी गायत्री पुरोरुक् । ऋषिरुक्तः । ईदृशोऽग्निः तं वयम् ईमहे याचामहे । कीदृशोऽग्निः ऋषिः मन्त्राणां द्रष्टा पवमानः इतस्ततो गच्छन् । पाञ्चजन्यः पञ्चजनेभ्यो हितः । चत्वारो वर्णा निषादपञ्चमाः पञ्चजनाः । तेषां हि यज्ञाधिकारोऽस्ति पुरोहितः पुर एनं दधति यज्ञं कुर्वाणाः तम् ईमहे । कीदृशं तं महागयम् । महान्तं गृहं महत्त्वं च गृहस्य द्रव्यनिबन्धनम् । उप० । वर्चसेऽग्नये ॥ ९ ॥

महेन्द्राय त्वा। एष ते योनिर्महेन्द्राय त्वा॥ १०॥

(१)महाँ इन्द्रः। माहेन्द्री पुरोरुक् गायत्री। उक्तमार्षम्। महान् इन्द्रः वज्रहस्तः। षोडशी। पञ्च प्राणाः पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनः षोडशम् एतल्लिङ्गं यस्य स षोडशीन्द्रः। पञ्चदशो वा वज्रश्चेन्द्रश्च षोडशी वज्रस्य। शर्म शरणं यच्छतु ददातु। हन्तु च पाप्मानं ब्रह्महत्यादिकम्। यश्चास्मान् द्वेष्टि तञ्च हन्तु। यं च वयं द्विष्मः तञ्च हन्तु। उपयामेति समानम्॥ १०॥

महेन्द्रदेवत्या गायत्री वसिष्ठकृता। पुरोरुक्। इन्द्रः शर्म सुखं यच्छतु ददातु योऽस्मान् द्वेष्टि तं च पाप्मानं पापिष्ठं हन्तु नाशयतु यद्वास्मद्द्वेष्टारं पाप्मानं च पापं ब्रह्महत्यादिकं हन्तु अस्त्री पङ्कं पुमान् पाप्मेत्यमरः (१, १, १३१)। कीदृश इन्द्रः महान् श्रेष्ठः। वज्रहस्तः वज्रं हस्ते यस्य सः। षोडशी पञ्च प्राणा दशेन्द्रियाणि मनश्चेति षोडशपदार्था लिङ्गशरीररूपा यस्य स षोडशी आत्मरूप इत्यर्थः॥ उप० एष उक्ते॥ १०॥

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे॥ ११॥

(२) तं वः ऐन्द्री बृहती। जपस्वाध्यायादिषु विनियो-

---

(१) अत्रायं पाठक्रमः वाराणसी० लि० पु० संमतः मुम्बईमु०पु० नास्ति तद्यथा महाँ इन्द्रः। माहेन्द्री पुरोरुक् गायत्री उक्तमार्षम्। इन्द्रः शर्म शरणं यच्छतु ददातु योऽस्मान् द्वेष्टि तं पाप्मानं पापरूपं हन्तु यद्वा पाप्मानं ब्रह्महत्यादिपापं हन्तु योऽस्मान् द्वेष्टि तं च हन्तु। किम् इन्द्रः महान् वज्रहस्तः षोडशी पञ्चप्राणाः पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनः षोडशमेतल्लिङ्गं यस्य स षोडशी। उपयाम०-महेन्द्राय०॥ १०॥

(२) अत्रायं पाठक्रमः वाराणसी० लि० पु० संमतः मुम्बईमु०पु०

गः । आदित्यस्यार्षम् याज्ञवल्क्यस्य वा आ अध्यायपरिसमाप्तेः । हे ऋत्विग्यजमानाः तमिन्द्रं गीर्भिर्वाग्भिः स्तुतिलक्षणाभिः । नवामहे । णु स्तुतौ अभिष्टुमः किमर्थम् । वः युष्मभ्यं दास्यतीति । कथंभूतमिन्द्रम् दस्मम् । दर्शनीयम् प्रियवादिनं कार्यसाधनञ्च । ऋतीषहम् ऋती गतिः गतिमात्रेण शत्रुं सहत इत्यृतीषाद् तमृतीषहम् । वसोर्मन्दानमन्धसः । वसोर्वासयितुः सोमस्य स्वकीयेनैकदेशेन मन्दानं माद्यन्तम् अन्धसः अध्यायनीयस्य चान्नस्य स्वकीयेनैवांशेन माद्यन्तम् कथमिव नवामहे । वत्सं न स्वसरेषु धेनवः । नकार उपमार्थीयः । वत्समिव । स्वसरेषु स्वयमेव सरन्ति येषु तानि स्वसराण्यहानि तेषु स्वसरेषु अहस्सु । धेनवः । यथा नवप्रसूता धेनवः दिनेषु अतिहार्द्रात् वत्सं शब्दैराश्वासयेयुः एवं वयमप्यति सौहार्देणेन्द्रङ्गीर्भिर्नवामह इति समस्तार्थः ॥ ११ ॥

इन्द्रदेवत्या पथ्या बृहती नोधागोतमदृष्टा स्वाध्यायादिषु नियुक्ता । आदित्ययाज्ञवल्क्ययोरार्षमाध्यायात् । हे यजमानाः ! तमिन्द्रं

---

नास्ति तद्यथा तं वः । ऐन्द्री बृहती जपस्वाध्यायादिषु विनियोगः । आदित्यस्यार्षं याज्ञवल्क्यस्य वा आ अध्यायपरिसमाप्तेः । हे ऋत्विक् यजमानाः वयं तम् इन्द्रं वः युष्मभ्यं युष्मदर्थं गीर्भिः वाग्भिः स्तुतिलक्षणाभिः अभिवामहे णु स्तुतौ अभिष्टुमः किंभूतम् इन्द्रं दस्मं दर्शनीयं प्रियवादिनं कार्यसाधनं च ऋतीषहम् ऋती गतिः गतिमात्रेण शत्रुं सहते इति ऋतीषाद् तम् ऋतीसहम् । वसोः वासयितुः सोमस्य स्वकीयेन एकदेशेन मदानं माद्यन्तम् अन्धसोऽन्नस्य स्वकीयेनैवांशेन माद्यन्तम् । कमिव नवामहे स्वसरेषु स्वयमेव सरति गावो येषु तानि स्वसराणि अहानि तेषु धेनवः वत्सं नववत्समिव न इवार्थे यथा नवप्रसूता धेनवो दिनेषु अतिस्नेहाद्वत्सं शब्दैराश्वासयेयुः । स्मरन्ति तथा वयमप्यतिसौहृदेनेन्द्रं गीर्भिः नवामह इत्यर्थः ॥ ११ ॥

वयं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभिनवामहे सम्यक् स्तुमहे नु स्तुतौ व्यत्ययेन शप् । किम्भूतमग्निं वो युष्माकं दस्मं दर्शनीयम् दसि दर्शने मप्रत्ययः । ऋतीषहम् ऋ गतौ क्तिन्प्रत्ययः ऋत्या गत्या सहतेऽभिभवति शत्रूनिति ऋतिषट् तम् पूर्वपदाच्चेति (पा० ८, ३, १०६ ) षत्वम् संहितायां दीर्घः । वसोः वासयितुः स्थितिहेतुभूस्यान्धसो ऽन्नस्य षष्ठी तृतीयार्थे अन्नेन मन्दानं मोदमानम् मदिङ् स्वप्ने जाड्ये मदे मोदे स्तुतौ गताविति धातोः शानच्प्रत्ययेन शपो लुक् । दृष्टान्तमाह वत्सं न नकार इवार्थः स्वसरेषु स्वेनैवात्मनैव सरन्ति प्रसरन्ति किरणा येषु ते स्वसरा दिवसाः तेषु यथा धेनवो नवप्रसूता गावो वत्सं नुवन्ति स्तुवन्ति शब्दैराह्वयन्तीत्यर्थः । तद्वद्वयमिन्द्रं स्तुमः ॥ ११ ॥

यद्वाहि॑ष्ठं॒ तद॒ग्नये॑ बृ॒हद॑र्च विभावसो । महि॑षीव॒ त्वद्र॒यिस्त्वद्वाजा॒ उदी॑रते ॥ १२ ॥

( १ ) यद्वाहिष्ठम् । आग्नेय्यनुष्टुप् हे उद्गातः यत् वाहिष्ठं वोढृतमं बृहत्साम तत् अग्नये अर्थाय अर्चगाय । ततो दृष्ट्वाग्निं ब्रूहि । हे विभावसो विभूतधन अग्ने । महिषीव त्वद्रयिः महिषी प्रथमविन्ना । यथा प्रथमपत्नी धर्मार्थकामात्मिका उत्तिष्ठति सुखात्मिका भवति एवं त्वद्रयिः सुखात्मिका उदीरते उत्तिष्ठति ॥ अथवा । महिषी यथा सर्वान् भोगान् उदीरते उत्क्षिप-

---

( १ ) अत्रायं पाठक्रमः बाराणसी० लि०पु० संमतः मुम्बईमु० पु० नास्ति । तद्यथा यद्वाहिष्ठम् आग्नेय्यनुष्टुप् । हे उद्गातः यद्वाहिष्ठं वोढृतमं बृहत्साम तत् अग्नयेऽर्थाय अर्चगायं ततो दृष्ट्वाऽग्निं ब्रूहि हे विभावसो विभूतधन अग्ने त्वत् त्वत्तः रयिः धनम् उदीरते उत्तिष्ठति प्रियसुखात्मिका भवति का इव महिषीव महिषी प्रथमविन्ना पत्नी धर्मार्थकामात्मिका यथोत्तिष्ठति यद्वा महिषी यथा सर्वान् भोगान् उदीरते क्षिपति उदीर्ते इति एकवजनेन परिणामः । त्वत्तः वाजा अन्नानि च उदीरते उद्गच्छति परोपकाराय ॥ १२ ॥

ति परोपकाराय । एवं त्वत्तो रयिः उदीरते त्वत्तश्च वाजा अन्नानि उदीरते उद्गच्छन्ति परोपकाराय ॥ १२ ॥

अग्निदेवत्यानुष्टुब्वसूयुदृष्टा । हे उद्गातः ! अग्नये अग्न्यर्थं तत् बृहत्साम अर्चगाय बृहत्साम्नो गानं कुरु तत्किम् यत् वाहिष्ठम् वाहयति प्रापयति इष्टमिति वाहयितृ वहेर्ण्यन्तात् तृच् अत्यन्तं वाहयितृ वाहिष्ठम् अतिशायने तमबिष्ठनाविति ( पा० ५, ३, ५५ ) अनुवृत्तौ तुश्छन्दसीति ( पा० ५,३, ५९ ) इष्ठनि परे तुरिष्ठेमेयः स्विति ( पा० ५, ४, १५४ ) च तृचो लोपे वाहिष्ठमिति रूपम् । किञ्च सामगानेन प्रत्यक्षमग्निं ब्रूहि किम् हे विभावसो ! विभा कान्तिरेव वसु धनं यस्य स विभावसुः हे अग्ने ! रयिः धनं वाजा अन्नानि च त्वत् त्वत्तः सकाशात् उदीरते उद्गच्छन्ति ईर गतौ कम्पे च लट् शपो लुक् अदभ्यस्तात् ( पा० ७, १, ४, ) । तत्र दृष्टान्तः महिषीव यथा महिषी प्रथमपरिणीता स्त्री गृहात् भोगार्थं पतिं प्रति उदीर्ते उद्गच्छति । एकं त्वत्पदं पादपूरणम् रयिः त्वदुदीर्ते इति वा ॥ १२ ॥

एह्यू॒ षु ब्रवा॑णि ते॒ऽग्न॑ इ॒त्थेत॑रा॒ गिरः॑ । ए॒भिर्व॑र्धास॒ इन्दु॑भिः ॥ १३ ॥

( १ ) एहि । आग्नेयी गायत्री । अधस्तनमन्त्रस्तुतोऽग्निरिह सम्बोध्यते । एहि आगच्छ हे अग्ने । ऊकारोऽनर्थकः । को हेतुरिति चेत् । सुब्रवाणि साधुब्रवाणि ते तव हे भगवन्नग्ने । इत्थेतराः इत्थं त्वदीयैर्नामबन्धकर्मरूपैर्ग्रथिताः इतराः स्तु-

( १ ) अत्रायं पाठक्रमः वाराणसी० लि०पु० संमतः मुम्बईसु०पु० नास्ति। तद्यथा। एहि आग्नेयी गायत्री; अधस्तनमन्त्रस्तुतोऽग्निरिह संबोध्यते एहि आगच्छ उकारोऽनर्थकः को हेतुरिति चेत् हे अग्ने ते तव इत्थ इत्थं त्वदीयैर्नामबन्धकमरूपैर्ग्रथिता इतराः अन्याः स्तुतिलक्षणा गिरोऽहं सुब्रवाणि सुष्ठु वदामि एभिः इन्दुभिः अध्वर्युणाभिषुतैः सोमैः त्वं वर्द्धासे वर्धस्व ॥ १३ ॥

तिलक्षणाः गिरो वाचः । यद्वा इत्थमुद्रातृस्तोत्रजनिताः इतरा अन्या गिरो या गीयन्ते । हेतुं न्यस्यति । एभिश्च इन्दुभिः अध्वर्युणाभिषुतैः सोमैः त्वं वर्द्धसे वर्द्धस्व ॥ १३ ॥

अग्निदेवत्या गायत्री भरद्वाजदृष्टा हे अग्ने ! त्वमेहि आगच्छ उ पादपूरणः सुञि चेति संहितायामुकारस्य दीर्घः । इत्थ इत्थमनेन प्रकारेण न इतराः अन्याः गिरो वाणीः स्तुतिलक्षणाः ते तवसु ब्रवाणि सुतरां वदानि ब्रूञो लोट् । किञ्च एभिरिन्दुभिः सोमैः वर्धासे वर्धस्व लेटोऽडाटौ ॥ १३ ॥

ऋतवस्ते यज्ञं वितन्वन्तु मासा रक्षन्तु ते हविः ।
संवत्सरस्ते यज्ञं दधातु नः प्रजां च परिपातु नः ॥१४॥

( १ ) ऋतवस्ते । यजमानेनाग्निरुच्यते । अनया बृहत्या । ऋतवः ते तव यज्ञं वितन्वन्तु । मासाश्च ते हविः रक्षन्तु । संवत्सरश्च तव यज्ञं दधातु धारयतु नः इति निपातोऽनर्थकः । प्रजां च परिपातु नः इति यजमान आत्मानमाह । नोऽस्माकं प्रजां च परिपातु संवत्सर एव ॥ १४ ॥

अग्निदेवत्या बृहती ९, ८, ११, ८ वर्णपादा विषमपादा नवकाष्टकैकादशाष्टिनो विषमपादेति वचवात् । हे अग्ने ! ऋतवः ऋतूपलक्षिताः कालविशेषाः ते तव यज्ञं वितन्वन्तु विस्तारयन्तु मासाः चैत्राद्यधिष्ठातारो देवास्ते तव हविः पुरोडाशादिकं रक्षन्तु पान्तु । संवत्सरस्तदधिष्ठाता देवः ते तुभ्यं त्वदर्थं नोऽस्माकं यज्ञं दधातु पुष्णातु नोऽस्माकं प्रजां पुत्रादिकां च परिपातु रक्षतु संवत्सर एव ॥ १४ ॥

---

(१) ऋतवस्ते यजमानेनाग्निरुच्यते अनया बृहत्या ऋतवः ते तव यज्ञं वितन्वन्तु मासाश्च ते तव हविः रक्षन्तु सवत्सरं तव यज्ञं दधातु पुष्णातु नः इति निपातोऽनर्थकः यजमान आत्मानमाह नोऽस्माकं प्रजां परिपातु संवत्सर एव ॥ १४ ॥

उपह्वरे गिरीणाᳬं सङ्गमे च नदीनाम् धिया विप्रो अजायत ॥ १५ ॥

( २ ) उपह्वरे गिरीणाम् । चतस्रो गायत्र्यः सौम्यः । उपह्वरे गह्वरे गिरीणां पर्वतानाम् प्रसिद्धमेतत् । एकाहीनसत्राणि क्रियन्तामित्यनया । धिया बुद्ध्या विप्रः मेधावी सोमः अजायत । जगत् धारयितुमिच्छन् ॥ १५ ॥

सोमदेवत्या गायत्री वत्सदृष्टा । गिरीणां पर्वतानामुपह्वरे निकटे नदीनां गङ्गादीनां च संगमे विप्रो मेधावी सोमः अजायत उत्पन्नः जनेर्लङ् कया धिया बुद्ध्या विप्रादयो मया यज्ञं करिष्यन्तीति विचार्य्येत्यर्थः ॥ १५ ॥

उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रᳬं शर्म महि श्रवः ॥ २६ ॥

( १ ) उच्चा ते । व्यवहितपदप्रायो मन्त्रः हे सोम ते तव

---

(१) अत्रायं पाठक्रमः वाराणसी० लि॰पु० संमतः मुम्बईमु० पु० नास्ति । तद्यथा । उपह्वरे । चतस्रो गायत्र्यः सौयः । गिरीणाम् उपह्वरे निकटे नदीनां सङ्गमे च एकाहीनसत्राणि क्रियन्तां नित्यम् । अनया धिया बुद्ध्या विप्रो मेधावी सोमः अजायत जगद्धारयितुमिच्छन्॥१५॥

(२) अत्रायं पाठक्रमः वाराणसी० लि०पु० संमतः मुम्बईमु० पु० नास्ति तद्यथा। उच्चा ते हे सोम ते तव अन्धसः आध्यानीयात् रसात् जातम् उत्पन्नम् यज्ञपरिणामभूतम् उच्चा उच्चैः दिवि द्युलोके सत् विद्यमानं पश्चाद् भूमिः आददे । गृहीतवती किं तद् द्युलोकस्थानं भूतिराददे उग्रमुद्‌गूर्णं महत् चौरादिभिरनाधृष्यं शर्म । शरणं गृहं महि महत् श्रवः श्रवणीयं धनं च पञ्चाहुतिपरिणामोद्‌घाटनमेतत् तत्कृतमाहुतिः प्रथमं दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमौ अन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ पुरुषरूपेणेति पञ्चधाहुतिपरिणामः ॥ १६ ॥

अन्धसः अध्यानीयात् रसीभूतात् । जातमुत्पन्नम् यज्ञपरिणाम-भूतम् उच्चा उच्चैः। दिविसत् । द्युलोके विद्यमानम् पश्चात् भूमिः आददे गृहीतवती।किं तत् द्युलोकप्राप्तं भूमिराददे । उग्रम् उद्गूर्णं महाचौरादिभिरनाधृष्यम् शर्म शरणं गृहम् महिश्रवः महच्च श्रवणीयं धनम् । पञ्चाहुतिपरिणामोद्घाटनमात्रमेतत् कृतम् यथाहुतिः प्रथमं दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ पुरुषरूपेणेति पञ्चधाहुतिपरिणामः ॥ १६ ॥

सोमदेवत्यास्तिस्रो गायत्र्य आमहीयवद्दृष्टाः । हे सोम । ते तव अन्धसोऽन्नाद्रसरूपात् जातमुत्पन्नं होमतो जातमपूर्वम् उच्चा उच्चं गतं दिवि स्वर्गे सत् विद्यमानं भूमिः आददे गृह्णाति भूमिशब्दस्य विसर्गलोपे सन्धिश्छान्दसः । किं तत् द्युलोकस्थं भूमिर्गृह्णाति तदाह । उग्रमुत्कृष्टं शर्म सुखं गृहपुत्रादिजन्यं । महि महत् श्रवः कीर्त्तिर्धनं वा ॥ अनेन मन्त्रेण पञ्चाहुतिपरिणाम उक्तः । स यथा । हुताहुतिरादौ दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ नररूपेणागत्य तं नरं धनयशोभ्यां सुखिनं करोतीति भावः ॥ १६ ॥

स न॒ इन्द्रा॑य॒ यज्य॑वे॒ वरु॑णाय म॒रुद्भ्यः॑ वरिवो॒वि॒त्परि॑स्रव ॥ १७ ॥

(१) स नः । यस्त्वं वरिवोवित् । वरिवोधनम् । तद्विन्दति

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । स नः । यस्त्वं वरिबोधनं विन्दति वेत्ति वा स त्वं नोऽस्माकं यज्ञं यज्यवे यष्टव्याय इन्द्राय वरुणाय मरुद्भ्यश्चार्थाय परिश्रव परिक्षर अथवा स त्वं नः यज्ञं यज्यवे इन्द्राय वरुणाय मरुद्भ्यश्च परिश्रव वरिवोविदिति एतेषां विशेषणं कृतविभक्तिव्यत्ययं गृह्यते वरिवोविद्भ्यः । धनविद्भ्यः क्रियाविशेषणं वा एतेभ्यो देवेभ्यस्तथा परिस्रव यथा वरिवोविद् भवति ॥ १७ ॥

हे सोम ! स त्वं नोऽस्माकं परिस्रव क्षर रसरूपो भूत्वाहुतित्वमेहीत्यर्थः किमर्थमिन्द्राय वरुणाय मरुद्भ्यश्च इन्द्रादीनां तृप्तये परिस्रवेत्यर्थः । कीदृशायेन्द्राय यज्यवे यष्टुं योग्यो यज्युस्तस्मै यष्टव्याय इदं त्रयाणां विशेषणम् यज्युभ्य इति मरुताम् । कीदृशस्त्वं वरिवोवित् वरिवो धनं वेत्ति जानाति विन्दति लभते वा वरिवोवित् धनस्य ज्ञाता प्रापकश्च ॥ १७ ॥

ए॒ना विश्वा॑न्य॒र्य आ द्यु॒म्नानि॒ मानु॑षाणाम् । सिषा॑सन्तो वनामहे ॥ १८ ॥

(१) एना विश्वानि । एना एनानि विश्वानि शर्वाणि द्युम्नानि धनानि । अर्य ईश्वरः सोमः आ आदाय अस्मभ्यं ददात्विति शेषः । तानि च सोमदत्तानि । सिषासन्तः । षणु दाने । अस्य सन्यनुनासिकस्याकारः । दातुमिच्छन्तः दानाभिमुखीभूताः सन्तो वयन्धनानि वनामहे सम्भुजूमहे ॥ १८ ॥

अर्यः ईश्वरः सोमः एना एनानि विश्वानि सर्वाणि मानुषाणां नराणां द्युम्नानि धनानि यशांसि वा आ नयत्विति शेषः अस्मभ्यं ददात्वित्यर्थः तानि सोमदत्तानि द्युम्नानि वयं वनामहे वन सम्भक्तिशब्दयोः लट् सम्भजामहे । कीदृशा वयं सिषासन्तः षणु दाने सनितुं दातुमिच्छन्ति सिषासन्ति ते सिषासन्तः सनेर्धातोः सन्नन्ताच्छतृप्रत्ययः जनसनखनां सञ्झलोरिति ( पा० ६, ४, ४२ ) आत्वम् सन्यत इति ( पा० ७, ४, ७९ )अभ्यासेकारः दानं कुर्वाणा धनभाजः स्यामेत्यर्थः ॥ १८ ॥

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । एना विश्वानि अर्यः । ईश्वरः सोमः मानुषाणां सम्बन्धीनि एना एनानि विश्वानि सर्वाणि द्युम्नानि धनानि आ आदाय अस्मभ्यं ददात्विति शेषः तानि च सोमदत्तानि सिषासन्तः षणु दाने अस्य सनि अनुनासिकस्याकारः । दातुमिच्छन्तः दानाभिमुखीभूताः सन्तो वयं धनानि वनामहे सम्भूञ्ज्महे ॥ १८ ॥

अनु॑ वी॒रैरनु॑ पुष्यास्म॒ गोभि॒रन्वश्वै॒रनु॑ सर्वे॑ण पु॒ष्टैः । अनु॑ द्वि॒पदा॒नु चतु॑ष्पदा व॒यं दे॒वा नो॑ य॒ज्ञमृ॑तु॒था नयन्तु ॥ १९ ॥

(१) किमर्थं धनमतो दातुमिच्छन्तो धनवन्त इत्याह । अनुवीरैः । आशीर्देवता त्रिष्टुप् । अनुपुष्यास्म वीरैः वयम् अनुपुष्यास्म च गोभिः वयम् । अन्वश्वैः अनुपुष्यास्म च वयमश्वैः । अनुसर्वेण पुष्टैः । अनुपुष्यास्म च वयं सर्वेण पुष्टेनेति वचनव्यत्ययः । अनुद्विपदा अनुपुष्यास्म च वयं द्विपदा द्विपादेन अनुपुष्यास्म च चतुष्पादेन । किञ्च । देवाः नो ऽस्माकं यज्ञम् ऋतुथा ऋतावृतौ काले काले नयन्तु ॥ १९ ॥

आशीरियं देवदेवत्या त्रिष्टुप् मुद्गलदृष्टा । वयं वीरैः पुत्रैः अनुपुष्यास्म पुष्टा भवेम पुषेराशीर्लिङि उत्तमबहुवचनम् गोभिर्धेनुभिः अनुपुष्यास्म उपसर्गावृत्त्या क्रियावृत्तिः अश्वैरनुपुष्यास्म सर्वेणान्येनापि कामेन पुष्यास्म पुष्टैः सर्वपदार्थैर्गृहादिभिः पुष्यास्म । द्वौ पादौ यस्येति द्विपात् तेन द्विपदा मनुष्येण दासादिना चतुष्पदा गजादिना च पुष्यास्म पादोऽन्यतरस्यामिति ( पा० ४, १, ८, ) अन्तलोपः पादः पदिति ( पा० ६, ४, १३० ) पदादेशः । किञ्च ऋतुथा ऋतावृतौ काले काले देवा नोऽस्माकं यज्ञं नयन्तु प्रापयन्तु प्राप्नुवन्तु ॥ १९ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अनुवीरैः । आशीर्देवी त्रिष्टुप् वयं वीरैः अनुपुष्यास्म गोभिः अनुपुष्यास्म अश्वैः अनुपुष्यास्म सर्वेण पुष्टैः पुष्टेनेति वचनव्यत्ययः । सर्वेण पुष्टेन अनुपुष्यास्म द्विपदा द्विपदेन अनुपुष्यास्म चतुष्पदा चतुष्पदेन च अनुपुष्यास्म पुष्टा भूयास्म किञ्च देवाः नोऽस्माकं यज्ञम् ऋतुथा ऋतावृतौ नयन्तु॥१९॥

अग्ने पत्नीरिहावह देवानामुशतीरुप । त्वष्टारꣳ सोमपीतये ॥ २० ॥

(१) अग्ने पत्नीः इत उत्तरं पञ्च नेष्टुर्याज्याः । आद्या गायत्री । देवानां पत्न्यः त्वष्टा च देवता । हे अग्ने देवानां पत्नीः इहास्मिन् पक्षे उपावह आगमय कथंभूताः उशतीः कामयमानाः अस्मान् । त्वष्टारञ्च उपावह । किमर्थम् । सोमपीतये सोमपानाय ॥ २० ॥

अग्निदेवत्या गायत्री मेधातिथिदृष्टा । इतः पञ्च ऋचोऽग्निष्टोमे नेष्टुर्याज्याः आद्या प्रातःसवने नेष्टृचमसयागे याज्या । हे अग्ने ! देवानां पत्नीः इह यज्ञे त्वमुपावह आगमय । कीदृशीः पत्नीः उशतीः हविः कामयमानाः वशेः शत्रन्तात् उगितः इति ( पा० ४, १६ ) ङीप् । किञ्च सोमपीतये सोमापानाय त्वष्टारं देवं चोपावह ॥ २० ॥

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वꣳ हि रत्नधा असि ॥ २१ ॥

(२) अभियज्ञम् । द्वे गायत्र्यौ ऋतुग्रहाणां याज्ये ।

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अग्ने पत्नीः । इत उत्तरं पञ्च नेष्टुर्याज्या अग्निष्टोमे आद्या गायत्री देवानां पत्न्यः त्वष्टा च देवता हे अग्ने देवानां पत्नीः इह यज्ञे उपावह आगमय किम्भूताः उशतीः । अस्मान् कामयमानः त्वष्टारं च उपावह किमर्थं सोमपीतये सोमपानाय ॥ २० ॥

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अभियज्ञम् । द्वे गायत्र्यौ ऋतुग्रहाणां नेष्टा स्वकीयामधिष्ठात्रीं देवतां ब्रवीति हे ग्नावः ग्नाः पत्न्यः विद्यन्ते यस्य स ग्नावान् तस्य सम्बोधनं हे ग्नावः मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वं हे नेष्टः नोऽस्माकं यज्ञम् अभिगृणीहि

नेष्टा स्वकीयामधिष्ठात्रीं देवतां ब्रवीति । अभिगृणीहि स्तुहि यज्ञं नोऽस्मत्संबन्धिनम् । हे ग्रावः । ग्नाः पत्न्यः ता विद्यन्तेऽस्य स ग्नावान् तत्सबोधनं हे ग्नावः । मतुवसोः रुः संबुद्धौ छन्दसीति रुत्वम् । हे नेष्टः पिब च ऋतुना कालेन सह । कस्मात्त्वमेवमुच्यसे इति चेत् । तत्राह । त्वं हि रत्नधा असि । यस्मात्त्वमेव रमणीयानान्धनानां दातासि ॥ २१ ॥

द्वे ऋतुदेवते गायत्र्यौ मेधातिथिदृष्टे ऋतुयागे नेष्टुर्याज्ये । ग्नाः पत्न्योऽस्य सन्तीति ग्नावा तदस्यास्तीति ( पा० ५, २, ९४ ) मतुप् । मादुपधाया इति ( पा० ८, २, ९ ) वत्वम् तस्य सम्बोधनं हे ग्नावः पत्नीवन् ! हे नेष्टः ! नोऽस्माकं यज्ञमभिगृणीहि स्तुहि गॄ शब्दे क्र्यादित्वात् श्ना ई हल्यघोरिति ( पा० ६, ४ ११३ ) तस्येकारः प्वादीनां ह्रस्व इति ( पा० ७, ३, ८० ) धातोर्ह्रस्वः । किञ्च ऋतुना देवेन सह पिब सोममिति शेषः । हि यस्मात् त्वं रत्नधा असि रत्नानि दधाति ददाति रत्नधाः रमणीयधनानां दातासि ॥२१॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ २२ ॥

(१) द्राविणोदाः । ऋत्विज उच्यन्ते । अयमग्निः । द्रविणो-

---

स्तुहि ऋतुना कालेन सह पिव च हि यतः त्वं रत्नधा रमणीयानां धानानां दाता असि ॥ २१ ॥

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । द्राविणोदाः ऋत्विज उच्यन्ते अयमग्निः द्रविणोदाः धनस्य बलस्य च वा दाता द्रविणस् शब्दः सकारान्तो धनपर्यायः । पिपीषति पातुमिच्छति पिबतेः सनि ईकारादेशः सोमामिति शेषः अतो यूयं जुहोत जुहुत प्रतिष्ठत च कर्मसु किञ्च नेष्ट्रात् नेष्टुरिदं नेष्ट्रं नेष्ट्रियाद् धिष्ण्यात् ऋतुभिः कालैः सह सोम मिष्यत । पुनः पुनः पिबत ॥ २२ ॥

दाः । धनस्य बलस्य वा दाता । पिपीषति पातुमिच्छति पिबतेः सनीकारः । सोममिति शेषः । एवञ्चेदतो ब्रवीमि । हे ऋत्विजः । जुहोत प्रच तिष्ठत जुहुत च प्रतिष्ठत च कर्मसु किञ्च । नेष्ट्रात् नेष्ट्रियात् ऋतुभिः कालैः सह सोमम् इष्यते पुनःपुनः पिबत ॥ २२ ॥

द्रविणस्शब्दः सान्तो धनवाची द्रविणो धनं ददाति द्रविणोदाः धनदाताग्निः पिपीषति पातुमिच्छति सोममिति शेषः पीङ् पानेऽस्माद्दैवादिकात्सन्प्रत्ययः । अतो हे ऋत्विजः ! यूयं जुहोत जुहुत प्रतितिष्ठत च तप्तनाबिति ( पा० ७, १, ४५ ) तबादेशः कर्मसूद्युक्ता भवतेत्यर्थः । किञ्च नेष्टुरिदं नेष्ट्रम् वृद्ध्यभाव आर्षः नेष्टुर्धिष्ण्यात् ऋतुभिः देवैः सह इष्यत सोमं प्रतिगच्छत इष गतौ दिवादित्वात् श्यन् लोट् ॥ २२ ॥

तवाय सोमस्त्वमेह्यर्वाङ् शश्वत्तमᳬं सुमना अस्य पाहि । अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥ २३ ॥

(१) तवायम् । ऐन्द्री त्रिष्टुप् माध्यन्दिनीया । हे इन्द्र यतः तवाय माध्यन्दिनीयः सोमः अतः अस्माभिः प्रार्थ्यमानः त्वम् आ इहि आगच्छ । कथंभूतः । अर्वाङ् अर्वागञ्चनः अवरेणाश्रितः । एत्य च शश्वत्तमं शाश्वतिकतमम् सोमं

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । तवायम् । ऐन्द्री त्रिष्टुप् माध्यान्दिनीया हे इन्द्र अयं तव सोमः माध्यान्दिनीयः अतः त्वम् अर्वाङ् अर्वागञ्चनः एहि आगच्छ आगत्य च शश्वत्तमं शाश्वतिकतमम् । अस्य सोमस्य भागं संगृह्य सुमना भूत्वा पाहि पिब पीत्वा च अस्मिन् यज्ञे बर्हिषि आनिषद्य अधिष्ठानं कृत्वा इन्दुं सोमं जठरे दधिष्व धारय ॥ २३ ॥

सोमभागं गृहाण संगृह्य च सुमना भूत्वा अस्य सोमस्य पाहि पिब। पीत्वा च । अस्मिन्यज्ञे बर्हिषि निषद्य अवस्थानं कृत्वा दधिष्व धारयस्व इमं जठरे इन्दुं सोमम् हे इन्द्र ॥ २३ ॥

इन्द्रदेवत्या त्रिष्टुप् विश्वामित्रदृष्टा । माध्यन्दिने सवने नेष्टृचमसयागे याज्या। हे इन्द्र! तव अयं सोमोऽस्ति अतः अर्वाङ् अस्मदभिमुखः त्वमेहि आगच्छ शश्वत्तमं सर्वकालमस्य पाहि कर्मणि षष्ठी इमं सोमं रक्ष पा रक्षणे लोट्। कीदृशः त्वं सुमनाः शोभनं मनो यस्य सः प्रसन्नचित्तः। किञ्च अस्मिन् यज्ञे बर्हिषि आस्तृतदर्भेषु निषद्य उपविश्य इममिन्दुं सोमं जठरे उदरे दधिष्व धारय धि धारणे तुदादिः व्यत्ययेन शपः श्लुस्तङ् च अभ्यासेकारस्याकार आर्षः ॥ २३ ॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन। अथा मदस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ २४ ॥

(१) अमेव नः। देवपत्न्यः त्वष्टा चात्र दृश्यन्ते। जगती तार्तीयसवनीया याज्या । अमाशब्दो गृहवचनः । यथा

(१) अत्रायं पाठक्रमः वाराणसी० लि०पु० संमतः मुम्बईमु०पु० नास्ति। तद्यथा। अमेव नः। देवपत्न्यः त्वष्टा चात्र दृश्यन्ते जगती तार्तीयसवनीया यज्या अमाशब्दो गृहवचनः अमा इव स्वगृहमिव नोऽस्माकं यज्ञगृहाणि हे सुहवाः स्वाह्वाना देवपत्न्यः आगन्त न आगच्छत हिः पादपूरणः आगत्य च बर्हिषि निसदतन निषीदत उपविशत निषद्य अरणिष्टन रतिं कुरुत । तप्तनप्तनथनाश्चेति तस्य तनादेशः। एवमुपविष्टासु देवपत्नीषु अथ हे त्वष्टः अन्धस्य सोमस्य स्वमंशं जुजुषाणः सेवमानः मन्दस्व तृप्यस्व किं त्वं देवेभिर्देवैः जनिभिः जननहेतुभूताभिर्दैवपत्नीभिः सुमद्गणः शोभमानमदा देवास्तेषां स्त्रैणगणाश्च यस्य स सुमद्गणः सुमदो गणाश्च यस्य ॥ २४ ॥

गृहाणि स्वानि एवं नः अस्माकं यज्ञगृहाणि । सुहवाः साध्वाह्वानाः आहिगन्तन आगच्छत । हिः पादपूरणः । आगत्य च निबर्हिंषि सदतन निषीदत उपविशत बर्हिंषि । निषद्य च रणिष्टन रतिं कुरुत । आदित्यासुपविष्टासु देवपत्नीषु । अथ मन्दस्व तृप्यस्व जुजुषाणः सेवमानः । अन्धसः सोमस्य स्वमंशम् हे त्वष्टः देवेभिर्देवैः जनिभिः जननहेतुभूताभिः देवपत्नीभिः सुमद्गणः सन् शोभनमदा देवास्तेषां स्त्रीणाञ्च गणः यस्य स सुमद्गणः ॥ २४ ॥

त्वष्टृदेवत्या जगती गृत्समददृष्टा । तृतीयसवने नेष्टृचमसयागे याज्या । देवपत्न्यः प्रार्थ्यन्ते । अमाशब्दो गृहवाचकः अमेव स्वगृहमिव नोऽस्माकं यज्ञगृहाणि हे देवपत्न्यः ! यूयमागन्तन आगच्छत गमेः शपो लुक् लोटि मध्यमबहुवचने । हि पादपूरणः बर्हिंषि दर्भे निसदतन निषीदत उपविशत सद गतौ रणिष्टन रण शब्दे अस्य लुङि रूपम् अडागमाभावः परस्परं वार्त्तां कुरुतेत्यर्थः तप्तनप्तनेति ( पा० ७, १, ४५ ) सर्वत्र तनबित्यादेशः । कीदृश्यो यूयं सुहवाः शोभनः सुकरो हव आह्वानं यासां ताः । एवं देवपत्नीरुक्त्वाथ त्वष्टारमाह हे त्वष्टः ! त्वमथानन्तरं देवपत्नीष्वागतासु मदस्व तृप्यस्वेत्यर्थः । कीदृशस्त्वम् अन्धसः अन्धः हविर्लक्षणमन्नं जुजुषाणः सेवमानः जुषी प्रीतिसेवनयोः व्यत्ययेन शानचि शपः श्लुः । अन्धसः इति कर्मणि षष्ठी । देवेभिः देवैः जनिभिः देवपत्नीभिश्च सुमद्गणः सुष्ठु माद्यन्ति हृष्यन्ति सुमदः मदेः क्विप् सुमदः सन्तुष्टा गणा देवाः स्त्रीगणाश्च यस्य स सुमद्गणः । जनयन्ति जनयो नार्यः ॥ २४ ॥

स्वादि॑ष्ठया॒ मदि॑ष्ठया॒ पव॑स्व सोम॒ धार॑या । इन्द्रा॑य॒ पात॑वे सु॒तः ॥ २५ ॥

(१) स्वादिष्ठया । सौम्यौ पावमान्यौ गायत्र्यौ । जपा-

---

(१) अत्रायं पाठक्रमः बाराणसी० लि०पु० संमतः मुम्बईमु० पु० नास्ति । तद्यथा । स्वादिष्ठया । सौम्यौ पावमान्यौ गायत्र्यौ जपादिषु

दिषु विनियोगः उक्तश्च। रसीभूतो यदा सोमः पवित्रात्क्षरति ग्रहम्। ऋग्भिः स्वादिष्ठयाद्याभिः पवमानः स उच्यते। स्वादिष्ठया स्वादुतमया पवस्व दशापवित्रात् द्रोणकलशं प्रति गच्छ हे सोम धारया। यस्त्वम् इन्द्राय पातवे इन्द्रः पिबतु इत्यनेनाभिप्रायेण सुतः अभिषुतो ऽस्माभिः॥ २५॥

सोमदेवत्ये द्वे गायत्र्यौ मधुच्छन्दोदृष्टे जपादिषु नियुक्ते। हे सोम! धारया कृत्वा पवस्व गच्छ दशापवित्राद्द्रोणकलशं प्रति गच्छ। कीदृश्या धारया स्वादिष्ठया स्वादो विद्यते यस्यां सा स्वादवती स्वादिष्ठा तया विन्मतोर्लुगिति (पा० ५, ३, ६५) इष्ठनि मतुपो लुक् स्वादुतमया। मदिष्ठया मदयति मदयित्री अत्यन्तं मदयित्री मदिष्ठा तया इष्ठनि तुरिष्ठेमेयःस्विति (पा० ६, ४, १५४) तृचो लोपः। यत इन्द्राय पातवे इन्द्रस्य पातुं त्वं सुतोऽभिषुतोऽसि अस्माभिरतो धारया पवस्व॥ २५॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहते। द्रोणे सधस्थमासदत्॥ २६॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षड्विंशोऽध्यायः॥ २६॥

---

(१) रक्षोहा विश्वचर्षणिः। अयमेव सोमः रक्षोहा

---

विनियोगः उक्तं च "रसीभूतो यदा सोमः पवित्रात् क्षरति ग्रहम्। ऋग्भिः स्वादिष्ठयाद्याभिः पवमानः स उच्यते"। हे सोम स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया धारया पवस्व दशापवित्रात् द्रोणकलशं प्रतिगच्छ यस्त्वं इन्द्राय पातवे पातुमिन्द्रः त्वां पिबतु इति अभिप्रायेण सुतः अभिषुतोऽस्माभिः॥ २५॥

(१) अत्रायं पाठक्रमः वाराणसी० लि०पु० संमतः मुम्बईमु० पु० नास्ति। तद्यथा। रक्षोहा। अयमेव सोमः रक्षोहा रक्षसां हन्ता विश्वचर्षणिः सर्वस्य जगतो द्रष्टा योनिं स्थानम्। अभि आसदत् आभिमु-

रक्षसामपहन्ता विश्वचर्षणिः सर्वस्य जगतो द्रष्टा । यथार्हम्प्रति अभि आसदत् आभिमुख्येन सन्तः सीदति वा । किमभ्यासदत् योनिं स्थानम् । कथंभूताम् । अयोहते । अयसा कृष्णलोहेन हतमुत्कीर्णम् सोमभाजनीकृतम् । हतमिति विभक्तिव्यत्ययः योनिसामानाधिकरण्यात् । किंनामानं योनिम् द्रोणे । अत्रापि विभक्तिव्यत्ययः द्रोणं द्रोणकलशलक्षणम् । सधस्थं सहस्थानलक्षणम् सोमानाम् ॥ २६ ॥

इति उव्वटकृतौ मन्त्रभाष्ये षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

(१) अभ्ररामरसभूमितवर्षे श्रावणासितमनोभवघस्रे ।
भूधराधिशिवपत्तनकृत्यमेतन्भाष्यमलिखत् मनुसूनुः ॥ १ ॥
शिरसि चन्द्रकलाप्रतिभासितः सजलनीरदकान्तगलोऽनिशम् ।
धनविरामसितांशुसमप्रभोऽवतु रमापरिरम्भणसादरः ॥ २ ॥
इमं ग्रन्थं व्यधीयानं नृसिंहोऽव्याद्रमायुतः ।

सोमः द्रोणे विभक्तिव्यत्ययः द्रोणं द्रोणकलशलक्षणं योनिं स्थानमभि आसदत् आभिमुख्येन सीदति तिष्ठति । कीदृशः सोमः र-

---

ख्येन सीदति किम्भूतं योनिं अयोहतम् अयसा कृष्णलोहेन हतमुत्कीर्णं सोमभाजनीकृते अय इत्यत्र सुपां सुलुगिति तृतीयैकवचनलोपः । हतमिति विभक्तिव्यत्ययः । योनिसामान्याधिकरण्यात् । किंनामानं योनिं द्रोणे अत्रापि विभक्तिव्यत्ययः द्रोणकलशलक्षणं सधस्थं सहस्थानलक्षणं सोमानाम् ॥ २६ ॥

इति मन्त्रभाष्ये षड्विंशोऽध्यायः २६ ॥

(१) अत्र सार्धश्लोकद्वयं वाराणसी० पुस्तके ऽधिकमस्ति ।

क्षोहा रक्षांसि हन्तीति रक्षोहा दुष्टनाशकः । विश्वचर्षणिः विश्वं सर्वं जगत् चष्टे पश्यति विश्वचर्षणिः सर्वस्य शुभाशुभद्रष्टा यद्वा चर्षणिरिति मनुष्यनामसु पठितम् विश्वे सर्वे चर्षणयो मनुष्या ऋत्विग्यजमानलक्षणा यस्य कण्डनाहरणादिषु सः । तथा कीदृशं द्रोणम् अयः सुपां सुलुगिति तृतीयैकवचनलोपः अयसा लोहेन हतमुत्कीर्णम् वास्या कृत्वा तक्ष्णा सोमभाजनीकृतम् हतमिति विभक्तिव्यत्ययः । तथा सधस्थं सह सार्धं तिष्ठन्ति सोमा यत्र स सहस्थः सुपि स्थ इति ( पा० ३, २, ४, कप्रत्ययः । आतो लोप इति (पा० ६,४,६४) आलोपः सध मादस्थयोश्छन्दसीति (पा० ६,३,९६) सहस्य सधादेशः । असदत् पुषादीति ( पा० ६, १, ५५ ) लुङि च्ले रङ् छन्दसि लुङ्लङ्लिट इति ( पा० ३ , ४, ६ ) लङर्थे लुङ्॥२६॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अनुक्तमन्त्रकथनः षड्विंशोऽध्याय ईरितः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

समा॑स्त्वाग्न ऋ॒तवो॑ वर्धयन्तु संवत्स॒रा ऋष॑यो॒ यानि॑ स॒त्या । सं दि॒व्येन॑ दीदिहि रोच॒ने॒न॒ विश्वा॒ आभा॑हि प्र॒दिश॒श्चत॑स्रः ॥ १ ॥

(१) समास्त्वा । आग्निकोऽध्यायः । सामिधेन्यो नव त्रिष्टुभः आग्नेय्योऽग्निना दृष्टाः । प्राक्पीवोन्नाया ऋषिरग्निः कर्माङ्गभूतमग्निं स्तौति समाशब्दो मासवचनः संवत्सर इति शब्दोपादानसामर्थ्यात् । समाः मासाश्च त्वां हे अग्ने ऋतवश्च वर्द्धयन्तु । संवत्सराश्च ऋषयश्च सप्त ऋषयो मन्त्रद्रष्टारो वा प्राणा वा । यानि च सत्या सत्यानि आर्षाः मन्त्राः त्वां वर्द्धयन्त्वित्यनुवर्तते । त्वमप्येतैर्वर्द्धमानः । सन्दिव्येन दीदिहि रोचनेन । सन्दीदिहि संदीप्यस्व दिव्येन दिविभवेन रोचनेन दीप्त्या । किञ्च विश्वाः सर्वा आभाहि दीपय दिशः प्रदिशश्च चतस्रः आभाहि ॥ १ ॥

अयमध्यायः पञ्चचितिकस्याग्नेः सम्बन्धी प्रजापतिदृष्टः । नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टाः इष्टकापशौ समिध्यमानसमिद्धत्योरन्तराले आसां विनियोगः । अग्निर्ऋषिः कर्माङ्गभूतमग्निं

---

(१) समास्त्वा । आग्निकोऽध्यायः अग्नये समिध्यमानायानुब्रूहीत्युक्ते पच्यमानाः सामिधेन्यो नवत्रिष्टुभः आग्नेय्योऽग्निना दृष्टाः प्राक्पीवोन्नाया ऋषिरग्निः कर्माङ्गभूतमग्निं स्तौति समाशब्दो मासवचनः संवत्सर इत्युपादानात् । अग्ने समाः ऋतवः संवत्सराः ऋषयो मन्त्रद्रष्टारः यानि सत्याःसत्यानि आर्षो मन्त्रः त्वां वर्द्धयन्तु । त्वमप्येतैर्वर्ध्यमानः दिव्येन दिविभवेन रोचनेन दीप्त्या संदीदिहि संदीप्यस्व विश्वाः सर्वाः चतस्रः प्रादिशः आभाहि दीपय ॥ १ ॥

स्तौति । हे अग्ने ! एते त्वा त्वां वर्धयन्तु । के । समा मासाः संवत्सरस्य पृथगुक्तेः समाशब्दो मासवाचकः । ऋतवो वसन्ताद्याः संवत्सराः तदधिष्ठातारः ऋषयो मन्त्रद्रष्टारः यानि सत्या सत्यानि सत्यरूपा मन्त्रा इत्यर्थः । त्वमप्येतैर्वर्धमानो दिव्येन दिवि भवेन रोचनेन दीप्त्या सन्दीदिहि सन्दीप्यस्व दिवेः श्लौ लुकि रूपम् तुजादीनां दीर्घोऽभ्यासस्येति ( पा० ६, १, ७ ) अभ्यासदीर्घः । किञ्च विश्वाः सर्वाः प्रदिशो विदिशः चतस्रो दिशश्च आभाहि दीपय अन्तर्भूतो ण्यर्थः भा दीप्तौ ॥ १ ॥

**सं चे॑ध्यस्वाग्ने॒ प्र च॑ बोधयैनमु॒च्च॑ तिष्ठ मह॒ते सौ॑भगाय । मा च॑ रिषदुपस॒त्ता ते॑ अग्ने ब्र॒ह्माण॑स्ते य॒शस॑: सन्तु॒ मान्ये ॥ २ ॥**

(१) सं च । समिद्ध्यस्व च हे अग्ने । प्रबोधय च अवगतार्थञ्च एनं यजमानङ्कुरु । यथाग्निश्चेतव्य इति । उत्तिष्ठ च महते सौभगाय ऐश्वर्याय । किञ्च मा च रिषत् मा च वि-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । सं च । हे अग्ने समिध्यस्व च एनं यजमानं प्रबोधय च अवगतार्थं कुरु यथाग्निश्चेतव्य इति महते सौभाग्याय । ऐश्वर्याय उत्तिष्ठ च किञ्च ते तव उपसत्ता उपसदनस्य कर्ता यजमानः मा रिषत मा विनश्यतु च स ह्यग्निमुपसीदति हे अग्ने ते तव संबन्धिनो ब्रह्माणः ऋत्विग्यजमानाः यशसः यशस्विनः सन्तु मत्वर्थीयप्रत्ययलोपः । मान्ये यशस्विनः मा सन्तु त्वामग्ने हे अग्ने इमे ब्राह्मणा ऋत्विजः त्वा वृणुते वृण्वन्ति वृङ् संभक्तौ यागाय अत एव हे अग्ने संवरणैः ब्राह्मणैः सहैकस्मिन् वरणे सति नोऽस्माकं शिवः शान्तो भव नः सपत्नहा अभिमातिजिच्च भव अभिमातिशब्दोऽपि शत्रुवचनः अत एवं व्याख्या सपत्नानां हन्ता भव हतावशिष्टानां जेता भवेति किञ्च स्वे गये निजे गृहे जागृहि अप्रयुच्छन् अप्रमाद्यन् तद्गतमना इत्यर्थः युच्छ प्रमादे ॥ २ ॥

नश्यतु उपसदनस्य कर्ता यजमानः स ह्यग्निमुपसीदति । ते तव । हे अग्ने । किञ्च । ब्रह्माणस्ते ब्राह्मणाश्च ऋत्विग्यजमानाः तव सम्बन्धिनः । यशसः सन्तु । मत्वर्थीयलोपः यशस्विनः सन्तु । मा अन्ये यशस्विनः सन्तु अयजमाना अलङ्करिष्णवः ॥ २ ॥

व्यवहिताश्चेति पाणिन्युक्तेः ( १, ४, ८२ ) उमसर्गक्रिययोर्व्यवधानम् हे अग्ने ! समिध्यस्व च दीप्यस्व व्यत्ययेन श्यन् एनं यजमानं प्रबोधय च ज्ञातार्थं कुरु अग्निश्चेतव्य इति । महते सौभगाय ऐश्वर्य्याय उत्तिष्ठ च ऐश्वर्य्यं दातुमुद्यमं कुर्वित्यर्थः । किञ्च हे अग्ने ! ते तव उपसीदतीत्युपसत्ता तृच् सेवको मा रिषत् च मा नश्यतु च यजमानो ह्यग्निमुपसीदति । ते तव ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यशसः यशस्विनः सन्तु मत्वर्थीयप्रत्ययलोपः । मा अन्ये अन्ये अयज्वानो मा यशसः सन्तु ॥ २ ॥

त्वाम॑ग्ने वृणते ब्रा॒ह्मणा इ॒मे शि॒वो अ॑ग्ने सं॒वर॑णे भवा नः । स॒पत्न॒हा नो॑ अभिमाति॒जिच्च॒ स्वे गये॑ जागृ॒-ह्यप्र॑युच्छन् ॥ ३ ॥

त्वामग्ने । हे अग्ने त्वाम् इमे ब्राह्मणाः ऋत्विजः वृणते वृण्वन्ति यागाय । यत एवमतः प्रार्थयामः । शिवः शान्तः हे अग्ने संवरणे ब्राह्मणैः सह एकस्मिन्वरणे । भव नः अस्माकम् । त्वन्देवो वयञ्च मर्त्या इत्यभिप्रायः । सपत्नहा नो अभिमातिजिच्च । सपत्नानां हन्ता च भवास्माकम् अभिमातिशब्दोऽपि शत्रुवचनः । अत एवं व्याख्यायते । शपत्नानां हन्ता भव हतावशिष्टानां जेता च भवेति । किञ्च । स्वे गये स्वकीये गृहे जागृहि अप्रयुच्छन् । युच्छी प्रमादे । अप्रमाद्यन् उद्गतमना इत्यर्थः ॥ ३ ॥

हे अग्ने ! इमे ब्राह्मणाः ऋत्विजः त्वा त्वां वृणते वृङ् सम्भक्तौ यागाय भजन्ति अतो हे अग्ने ! संवरणे ब्राह्मणैः सहैकस्मिन् वरणे

सति नोऽस्माकं शिवः शान्तो भव । अस्माकं सपत्नहा अभिमातिजिच्च भव अभिमातिरपि शत्रुः तत एवं व्याख्या सपत्नानां हन्ता भव हतावशिष्टानां जेता च भव । किञ्च स्वे गये निजे गृहे जागृहि सावधानो भव किं कुर्वन् अप्रयुच्छन् अप्रमाद्यन् ॥ ३ ॥

इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन् पूर्वचितो निकारिणः । क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥ ४ ॥

(१) इहैव । इह एव कर्मणि वर्तमानानामस्माकम् हे अग्ने अधिधारय रयिम् उपरि निक्षिप्तधनम् । किञ्च । मा त्वां निक्रन्नीचैः कुर्वन्तु अवज्ञया पश्यन्तु । पूर्वचितः पूर्वं ये अग्निश्चितवन्तः । निकारिणः । ज्ञानकर्मसमुच्चयातिशयेन येऽन्योन्यजन्मानि । नीचैः कुर्वन्ति । किञ्च । क्षत्रम् । हे अग्ने सुयमं साधु यन्तृ अस्तु तुभ्यन्तव । किञ्च उपसत्ता यजमानः सद्युपसदनं करोत्यग्नेः वर्द्धतान्ते तव । अनिष्टृतः । स्तृ हिंसायाम् अनुपहिंसितः सन् ॥ ४ ॥

हे अग्ने ! इहैवास्मास्वेव यजमानेषु रयिं धनं त्वमधिधारय अधिकं देहि । किञ्च पूर्वं चिन्वन्ति पूर्वचितः पूर्वमग्निं चितवन्तोऽत एव निकारिणः नितरां यज्ञकरणशीलाः त्वा त्वां मा निक्रन् मा

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । इहैव । इह एव कर्मणि वर्तमानानाम् अस्माकं हे अग्ने रयिं धनम् अधिधारय उपरि निक्षिप किञ्च पूर्वचितः पूर्वं ये अग्निं चितवन्तः निकारिणे ज्ञानकर्मसमुच्चयेन नितरां करणशीलाः त्वा मा निक्रन् मा नीचैः कुर्वन्तु अवज्ञया पश्यन्तु किञ्च हे अग्ने क्षत्रं ते तुभ्यं तव सुयमं साधुयन्तृ अस्तु । ते तव उपसत्ता यजमानः अनिष्टृत स्तृ हिंसायाम् । अनुपहिंसितः सन् वर्द्धताम् ॥ ४ ॥

नीचैः कुर्वन्तु मावजानन्त्वित्यर्थः करोतेः शपि लुप्ते लङि प्रथमबहुवचने रूपम् । किञ्च हे अग्ने ! क्षत्रं क्षत्रजातिः तुभ्यं तव सुयममस्तु सुखेन यन्तुं शक्यं सुयमं सुखेन वशीकर्तुं शक्यमस्तु ईषद्-दुःसुष्विति ( पा ३, ३, १२६ ) सुपूर्वाद् यमेः खल् । किञ्च ते तव उपसत्ता उपसदनकर्ता यथा अनिष्टृतः अनुपाहिंसितः सन् वर्धताम् धनपुत्रादिभिरेधताम् स्तृञ् हिंसायां निष्ठान्तः ॥ ४ ॥

क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व । सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥

( १ ) क्षत्रेणाग्ने । क्षत्रेण सम्पाद्यात्मानम् हे अग्ने । स्वायुः साध्वायुः सन् संरभस्व यज्ञं वोढुम् । मित्रेण च सम्पाद्यात्मानं मित्रधेये यतस्व । यथा मित्राणि धार्यन्ते तथा यत्नङ्कुरु । किञ्च । सजातानां समानजन्मनां मध्यमस्था एधि मध्यमस्थानो भव । यथा सजाता अपि यज्वानो भवन्ति तथा स्यादित्याभिप्रायः । किञ्च । राज्ञां हे अग्ने विहव्यः विविधमाह्वातव्यः दीदिहि दीप्यस्व इह यज्ञगृहे । यथा राजानोऽपि यज्वानो भवेयुः तथास्त्वित्यभिप्रायः ॥ ५ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । क्षत्रेणाग्ने । हे अग्ने क्षत्रेणात्मानं संपाद्य स्वायुः । साध्वायुः सन् संरभस्व समारभस्व यज्ञं वोढुं मित्रेणात्मानं संपाद्य मित्रधेये मित्राधाने यतस्व यथा मित्राणि धार्यन्ते तथा प्रयत्नं कुरु । किञ्च सजातानां समानजन्मनां मध्यमस्थाः मध्यस्था एधि भव सर्वैः सजातैः सेवितः यथा सजाता अपि यज्वानो भवन्ति तथा स्यादिति भावः । हे अग्ने राज्ञां विहव्यः विविधमाह्वातव्यः सन् इह यज्ञगृहे दीदिहि दीप्यस्व यथा राजानोऽपि यज्वानो भवेयुस्तथास्त्वित्यर्थः ॥ ५ ॥

हे अग्ने ! त्वं क्षत्रेण संरभस्व समारभस्व ण्यन्तो बोध्यः क्षत्रेण समारम्भय यज्ञमिति शेषः क्षत्रियान् यज्ञं कारयेत्यर्थः। कीदृशस्त्वं स्वायुः शोभनमायुः जीवनं यस्य सः यद्वा आयुः उकारान्तो मनुष्यवाची शोभन आयुर्मनुष्यो यजमानो यस्य स स्वायुः। किञ्च हे अग्ने ! मित्रेण सूर्य्येण सह वर्तमानः सन् मित्रधेये यतस्व धातुं धारयितुं योग्यं धेयं मित्रस्य यजमानस्य धेयं कार्य्यं यागलक्षणं तत्र यत्नं कुरु यजमानेन यज्ञं कारय। किञ्च सजातानां समानजन्मनां मध्यमस्थाः मध्यमे तिष्ठतीति क्विप् मध्यमस्थ एधि भव सजाता अपि यज्वानो भवान्त्वित्यर्थः। किञ्च हे अग्ने ! इह यज्ञगृहे दीदिहि दीप्यस्व दीव्यतेर्व्यत्ययेन शपः श्लुः श्लाविति ( पा० ६, १, १० ) द्वित्वम् तुजादीनां दीर्घ इति (पा० ६, १, ७) अभ्यासदीर्घः। कीदृशस्त्वम् राज्ञां विहव्यः कर्तरि षष्ठी राजभिर्विविधं ह्वयते आह्वयते विहव्यः राजभिर्यज्ञे आह्वातव्यः॥ ५॥

अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यं सहवीराँ रयिं दाः॥ ६॥

(१)अतिनिहः। अतिक्रम्य निहन्तॄन् निपूर्वस्य हन्तेर्डः प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनं वाक्यसम्बन्धात्। अतिस्रिधः। स्रेधतिः कुत्सितकर्मा। अतिक्रम्य च कुत्सिताच-

(१) अत्र वाराणसी० लि पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। अतिनिहः। निहः निहन्तॄन् अतिक्रम्य निपूर्वस्य हन्तेः डप्रत्ययः। प्रथमैकवचनस्थाने द्वितीयाबहुवचनं वाक्यसबन्धात्। स्रिधः स्रिधति कुत्सितकर्मा कुत्सिताचरणानतिक्रम्य अति अचितिरन्यमानस्कता तामतिक्रम्य अरातिरनुपजीव्यो जनः तं चातिक्रम्य हे अग्ने विश्वातिदुरितानि सहस्व हिः। अनर्थकः अभिभव अथानन्तरम् अस्मभ्यं सह वीरान् पुत्रान् रयिं धनं दाः दद्याः॥ ६॥

रणान् । अत्यचित्तिम् आचितिरन्यमनस्कता । अतिक्रम्य चान्यमनस्कताम् अत्यरातिम् । अरातिरनुपजीव्यो जनः तञ्चातिक्रम्य हे अग्ने । विश्वा ह्यग्ने दुरितानि सहस्व । विश्वानि दुरितानि सहस्व अभिभव हिरनर्थकः अथानन्तरम् अस्मभ्यं सहवीरां सपुत्रां रयिन्धनं दाः दद्याः ॥ ६ ॥

हे अग्ने हि निश्चितं विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि त्वं सहस्व अभिभव निवर्त्तयेत्यर्थः । किं कृत्वा निहः निहन्ति निहः निपूर्वाद्धन्तेर्डप्रत्ययः सुपां सुलुगिति शसः सु आदेशः निहान् हन्तॄन् अतिक्रम्य । स्रेधतिःकुत्सितकर्मा स्रेधन्ति स्रिधः क्विप् कुत्सिताचारान् अतिक्रम्य । अचित्तिमन्यमनस्कतामतिकम्य । न रातिर्दानं यस्य सोऽरातिस्तमदातारमतिक्रम्य । दुष्टान् सर्वानतिक्रम्य । पापं नाशयेत्यर्थः । किञ्च अथानन्तरं हे अग्ने अस्मभ्यं सहवीरां वीरैः पुत्रैः सहितां रयिं दाः देहि लुङ् ॥ ६ ॥

अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह । विश्वा आशाः प्रमुञ्चन् मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे ॥ ७ ॥

(१)अनाधृष्यः । यस्त्वमनाधृष्यः । अशक्यः खलीकर्तुम् । जातवेदाः जातप्रज्ञानश्च अनिष्टृतः अनुपहिंसितश्च । स्तृणातेरेत-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति । तद्यथा । अनाधृष्यः । हे अग्ने त्वम् इह कर्मणि वर्तमानः विश्वा आशाः सर्वा दिशः प्रति दीदिहि दीप्यस्व किंभूतः अनाधृष्यः अशक्यः जातवेदाः जातप्रज्ञानः अनिष्टृतः अनुपहिंसितः स्तृणातेरूपम् । विराट् राजृ दीप्तौ विराजनशीलः क्षत्रं बिभर्त्तीति क्षत्रभृत् किञ्च मानुषीः मनुष्यसंबाधिनीः भियः प्रमुञ्चन् जन्मजरामृत्युदैन्यशोकादिकाः विक्षिपन् शिवेभिः शान्तैः अर्चिभिः अद्य नोऽस्मान् परिपाहि किमर्थं वृधे वर्द्धनाय ॥ ७ ॥

द्रूपम्। विराट् च राजृ दीप्तौ। विराजनशीलः विराट् क्षेत्रभृच्च। तन्त्वां ब्रवीमि हे अग्ने दीदिहि दीप्यस्व इह कर्मणि वर्तमानः विश्वाः सर्वा आशा दिशः। किञ्च प्रमुञ्चन्मानुषीर्भियः। विक्षिपन्मानुषानि भयानि जन्मजरामृत्युशोकदैन्यादीनि। शिवेभिः शिवैः शान्तैः आर्चेभिः अद्यास्मिन्द्यवि। परिपाहि नः सर्वतो गोपायास्मान्। किमर्थम् वृधे वर्द्धनाय ॥७॥

हे अग्ने! इह कर्मणि वर्त्तमानस्त्वं विश्वा आशाः दीदिहि सर्वाः दिशः प्रकाशय। कीदृशस्त्वम् अनाधृष्यः पराभवितुमशक्यः। जातवेदाः जातं वेदा धनं ज्ञानं वा यस्मात्। अनिष्टृतः न हिंसितः केनापि स्तृ हिंसायां क्तान्तः। विराट् विविधं राजमानः क्षत्रभृत् क्षत्रं बिभर्त्ति पुष्णाति। किञ्च मानुषीः मनुष्यसम्बधिनीर्भियः जन्मजरामृतिदैन्यशोकादिकाः प्रमुञ्चन्निवर्त्तयन् सन् शिवेभिः शिवैः शान्तैस्तेभिरद्य वृधे वृद्ध्यै नोऽस्मान् परिपाहि। वर्धनं वृत् तस्मै वृधे सम्पदादित्वाद्भावे क्विप्॥ ७॥

बृहस्पते सवितर्बोधयैनꣳसꣳशितं चित् संतराꣳसꣳशिं शाधि। वर्धयैनं महते सौभगाय विश्वं एनमनुमदन्तु देवाः॥ ८॥

(१) बृहस्पते सवितः। हे बृहस्पते हे सवितः। बोधय कामेष्ववगतार्थं कुरु। एनं यजमानम् किञ्च। संशितञ्चित्। चिच्छ-

(१) अत्र वाराणसी० लि पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति तद्यथा। बृहस्पते। हे बृहस्पते हे सवितः एनं यजमानं बोधय कामेष्ववगतार्थं कुरु संशितं चित् चिच्छब्दोऽप्यर्थे संशितव्रतमपि यजमानं संतरा अतितरा संशि शाधि शिक्षय एनं महते सौभाग्याय वर्द्धय विश्वेदेवा एनं यजमानम् अनुमदन्तु उत्साहयन्तु बृहस्पतिसवितृशब्दाभ्यामग्निरेवोच्यते सामिधेन्यङ्गभूतः अथवा वाक्यद्वयम् एकेन बृहस्पतिरुक्तः। एकेन सविता ॥८॥

र्थदोऽप्यर्थं संशितव्रतमपि यजमानम् सन्तरामतितराम् संशि शाधि शिक्षय । वर्द्धय च एनं यजमानम् महते सौभगाय ऐश्वर्याय । विश्वे च देवा एनं यजमानम् अनुमदन्तु । उत्साहयन्तु । बृहस्पतिशब्देन सवितृशब्देन चात्राग्निरेवोच्यते । अथवा वाक्यद्वयम् एकेन बृहस्पतिरुक्तः अपरेण सविता ॥८॥

हे बृहस्पते ! हे सवितः ! एनं यजमानं बोधय कर्माभिज्ञं कुरु किञ्च चिदप्यर्थे संशितं चित् संशितं शिक्षितमपि संतरामतितरां संशि शाधि शिक्षय शासेः शपः श्लौ द्वित्वम् छान्दसमभ्यासस्यैत्वम् । किञ्च महते सौभगाय ऐश्वर्याय एनं वर्धय । विश्वे देवाः एनं यजमानमनुमदन्तु तृप्ता हृष्टा वा भवन्तु । बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरेवोच्यते वाक्यद्वयं वा एकेन बृहस्पतिरुक्तोऽन्येन सविता ॥ ८ ॥

अमुत्र भूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्माद् देवानामग्ने भिषजा शचीभिः ॥ ९ ॥

(१)अमुत्र भूयात् । अमुत्रामुष्मिँल्लोके यत् शरीरम्भूयात् । अध अथ यत् यमस्य सदने च शरीरं भूयात् । तस्मात् च हे

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अमुत्र भूयात् । अमुत्र अमुष्मिन् लोके भवनम् अमुत्र भूयं भुवो भावे इति क्यप्प्रत्ययः तस्मात् परलोकगमनान्मरणादित्यर्थः अमुञ्चः विमुञ्च मरणाद्रक्षेत्यर्थः । यत् भयं तस्मादपि विमुञ्च अध अथ यत् यमस्य सदने यमलोके अभिशस्तेः अभिशंसनादपि अमुञ्चः विमुञ्च लकारव्यत्ययः किञ्च हे अग्ने देवानां भिषजौ अश्विनौ अस्मान् यजमानान् शचीभिः कर्मभिः मृत्युं प्रत्यौहतां प्रतिप्रेरयताम् अन्यत्र नयताम् अत्रापि बृहस्पतिरग्निरेव सामिधेनी प्रकरणस्याग्नेयत्वात् ॥ ९ ॥

बृहस्पते । अभिशस्तेः अभिशंसनाच्च अमुञ्चः । किञ्च प्रत्यौहतां प्रतिप्रेरयताम् अन्यत्र नयताम् अश्विनौ मृत्युम् अस्माद्यजमानात् कथंभूतावश्विनौ । देवानां भिषजौ हे अग्ने शचीभिः। अत्रापि बृहस्पतिशब्द आमन्त्रितोऽग्निशब्दस्य द्रष्टव्यः सामिधेनी प्रकरणस्याग्नेयत्वात् । ननु बृहस्पतिशब्दो नैघण्टुको नचाग्निशब्दे इति ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत् तेनाग्नेय्यो यत्प्रजापतिॅं समैधत तेन प्राजापत्या इति श्रुतेः प्रजापतेः सर्वदेवात्मकत्त्वात् । तस्मादेनं प्रजापतिॅं सन्तमग्निरित्याचक्षते इति श्रुतेरदोषः ॥ ९ ॥

हे बृहस्पते ! त्वममुत्र भूयादमुञ्चः अमुत्र परलोके भवनममुत्रभूयम् भुवो भाव इति ( पा० ३, १. १०७ ) क्यप् परलोकगमनान्मरणात् मुञ्च मरणाद्रक्षेत्यर्थः लकारव्यत्ययः । अध अथ यत् यमस्य भयं परलोकभयं नरकपातादि तस्मादपि मुञ्च । किञ्च अभिशस्तेःअभिशापादपि लोकापवादादपि मुञ्च । देवानां भिषजा भिषजौ अश्विना अश्विनौ अस्मात् यजमानात् मृत्युं प्रत्यौहतां निवर्त्तयतां कैः शचीभिः कर्मभिः कृत्वा । अत्र बृहस्पतिरग्निरेव सामिधेनीप्रकरणस्याग्नेयत्वात् ॥ ९ ॥

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

उद्वयमिति व्याख्यातम् ॥ १० ॥

व्याख्याता (२०,२१) ॥ १० ॥

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीॅंष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः ॥ ११ ॥

(१)उद्ध्र्वा अस्य । द्वादश आप्रियः प्रयाजदेवताः उष्णिहः

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित

अष्टम्याद्ये द्वे गायत्र्यौ । ता विषमा विषमाक्षरपादा इत्यादिश्रु-तेः । ता आग्नेय्यः प्राजापत्त्याः । यदग्निरपश्यत्तेनाग्नेय्यः यत्प्र-जापतिमाप्रीणात्तेन प्राजापत्त्या इति च श्रुतिः । अग्निर्ऋ-षिः । प्रजापतिश्चाग्निरूपेण संस्तूयते ॥ अस्याग्नेः । प्रजापतिरूपेण संस्तूयमानस्य ऊर्ध्वाः प्रगुणाः दे वमार्गेण यायिन्यः समिधो भवन्ति । ऊर्ध्वा शुक्रा । ऊर्ध्वानि च शुक्रा शुक्रानि शोचींष्यर्चींषि भवन्ति । द्युमत्तमा दीप्त मत्तमा च वीर्यवत्तमानि चेत्यर्थः । सुप्रतीकस्य सुमुखस्य यजमानस्य । सूनोः । स ह्येनञ्जनयति । य इत्थम्भूतोऽग्निस्तं वयं स्तुम इति वाक्यशेषः ॥ ११ ॥

द्वादशाप्रीदेवत्या उष्णिहो विषमपादा आग्नेय्योऽग्निना दृष्टाः । अग्निः प्रजापतित्वेन स्तूयते तेन प्राजापत्या अपि । ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमप्रीणात्तेन प्राजा-पत्या इति श्रुतेः । अस्याग्नेः समिधः ऊर्ध्वाः देवगामिन्यो भवन्ति शोचींषि तेजांस्यपि ऊर्ध्वा ऊर्ध्वानि भवन्ति । कीदृशानि शोचींषि शुक्रा शुक्राणि शुद्धा शुद्धानि । द्युमत्तमा द्यौःदीप्तिः प्रकाशो येषां तानि द्युमन्ति अत्यन्तं द्युमन्ति द्युमत्तमानि विश्वप्रकाशकानि । कीदृशस्याग्नेः सुप्रतीकस्य सुष्ठु प्रतीकं मुखं यस्य । तथा सूनोः

---

पु० नास्ति । तद्यथा । उर्ध्वा । अस्य द्वादश आप्रियः प्रयाज देवताः उष्णिहः अष्टम्याद्ये द्वे गायत्र्यौ ता विषमपदा इत्या-दिश्रुतिः । ता आग्नेय्यः प्राजापत्याः यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजाप-त्तिमप्रीणात्तेन प्राजापत्या इति श्रुतिः । अग्निर्ऋषिः प्रजापतिश्चाग्नि-रूपेण स्तूयते अस्याग्नेः प्रजापतिरूपेण स्तूयमानसमिधः उर्ध्वाः प्र-गुणा देवमार्गयायिन्यो भवन्ति द्युमत्तमा दीप्तिमत्तमानि शुक्रा शुक्रानि शोचींषि अर्चींषि उर्ध्वानि भवन्ति किंभूतस्यास्य सुप्रतकिस्य कल्या-पामुखस्य यजमानस्य सूनोः । यदेनं जनयति तेनास्यैष सूनुः य ईदृ-शस्तं स्तुम इति शेष ॥ ११ ॥

यजमानपुत्रस्य स यदेनं जनयति तेनास्यैष सूनूरिति श्रुतेः । य ईदृशस्तं स्तुम इति शेषः ॥ ११ ॥

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथो अनक्तु मध्वा घृतेन ॥ १२ ॥

(१)तनूनपात् । आज्यस्य अग्नेर्वा यः तनूनाङ्गवां नपात् आज्याभिप्रायमेतदुच्यते । अथवा योऽग्निःतनूनामपां नपात् पौत्रः । असुरः असुमान् प्राणवान् रो मत्वर्थीयः । यद्वा असुरः वसुरः धनवान् अस्मिन्पक्षे आदिलोपः । विश्ववेदाः । सर्वधनः सर्वज्ञो वा । देवो दानादिगुणयुक्तः । देवेष्वपि देवः दीप्तिमान् । य ईदृशः सः पथः यज्ञमार्गान् अनक्तु । मध्वा मधुस्वादुना घृतेन । इत्थन्नामप्रभूतं यज्ञे घृतमस्तु येन मार्गा अभ्यक्ताः स्युरित्यभिप्रायः ॥१२ ॥

देवोऽग्निः मध्वा मधुना मधुरेण घृतेन पथो यज्ञमार्गाननक्तु । मध्वेति नुमभावः अनित्यमागमशासनमित्युक्तेः । पथोऽनक्तु इत्यत्र प्रकृत्यान्तः पादमव्यपर इति ( पा० ६, १, ११५ ) सन्ध्यभावः यज्ञे बहु घृतमस्तु येन मार्गा घृताभ्यक्ताः स्युरिति भावः । कीदृशो देवः तनूनपात् तनूनामपां नपात् पौत्रः अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरिति अपां पौत्रः । असुरः असवोऽस्य सन्ति प्राणवान् रो मत्वर्थः । विश्ववेदाः सर्वधनः । देवेषु अपि देवः दीप्तिमान् श्रेष्ठः ॥ १२ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । तनूनपादसुरः । तनूनाम् अपां नपात् पौत्रः अग्निः अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरित्याभिप्रायेणाग्नेः पौत्रत्वम् असुरः प्राणवान् रो मत्वर्थे यद्वासुरः धनवान् अस्मिन् पक्षे आद्यलोपः विश्ववेदाः सर्वधनः सर्वयज्ञो वा देवो दानादिगुणयुक्तः देवेष्वपि देवः दीप्तिमान् ईदृशः सः मध्वा साधुना घृतेन पथः यज्ञमार्गान् अनक्तु यज्ञेऽतिप्रभूतं घृतमस्तु येन मार्गा आज्याभ्यक्ताः स्युरिति भावः ॥ १२ ॥

मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसोऽअग्ने ।
सुकृद्देवः सविता विश्ववारः ॥ १३ ॥

(१) मध्वा यज्ञम् । हे अग्ने यस्त्वं मध्वा मधुस्वादुना घृतेन यज्ञं नक्षसे व्याप्नोषि । नक्षतिर्व्याप्तिकर्मा । कथंभूतः । प्रीणानः देवान् । नराशंसश्च । नरैर्ऋत्विग्भिर्यः शंस्यते स्तूयते स तथोक्तः । सुकृच्च साधुकृच्च । देवः सविता । विश्ववारः सर्वस्य वरणीयश्च भवसि । तं त्वां स्तुम इति शेषः ॥ १३ ॥

हे अग्ने ! त्वं मध्वा स्वादुना घृतेन यज्ञे नक्षसे व्याप्नोषि नक्षतिर्व्याप्तिकर्मा । कीदृशस्त्वम् प्रीणानः प्रीणीते प्रीणानः देवान् तर्पयन् । नराशंसः नरैर्ऋत्विग्भिराशंस्यते स्तूयते नराशंसः । सुकृत् शोभनकारी । देवः दीप्तिमान् । सविता विश्वस्योत्पादकः । विश्वेन व्रियते सेव्यते विश्ववारः विश्वं वृणोति अङ्गीकरोतीति वा कर्मण्यण्, सर्वस्य वरणीयः सर्वाङ्गीकर्त्ता वा ॥ १३ ॥

अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा ।
अग्निꣳ स्रुचोऽअध्वरेषु प्रयत्सु ॥ १४ ॥

(२) अच्छायम् । अच्छाभेराप्तुमिति शाकपूणिः अच्छ एति

---

(१) अत्र वाराणसी॰लि॰पु॰ संमतोऽयं पाठक्रमः मुम्बई मु॰पु॰ नास्ति । तद्यथा । मध्वा यज्ञम् । हे अग्ने त्वं मध्वा स्वादुना घृतेन यज्ञं नक्षसे व्याप्नोषि । नक्षतिर्व्याप्नोतिकर्मा किं त्वं प्रीणानः देवान् नराशंसः नरैर्ऋत्विग्भिः शंस्यते स्तूयते इति नराशंसः । सुकृत् साधुकृत् देवो दीप्तिमान् सविता विश्वस्य विश्ववारः सर्वस्य वरणीयः ॥ १३ ॥

(२) अत्र वाराणसी॰ लि॰ पु॰ संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु॰ नास्ति तद्यथा । अच्छायम् । अयम् अध्वर्युःशवसा ज्ञानबलयुतः इडानः स्तुवन् वह्निर्वोढा घृतेन नमसा अन्नेन हविर्लक्षणेन अभ्युद्यतेन स्रुचो गृहीत्वा अध्वरेषु प्रयत्सु वर्तमानेषु अग्निम् अच्छ । एति अभ्येति ॥ १४ ॥

अभ्येति। अग्निम् अयमध्वर्युः। शवसा स्वकीयेन प्रज्ञानबलेन युक्तः। घृतेन च गृहीतेन इडानः स्तुवन्। बन्हिर्वोढा। नमसा चान्नेन हविर्लक्षणेनाभ्युद्यतेन स्रुचः बाहुभ्यां गृहीत्वा। अध्वरेषु प्रयत्सु यज्ञेषु वर्तमानेषु॥ १४॥

अयमध्वर्युः अध्वरेषु प्रयत्सु वर्त्तमानेषु सत्सु अग्निमच्छ एति अभ्येति अच्छाभेराप्तुमिति शाकपूणिः ( निरु० ५, २८ )। कीदृशः शवसा ज्ञानबलेन ईडानः इड स्तुतौ शानच् तथा वह्निः वहति यज्ञभारामिति वह्निः यज्ञनिर्वाहकः। किं कृत्वा घृतेन नमसा अन्नेन हविर्लक्षणेनोपलक्षिताः स्रुचो जुह्वाद्या गृहीत्वेति शेषः॥ १४॥

**स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः। वसुश्चेतिष्ठो वसुधातमश्च॥ १५॥**

(१) स यक्षत्। स एवाध्वर्युः यक्षत्। यजतु। अस्याग्नेः सम्बन्धिमहिमानं महाभाग्यम्। स ईम् स एव च मन्द्रा मदनीयान्यन्नानि यजतु। कथंभूतस्याग्नेः सुप्रयसः। प्रय इत्यन्ननाम शोभनानि प्रयांस्यन्नानि हविर्लक्षणानि यस्य स सुप्रयाः तस्य सुप्रयसः। अथ कस्मादन्यदेवताः परित्यज्याग्नेर्महिमानं यक्षदित्युच्यत इति चेत् अत आह वसुश्चेतिष्ठो वसुधातमश्च। यतोऽसौ वसु वासयिता चेतिष्ठोऽतिशयेन चेतयिता। कृताकृतगुणविशेषः वसूनां धनानां दातृतमश्च अतः अग्निस्तूयते॥ १५॥

सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु सिब्बहुलं लेटि ( पा० ३, १, ३४ ) लेटोऽडाटौ इतश्च लोपः परस्मैपदेष्विति ( पा० ३, ४, ९४, ९७ ) सूत्रैर्यक्षदिति रूपम्। सः ईम् स च मन्द्रा मन्द्राणि मदजनकानि हवींषि च यजतु ददातु। कीदृशस्याग्नेः सुप्रयसः

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति। तद्यथा। यक्षत्। स अध्वर्युः अस्याग्नेर्महिमानं भाग्यं यक्षत् यजतु स ईम् एव मन्द्रा मदनीयान्यन्नानि यजतु किम्भूतस्याग्नेः सु-

प्रयस् इत्यन्ननाम ( निघ० २, ७, ९ ) शोभनानि प्रयांसि यस्य सुप्रयास्तस्य । कीदृशस्याग्नेर्महिमानं यजतु यो वसुः वासयिता । चेतिष्ठः अतिचेतयिता वसुधातमः वसूनां धनानां दातृतमः किबन्ता-त्तमप् ॥ १९ ॥

द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः ॥ १६ ॥

( १ ) द्वारो देवीः । अस्याग्नेः प्रथमम् द्वारः देव्यः व्रता व्रतानि कर्माणि ददन्ते धारयन्ति । ताभ्यः अनु पश्चात् । विश्वे विश्वेदेवाः देवशब्दलोपः । व्यवहितपदप्रायोऽर्द्धर्चः । कथम्भूता द्वारः । उरुव्यचसः बहुव्यञ्जनाः । धाम्ना स्थानेन ऋत्विक्सम्बन्धिना पत्यमानाः । पत ऐश्वर्ये ऐश्वर्यं कुर्वाणाः । या इत्थम्भूता यज्ञगृहद्वारस्ता वयं स्तुम इति शेषः ॥ १६ ॥

द्वारो देव्योऽस्याग्नेर्व्रता व्रतानि कर्माणि ददन्ते धारयन्ति दद दाने धृतौ च । अनु पश्चात् विश्वे सर्वे देवा अग्निव्रतानि ददन्ते । कीदृश्यो द्वारः उरुव्यचसः उरु विशालं व्यचोऽवकाशो यासां ताः विशालान्तराः । तथा धाम्ना स्थानेन पत्यमानाः पत ऐश्वर्ये

---

प्रयसः प्रय इत्यन्ननाम शोभनानि प्रयांसि यस्य स सुप्रयाः तस्य । ननु कुतोऽन्यदेवान् परित्यजाग्नेर्महिमानं यजत्वित्युच्यते इत्यत आह । सुरिति यतोऽसौ वसुः वासयिता ता चेतिष्ठः अतिशयेन चेतयिता । कृतगुणविशेषः । च पुनः वसुधातमः वसूनां धनानां दातृतमः ॥ १९ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । द्वारो देवी । द्वारो देव्यः अस्य अग्नेः व्रता व्रतानि कर्माणि प्रथमं ददन्ते धारयन्ति ताभ्यः अनु पश्चात् विश्वदेवा ददन्तेः देवशब्दलोपः । ददङ् दाने धृतौ च किंभूता द्वारः । उरुव्यचसः बहुव्यञ्जनाः धाम्ना स्थानेन ऋत्विक्संबन्धिना पत्यमानाः ऐश्वर्यं कुर्वाणाः पत ऐश्वर्ये । दिवादिरात्मनेपदी या ईदृश्यस्तास्तूम इति शेषः ॥ १६ ॥

दिवादिरात्मेनपदी पत्यन्ते ईशते ताः पत्यमानाः स्थानैरैश्वर्य्यं कुर्वाणाः ऋत्विजां स्थानानि ददाना इत्यर्थः ताः स्तुमः ॥ १६ ॥

ते अस्य योषणे दिव्ये न योना उषासानक्ता । इमं यज्ञमवतामध्वरं नः ॥ १७ ॥

(१)ते अस्य । ते उषासा नक्ता उषाश्च नक्ता च रात्रिः । अस्याग्नेः योना योनौ आहवनीयाख्ये स्थितस्य योषणे भार्ये । दिव्ये दिविभवे नकारोऽनर्थकः । ते इमं यज्ञम् अवतां सुगुप्तं कुरुताम् । अध्वरं सोमञ्च नोऽस्माकम् संपादयतामिति शेषः ॥ १७ ॥

उषाश्च नक्ता रात्रिश्च उषासानक्ता उषस उषासादेशो द्वन्द्वे ते प्रसिद्धे उषासानक्ता अहोरात्रिदेव्यो नोऽस्माकमिमं यज्ञमवतां रक्षताम् । कीदृश्यौ ते अस्याग्नेः योषणे भार्य्ये । तथा दिव्ये दिवि भवे स्वर्गस्थे । कीदृशस्याग्नेः योनौ गार्हपत्यस्थाने स्थितस्येति शेषः नकारः पादपूरणः । कीदृशं यज्ञम अध्वरम् ध्वृ कौटिल्ये न ध्वरतीत्यध्वरस्तम् अकुटिलम् शास्त्रोक्तमित्यर्थः ॥ १७ ॥

दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभिगृणीतम् । कृणुतं नः स्विष्टिम् ॥ १८ ॥

(२) दैव्यो होतारा । अयश्चाग्निरसौ च मध्यमः हे दैव्यौ

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । ते अस्य । ते उषासा नक्ता रात्रिः योनौ आहवनीयाख्ये स्थाने स्थितस्याग्नेर्दिव्ये दिवि भवे योषणे भार्ये तकारोऽनर्थकः ते इमं यज्ञम् अवतां गुप्तं कुरुतां नोऽस्माकमध्वरं सोमं संपादयतामिति शेषः ॥ १७ ॥

(२) दैव्या होतारा । अयं चाग्निरसौ च मध्यमः । हे दैव्यौ होतारौ नोऽस्माकमध्वरम् उर्ध्वं कृणुतं यज्ञं देवमार्गयायिनं कुरुतम् । अग्नेर्जिह्वा अभिगृणीतम् अग्निमुखं साधु वर्णयतम् नः स्विष्टिं साधु यजनं च कुरुतम् ॥ १८ ॥

होतारौ । ऊर्ध्वमध्वरं नः कुरुतम् देवयानयायिनं कुरुतमित्य-भिप्रायः । अग्नेर्जिह्वामाभिगृणीतम् अग्निमुखं साधु वर्णयत मित्यर्थः कृणुतं कुरुतञ्च नः अस्माकं स्विष्टिम् । साधु-यजनम् ॥ १८ ॥

अयं चाग्निरसौ च मध्यमो वायुः हे दैव्या होतारौ अग्निवायू ! युवां नोऽस्माकं स्विष्टिं शोभनं यजनं कृणुतं कुरुतम् । किञ्च नोऽस्माकमध्वरं यज्ञमूर्ध्वं कृणुतं देवमार्गगामिनं कुरुतम् । अग्नेर्जिह्वां ज्वालामभिगृणीतं वर्णयतम् समीची वह्निज्वालेति स्तुतमित्यर्थः॥१८॥

तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती भारती । मही गृणाना ॥ १९ ॥

(१) तिस्रो देवीः । तिस्रः देव्यः । बर्हिः आ इदं सदन्तु । आसदन्तु आसीदन्तु इदं बर्हिः । कतमास्ताः । इडा पृथिवी-स्थाना सरस्वती च मध्यस्थाना । मही स्तुवन्तीति । प्रत्येक-न्तिसृभिरपि योज्यम् यद्वा एकमेव वाक्यम् । तिस्रो देव्यो बर्हि-रिदमासदन्तु इडा शरस्वती भारत्यो महत्यो गृणाना इति॥१९॥

तिस्रो देव्यः इदं बर्हिरासदन्तु आसीदन्तु छान्दसः सीदादेशा-भावः व्यवहिताश्चेति ( पा० १, ४, ८२ ) आङा सह क्रियापदव्यव-धानम् । कास्ता अत आह इडा पृथिवीस्थाना सरस्वती मध्यस्था-ना सरस्वती भारती द्युस्थाना । मही महती गृणाना स्तुवन्तीति विशेषणद्वयं तिसृणाम् ॥ १९ ॥

तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीर्य्यम् । राय-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । तिस्रो देवीः । तिस्रो देव्यः इदं बर्हि आसदन्तु आसीदन्तु । कास्ताः इडा पृथिवीस्थाना सरस्वती मध्यस्थाना भारती द्युस्थाना मही महती गृणाना स्तुवन्तीति विशेषणद्वयं ति-सृणामपि योज्यम् ॥ १९ ॥

स्पोषं विष्यंतु नाभिंमस्मे ॥ २० ॥

(१) तन्नः। तत् रायस्पोषम् नः अस्मभ्यमस्मदर्थम्। तुरीपम् तूर्णमश्नुते। तूर्णश्चाप्नोति। अद्भुतं महत् अभूतपूर्वम्। पुरुक्षु पुरुषु बहुषु यत्क्षियति निवसति तत्पुरुक्षु त्वष्टा देवः सुवीर्यं साधुवीर्यम्। रायस्पोषविशेषणान्येतानि चत्वारि पदानि। विष्यतु। स्यतिरुपसृष्टो विमोचने विमुञ्चतु। नाभिमस्मे राष्ट्रमध्यम् प्रत्यस्मासु ॥ २० ॥

त्वष्टा देवः तं प्रसिद्धं रायो धनस्य पोषं पुष्टिमस्मे अस्माकं नाभिं प्रति विष्यतु विमुञ्चतु नाभौ मुक्तमुत्सङ्गे पततीति भावः षोऽन्तकर्मणि ओतः श्यनीति (पा० ७, ३, ७१) ओकारलोपः स्यतिरूपसृष्टो विमोचने इति यास्कः। कीदृशं रायः पोषम् नोऽस्माकं तुरीपम् तुरा वेगेन आप्नोति तुरीपं शीघ्रप्रापकम्। अद्भुतं महान्तम्। पुरुक्षु पुरुषु बहुषु क्षियति निवसति पुरुक्षु सुपां सुलुगिति (पा० ७, १, ३९) अमो लुक् क्षियतेरौणादिको डुप्रत्ययः। सुवीर्य्यं साधुवीर्यं सामर्थ्यं ये न तम्। ईदृशं धनं देहीत्यर्थः ॥ २० ॥

वनस्पतेऽवसृजा ररांणस्त्मना देवेषु। अग्निर्हव्यं शमिता सूदयाति ॥ २१ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा। तन्नः त्वष्टा देवः तं रायस्पोषम् अस्मे अस्मासु नाभि प्रति विष्यन्तु विमुञ्चन्तु स्यतिरुपसृष्टो विमोचने नाभिं प्रतियन्मुच्यते तदुत्संगे तिष्ठतीति भावः किंरायस्पोषं नोऽस्मभ्यं तुरीपं तूर्णमश्नुते आप्नोतीति तुरीपम् अद्भुतं महान्तम् अभूतपूर्वं पुरुक्षु पुरुषु क्षियतीति पुरुक्षु विभक्तिलोपः सुवीर्यं साधुवीर्यं यद्वा यवसंघातः प्रार्थ्यते त्वष्टा नोऽस्मदर्थे तं जलौघं तुरीपं तूर्णव्यापकम् अद्भुतं महत्त्वात् पुरुक्षु बहूनां निवासभूतं बहुगर्जितशब्दं वा सुवीर्यं रायस्पोषं हेतुभूतं नाभिं राष्ट्रमध्यं प्रति अस्मासु मुञ्चतु ॥ २० ॥

(१) वनस्पतेऽव । हे वनस्पते अवसृज । स्रुङ्मुखतोऽवाचीनं निक्षिप हवींषि रराणः । यद्वा रा दाने ददानः । त्मना मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः देवेषु विषयभूतेषु । कस्मात्त्वमेवमुच्यसेऽस्माभिरित्यत आह । यतः अग्निः शमिता शामित्रमिति तद्धितलोपः । हव्यं हविर्जातम् सूदयाति षूद क्षरणे संस्करोति । अतो हे वनस्पते अवसृजेति संबन्धः ॥ २१ ॥

अग्निः शमिता हव्यं सूदयाति सूदयति संस्करोति यतः अतो हे वनस्पते ! तत्संस्कृतं हव्यमवसृज स्रुङ्मुखतोऽवाचीनां क्षिप । कीदृशस्त्वम् त्मना आत्मना देवेषु रराणः हविर्ददानः रा दाने कानच् । मन्त्रेष्वाङ्यादेरात्मन इति ( पा० ६, ४, १४१ ) आलोपः॥२१॥

अग्ने॒ स्वाहा॑ कृणुहि जातवेद॒ इन्द्रा॑य ह॒व्यम् । विश्वे॑ दे॒वा ह॒विरि॒दं जुषन्ताम् ॥ २२ ॥ ॥

(२) अग्ने स्वाहा । हे जातवेदः स्वाहा कृणुहि स्वाहाकृतिं यज इन्द्राय । हव्यं हविः प्रयच्छेति शेषः । विश्वे देवाश्च इदं हविः जुषन्तां सेवन्ताम् ॥ २२ ॥

हे अग्ने ! हे जातवेदः जातप्रज्ञान ! हव्यमिन्द्राय स्वाहा कृणुहि

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । वनस्पते । हे वनस्पते अवसृज स्रुग्मुखतोऽवाचीनं हविः क्षिप किंभूतः त्मना देवेषु रराणः रममाणः यद्वा रा दाने ददानः त्मनेति मन्त्रेष्वाङ्यादेरात्मनः इति आकारलोपः यतोऽग्निः शमिता शामित्रमिति तद्धितलोपः हव्यं सूदयाति संस्करोति षूद क्षरणे ॥ २१ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । अग्ने स्वाहा । हे अग्ने हे जातवेदः इन्द्राय हव्यं स्वाहा कृणुहि स्वाहाकारेण प्रयच्छ विश्वे देवाश्च इदं हविर्जुषताम् ॥ २२ ॥

स्वाहाकारेण प्रयच्छ । किञ्च विश्वे देवा इदं हविर्जुषन्तां सेवन्ताम् ॥ २२ ॥

पीवो॑ अन्ना रयि॒वृधः॑ सु॒मेधाः॑ श्वे॒तः सि॑षक्ति नि॒युता॑मभि॒श्रीः । ते वा॒यवे॒ सम॑नसो॒ वित॑स्थु॒र्विश्वेन्नरः॑ स्वप॒त्यानि॑ चक्रुः ॥ २३ ॥

अथैतं वायवे नियुत्वते शुक्लन्तूपरमालभत इत्यस्य पशोः पीवो अन्नारयिंवृधः इत्याद्याः षट्याज्यानुवाक्यास्त्रिष्टुभो वायव्याः । तत्र च प्राजापत्यः पशुपुरोडाश इति पठ्यते । तस्य आपो ह यत् द्वे प्राजापत्ये । यान् नियुतः अश्वान् । पीवो अन्नान् पीवः पुष्टमन्नं येषामिति पीवोअन्नान् रयिन्धनं ये वर्द्धयन्ति ते रयिंवृधः सुमेधाः कल्याणप्रज्ञानो वायुः । श्वेतः वायोर्वर्णवचनम् शुक्लो हि वायुरिति श्रुतिः । सिषक्ति सेचति । नियुता-

(७) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । अथैतं वायवे नियुत्वते शुक्लं तूपरमालभते । इत्यस्य पशोः पीवो अन्ना रयिवृध इत्याद्याः षट्याज्यानुवाक्याः त्रिष्टुभो वायव्यः तत्र च प्राजापत्यः पशुपुरोडाश इति पच्यते तस्य आपो ह यत् इति द्वे प्राजापत्ये श्वेतो वायुः शुक्लो हि वायुरिति श्रुतिः । यान् नियुतोऽश्वान् सिषक्ति सेवते ते नियुतः वायवेऽर्थाय समनसः समनस्काः सन्तो वितस्थुः किंभूतान् नियुतः । पीवो अन्ना- पीवः पुष्टम् अन्नं येषां ते पीवो अनाः तान् । नकारलोपः । प्रकृत्यान्तः इति पीवो अन्नानित्यत्र प्रकृतिभावः । रयिवृधः रयिं धनं वर्द्धयन्ति तान् । किं भूतः श्वेतः सुमेधाः कल्याणप्रजानः नियुताम् अश्वानाम् । अभिश्रीः अभ्याश्रयणीयः । अथैवं वाय्वश्वयोगे नरः मनुष्या ऋत्विजः विश्वा विश्वानि इत् पादपूरणः । स्वपत्यानि शोभनानामपत्यानां कर्माणि चक्रुः कुर्वन्ति । एतदुक्तं भवति वाय्वश्वयोर्योगे सति सर्वमिदं यज्ञादि वर्तत इति ॥ २३ ॥

मभिश्रीः नियुतामभ्याश्रयणीयः अथ यान्वायुः सिषक्ति ते नियुतोऽश्वा वायवेऽर्थाय । समनसः समनस्कास्सन्तः वितस्थुः तान् विश्वानि इत् पादपूरणे नरः मनुष्या ऋत्विग्यजमानाः स्वपत्यानि शोभनानामपत्यानां यानि कर्माणि तानि चक्रुः कुर्वन्ति । एतदुक्तं भवति । वाय्वश्वसंयोगे सति सर्वमिदं यज्ञादि प्रवर्तते इति ॥ २३ ॥

अथैतं वायवे नियुत्वते शुक्लं तूपरमालभते इति हुतस्य पशोः पीवो अन्ना रयिवृध इत्याद्याः षट् याज्यानुवाक्याः । द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । शुक्लो हि वायुरिति श्रुतेः श्वेतो वायुः यान्नियुतोऽश्वान् सिषक्ति सेवते ते नियुतः समनसः समनस्काः सन्तो वायवेऽर्थाय वितस्थुर्विशेषेण तिष्ठन्ति । कीदृशान्नियुतः पीवो अन्ना पीवः पुष्टमन्नं येषां तान् नकारलोपः प्रकृत्यान्तः पादमिति ( पी० ६, १, ११५ ) पीवो अन्नानित्यत्र सन्ध्यभावः । तथा रयिवृधः रयिं धनं वर्धयन्ति तान् । कीदृशः श्वेतः सुमेधा शोभना मेधा बुद्धिर्यस्य । नियुतामभिश्रीः अश्वानामाश्रयणीयः । एवमश्वयोगे वायुना कृते नरो मनुष्या ऋत्विजः विश्वा इत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यप्रापकानि चक्रुः कर्माणीति शेषः ॥ २३ ॥

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् । अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ॥ २४ ॥

(१) राये नु । राये धनाय उदकलक्षणाय नु क्षिप्रम् यं वा

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा राये नु इमे रोदसी रोदस्यौ द्यावापृथिव्यौ राये धनायोदकलक्षणाय नु क्षिप्रं वायुं जज्ञतुः जनयतः द्यावापृथिव्योः संयोगेऽपि वायुमन्तरेण जगद्धारणं नोपपद्यते इति वायुं

युअज्ञतुः जनयितुः रोदसी द्यावापृथिव्यौ इमे । जनयोर्द्यावापृथिव्योः संयोगेऽपि सति वायुमन्तरेण जगद्धारणं नोपपद्यते इति जनितवत्यौ द्यावापृथिव्यौ । यं वायुश्च राये धनायोदकलक्षणाय । देवी धिषणा धियं बुद्धिं कर्म वा सनोति सम्भजते इति धिषणा वाक् मध्यस्थाना धाति धारयति । देवं दानादिगुणयुक्तम् । अध अथेत्यर्थः समनन्तरमेव । ते वायुं नियुतः अश्वाः सश्चत सचन्तः सेवन्तः स्वाः स्वकीयाः । उत अपि च श्वेतं वायुं वसुधितिं वसुनो धनस्योदकलक्षणस्य धारयितारम् निरेके । जनैराकीर्णप्रदेशेऽवस्थितम् वायुम् नियुतः सश्चत स्वा इत्यनुवर्तते ॥ २४ ॥

इमे रोदसी द्यावापृथिव्यौ यं वायुं जज्ञतुः उत्पादयामासतुः नु क्षिप्रम् किमर्थम् राये धनायोदकरूपाय । धियं सनोति ददाति धिषणा वाक् देवी देवं वायुं धाति धारयति शपो लुक् राये धनाय । रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः । धिषणेति ह्रस्वमार्षम् । अध अथ उत्पत्त्यनन्तरमेव उत निश्चितं स्वा नियुतो निजाश्वा वायुं सश्चत सश्चन्ते सेवन्ते षच् सेवने पुरुषव्यत्ययः । क्व निरेके निर्गतः रेकः रेचनं रेकः शून्यता यस्मात् तादृशे बहुजनाकीर्णे स्थाने । कीदृशं वायुं श्वेतं श्वेतवर्णम् । तथा वसुधितिं वसुनो धनस्य धितिर्धारणं यत्र तम् धनस्य धारयितारम् ॥ २४ ॥

आपो॑ ह॒ यद् बृ॑ह॒तीर्विश्व॒माय॒न् गर्भं॒ दधा॑ना

---

जनितवत्यौ धिषन्ना धिय बुद्धि कर्म वा सनोति सतभजते सा धिषणा वागदेवा यं देवं वायुं धाति धारयति । अध अथ समनन्तरमेव स्वाः स्वकीयाः नियुतोऽश्वाः निरेकेरेकः अन्यता तद्रहते जनैराकीर्णे प्रदेशे स्थितं श्वेतं वायुं सश्चत सचन्ते सेवन्ते । उत निश्चयेन किं भूतं वसुधिपतिं वसोर्धनस्योदकलक्षणस्य धारयितारम् ॥ २४ ॥

जनयन्तीरग्निम् । ततो देवानाᳪं समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ २५ ॥

(१) आपो ह । आपो ह वा इदमग्रे सलिलमेवासीदित्येतद्ब्राह्मणं निदानभूतमनयोः कण्डिकयोः । आपः । पुराकल्पद्योतको ह इति निपातः । यत् । यदा बृहती बृहत्यः महत्यः । विश्वं सर्वम् आत्मत्वेन । आयन्प्रापुः । गर्भं हिरण्यगर्भलक्षणन्दधानाः ।जनयन्तीः जनयिष्यन्त्यःआग्निम् अग्निरूपं हिरण्यगर्भम् । हिरण्यगर्भवचनो वा अग्निशब्दः । ततः गर्भात्संवत्सरोषितात् देवानां मध्ये समवर्तत समभवत् असुः प्राणात्मकः । एकः देवानां स हि लिङ्गशरीरः य इत्थम्भूतो हिरण्यगर्भः। तस्मै कस्मै प्रजापतये हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥२५॥

द्वे प्रजापतिदेवत्ये त्रिष्टुभौ हिरण्यदृष्टे प्रथमा ह्यधिका । आपो ह वा इदमग्रे सलिलमेवासेति ( ११, १, ६, १ ) ब्राह्मणमेतयोः कण्डिकयोर्निदानभूतं बोध्यम् । ह प्रसिद्धौ यत् यदा पुरा आपो जलानि विश्वमायन् प्रापुः । कीदृश्य आपः बृहतीः बृहत्यो महत्यः बहुलाः । तथा गर्भं हिरण्यगर्भलक्षणं दधानाः धारयन्त्यः अत एवाग्निं जनयन्तीः अग्निरूपं हिरण्यगर्भं जनयन्त्यः उत्पादयिष्यन्त्यः । ततो गर्भात् संवत्सरोषितात् देवानामसुः प्राणरूप आ-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । आपो ह । आपो ह वा इदमग्रे सलिलमेवसीदित्येतद्ब्राह्मणं निदानभूतमनयोः कण्डिकयोः पुराकल्पद्योतको ह इति निपातः । यत् यदा पुरा आपो विश्वं सर्वम् आयन् आत्मत्वेन प्रापुः किम्भूताः बृहतीः बृहत्यः गर्भं हिरण्यगर्भलक्षणं दधानाः अग्निम् अग्निरूपं हिरण्यगर्भं जनयन्तीः जनयिष्यन्त्यः ततो गर्भात् संवत्सरोषितात् देवानां मध्ये एकः असुः प्राणात्मकः आत्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्त्तत तस्मै कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः ॥ २५ ॥

स्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्त्तत उदपद्यत । कस्मै प्रजापतिरूपाय देवाय हिरण्यगर्भाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः विदधातिर्दानार्थः ॥ २५ ॥

यश्चिदापो महिना पर्य्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् । यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ २६ ॥

(१) यश्चित् । योऽपि देवः अन्तर्यामी । आपः अप इति विभक्तिव्यत्ययः । महिना महाभाग्येन । पर्यपश्यत् परितो दृष्टवान् । दक्षम्प्रजापतिं दधानाः जनयन्तीः यज्ञं सृष्टियज्ञम् । यश्च देवेष्वपि अधिदेवः एक आसीत् तस्मै कस्मै प्रजापतये हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥ २६ ॥

चिदप्यर्थः यो देवोऽन्तर्यामी महिम्ना आपः विभक्तिव्यत्ययः अपः पूर्वोक्ताः पर्य्यपश्यत् सर्वतो ददर्श । कीदृशीः दक्षं कुशलं प्रजापतिं दधानाः । यज्ञं जनयन्तीः यज्ञशब्देन यज्ञकर्त्री प्रजा उच्यते सृष्टिकर्त्रीरित्यर्थः । यश्च देवेष्वधि अधिकः एको मुख्यो देव आसीत् । तस्मै देवाय हविर्दद्मः ॥ २६ ॥

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे । नि नो रयिंसुभोजसं युवस्व नि वीरं गव्यमश्व्यञ्च राधः ॥ २७ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । यश्चित् । योऽपि देवोऽन्तर्यामी महिना महाभाग्येन । आपः अप इति विभक्तिव्यत्ययः पर्यपश्यत् । सर्वतो दृष्टवान् किंभूताः अपः दक्षं प्रजापतिं दधानाः यज्ञं सृष्टिं जनयन्तीः । यो देवेष्वपि एकः अधि अधिको देवः आसीत् । तस्मै देवाय हविर्दद्मः ॥ २६ ॥

(१) प्रयाहि प्रयासि याभिर्नियुद्भिः । नियुच्छब्द उभयलिङ्गः स्त्रियां पुंसि च । दाश्वांसं यजमानम् अच्छ अच्छाभेराप्तुमिति शाकपूणिः। हवींषि दत्तवन्तं यजमानमभि । हे वायो इष्टये यागाय एषणा यवा । दुरोणे यज्ञगृहे वर्तमानं यजमानम् । ताभिर्नियुद्भिरागत्य । नो रयिं सुभोजसं युवस्व । निपूर्वो यौतिर्दानार्थः । नियुवस्व देहि नोऽस्मभ्यं रयिन्धनम् किम्भूतम् सुभोजसम् साधु भुज्यत इति सुभोजाः तम् सुभोजसम् । किञ्च । वीरं पुत्रम् गव्यञ्च राधः अश्व्यं च राधो धनम् नियुवस्व इति ॥ २७ ॥

द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । हे वयो ! त्वं याभिर्नियुद्भिरश्वाभिः कृत्वा इष्टये यागाय दुरोणे यज्ञगृहे वर्त्तमानं दाश्वांसं हविर्दत्तवन्तं यजमानमच्छ अभिमुखं प्रयासि गच्छासि निपातस्य-चेति ( पा० ६, ३, १३६ ) संहितायामच्छा इति दीर्घः । व्यवहिताश्चेति ( पा० १, ४, ८२ ) प्रेण यासीत्यस्य व्यवधानं ताभिर्नियुद्भिरागत्य नोऽस्मभ्यं रयिं धनं नियुवस्व देहि नियौतिर्दानार्थः व्यत्ययेन शप्रत्ययः । कीदृशं रयिं सुभोजसं सुष्ठु भुज्यत इति सुभोजास्तम् भुजेरसुन्प्रत्ययः । किञ्च वीरं पुत्रं गव्यं गोसम्बन्धि अश्व्यमश्वसम्बन्धि गोऽश्वरूपं राधः धनं च नियुवस्व ॥ २७ ॥

आ नो॑ नियुद्भिः॑ श॒तिनी॑भिरध्व॒रᳪ स॑ह॒स्रिणी॑भि॒रु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । प्रयाभिः । नियुच्छब्दः पुंस्त्रियोः । हे वायो त्वं याभिः नियुते इष्टये यागाय एषणा यवा दुरोणे यज्ञगृहे वर्तमानं दाश्वांसं यजमानम् अच्छ अभिप्रयासि । प्र अस्योपसर्गस्य यासीति तिङा सम्बन्धः । ताभिर्नियुद्भिः आगत्य नोऽस्मभ्यं रयिं धनं नियुवस्व देहि यौतिर्दानार्थः । किम्भूतं रयिं सुभोजसं साधु भुज्यत इति सुभोजाः तं किञ्च वीरं पुत्रं गव्यं अश्व्यं राधः गोऽश्वरूपं धनं च नियुवस्व ॥ २७ ॥

पयाहि यज्ञम् । वायो अस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ २८ ॥

(१) आ नः । आ उपयाहि नः अस्माकम् अध्वरं यज्ञम् । नियुद्भिः अश्वैः शतिनीभिः । शतानि विद्यन्ते यासु ताः शतिन्यः ताभिः शतिनीभिः सहस्रिणीभिश्च । एतदुक्तम्भवति । बहूनामपि वाहनानां वयन्तर्पयितुं क्षमाः एत्य च । हे वायो अस्मिन् सवने तृतीयसवने मादयस्व तृप्यस्व । इदानीमृत्विजः पादेनाह । यूयं पात पालयत स्वस्तिभिः अविनाशैः सदा नः अस्मान्॥२८॥

हे वायो ! नियुद्भिरश्वाभिः नोऽस्माकमध्वरं यज्ञमुपयाहि । कीदृशीभिः शतिनीभिः सहस्रिणीभिः शतं सहस्रं च संख्या यासा ताभिः वयं बहुवाहनतर्पणे शक्ता इति भावः । एत्य चास्मिन् सवने तृतीये मादयस्व तृप्यस्व । अथ पादेन ऋत्विज आह हे ऋत्विजः ! स्वस्तिभिः कल्याणैर्यूयं नोऽस्मान् पात रक्षत ॥ २८

नियुत्वान् वायवागह्ययꣳ शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ २९ ॥

(२) नियुत्वान्वायो । षट् वायव्या याज्यानुवाक्याः । तत्र

(१) अत्र वाराणसी० लि० पु० सम्मतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा ।आ नः । हे वायो नोऽस्माकमध्वरं यज्ञं नियुद्भिः । अश्वाभिः आ उपयाहि किंभूताभिः नियुद्भिः शतिनीभिः शतानि । विद्यन्ते यासु ताः शतिन्यः ताभिः एवं सहस्रिणीभिः बहूनां वाहनानामपि तर्पयितुं वयं क्षमा इति भावः । एत्य च अस्मिन् सवने तृतीये मादयस्व तृप्यस्व इदानीं पादेन ऋत्विजः प्रत्याह यूयं स्वस्तिभिः नोऽस्मान् सदा पात पालयत ॥ २८ ॥

(२) अत्र वाराणसी०लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । नियुत्वान् वायो । षट् वायव्या याज्यानुवाक्याः वायो शुक्र इत्यनुष्टुप् एकया चेति त्रिष्टुब् गायत्र्योऽन्याश्चतस्रः हे

वायो शुक्रो इत्यनुष्टुप् । एकया चेति त्रिष्टुप् । गायत्र्योऽन्याश्चतस्रः । तृतीयः पादः प्रथमं व्याख्यायते । यतो गन्ता गमनशीलः तृन्नन्तोऽयम् गन्ता उदात्तः तद्धर्मा वा तत्साधुकारी वा एते हि तृनोऽर्थाः । असि । सुन्वतः अभिषवं कुर्वतः यजमानस्य गृहान्प्रति । अतो ब्रवीमि । नियुत्वान् नियुद्गुणको भूत्वा हे वायो आगहि आगच्छ । अयञ्च शुक्रो ग्रहः अयामि आगच्छत्विति सकारपुरुषव्यत्ययः ते त्वां प्रति । त्वमेव हि शुक्रादीनां ग्रहाणां स्थानमित्यभिप्रायः ॥ २९ ॥

षडृचो वायुदेवत्याः वायव्येष्टकापशुपक्षे वपादीनां याज्यानुवाक्यत्वेन नियुक्ताः आद्या गायत्री गृत्समदद्दष्टा । हे वायो ! यतः सुन्वतो यजमानस्य गृहं प्रति त्वं गन्ता गमनशीलोऽसि तृन्नन्त आद्युदात्तत्वात् अतो नियुत्वानश्वावान् सन् आगहि आगच्छ शपो लुक् । अयं शुक्रो ग्रहः ते त्वां प्रति अयामि अयतु प्राप्नोतु लकारपुरुषव्यत्ययः । शुक्रादिग्रहाणां पात्रं त्वमेवेति भावः ॥ २९ ॥

वायो॑ शु॒क्रो अ॑यामि ते॒ मध्वो॒ अग्रं॒ दिवि॑ष्टिषु ।
आया॑हि॒ सोम॑पीतये स्पा॒र्हो दे॑व नि॒युत्व॑ता ॥ ३० ॥

(१) वायो शुक्रः । हे वायो शुक्रो ग्रहः अयामि स्वयमेवा-

---

वायो यतः त्वं सुन्वतो यजमानस्य गन्तासि गमनशीलः तृन्नन्तोऽयं गन्ता उदात्तः तद्धर्मा तत्साधुकारी एते तृनोऽर्थाः अतः नियुत्वान् अश्ववान् सन् आगहि आगच्छ अयं च शुक्रो ग्रहः ते त्वां प्रति आयामि आगच्छतु लकारपुरुषव्यत्ययः त्वमेव शुक्रादिग्रहाणां स्थानमिति भावः ॥ २९ ॥

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । वायो शुक्रः । हे वायो शुक्रः ते त्वाम् आयामि आगच्छतु । किंभूतः शुक्रः दिविष्टिषु दिवि एषणेषु यज्ञेषु मध्वः अग्रं रसस्य सारभूतः हे देव त्वं च सोमपीतये सोमपाना य

गच्छतु ते त्वां प्रति कथम्भूतः । मध्वो अग्रम् रसस्य सारः भूतः दिवि एवणेषु यज्ञेष्वित्यर्थः । त्वं च आयाहि सोमपीतये सोमपानाय । यतः स्पार्हः स्पृहणीयः हे देव । नियुत्वता नियुच्छब्दवता मन्त्रेण स्तूयसे ॥ ३० ॥

अनुष्टुप् पुरुमीढाजमीढदृष्टा हे वायो ! शुक्रो ग्रहः त्वामयामि आगच्छतु । कीदृशः शुक्रः दिविष्टिषु मध्वः अग्रं द्यौरिष्यते प्रार्थ्यते याभिस्ता दिविष्टयो यज्ञाः ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युक्तेः मध्वः मधुनो रसस्याग्रं सारभूतः यज्ञरसेषु शुक्रो ग्रहः सारभूत इत्यर्थः किञ्च हे देव वायो नियुत्वता अश्वावता रथेन आयाहि आगच्छ किमर्थं सोमपीतये सोमपानाय । कीदृशस्त्वं स्पार्हः स्पृहायोग्यः यजमानादिभिः स्पृहणीयः ॥ ३० ॥

वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः ॥ ३१ ॥

(१) वायुरग्रेगाः । वायुः अग्रे गमनशीलः यज्ञप्रीः यज्ञेन प्रीयत इति यज्ञप्रीः । साकङ्गच्छ गच्छति मनसा यज्ञम् । यो ह्यादरेण विस्मित आगच्छति स मनसा सहागतो भवति । कथंभूतः । शिवः शान्तः नियुद्भिः अश्वैः शिवाभिरेव ॥ ३१ ॥

द्वे गायत्र्यौ । वायुः शिवाभिः कल्याणरूपाभिः नियुद्भिरश्वाभिः कृत्वा मनसा साकं चित्तेन सह सादरं यज्ञं गन् गच्छतु । कीदृशः अग्रेगाः अग्रे गच्छत्यग्रेगाः विड्वनोरनुनासिकस्यादिति ( पा० ६,

---

आयाहि स्पार्हः स्पृहणीयः सोमः नियुत्वता नियुच्छब्दवता मन्त्रेण संस्कृतोऽस्तीति शेषः ॥ ३० ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति तद्यथा । वायुरग्रेगाः । वायुः मनसा साकं सह शिवाभिः नियुद्भिरश्वाभिः यज्ञं गन् आगच्छतु यो ह्यादरेण गच्छति स मनसा सहागतो भवतीति किम् वायुः अग्रेगाः अग्रेगमनशीलः यज्ञप्रीः यज्ञेन प्रीयत इति शिवः शान्तः ॥ ३१ ॥

४, ४१ ) आकारः । यज्ञप्रीः यज्ञेन प्रीयते तुष्यति यज्ञप्रीः । शिवः कल्याणकरः ॥ ३१ ॥

वायो ये ते॑ सह॒स्रिणो॒ रथा॑स॒स्तेभि॒रा ग॑हि । नि॒युत्वा॒न्त्सोम॑पीतये ॥ ३२ ॥

(१) वायो ये । हे वायो ये ते तव सहस्रिणः सहस्रसंख्याभियुक्ताः रथासः रथा एव रथासः तेभिः तैः आगहि आगच्छ नियुत्वान् भूत्वा सोमपीतये सोमपानाय ॥ ३२ ॥

हे वायो ! ये ते तव सहस्रिणः सहस्रसंख्याका रथासः रथाः तेभिस्तैः रथैः आगहि आगच्छ किमर्थं सोमपानाय । कीदृशस्त्वं नियुत्वान् अश्वायुक्तः नियुतो वायोरित्युक्तेः ( निघ० १, १५, २ ) ॥ ३२ ॥

एक॑या च द॒शभि॑श्च स्वभूते॒ द्वाभ्या॑मि॒ष्टये॑ विꣳश॒ती च॑ । ति॒सृभि॑श्च॒ वह॑से त्रि॒ꣳशता॑ च नि॒युद्भि॑र्वायवि॒ह ता वि मु॑ञ्च ॥ ३३ ॥

(२) एकया च । एकस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते । हे वायो स्वभूते । स्वकीया विभूतिर्यस्य जगत्सर्वं

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । वायो ये ते । हे वायो ये ते तव सहस्रिणः सहस्रसंख्याः रथासः ते रथैर्नियुत्वान् सन् सोमपीतये आगहि ॥ ३२ ॥

(२) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । एकया च । एकस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते हे वायो हे स्वभूते स्वकीया विभूतिर्यस्य जगदात्मिका स स्वभूतिः । एकया दशभिः द्वाभ्यां विंशती विंशत्या विंशतिशब्दस्य पूर्वसवर्णदीर्घ आदेशः । तिसृभिः त्रिंशता च नियुद्भिः अश्वाभिः इष्टये यज्ञाय त्वं यानि पात्राणि वहसे ता तानि इह विमुञ्च ॥ ३३ ॥

स स्वभूतिः । यानि पात्राणि वहसे इष्टये देवयज्यायै । एकया च नियुता दशभिश्च नियुद्भिः द्वाभ्याञ्च नियुद्भ्याम् विंशती च । विंशतिशब्दस्य पूर्वसवर्णदीर्घ आदेशः । विंशत्या च नियुद्भिः । तिसृभिश्च त्रिंशता च नियुद्भिरेव । ता तानि पात्राणि इह विमुञ्च ॥ ३३ ॥

त्रिष्टुप् अनयर्चा पात्राणि मुच्यन्ते । स्वा निजा भूतिः समृद्धिर्जगद्रूपा यस्य स स्वभूतिः हे स्वभूते ! हे वायो ! एकया दशभिः द्वाभ्यां विंशती विंशत्या पूर्वसवर्णः तिसृभिः त्रिंशता च नियुद्भिः अश्वाभिः कृत्वा इष्टये यज्ञाय त्वं यानि पात्राणि वहसे ता तानि पात्राणि इह यज्ञे विमुञ्च । पञ्च चकाराः समुच्चयार्थाः ॥ ३३ ॥

तव॑ वायवृतस्पते॒ त्वष्टु॑र्जामातरद्भुत । अवा॒ᳪंस्यावृ॑णीमहे ॥ ३४ ॥

(१) तव वायो । हे वायो ऋतस्पते । सत्योदक यज्ञवचन ऋतशब्दः । सत्यपते । त्वष्टुरादित्यस्य जामातः । स ह्यादित्यादप आदाय गर्भयति ततो विप्रुषो जायन्ते अतो वायुर्जामाता त्वष्टुः अद्भुत । अभूतपूर्व । तव संबन्धीनि अवांसि अन्नानि आवृणीमहे आयाचामः ॥ ३४ ॥

गायत्री व्यश्वदृष्टा । हे वायो ! ऋतस्पते सत्यस्य पालक ! ऋतस्य पतिपरे सुडागमः । हे त्वष्टुर्जामातः । आदित्यादप आदाय वायुर्गर्भयति ततो वृष्टिर्भवतीति वायुरादित्यस्य जामाता । हे

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति तद्यथा । तव वायो । हे वायो हे ऋतस्पते सत्योदक यज्ञवाचक ऋतशब्दः । तस्य पतिशब्दे सुडागमः । हे सत्यपते हे त्वष्टुरादित्यस्य जामातः आदित्यादप आदाय गर्भयति ततो विप्रुषो जायन्ते अतो वायुर्जामाता त्वष्टुः हे अद्भुत अभूतपूर्व तव अवांसि अन्नानि वयम् आवृणीमहे याचामः ॥ ३४ ॥

अद्भुत आश्चर्य्यरूप ! तवावांसि अन्नानि वयमावृणीमहे प्रार्थयामः ॥ ३४ ॥

अ॒भि त्वा॑ शूर नोनु॒मोऽदु॑ग्धा इव धे॒नवः॑ । ईशा॑नमस्य॒ जग॑तः स्व॒र्दृश॒मीशा॑नमिन्द्र त॒स्थुषः॑ ॥ ३५ ॥

(१) अभि त्वा रथन्तरं दक्षिणे पक्ष इति श्रुतिः । नान्योऽध्वर्य्योर्गायेदिति यतोऽत एषां साम्नां योनयः पठ्यन्ते । तत्रेन्द्र प्रगाथो रथन्तरस्य योनिः । तत्र प्रथमा बृहती । द्वितीया सतो बृहती । अभि त्वा शूर नोनुमः । आभिमुख्येन त्वां हे शूर नोनुमः नमामः । कथमिव अदुग्धा इव धेनवः । यथा वत्सान्प्रति अदुग्धा धेनवः नमन्ति एवं त्वां प्रति हविर्भिः स्तोत्रैः शस्त्रैश्चाभिमुख्येन नमामः । यद्वा णु स्तुतौ । अयमत्र धातुः शब्दसारूप्यात् अभिनोनुमः अभिष्टुमः त्वां कृतकृत्याः सन्तः स्तुतस्तोत्राः कृतशास्त्राः उद्यतहविष्काः । कथमिव । अदुग्धा इव धेनवः । यथा अदुग्धा अकृतकृत्या धेनवः वत्समभिष्टुवुः एवम् । कथंभूतं त्वामभि नोनुमः ईशानमस्य जगतः । जङ्गमस्य स्वर्दृशम् स्वः पश्यतीति स्वर्दृक् तं स्वर्दृशम् । यद्वा स्वरादित्यः तद्वत् यो दृश्यते स स्वर्दृक् तं स्वर्दृशम् । ईशानं च हे इन्द्र तस्थु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । अभि त्वा । रथन्तरं दक्षिणे यज्ञे इति श्रुतिः । नान्योऽध्वर्योर्गायेदिति यतोऽत एषां साम्नां योनयः पठ्यन्ते तत्रेन्द्र प्रगाथो रथन्तरस्य योनिः तत्र प्रथमा बृहती द्वितीया सतोबृहती हे इन्द्र हे शूर वयं त्वाम् अभितो नोनुमः आभिमुख्येनात्यन्तं स्तुमः । नु स्तुतौ यङ्लुगन्तम् कथमिव अदुग्धा धेनव इव ता यथा वत्सानभिष्टुवन्ति किंभूतं त्वाम् अस्य जगतो जङ्गमस्य ईशानं स्वर्दृशं स्वः पश्यतीति स्वर्दृक् । तं यद्वा स्वः आदित्यः तद्वत् दृश्यते इति स्वर्दृक् तं तस्थुषः स्थावरस्य ईशानम् ॥ ३५ ॥

षः स्थितवतः स्थावरस्येत्यर्थः ॥ ३५ ॥

बृहतीसतोबृहतीद्वयं प्रगाथं वसिष्ठदृष्टमिन्द्रदेवत्यम् । रथन्तरं दक्षिणे पक्षे इति श्रुतेः । नान्योऽध्वर्योर्गायेदित्यध्वर्योर्गानं विहितम्। अतः साम्नां योनय ऋचः पठ्यन्ते तत्रेन्द्रः प्रगाथो रथन्तरस्य योनिः। हे शूर ! हे इन्द्र ! वयं त्वा त्वामभिनोनुमः आभिमुख्येनात्यन्तं स्तुमः नु स्तुतौ यङ्लुगन्तम् । तत्र दृष्टान्तः अदुग्धाः धेनवः इव यथा अदुग्धा गावो वत्सान् स्तुवन्ति । कीदृशं त्वाम् जगतो जङ्गमस्येशानं प्रभुम् स्वर्दृशं स्वः पश्यतीति स्वर्दृक् तम्। यद्वा स्वः आदित्य इव दृश्यते स्वर्दृक् तस्थुषः स्थावरस्य ईशानम् विश्वनियन्तारमित्यर्थः ॥ ३५ ॥

न त्वावाँ२॥ अन्यो दिव्यो न न पार्थिवो जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ३६ ॥

(१)न त्वावान् । ये न त्वावान् त्वत्सदृश अन्यः दिव्यः दिविभवः न च पार्थिवः अस्तीति शेषः। नच जातः नच जनिष्यत उत्पत्स्यति अतः अश्वायन्तः अश्वान्कामयमानः हे मघवन् धनवन् इन्द्र । वाजिनः वाजोऽन्नम् तद्येषामस्ति ते वाजिनः हविषा संयुक्ताः सन्तः गव्यन्तः गाः कामयमानाः त्वां हवामहे आह्वयामः ॥ ३६ ॥

हे मघवन् धनवन् ! हे इन्द्र ! दिवि भवो दिव्यः पार्थिवः पृथिवीभवश्च त्वावान् त्वत्सदृशोऽन्यो नास्तीति शेषः न च जातः

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । न त्वावान् । हे मघवन् धनवन् हे इन्द्र अन्यः दिवि भवः पार्थिवश्च त्वावान् त्वत्सदृशः नास्तीति शेषः नच जातः नच जनिष्यते उत्पत्स्यते अतो वयं त्वां हवामहे आह्वयामः किं वयम् अश्वायन्तः अश्वान् कामयमानाः वाजिनः वाजोऽन्नं तद्वन्तः हविषा संयुक्ताः सन्त इत्यर्थः । गव्यन्तः गाः कामयमानाः ॥ ३६ ॥

न जनिष्यते उत्पत्स्यते । त्वत्सदृशोऽस्तीति त्वावान् सादृश्यार्थे वतुप्रत्ययः । अतो वयं त्वा त्वां हवामहे । कीदृशा वयम् अश्वायन्तः अश्वान् कामयमानाः अश्वाघस्यादिति ( पा० ७, ४, ३७ ) क्यचि आत्वम् ततः शतृप्रत्ययः । वाजिनोऽन्नवन्तः हविर्युताः । गव्यन्तः गा इच्छन्ति गव्यन्तः गोकामाः गवाश्वान् देहीत्यर्थः ॥ ३६ ॥

त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ३७ ॥

(१ त्वामित् । बृहतो योनिः देवतादितुल्यम् इच्छब्द एवार्थे हिर्निरर्थकः । त्वामेव हवामहे आह्वयामः । सातौ वाजस्य सातिर्लाभः लाभे अन्नस्य विषयभूते । अपि च कारवः कर्त्तारः स्तोमानां वयम् त्वामेव च वृत्रेषु शत्रुषु हन्तव्येषु हे इन्द्र सत्पतिं सतां पालयितारम् श्रुतिस्मृतिविहितानुष्ठातारो निषिद्धकर्मपरित्यागिनः सन्तः तत्पतिम् । नरः मनुष्याः आह्वयन्ति । त्वामेव काष्ठासु जेतव्यासु अर्वतः अर्ववन्तः अश्ववन्तः रथिनो वा आह्वयन्ति । नहि त्वदृते पुरुषाणां किञ्चित्सिध्यतीत्यभिप्रायः ॥ ३७ ॥

ऋग्द्वयमैन्द्रः प्रगाथः शम्युदृष्टः बृहत्साम्नो योनिः अध्वर्योर्गानस्योक्तेः आद्या बृहती द्वितीया सतोबृहती बृहदुत्तरे पक्षे इति श्रु-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । त्वामित् । बृहतो योनिः देवतादितुल्यम् इत् एवार्थे हि निरर्थकः । हे इन्द्र कारवो कर्तारो यज्ञानां वयं त्वामेव हवामहे वाजस्य सातौ सातिर्लाभः । अन्नस्य लाभे विषयभूते अपि च वृत्रेषु शत्रुहन्तव्येषु काष्ठासु च जेतव्यासु अर्वतः अर्ववन्तः अश्ववन्तो रथिनो वा नरो मनुष्याः त्वाम् आह्वयन्ति किं त्वां सत्पतिं सतां पालयितारं श्रुतिस्मृतिविहितानुष्ठातारो निषिद्धकर्मपरित्यागिनः सन्तः । अर्वत इति मतुपो लोपः विभक्तिव्यत्ययश्च नहि त्वदृते पुरुषाणां किञ्चित् सिध्यतीति भाव ॥ ३७ ॥

तेः। हे इन्द्र। कारवः कर्त्तारः यज्ञानाम् नरः ऋत्विजो वयं त्वामेव हवामहे आह्वयामः इत् एवार्थे हि निश्चये। किंनिमित्तम् वाजस्यान्नस्य सातौ लाभनिमित्तम्। कीदृशं त्वां सत्पतिं सतां पालयितारम्। श्रुतिस्मृत्युक्ताचाररता निषिद्धत्यागिनः सन्तः कथ्यन्ते। तथा अर्वतः अश्वप्राप्तिनिमित्तं च विभक्तिव्यत्ययः। त्वांशब्दावृत्तिरादरार्था॥ ३७॥

स त्वं नंश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः। गामश्वंꣳ रथ्यमिन्द्र संकिर सत्रावाजं न जिग्युषे॥ ३८॥

(१) स त्वम्। स त्वं नः अस्मभ्यम् हे चित्र चायनीय हे वज्रहस्त धृष्णुया प्रसहनेन महः महत्त्वेन च स्तवानः स्तुवानः। इति विकरणव्यत्ययः। हे अद्रिवः अद्रिवन्। अद्रिसारमयं वज्रन्तदस्यास्तीति सम्बोध्यते अद्रिव इति। गाम् अश्वञ्च रथ्यं रथे साधुम् हे इन्द्र सङ्किर। सङ्किरतिर्दानातिशये अनेकदेशप्रकीर्णन्देहि कथमिव। सत्रा वाजन्न जिग्युषे नकार उपमार्थीयः। यथा जिग्युषे विजितवते। अश्वाय हस्तिने वा। सत्रा त्राणस-

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा। स त्वम्। हे चित्र चायनीय हे वज्रहस्त हे अद्रिवः अद्रिवन् आद्रिसारमयं वज्रं तदस्यास्तीति संबोध्यते। यद्वा अद्रयः जेयत्वेन यस्य सन्ति अद्रिवान् तत्संबुद्धिः त्वं धृष्णुया प्रसहनेन महः महत्त्वेन च स्तवानः स्तूयमानः सन् इति विकरणव्यत्ययः। गाम् अश्वं रथ्यं रथे साधुं हे इन्द्र नोऽस्मभ्यं संकिर देहि संकिरतिर्दानार्थः। अनेकदेशप्रकीर्णं देहीत्यर्थः। कथमिव न इवार्थे जिग्युषे जितवते आश्वाय हस्तिने वा सत्रा त्रा रक्षणं त्राणं तत्सहितं वाजं न वाजमिव वाजं यवसं दूर्वादि यथा दद्युरेवं नोऽस्मभ्यं देहि॥ ३८॥

हितम् वाजं यवसम् सस्नेहमपरिमितं संकिरेयुर्दद्युः एवमस्मभ्यन्देहि ॥ ३८ ॥

हे चित्र आश्चर्य्यकारिन् ! हे वज्रहस्त ! वज्रं हस्ते यस्य हे अद्रिवः ! अद्रयोऽजयत्वेन सन्तीत्यद्रिवान् तत्सम्बुद्धिः मतुवसोरिति ( पा० ८, ३, १ ) रुत्वम् हे इन्द्र ! स त्वं नोऽस्मभ्यं गामश्वं च साङ्किर देहि सम्पूर्वः किरतिर्दानार्थः । कीदृशमश्वम् रथ्यं रथे साधुं रथवहनसमर्थम् । कीदृशस्त्वम् घृष्णुया प्रागल्भ्येन महः महसा तेजसा च स्तवानः स्तूयमानः । धृषेः क्नुः ततो विभक्तेर्यादेशः धृष्णुना धृष्णुत्वेन भावप्रधानो निर्देशः । महः विभक्तिलोपः । स्तवान इत्यत्र विकरणव्यत्ययः । कथमिव वाजं न वाजमिव न इवार्थे यथा जिग्युषे जितवतेऽश्वाय हस्तिने वा यथा सत्रा त्राणं त्रा रक्षणम् तत्सहितं वाजमन्नं यवं यथा ददाति तथास्मभ्यं देहि ॥ ३८ ॥

कया नश्चित्र आभुवदूती सदावृधः सखा कया शचिष्ठया वृता ॥ ३९ ॥

(१) कया नः । वामदेव्यस्य योनिः तिस्र ऐन्द्यो गायत्र्यः अन्त्या पादनिवृत् । कया नश्चित्र आभुवदूती कया पुनः ऊती ऊत्या केन पुनरवनेन तर्पणेन । नः अस्माकं चित्रः चायनीयः इन्द्रः आभुवत् भूयात् आकारो वृता सह संबध्यते । सदा वृधः सदाकालं वर्द्धयिता । सखा च कया च नाम शचिष्ठया शचीति कर्मनाम मतुब्लोपः । अतिशयेन कर्मवत्या आवृता कर्मणा सदावृधः सखा भूयादिति वर्तते ॥ ३९ ॥

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । कया नः । वामदेव्यस्य योनिः तिस्रः ऐन्द्यः गायत्र्यः अन्त्या पादनिवृत् सदावृधः सदा वर्द्धयितुर्विष्णोः सखा इन्द्रः कया ऊत्या केन तर्पणेन नोऽस्माकं चित्रः चायनीयः आभुवत् भूयात् कया शचिष्ठया शचीति कर्मनाम हतुब्लोपः अतिशयेन कर्मवत्या कया आवृता कर्मणा च चित्रो भूयात् ॥ ३९ ॥

तिस्रो गायत्र्य इन्द्रदेवत्या वामदेवदृष्टाः वामदेव्यसाम्नो योनिः वामदेव्यमात्मन्निति श्रुतेः अन्त्या पादनिवृत् सप्ताक्षरत्रिपादा। पूर्वर्चः इन्द्रपदमनुषञ्जनीयम्। इन्द्रः कया ऊती ऊत्या अवनेन तर्पणेन प्रीणनेन वा नोऽस्माकं सखा सहायः आभुवत् आभिमुख्येन भवति। तथा वृता वर्तत इति वृत् तया वृता वर्त्तमानया शचिष्ठया अतिशयेन शची शचिष्ठा तया अतिशयवत्या यागक्रिययास्माकं सखा भवति शचीतिकर्मनाम तत इष्ठन् प्रत्ययः। कीदृशः इन्द्रः चित्रः विचित्रः पूज्यो वा। सदावृधः सदा वर्धत इति सदावृधः इगुपधेति(पा० ३, १, १३५) कप्रत्ययः सदा वर्धमानः। ऊती तृतीयैकवचनस्य सुपां सुलुगिति ( पा० ७, १, ३९ ) पूर्वसवर्णः। आभुवत् इतश्च लोपः सुलुगिति ( पा० ७, १, ९७ ) तिप इलोपः शपश्छान्दसे ङित्वे धातोरुवङ्ङादेशः पा० ६, ४, ७७ ) ॥ ३९ ॥

**कस्त्वा॑ स॒त्यो मदा॑नां॒ मꣳहि॑ष्ठो मत्स॒दन्ध॑सः।**
**दृ॒ढा चि॑दा॒रुजे॒ वसु॑ ॥ ४० ॥**

कस्त्वा। को नाम त्वाम् मसत्मादयति। सत्यः अवितथः मदानां मध्ये मंहिष्ठः अतिशयेन मदजनकः। अन्धसः सोमस्य स्वभूतोंऽशः येन मत्तः सन् त्वम्। दृढाचित् दृढान्यप्यसुरवृन्दानि। आरुजे आरुजसि चूर्णयसि वसु च ददासीति शेषः। यद्वा दृढान्यपि सुवर्णप्रभृतीनि चिरकालस्थायीनि वसूनि आरुजसि चूर्णयसि दानाय ॥ ४० ॥

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा। कस्त्वा। अन्धसः सोमस्य कः अंशः सत्यः अवितथः त्वाम् मत्सत् मादयति मत्तं करोति। किम्भूतः मदानां मध्ये महिष्ठः अतिशयेन मदजनकः येन मत्तः त्वां दृढाचित् दृढान्यपि असुरवृन्दानि आरुजे आरुजसि चूर्णयसि वसु च ददासीति शेषः यद्वा दृढान्यपि कालस्थायीनि सुवर्णादीनि वसु वसूनि आरुजासि चूर्णयासि दानाय च ॥ ४० ॥

हे इन्द्र ! अन्धसोऽन्नस्य सोमरूपस्य कः अंशः त्वा त्वां मत्सत् माद्यति मत्तं करोति मदी हर्षे लेटोऽडाटाविति ( पा० ३, ४, ९४ ) अडागमः सिब्बहुलं लेटीति ( पा० ३, १, ३४ ) सिप्प्रत्ययः तिप इलोपः कीदृशः मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच् मदजनकानि हवींषि तेषां मध्ये मंहिष्ठः श्रेष्ठः अत्यन्तमदजनकः मंहि कान्तौ चुरादिः मंहयति द्योतते मंही अत्यन्तं मंही मंहिष्ठः यद्वा महि वृद्धौ भ्वादिः मंहते वर्धते मंही अत्यन्तं मंही मंहिष्ठः । येनांशेन मत्तः सन् दृढा चित् दृढान्यपि वसु वसूनि धनानि कनकादीनि त्वमारुजे रुजो भङ्गे पुरुषपदव्यत्ययः आरुजसि चूर्णयसि दातुं भनक्षि भङ्क्त्वा ददासीत्यर्थः ॥ ४० ॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥ ४१ ॥

(१) अभी षु णः।आभिमुख्येन च सुष्ठु च । नः अस्माकं सखीनाम् अविता पालयिता । जरितॄणां स्तोस्तॄणाञ्च अस्माकं पालयिता किञ्च । शतं भवासि शतधा भवसि हे इन्द्र ऊतये अवनाय रक्षणाय । प्रकृतत्वादस्माकमेव सखीनां जरितॄणाञ्च ॥ ४१ ॥

हे इन्द्र ! त्वमूतयेऽवनाय पालनाय सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवसि आडागमः शतशब्दो बहुवाची बहुरूपो भवसि पालनाय नानारूपाणि दधासीत्यर्थः । कीदृशस्त्वम् सखीनां मित्राणां जरितॄणां स्तोतॄणां नोऽस्माकमृत्विजामविता पालयिता । संहितायामभीत्यस्य दीर्घः । सुञ इति ( पा० ८, ३, १०७ ) सुशब्दस्य षत्वम् । नश्च धातुस्थोरुषुभ्य इति ( पा० ८, ४, २७ ) षुशब्दात् परस्य नः इत्यस्य णत्वम् ॥ ४१ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । अभी षुणः । आभिमुख्येन सुष्ठु च नोऽस्माकं सखीनां जरितॄणाम् अविता पालयिता त्वमूतये अवनाय शतं भवसि शतधा भवसि ॥ ४१ ॥

यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥४२॥

यज्ञायज्ञा वः । आग्नेयस्त्र्यचः । तत्र द्वे बृहत्यौ तृतीया सतोबृहती । यज्ञायज्ञस्य साम्नो योनिः यज्ञे यज्ञे इति सप्तम्येकवचनस्य आ आदेशः वीप्सायाम् । वः इति यजमानविषयम् युष्मदर्थम् अग्नये अग्निमिति विभक्तिव्यत्ययः वाक्यसंबन्धात् । गिरा गिरा च । तया तया च गिरा वाचा स्तुतिलक्षणया दक्षसे । दक्षसमिति सन्नतिः । दक्षवन्तमुत्साहवन्तम् अग्निविशेषणश्चैतत् । प्र प्रः प्रसमुपोदः पादपूरणमित्यभ्यासः शंसिषमित्याख्यातेन संबन्धः प्रशंसिषं वयम् अहमिति वचनव्यत्ययः । अमृतममरणधर्माणम् जातवेदसं जातप्रज्ञानम् । प्रियं मित्रन्न मित्रमेव । अथ वाक्यार्थवशादानुपूर्वी । अहं यज्ञेयज्ञे वः युष्मदर्थे अग्निन्दक्षवन्तं तया तया च स्तुत्या प्रशंसिषम् अमृतञ्जातवेदसं प्रियं मित्रमिव ॥ ४२ ॥

तृचः प्रगाथः आग्नेयः शम्युदृष्टः यज्ञायज्ञियस्य साम्नो योनिः यज्ञायज्ञियं पुच्छमिति श्रुतेः । द्वे बृहत्यौ तृतीया सतोबृहती । यज्ञा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा यज्ञायज्ञावः। आग्नेय्य स्त्र्यृचः द्वे बृहत्यौ तृतीया सतो बृहती यज्ञायज्ञियस्य साम्नो योनिः यज्ञे यज्ञे इति सप्तम्येकवचने आ आदेशः व इति यजमानविषयः अग्नये अग्निमिति च विभक्ति व्यत्ययः दक्षसे दक्षसमिति च प्रप्र प्रसमुपोद इति द्वित्वं तस्य शंसिषमिति आ ख्यातेनान्वयः वयम् अहमिति वचनव्यत्ययः । तथा च एवं योजना अध्वर्युवाक्यं यजमानं प्रति अहं वः युष्मदर्थे यज्ञे यज्ञे गिरा तया वाचा स्तुत्या अग्निं प्रियं मित्रं न मित्रमिव प्रशंसिषं स्तौमि किम्भूतमग्निं दक्षसं दाक्षिवन्तम् उत्साहवन्तम् अमृतममृतधर्माणं जातवेदसं जातप्रज्ञानम् ॥ ४२ ॥

यद्वा वीप्सायां द्वित्वम् सप्तम्येकवचनस्याकारः । व इति द्वितीया-बहुवचनमेकवचनार्थे यजमानविषयं वा । अग्नये चतुर्थ्येकवचनं द्वितीयैकवचनार्थे । गिरागिरा वीप्सायां द्वित्वम् । चः पादपूरणः । दक्षसे चतुर्थी द्वितीयार्थे । प्र प्र प्रसमुपोदः पादपूरण इति ( पा० ८, १, ६ ) द्वित्वम् तस्य च शंसिषमिति क्रियया सम्बन्धः । वयमिति प्रथमाबहुवचनमेकवचनार्थे । तथा चैवं योजना । यज्ञेयज्ञेऽनेकयज्ञेषु गिरागिरान्ययान्यया स्तुत्या वः त्वाम् यद्वा वो युष्माकमर्थे अग्निं प्रशंसिषं स्तौमि शंस स्तुतौ लुङ् अडभाव आर्षः । कीदृशमग्निं दक्षसम् दक्षतेरुत्साहार्थस्य धातोरसुन्प्रत्ययः दक्षते उत्सहते दक्षाः तम् उत्साहिनम् यद्वा दक्ष इति बलनाम अन्तर्नीतमत्वर्थं द्रष्टव्यम् दक्षसं बलवन्तम् । अमृतममरणधर्माणम् । जातवेदसम् जातं वेदो ज्ञानं धनं वा यस्मात्तम् । प्रियं प्रीतिजनकम् । नशब्द उपरिष्टादुपचारादुपमार्थीयः मित्रं न मित्रमिव यथा कश्चित्प्रियं मित्रं स्तौति तद्वदग्निं स्तुमह इत्याशास्महे ॥ ४२ ॥

पाहि नो अग्न एकया पाह्यु त द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ ४३ ॥

(१)पाहि नः । गोपाय नः अस्मान् । हे अग्ने एकया गिरा ऋग्लक्षणया । पाह्युत गोपाय च द्वितीयया द्वाभ्यां गीर्भ्यामृग्यजुर्लक्षणाभ्याम् । पाहि च गीर्भिः तिसृभिः स्तुतिभिः । हे ऊर्जामन्नानां पते पाहि च चतसृभिः गीर्भिः । ऋगाद्यास्तिस्रः गद्यपद्यकाव्यलक्षणा चतुर्थी गीः । हे बसो बासयितः ॥ ४३ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति । तद्यथा । पाहि नः । हे ऊर्जामन्नानां पते हे वसो वासयितः हे अग्ने एकया गिरा ऋग्लक्षणया नः पाहि उत द्वितीयया द्वाभ्यां गीर्भ्यां ऋग्यजुर्भ्यां पाहि तिसृभिर्गीर्भिः ऋग्यजुःसामभिः पाहि चतसृभिर्गीर्भिश्च पाहि गद्यपद्यकाव्यलक्षणा चतुर्थी गीः ॥ ४३ ॥

गर्भहस्ता । हे अग्ने ! ऊर्जो पते ! अन्नानां पालक ! हे वसो वासयितः । यद्वा लुप्तमत्वर्थं द्रष्टव्यम हे वसो । वसुमन् । धनवन् एकया गिरा इति पदस्यानुषङ्गः एकया गिरा ऋग्लक्षणया तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः नोऽस्मान् पाहि रक्ष । उत अपि च द्वितीयया यजुर्लक्षणया स्तुतः सन् पाहि । तिसृभिर्गीर्भिः ऋग्यजुःसामलक्षणाभिः स्तुतो नः पाहि । चतसृभिः ऋग्यजुःसामनिगदलक्षणाभिः स्तुतो नः पाहि गद्यपद्यकाव्यादिरूपा चतुर्थी गीः ॥ ४३ ॥

ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ ४४ ॥

(१)ऊर्जो नपातम् । स त्वं हे अध्वर्यो ऊर्जो नपातम् ऊर्जशब्देनाप उच्यन्ते । ताभ्य ओषधिवनस्पतयो जायन्ते तेभ्य एष जायते इत्यपां पौत्रोऽग्निः । तम् । हिन । हिनु । तर्पय । अयम् अस्मयुः । अयं हि अग्निः अस्मान्कामयते । अतो वयञ्च । दाशेम संकल्पं कुर्याम् । हव्यदातये । हविषो दानाय । भुवद्वाजेष्वविता । यतोऽयम् वाजेष्वन्नेषु विषयभूतेषु अविता गोप्ता । भुवत् भवति । भुवद्वृधे वर्द्धनाय च भवति । उत अपि च ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति । तद्यथा । उर्जो नपातम् । हे अध्वर्यो सः त्वम् ऊर्जो नपातम् अपां पौत्रम् । अग्निं हिन हिनु तर्पय अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । अयमग्निः अस्मयुः अस्मान् कामयते अतो वयं हव्यदातये हविषो दानाय दाशेम संकल्पं कुर्याम् यतोऽयं वाजेषु अन्नेषु अविता भुवत् भवति दधे वर्धनाय च भवति उत तनूनां शरीराणां त्राता भवति बहुवचनं भार्यादिशरीरार्थम् ॥ ४४ ॥

त्राता तनूनां शरीराणाम् बहुवचनोपदेशात् भार्यादिशरीरग्रहणम् यत एवम् अतः ऊर्जोनपातं हिन इति संबन्धः । एवमादूरविप्रकर्षेण विषममन्त्रा व्याख्येयाः ॥ ४४ ॥

यजमानोऽध्वर्युं प्रार्थयते । हे अध्वर्यो ! ऊर्जो नपातमपां पौत्रमग्निं स त्वं हिन हिनु तर्पय हि गतौ वृद्धौ स्वादिः लोट् उलोपश्छान्दसः ऊर्जशब्देनाप उच्यन्ते अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । यतोऽयमग्निरस्मयुः अस्मानिच्छति अस्मयुः क्याच्छन्दसीति ( पा० ३, २, १७० ) उप्रत्ययः अतो हव्यदातये हविषो दानाय दाशेम सङ्कल्पयामः दाशृ दाने अत्र सङ्कल्पार्थः । यतोऽयं वाजेष्वन्नेषु अविता रक्षिता भुवत् भवति वृधे- वृद्धैय च भुवत् भवति उतापि च तनूनां शरीराणां त्राता रक्षिता भवति बहुवचनं भार्य्यादिशरीररक्षार्थमुपात्तम् । अग्निरन्नतनुरक्षिता वर्धयितास्मान् कामयतेऽतो हविर्दानाय तं सङ्कल्पयामः ॥ ४४ ॥

सं॒व॒त्स॒रो॑ऽसि परिवत्स॒रो॑ऽसीदावत्स॒रो॑ऽसीद्वत्स॒रो॑ऽसि वत्स॒रो॑ऽसि । उ॒षस॑स्ते कल्पन्तामहोरा॒त्रास्ते॑ कल्पन्तामर्धमा॒सास्ते॑ कल्पन्तां॒ मासा॑स्ते कल्पन्तामृ॒तव॑स्ते कल्पन्ताᳪं संवत्स॒रस्ते॑ कल्पताम् प्रेत्या॒ एत्यै॒ सञ्चाञ्च॒ प्र च॑ सारय । सु॒प॒र्ण॒चिद॑सि॒ तया॑ दे॒वत॑याङ्गिर॒स्वद् ध्रु॒वः सी॑द ॥ ४५ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
सप्तविंशोऽध्यायः ॥ २७ ॥

---

(१) संवत्सरोऽसि । सञ्चितोग्निरनेन यजुषा अभिमृश्यते ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित

पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिमिति। यदुक्तं ज्योतिःशास्त्रे तदिहोच्यते। हे अग्ने यस्त्वं संवत्सरोऽसि। सर्वस्य सरितासि नच त्वामन्यः सारयति। यश्च त्वम्परिवत्सरोऽसि यश्च इदा वत्सरोऽसि इदा इदानीमिति समानार्थौ यश्च इद्वत्सरोऽसि इदिति निपातः। यश्च वत्सरोऽसि निर्विशेषेण तस्य ते भवतः उषसः कल्पन्तां क्लृप्ता भवन्त्ववयवत्वेन। एवम् अहोरात्राः अर्द्धमासा मासा ऋतवश्च संवत्सरश्च कल्पताम्। त्वञ्च प्रेत्यै प्रगमनाय एत्यै आगमनाय सञ्चाञ्च प्रसारय च। समं च प्रचसारय च। स्वेच्छया संकोचविकाशधर्मा भवेत्यभिप्रायः। सुवर्णाचिदसीत्याकृतिवचनम् तया देवतया वाचा सहितः। अङ्गिरस्वत् प्राण इव ध्रुवः शाश्वतिकः सीद अवस्थानं कुरु ॥ अभित्वा शूर नोनुम इत्यादि परमेष्ठ्यपश्यत् ॥ ४५ ॥

इति उव्वटकृतौ मन्त्रभाष्ये सप्तविंशोऽध्यायः ॥ २७ ॥

---

पु० नास्ति। तद्यथा। संवत्सरोऽसि। संचितोऽग्निरनेन यजुषा अभिमृश्यते पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिमिति यज्ज्योतिःशास्त्रे उक्तं तदिहोच्यते। हे अग्ने त्वं संवत्सरोऽसि सर्वस्य सरितासि नच त्वामन्यः सरिता यः त्वं परिवत्सरोऽसि। यश्च इदावत्सरोऽसि यश्च इद्वत्सरोऽसि इदा इदानीमिति समानार्थौ इदिति निपातः। यश्च वत्सरोऽसि निर्विशेषणः तस्य भवतः उषसः कल्पन्ताम् अवयवत्वेन क्लृप्ता भवन्तु एवमहोरात्राः अर्धमासाः मासाः ऋतवश्च कल्पन्तां संवत्सरश्च कल्पताम्। हे अग्ने त्वं च प्रेत्यै प्रगमनाय एत्यै आगमनाय च समं च प्रसारय च स्वेच्छया संकोचविकाशधर्मा भवेति भावः सुपर्णचिदसीति आकृतिवचनं सुपर्णवच्चीयत इति तया देवतया वाचा सहितः। अङ्गिरस्वत् प्राणा इव ध्रुवः शाश्वतिकः सीद अवस्थानं कुरु अभित्वा शूर नोनुम इत्यादिपरमेष्ठ्यपश्यत् ॥ ४५ ॥

इति मन्त्रभाष्ये सप्तविंशोऽध्यायः ॥ २७ ॥

अग्निदेवत्यं यजुः अत्र यजुषि नवनवत्यक्षराणि एको व्यूहः ततः शताक्षराभिकृतिश्छन्दः । चित्याग्नेरभिमर्शने विनियोगः । पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिमिति ( ज्यो० १, १ ) ज्योतिः शास्त्रोक्तमिहोच्यते । हे अग्ने । त्वं संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषेण पञ्चसंवत्सरात्मकयुगरूपोऽसीत्यर्थः युगं भवेद्वत्सरपञ्चकेनेति ज्योतिःशास्त्रोक्तेः । तस्य ते तव उषसः प्रातःकालादयः कालविशेषाः सङ्गवमध्याह्नादयः अहोरात्राः दिवसनिशाः अर्धमासाः पक्षाः मासाश्चैत्रादयः ऋतवो वसन्तादयः कल्पन्तामवयवत्वेन क्लृप्ता भवन्तु । संवत्सरश्च उपलक्षणम् संवत्सरादयः पञ्चापि कल्पन्ताम् । क्रियावृत्तिरादरार्था किञ्च प्रेत्यै प्रगमनाय एत्यै आगमनाय च समञ्च संकुच प्रसारय च स्वेच्छया सङ्कोचविकासौ कुर्विति भावः । किञ्च सुपर्णाकारेण चितत्वात् सुपर्णचिदसि । तया देवतया वाचा सहितः सन् अङ्गिरस्वत् अङ्गिरस इव प्राणा इव प्राणा ध्रुवः स्थिरः सीद तिष्ठ ॥ ४५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।<br>
सप्तविंशोऽयमध्याय आग्निको विरतोऽधुना ॥ २७ ॥

## अष्टाविंशोऽध्यायः।

होता यक्षत् समिधेन्द्रमिडस्पदे नाभा पृथिव्या अधि। दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहां वेत्वाज्यस्य होतर्यज॥ १॥

(१) होता यक्षत्समिधेन्द्रम्। सौत्रामण्यामैन्द्रस्य पशोः प्रयाजप्रैषाः। एकादश ऐन्द्रानेके प्रथमस्येत्यैन्द्राः। आप्रीदेवतास्तु इन्द्रस्यैव विभूतय इति॥ होता यक्षत् दैव्यो होता यजतु समिधा इध्मकाष्ठेन हविर्भूतेन। समिधा वा सहितम् इन्द्रम् य इन्द्रः त्रिषु स्थानेषु समिध्यते। प्रथमन्तावत् इडस्पदे पृथिव्या यजनाय प्रदेशे समिध्यते अग्न्यात्मना द्वितीयं विद्युदात्मना समिध्यते। नाभौ पृथिव्या अधि पृथिवीशब्देनान्तरिक्षमुच्यते नाभिभूते अन्तरिक्षप्रदेशे अधे उपरि ततः तृतीयमादित्यात्मना दिवः द्युलोकस्य वर्ष्मन् वर्षिष्ठे प्रदेशे समिध्यते एवं त्रिस्थान

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा। होता यक्षत्समिधेन्द्रम्। सौत्रामण्याम् ऐन्द्रस्य पशोः प्रयाजप्रैषाः प्रयाजप्रैषाः एकादश ऐन्द्रानेके प्रथमस्येत्यैन्द्रा आप्रीदेवतास्तु इन्द्रस्यैव विभूतय इति दैव्यो होता समिधा इध्मकाष्ठेन हविर्भूतेन समिधा वा सहितम् इन्द्रं यक्षत् यजतु य इन्द्रः त्रिषु स्थानेषु समिध्यते प्रथमम् इडस्पदे पृथिव्या यजनीये प्रदेशे अग्न्यात्मना समिध्यते पृथिवीशब्देनान्तरिक्षं पृथिव्याः नाभा नाभौ अन्तरिक्षमध्ये द्वितीयं विद्युदात्मना समिध्यते तृतीयम् अधि उपरि दिवो वर्ष्मन् वर्षिष्ठे प्रदेशे आदित्यात्मना समिध्यते किंभूतः चर्षणीसहां चर्षणयो मनुष्यास्तान् सहन्ते अभिभवन्ति ते चर्षणीसहः देवाः तेषां मध्ये ओजिष्ठः अतिशयेन बली स चेज्यमानः आज्यस्य स्वं भागं वेतु पिबतु हे मनुष्यहोतः त्वमपि यज॥ १॥

इन्द्रः स्तूयते । यश्च ओजिष्ठः अतिशयेन बली । केषां मध्ये । चर्षणीसहाम् चर्षणयो मनुष्याः तान् ये सहन्ते अभिभवन्ति ते चर्षणीसहः देवाः तेषां चर्षणीसहां देवानां मध्ये । स चेज्यमानो वेतु पिबतु स्वमंशमाज्यस्य । त्वमपि हे मनुष्यहोतः यज ॥ १ ॥

इन्द्रमिडः सौत्रामणिकोऽध्याय इति कात्यायनोक्तेः ( अनुक्रमण्याम् ) अयमध्यायः सौत्रामणीसम्बन्धी सौत्रामण्यङ्गभूतयोरैन्द्रवायोधसयोराद्यन्तपश्वोः प्रयाजानुयाजप्रैषरूपः ततश्च प्रजापत्यश्विसरस्वत्योऽध्यायस्य ऋषयः । आद्येऽनुवाके एकादशैन्द्रपशोः सम्बन्धिन आप्रीदेवताः समित्तनूनपादित्यादिदेवताकाः प्रयाजानां प्रैषाः होता यक्षत्समिधेन्द्रामित्यादयो होता यक्षदिन्द्रमित्यन्ताः ( ११ क० ) । अथ मन्त्रार्थः । आर्षी त्रिष्टुप् । दैव्यो होता समिधा समित्काष्ठेन हविर्भूतेन सामिधाप्रीदेवतया सहितं वा इन्द्रं यक्षत् यजतु । य इन्द्रः त्रिषु स्थानेषु समिध्यते दीप्यते । प्रथमम् इडः पृथिव्याः पदे यजनीये प्रदेशे अग्न्यात्मना समिध्यते । द्वितीयम् पृथिव्याः नाभौ पृथिवीशब्देनान्तरिक्षम् अन्तरिक्षस्य मध्ये विद्युदात्मना समिध्यते अधि उपरि । तृतीयम् दिवो वर्ष्मन् स्वर्गस्य वर्ष्मणि वर्षिष्ठे प्रदेशे आदित्यात्मना समिध्यते । कीदृशः चर्षणिसहामोजिष्ठः चर्षणयो मनुष्यास्तान् सहन्तेऽभिभवन्ति चर्षणिसहो मनुष्याभिभावुकास्तेषां मध्ये ओजस्वितमः अत्यन्तमोजस्वी ओजिष्ठः इष्ठनि परे विन्मतोर्लुगिति ( पा० ५, ३, ६५ ) विनो लुकि टिलोपे ओजिष्ठ इति रूपम् । संहितायां चर्षणिशब्दस्य दीर्घः । एवंविध इन्द्रः आज्यस्य वेतु घृतं पिबतु । हे मनुष्यहोतः ! त्वमपि यज ॥ १ ॥

होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् । इन्द्रं देवꣳ स्वर्विदं पथिभिर्मधुमत्तमैर्नराशꣳसेन तेजसा वेत्वाज्यस्य होतर्यज ॥ २ ॥

(१)होता यक्षत्तनूनपातम् आप्रीर्देवताभिप्रायमिन्द्राभिप्रायं वा स हि मरीचेः पौत्रः। दैव्यो होता यजतु तनूनपातमिन्द्रम् ऊतिभिरवनैः सहितम् जेतारम् अयज्वनाम् अपराजितम् इन्द्रं देवं दानादिगुणयुक्तम् स्वर्विदम्। स्वर्गं वेत्ति जानाति स्वर्गो वा विद्यते इति स्वर्वित् तं स्वर्विदम्। केन यजतु। पथिभिर्मधुमत्तमैः। पथिशब्देनात्र हवींष्युच्यन्ते तैर्हि स्वर्गं लोकं प्रतिपतन्ति यजमानाः। हविर्भिः मधुमत्तमैरतिशयेन रससंयुक्तैः। कथंभूतमिन्द्रम्। नराशंसेन यज्ञेन सहितम् तत्र तनूनपात् नराशंसावेकस्मिन्प्रयाजे पठितावत उभयवानयं प्रयाजः। तेजसा च सहितमिन्द्रयं यजतु। स चेज्यमानो वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज॥ २॥

अतिजगती। नराशंशेन देवेन युतं तनूनपातमिन्द्रं च देवं होता यजतु। कैः पथिभिः पतन्ति गच्छन्ति स्वर्गं यजमाना यैस्ते पन्थानो हवींषि तैः। कीदृशैः ऊतिभिः अवन्ति तर्पयन्ति ते ऊतयस्तैः ऊतियूतीत्यादिना ( पा० ३, ३, ९७ ) कर्त्तरि निपातः। तथा मधुमत्तमैः मधुर्मधुरस्वादोऽस्ति येषु ते मधुमन्तः अत्यन्तं मधुमन्तो मधुमत्तमाः तैः। कीदृशमिन्द्रं जेतारं शत्रूणाम् अपराजितं केनापि न पराभूतम्। स्वर्विदं स्वः स्वर्गं वेत्ति स्वीयं जानाति स्वर्वित् यद्वा स्वः स्वर्गो विद्यते स्वर्वित्तम् विद

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा। होता यक्षत् तनूनपातम्। आप्रीदेवताभिप्रायं मित्राभिप्रायं वा स हि मरीचेः पौत्रः तनूपातम इन्द्रदेवं च ऊतिभिरवनैः होता यजतु किंभूतं जेतारम् अयज्वनाम् अपराजितं स्वर्विदं स्वर्गं वेत्ति जानातीति स्वर्वित् स्वर्गो वा विद्यत इति स्ववित् कैर्यजतु मधुमत्तमैः अतिशयेन रससंयुक्तैः पथिभिर्हव्यैः पथिशब्देन हवींष्युच्यन्ते तैर्हि स्वर्गं प्रति पतन्ति यजमानाः नराशंसेन यज्ञेन तेजसा च सहितम् इन्द्रम् अत्र तनूनपान्नराशंसावेकस्मिन्प्रयाजे पठितावत उभयवानयं प्रायजः वेत्विति पूर्ववत्॥ २॥

सत्तायाम् । कीदृशेन नराशंसेन तेजसा तेजस्विना । एवं देवद्वययुत इन्द्रः आज्यस्य वेतु । शेषं पूर्ववत् । अत्र तनूनपान्नराशंसावेकत्र प्रयाजे पठितावित्युभयवानयं प्रयाजः ॥ २ ॥

होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम् । देवो देवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य होतर्यज ॥ ३ ॥

(१.)होता यक्षदिडाभिरिन्द्रम् । दैव्यो होता यजतु इडाभिः प्रयाजदेवतया सहितमिन्द्रम् ईडितं स्तुतम् आजुह्वानमाहूयमानं यजमानैरनेकशः । अमर्त्यममरणधर्माणम् । स चेज्यमानः देवः द्युस्थान इन्द्रः । देवैः द्युस्थानैः सवीर्यः समानवीर्यः । वज्रहस्तः । पुरन्दरः पुरान्दारयिता । वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३ ॥

ब्राह्मी उष्णिक् । होता इडाभिः प्रयाजदेवताभिः सह इन्द्रं यजतु । कीदृशमिन्द्रम् ईडितम् ऋत्विग्भिः स्तुतम् आजुह्वानमाहूयमानम् यजमानैः देवानाह्वयन्तं वा । अमर्त्यममरणधर्माणम् । ईदृशो देव इन्द्रः आज्यस्य वेतु कीदृशो देवः सवीर्य्यः समानं वीर्य्यं यस्य सः सर्वदेवेषु यादृशं वीर्य्यं तदेकस्मिन्निन्द्रे इत्यर्थः । वज्रहस्तः वज्रं हस्ते यस्य । पुरन्दरः पुरं शत्रूणां नगरं दारयति पुरन्दरः । उक्तमन्यत् ॥ ३ ॥

होता यक्षद् बर्हिषीन्द्रं निषद्वरं वृषभं नर्या-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । होता यक्षदिडाभिरिन्द्रम् । इडाभिः प्रयाजदेवतया सह इन्द्रं होता यजतु किमिन्द्रम् ईडितं स्तुतम् आजुह्वानम् आह्वयमानं यजमानैः अमर्त्यम् अमरणधर्माणं स चेज्यमानः अज्यस्यांशं वेतु कीदृशः देवः द्युस्थानः देवैः सवीर्यः समानवीर्यः वज्रहस्तः पुरं शत्रूणां दारयतीति पुरन्दरः ॥ ३ ॥

पसम् । वसुभी रुद्रैरादित्यैः सयुग्भिर्बर्हिरासदद्वे-
त्वाज्यस्य होतर्यज ॥ ४ ॥

होता यक्षद्बर्हिषीन्द्रम् । दैव्यो होता यजतु बर्हिषीन्द्रम् ब-
र्हिषि प्रयाजदेवतायां स्थितमिन्द्रम् । यज्ञसाधनमेवात्र प्रयाजदे-
वता बर्हिः । कथंभूतमिन्द्रम् निषद्वरं निषदनं कुर्वतां वर-
मुत्कृष्टम् । वृषभं वर्षितारञ्च नर्यापसम् । नृभ्यो मनु-
ष्येभ्यो हितं नर्यं नर्यम् अपः कर्म यस्य स नर्यापाः तं
नर्यापसमिन्द्रं । स चेज्यमानः वसुभिः रुद्रैः आदित्यैः । स-
युग्भिः समानयोजनैः बर्हिः आसदत् । आसीदत्विति लका-
रव्यत्ययः । वेतु पिबतु आज्यस्य स्वमंशम् त्वमपि हे मनु-
ष्यहोतर्यज ॥ ४ ॥

आर्षी त्रिष्टुप् । बर्हिषि प्रयाजदेवतायां स्थितमिन्द्रं होता
यजतु । कीदृशमिन्द्रं निषद्वरं निषीदन्ति निषद उपवेष्टारः तेषां
वरं श्रेष्ठम् वृषभं वर्षितारम् नर्यापसं नरेभ्यो यजमानेभ्यो हि-
तं नर्यमपः कर्म यस्य स नर्यापाः तम् नराणां हितकारिणम्
स इन्द्रो वसुभिः रुद्रैः आदित्यैः सवनत्रयदेवैः सहितः
बर्हिरासदत् आसीदतु आज्यस्य वेतु च । कीदृशैर्वस्वादिभिः
सयुग्भिः सह युञ्जन्ति ते सयुजः तैः समानयोगैः ॥ ४ ॥

होता यक्षदोजो न वीर्यꣳ सहो द्वार इन्द्रमवर्ध-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०
नास्ति । तद्यथा । होता यक्षद् बर्हिषीन्द्रम् । बर्हिषि प्रयाजदेवतायां
स्थितम् इन्द्रं होता यजतु यज्ञसाधनमेवात्र प्रयाजदेवता किमिन्द्रं
निषद्वरम् निषीदन्तीति निषदः तेषां वरं निषदनं कुर्वताम् उत्कृष्टं
वृषभं वर्षितारं नर्यापसं नरेभ्यो हितं नर्यं तत् अपः कर्म यस्य स
नर्यापाः तम् स इज्यमानः वसुभिः रुद्रैः आदित्यैः सयुग्भिः समान-
योजनैः बर्हिः आसदत् आसीदतु लकारव्यत्ययः वेतु च ॥ ४ ॥

यन् । सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो द्वार इन्द्राय मीढुषे व्यन्त्वाज्यस्य होतर्यज ॥ ५ ॥

(१)होता यक्षदोजो न । दैव्यो होता यजतु । ओजः न इति समुच्चयार्थीयो निपातः । ओजश्च वीर्यश्च सहश्च द्वारश्च इन्द्रियशरीरमनोबलान्यपि समुच्चितानि । कस्माद्धेतोरेतानि यजतु । यत एतानि इन्द्रमवर्द्धयन् वर्द्धयन्ति । इदानीं नवस्तुत्यद्वारः स्तौति । एवमनेन कर्मणा कृतकृत्याः द्वारः । सुप्रायणाः सुप्रगमनाः अस्मिन्यज्ञे विश्रयन्ताम् विश्रिता भवन्तु । ऋतावृधः सत्यवृधो वा । यज्ञवृधो वा इन्द्राय इन्द्रार्थम् कथम्भूताय । मीढुषे सेक्त्रे व्यन्तु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ५ ॥

अतिजगती । नकारश्चार्थः । या द्वारः प्रयाजदेवा इन्द्रमिन्द्रे ओजो वीर्य्यं सहश्चावर्धयन् ओज इन्द्रियबलं वीर्यं शरीरं बलं सहो मनोबलम् ता द्वारो होता यजतु । ताश्च द्वारः इन्द्राय इन्द्रार्थं विश्रयन्तां विवृता भवन्तु अस्मिन् यज्ञे आज्यं व्यन्तु च । कीदृश्यो द्वारः सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु ताः विवृतत्वादित्यर्थः । ऋतं यज्ञं वर्धयन्ति ऋतवृधः संहितायामृतुशब्दस्य दीर्घः । इन्द्राय कीदृशाय मीढुषे मेहति मीढ्वान् तस्मै सेक्त्रे क्वसन्तो निपातः ॥ ५ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । होता यक्षदोजो न । नकारः समुच्चयार्थः । ओजः वीर्यं सहः क्रमात् इन्द्रियशरीरमनोबलानि द्वारश्च एतानि होता यजतु कुतः यत एतानि इन्द्रम् अवर्द्धयत् इदानीं नवस्तुत्यद्वारः स्तौति सुप्रायणाः सुप्रगमनाः ऋतावृधः सत्यस्य यज्ञस्य वा वर्द्धयिञ्यो द्वारः अस्मिन् यज्ञे मीढुषे सेक्त्रे इन्द्राय इन्द्रार्थे विश्रयन्तां विवृता भवतु ताश्च व्यन्तु पिबन्तु ॥ ५ ॥

होता यक्षदुषे इन्द्रस्य धेनू सुदुघे मातरा मही सवातरौ न तेजसा वत्समिन्द्रमवर्धतां वीतामाज्यस्य होतर्यज ॥ ६ ॥

(१)होता यक्षदुषे। दैव्यो होता यजतु। उषे नक्तोषासाविति प्राप्ते पूर्वपदलोपश्छान्दसः। इन्द्रस्य धेनू सुदुघे शोभनदोहने मातरा मातरौ। मही महत्यौ। ते चेज्यमाने सवातरौ वातृशब्दो वत्सवचनः समानो वाता वत्सः ययोस्ते सवातरौ । नकार उपमार्थीयः। एकशिशुके इव गावौ तेजसा वत्समिव इन्द्रम् अवर्द्धताम्। वीताम्पिबताम् आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ६ ॥

आर्षी त्रिष्टुप्। उषे अत्र पूर्वपदलोपः होता उषे नक्तोषे यजतु ते च तेजसा इन्द्रमवर्धताम् आज्यं वीतां पिबतां च। तत्र दृष्टान्तः सवातरौ न न इवार्थे समानौ वाता वत्सतरो ययोस्ते सवत्सतरौ एकशिशुके गावौ वत्सं यथा वर्धयेते तथेन्द्रं वर्धयताम्। कीदृश्यौ उषे इन्द्रस्य धेनू धनुतस्ते धेनू प्रीणयित्र्यौ । सुदुघे सुष्ठु दुग्धस्ते सुदुघे दुग्धं पूरयन्त्यौ। मातरा मातरौ विभक्तेराकारः मातृवत्पालिके। मही मह्यौ महत्यौ विभक्तिलोपः ॥ ६ ॥

होता यक्षदैव्या होतारा भिषजा सखाया हवि-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा। होता यक्षदुषे नक्तोषासाविति प्राप्ते पूर्वपदलोपश्छान्दसः। होता उषे नक्तोषे यजतु कीदृश्यौ इन्द्रस्य धेनू सुदुघे सुदोहने मातरा मातरौ मही महत्यौ ते चेज्यमाने ते सवातरौ वातृशब्दो वत्सवचनः समानो वाता वत्सो ययोस्ते सवातरौ एकशिशुके गावौ वत्सं न वत्समिव तेजसा इन्द्रम् अवर्द्धतां वर्द्धयेताम् आज्यस्य वीतां पिबतां च ॥ ६ ॥

षेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसाविन्द्राय धत्त इन्द्रियं वीतामाज्यस्य होतर्यज ॥ ७ ॥

(१)होता यक्षद्दैव्या होतारा । दैव्यौ होतारौ । भिषजा भिषजौ देवानां वैद्यौ सखाया सखायौ समानख्यानौ । यौ च हविषा इन्द्रम् भिषज्यतः । यौ च कवी क्रान्तदर्शनौ यौ च देवौ द्युस्थानौ यौ च प्रचेतसौ प्रकृष्टज्ञानौ यौ च इन्द्राय इन्द्र इति विभक्तिव्यत्ययः । धत्तः स्थापयतः इन्द्रियं वीर्यम् । तौ चेज्यमानौ वीताम्पिबताम् आज्यस्य स्वमंशन्त्वमपि हे मनुष्यहोतर्यज ॥ ७ ॥

अतिजगती । दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमस्तौ होता यजतु यौ च हविषा इन्द्रं भिषज्यतः चिकित्सतः भिषज् रुग्जये कण्ड्वादिभ्यो यक् । इन्द्राय इन्द्रियं वीर्य्यं धत्तः च तौ आज्यं वीताम् । कीदृशौ भिषजा भिषजौ चिकित्साकुशलौ । सखाया सखायौ अन्योन्यं स्नेहवन्तौ । कवी क्रान्तदर्शनौ देवौ दीप्यमानौ । प्रचेतसौ प्रकृष्टं चेतो ज्ञानं ययोस्तौ ॥ ७ ॥

होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इडा सरस्वती भारती महीः । इन्द्रपत्नीर्हविष्मतीर्व्यन्त्वाज्यस्य होतर्यज ॥ ८ ॥

(२)होता यक्षत्तिस्रो देवीः । न भेषजं त्रयस्त्रिधातवोऽपसः

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पु० नास्ति । तद्यथा । होता यक्षद्दैव्या । अयं चाग्निरसौ च मध्यमः वायौ भिषजौ सखायौ दैव्यौ होतारौ होता यजतु यौ हविषा इन्द्रं भिषज्यतः कवी क्रान्तदर्शनौ प्रचेतसौ प्रकृष्टज्ञानौ यौ देवौ इन्द्राय इन्द्रे विभक्तिव्यत्ययः इन्द्रियं वीर्यं धत्तः स्थापयतः तौ च वीताम् ॥७॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु-

नकारो भिन्नक्रमः समुच्चयार्थीयः । भेषजश्च ये च त्रयो लोकाः त्रिधातवः । अग्निवायुसूर्यास्तेषां धातवः अपसः । अप इति कर्मनाम मत्वर्थीयलोपः । अपस्विनः कर्मवन्तः । शीतोष्णवर्षादीनि हि तेषां कर्माणि । तांश्च होता यजतु । कतमास्तिस्रो देव्यः इडा सरस्वती भारती च । महीः महतीः इन्द्रपत्नीः इन्द्रस्य पालयित्रीः हविष्मतीः हविषा संयुक्ताः । ताश्चेज्ज्यमानाः व्यन्तु पिबन्तु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ८॥

ब्राह्मी अनुष्टुप् भेषजं भेषजरूपा ये त्रयो लोकास्तान् इडा सरस्वती भारतीति तिस्रो देवीश्च होता यजतु ताश्चाज्यं व्यन्तु नकारश्चार्थे । कीदृशास्त्रयः त्रिधातवः त्रयोऽग्निवायुसूर्या धातवो धर्त्तारो येषां ते । अपसः अपस्विनः कर्मवन्तः शीतोष्णवातवर्षादीनि लोकानां कर्माणि । कीदृश्यस्तिस्रः महीः महत्यः । इन्द्रपत्नीः इन्द्रस्य पत्न्यः पालयित्र्यः । हविष्मतीः हविर्विद्यते यासां ताः ॥ ८ ॥

होता यक्षत्त्वष्टारमिन्द्रं देवं भिषजंᳫं सुयजं घृतश्रियम् । पुरुरूपंᳫं सुरेतसं मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ॥ ९ ॥

(१)होता यक्षत्त्वष्टारमिन्द्रम् । दैव्यो होता यजतु । त्वष्टारम्प-

---

द्रित पु० नास्ति । तद्यथा । होता याक्षत्तिस्रो देवीः भेषजं भेषजभूताः ये त्रयो लोकाः कीदृशाः त्रिधातवः त्रयोऽग्निवायुसूर्या एव धातवो धर्त्तारो येषां ते अपसः अप इति कर्मनाम मतुब्लोपः अस्विनः कर्मवन्तः शीतोष्मवातवर्षादीनि तेषां कर्माणि ताँल्लोकान् तिस्रो देवीश्च होता यजतु नकारश्चार्थे कास्तिस्रः इडा सरस्वती भारती किम्भूताः महीः महतीः, इन्द्रपत्नीः इन्द्रस्य पालयित्रीः हविष्मतीः हविषा संयुक्ताः ताश्च व्यन्तु ॥ ८ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित

याजदेवताम् । इन्द्रम् इदि परमैश्वर्ये त्वष्टा चेन्द्रः सामानाधिकरण्यात् । देवन्दानादिगुणयुक्तम् भिषजमिन्द्रस्य । सुयजम् । साधुयष्टव्यम् अक्लेशया गवा । घृतश्रियम् आज्यहविष्का हि प्रयाजाः । पुरुरूपं बहुरूपम् सुरेतसं शोभनरेतस्कम् मघोनं मघवन्तं धनवन्तम् । स चेज्यमानस्त्वष्टा इन्द्राय इन्द्रे इति विभक्तिव्यत्ययः दधत् स्थापयत् इन्द्रियाणि वीर्याणि । वेतु चपिबतु च आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ९ ॥

अतिजगती । होता त्वष्टारं प्रयाजदेवतां यजतु । कीदृशं त्वष्टारम् इन्द्रम् इदि परमैश्वर्य्ये ईश्वरं प्रभुम् । देवं दातारम् । भिषजं रोगनिवर्तकम् । सुयजं सुष्ठु इज्यते स सुयजस्तम् । साधु यष्टव्यम् । घृतश्रियं घृतेन श्रीः शोभा यस्य तम् आज्यहविष्का हि प्रयाजाः । पुरुरूपं पुरूणि बहूनि रूपाणि यस्य तम् । सुरेतसं शोभनं रेतो वीर्यं यस्य तम् । मघोनं मघवन्तं धनवन्तम् । स त्वष्टा इन्द्राय इन्द्रियाणि वीर्य्याणि दधत् सन् आज्यं वेतु ॥ ९ ॥

होता॑ यक्ष॒द्वन॒स्पतिँ॑ शमि॒तार॑ꣳ श॒तक्र॑तुं॒ धियो॒ जोष्टा॑रमिन्द्रि॒यम् । मध्वा॑ सम॒ञ्जन् प॒थिभि॑ः सु॒गेभि॑ः स्वदा॑ति य॒ज्ञं मधु॑ना घृ॒तेन॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥ १० ॥

(१) होता यक्षद्वनस्पतिम् । दैव्यो होता वनस्पतिं यजतु ।

---

पु० नास्ति । होता यक्षत्त्वष्टारम् । होता त्वष्टारं प्रयाजदेवतां यजतु किन्त्वष्टारं इन्द्रम् इदि परमैश्वर्यै ईश्वरं देवं दातारं भेषजं सुयजं साधु यष्टव्यम् अक्लेशया गवा घृतश्रियं घृतस्य श्रीर्यस्य तम् आज्यहविष्का हि प्रयाजाः पुरुरूपं बहुरूपं सुरेतसं शोभनरेतष्कं मघोनं मघवन्तं धनवन्तं स च त्वष्टा इज्यमानः सन् इन्द्राय इन्द्रे इन्द्रियाणि वीर्याणि दधत् दधातु वेतु च ॥ ९ ॥

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा होता यक्षद्वनस्पतिम् । होता वनस्पतिं

शमितारं हविषा संस्कर्तारम् शतक्रतुम्बहुकर्माणम् । धियो जोष्टारम् बुद्धेः कर्मणो वा सेवितारम् । इन्द्रियं वीर्यात्मकम् स चेज्यमानः । मध्वा समञ्जन् मधुस्वादुना घृते समञ्जन् यज्ञं संमृष्ठीकुर्वन् । पथिभिः सुगेभिः मार्गैः शोभनगमनैः । स्वदाति यज्ञम् । स्वदातिः प्रापणार्थः । प्रापयतु यज्ञं देवाननु मधुना मधुस्वादुना घृतेन सहितम् । वेतु च पिबतु चाज्यस्य त्वमंशं त्वमपि हे मनुष्य होतर्यज ॥ १० ॥

शक्करी । होता वनस्पतिं प्रयाजदेवतां यजतु । कीदृशं वनस्पतिं शमितारम् उलूखलादिरूपेण हविषां संस्कर्त्तारम् । शतक्रतुं शतं क्रतवः कर्माणि यस्य तं बहुकर्माणम् । धियो जोष्टारं बुद्धेः सेवितारम् । इन्द्रियमिन्द्रस्यात्मनो हितं वीर्य्यं रूपं वा । स त्वष्टा मध्वा मधुना स्वादुना घृतेन समञ्जन् यज्ञं संम्रक्षयन् सन् सुगेभिः सुगैः सुगमनैः पथिभिर्मार्गैः मधुना स्वादुना घृतेन युतं यज्ञं स्वदाति देवान् प्रापयति स्वदातिः प्रापणार्थः स आज्यं वेतु । सुखेन गम्यते येषु ते सुगाः सुदुरोरधिकरण इति ( पा० ३, २, ४८ वा० ३) गमेर्डप्रत्ययः ॥ १० ॥

होता यक्षदिन्द्रꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज ॥ ११ ॥

---

यजतु किम्भूतं शमितारं हविषां संस्कर्तारं शतक्रतुं बहुकर्माणं धियो जोष्टारं बुद्धेः सेवितारम् इन्द्रियं वीर्यात्मकं स चेज्यमानः मध्वा मधुस्वादुना घृतेन समञ्जन् यज्ञं संम्रक्षयन् सुगेभिः सुगमनैः पथिभिर्मार्गैः मधुना स्वादुना घृतेन सहितं यज्ञं स्वदाति देवान् प्रति प्रापयति स्वदातिः प्रापणार्थः वेतु च ॥ १० ॥

(१)होता यक्षदिन्द्रम् । दैव्यो होता यजतु इन्द्रम् । स्वाहाका-रेणाज्यदेवतानाञ्च संस्थाङ्करोतु । स्वाहा मेदसः । स्वाहाकारेण मेदो देवतानाञ्च संस्थाङ्करोतु । स्वाहा स्तोका विन्दवः । स्वा-हाकारेण च स्तोकदेवतानां संस्थां करोतु । स्वाहा स्वाहाकृ-तीनाम् स्वाहाकारेण च स्वाहाकृतिदेवतानां संस्थां करोतु । स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य । प्रयाजानुयाजा वै देवा आज्यपाः । स्वाहाकारेण वै देवा आज्यपाः जुषा-णाः सेवमानाः प्रीयमाणा वा इन्द्र आज्यस्य वेतु स्वमंशं पिबतु त्वमपि हे मनुष्य होतर्यज ॥ ११ ॥

शक्वरी । होता इन्द्रं यजतु । स्वाहाकारेणाज्यस्य देवान् यजतु । स्वाहाकारेण मेदसो देवान् यजतु । स्वाहाकारेण स्तोकानां सोमाविन्दूनां देवान् यजतु । स्वाहाकारेण स्वाहाकृतीनां देवानां स्वाहाकृतीः प्रयाजदेवताः यजतु । स्वाहाकारेण हव्य-सूक्तीनां हव्यसम्बन्धिसुवचनानां देवान् यजतु । स्वाहाकारेणा-ज्यपा देवाः प्रयाजाः जुषाणाः प्रीयमाणा भवन्तः सन्तः इन्द्रश्चा-ज्यं व्यन्तु पिबन्तु ॥ ११ ॥

दे॒वं ब॒र्हिरिन्द्र॑ꣳ सु॒दे॒वं दे॒वैर्वी॒रव॑त् स्ती॒र्णं वेद्या॑-मवर्धयत् । वस्नो॑र्वृ॒तं प्राक्तो॑र्भृ॒तꣳ रा॒या ब॒र्हिष्म॒तो॒ऽ-त्य॑गाद् वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ १२ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । होता यक्षदिन्द्रम् । होता इन्द्रं यजतु आज्यस्य देवतानां स्वाहाकारेण संस्थां करोतु स्वाहाकारेण मेदसः मेदो देवतानां संस्थां करोतु स्वाहाकारेण स्तोकानां स्तोकदेवतानां सं-स्थां करोतु स्तोका विन्दवः स्वाहाकारेण स्वाहाकृतिदेवतानां सं-स्थां करोतु स्वाहाकारेण च हव्यसूक्तीनां हव्यसाधुवचनानां संस्थां करोतु स्वाहा देवाः स्वाहाकारेण आज्यपाः देवाः प्रयाजाः जुषाणाः प्रीयमाणा भवन्ति इन्द्र आज्यस्य वरुण होतर्यज ॥ ११ ॥

(१) देवं बर्हिः । एकादशानुयाजप्रैषाः ऐन्द्राः मैत्रावरुणो ब्रवीति यज्ञसाधनभूतं बर्हिरिह देवता । यद्देवं बर्हिः । इन्द्रमवर्द्धयदिति सम्बन्धः कथम्भूतमिन्द्रम् । सुदेवम् शोभना देवा मरुदादयो यस्य सः सुदेवः तं सुदेवम् । देवैर्वीरवत् बर्हिषो विशेषणमेतत् । देवैः हाविषा दातृभिः ऋत्विग्भिः वीरवत् वीरयुक्तम् । यच्च स्तीर्णं वेद्याम् यच्च बर्हिः वस्तोर्वृतम् अहनि लूनम् यच्च अक्तो रात्रौ प्रभृतम् प्रधारितम् । वस्तोरहर्वचनः अक्तो रात्रिवचनः इत्यव्ययद्वयम् । इन्द्रमवर्द्धयादिति सर्वत्र संबध्यते यच्च राया धनेन हविर्लक्षणेन अन्यान्यजमानान् बर्हिष्मतः बर्हिषा संयुक्तान् अत्यगात् अतिक्रम्य गतं संस्कारोत्कर्षात् तद्धविः वसुवने वसुवननाय च वसुधेयस्य वसुधानाय धननिखननाय च वेतु पिबतु । त्वञ्च हे होतः यज ॥ १२ ॥

एकादश ऐन्द्रपशोः सम्बन्धिन एवानुयाजप्रैषाः । देवता बर्हिरादयः ॥ अतिजगती । मैत्रावरुणो वदति । बर्हिः देवं बर्हिः संज्ञानुयाजदेवता इन्द्रमवर्धयत् पुष्णाति । किम्भूतं बर्हिः सुदेवं शोभना देवा मरुदादयो यत्र तत । तथा देवैः दातृभिः ऋत्विग्भिः

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । देवं बर्हिः । एकादशानुयाजप्रैषाः एन्द्राः मैत्रावरुणो ब्रवीति बर्हिरिह देवता यत् बर्हिर्देवः शोभना देवा मरुदादयो यस्य तामिन्द्रमवर्द्धयत् किम्भूतं बर्हिः देवैर्दातृभिर्ऋत्विग्भिः कृत्वा वीरवत् । वीरयुतं तथा वेद्यां स्तीर्णं वस्तोः अहनि वृतं लूनम् अक्तोः रात्रौ प्रभृतं प्रधारितं वस्तोः अक्तोः इत्यव्ययद्वयं क्रमादहर्निशावाचकं यच्च बर्हिः राया धनेन बर्हिषा बर्हिष्मतः बर्हिषा युक्तानन्यान् यजमानान् अत्यगाद् अतिक्रम्य गतं संस्कारोत्कर्षात् तद्बर्हिः वसुवने वसुवननाय वसुधेयस्य वसुधानाय धननिखननाय वेतु पिबतु हे होतः त्वं त्र यज एवमग्रेऽपि ॥ १२ ॥

वीरवत् वीरयुतम् । वेद्यां स्तीर्णमाच्छादितम् । वस्तोरहनि वृतं लूनम् धातूनामनेकार्थत्वात् अक्तोः रात्रौ प्रभृतं प्रकर्षेण धृतम् वस्तोरक्तोरित्यव्ययद्वयं क्रमादहर्निशावाचकम् । यत् बर्हिः राया हविर्लक्षणेन धनेन बर्हिष्मतः बर्हिषा युक्तानन्यान् यागानत्यगात् अतिक्रम्य गतं संस्कारोत्कर्षात् तत् बर्हिः वसुवने वसुवनाय धनदानाय वसुधेयस्य वसुधेयाय वसुनो धानाय निधानाय यजमानगृहे निखननाय वेतु आज्यं पिबतु । वसुवने वसुधेयस्येति सप्तमीषष्ठ्यौ चतुर्थ्यर्थे । हे मनुष्यहोतः ! त्वमपि यज । एवमग्रेऽपि कण्डिकाशेषो व्याख्येयः ॥ १२ ॥

देवीर्द्वार इन्द्रꣳ संघाते वीड्वीर्यामन्नवर्धयन् । आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणꣳ रेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज ॥ १३ ॥

(१) देवीर्द्वारः यज्ञगृहद्वार उच्यते या देव्यो यज्ञगृहद्वारः इन्द्रम् यामन् यामनि कर्मप्राप्तौ सत्याम् अवर्द्धयन् । याश्च संघाते देहलीकपाटपुटार्गलादिसंघाते सति वीड्वीः दृढाः । नहि संघातमन्तरेण तासां दृढत्वमुपपद्यते । ता इदानीम् आ आभिमु-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुद्रित पुस्तके नास्ति तद्यथा । देवीर्द्वारः । अत्र द्वारः गृहद्वारः याः द्वारो देव्यो यामन् यामनि कर्माणि इन्द्रमवर्द्धयन् किम्भूताः सङ्घाते देहलीकपाटार्गलादिसङ्घाते सति वीड्वीः दृढाः नहि सङ्घातमन्तरा तासां दृढत्वं तरुणेन कर्मक्षमेण वत्सेनात् ता द्वारः आ आभिमुख्येन स्थित्वा रेणुककाटं काटः कूपः ककारः कुत्सितार्थः रेणुभिः कः कुत्सितो यः काटस्तम् अपनुदन्ताम् अपनयन्तु कीदृशं कूपं तरुणेन कर्मक्षमेण वत्सेन मीवता मीङ् हिंसायाम् मयनं मीः शत्रूणां हिंसावतां कुमारेण च अर्वाणम् अर्यते गम्यते यस्मिन्निति अर्वा तं वत्सैः पुत्रैश्च यत्र पत्यते तं कूपम् उपलक्षणमेतत् यज्ञभ्रंशकराणि कूपादीनि यज्ञमार्गादपनयन्त्वित्यर्थः व्यन्तु च ॥ १३ ॥

त्स्येन स्थित्वा वत्सेन तरुणेन कर्मक्षमेण कुमारेण च मीवता मीङ् हिंसायाम् । शत्रूणां हिंसावतामप अर्वाणम् रेणुककाटम् समासपदमेतत् नुदन्ताम् । इति पदानि अपनुदन्तामपनयन्तु । वत्सैः पुत्रैश्च अर्वते गम्यते पत्यते यस्मिन्नित्यर्वा तमर्वाणम् । रेणुककाटम् । काटः कूपः । ककाराभ्यासः कुत्सार्थः । रेणुः पूर्णः कुत्सितः कूपः रेणुककाटः । तं रेणुककाटम् उपलक्षणमेतत् यज्ञभ्रंशकराणि कूपादीनि यज्ञमार्गादपनयन्त्वित्यर्थः । वसुवननाय वसुनिधानाय च व्यन्तु पिबन्तु त्वमपि हे होतर्यज ॥१३॥

एकाधिका शक्वरी । यज्ञगृहद्वारोऽत्र देवताः । यच्छन्ति नियता भवन्ति ऋत्विजो यत्रेति याम कर्म यमेरनिण्प्रत्ययो वृद्धिश्च सप्तम्या लुक् यामनि कर्मणि या द्वारो देव्यः इन्द्रमवर्धयन् । कीदृश्यो द्वारः संघाते देहलीकपाटद्वारशाखार्गलादिसमूहे सति वीड्वीः वीड्व्यः दृढाः सङ्घातं विना न द्वारां दृढत्वं स्यात् । ता द्वारो रेणुककाटमपनुदन्ताम् काटः कूपः कुत्सितः काटः ककाटः रेणुभिः कृत्वा ककाटो रेणुककाटः तम् अपनुदन्तां निवर्त्तयन्तु । किमित्यतो विशेषणे । कीदृशं कूपं वत्सेन गोपुत्रेण तरुणेन कुमारेण च आ आभिमुख्येन अर्वाणम् अर्यते गम्यते यत्रेत्यर्वा तम् ऋ गतावित्यतोऽन्येभ्योऽपि दृश्यन्त इति ( पा० ३, २, ७५ ) वनिप्प्रत्ययः । कीदृशेन मीवता मीञ् हिंसायां मयनं मीः क्विप् मीरस्यास्ति मीवान् तेन हिंसाशीलेन । हिंसाशीलाश्चञ्चला उच्चलन्तो वत्साः कुमाराश्च यत्र पतन्ति तं कूपमपनुदेत्यर्थः उपलक्षणमेतत् यज्ञप्रजाविघ्नकराणि कूपादीनि मार्गादपनयन्त्वित्याशयः । ता व्यन्तु च ॥ १३ ॥

देवी उषासानक्तेन्द्रं यज्ञे प्रयत्यह्वेताम् । दैवीर्विशः प्रायासिष्टाᳪं सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥ १४ ॥

(१) देवी उषासा नक्ता । ये देव्यौ उषाश्च नक्ता रात्रिश्च इन्द्रं यज्ञे प्रयति गच्छति वर्तमाने अह्वेताम् आहूतवत्यौ वर्द्धनाय । ये च देव्यौ दैवीर्विशः । वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्यादिकाः प्रति अयासिष्टाम् गतवत्यौ स्वेन सम्भोगेन । यद्वा । दैव्यौ वा एता विशो यत्पशव इति श्रुतिः दैवीर्विशः यज्ञाङ्गभूतान्पशून्प्रति अयासिष्टां गतवत्यौ अनुयाजेषु हि तयोर्भाग इत्यभिप्रायः । ये च सुप्रीते साधुप्रीते । ये च सुधिते साधुहिते । तं वसुवननाय वसुनिधानाय च वीतां पिबतां त्वमपि हे होतर्यज ॥ १४ ॥

ब्राह्मी उष्णिक् । उषाश्च नक्ता च उषासानक्ता समासे उषः शब्दस्य उषसादेशः अहोरात्राधिष्ठात्र्यौ देवीं देव्यौ यज्ञे प्रयति प्रवर्त्तमाने सति इन्द्रमह्वेतामाहूतवत्यौ । प्रैति प्रयन् प्रपूर्वादिणः शतृ । ये च दैवीः देवसम्बन्धिनीर्विशः प्रजाः प्रायासिष्टां प्रगतवत्यौ यातेर्लुङ् वसवो रुद्रा आदित्या विश्वे देवा मरुत इत्यादयो देवप्रजाः । ते च वीतां पिबताम् । कीदृश्यौ सुप्रीते अतितुष्टे सुधिते सुतरां हिते ॥ १४ ॥

दे॒वी जोष्ट्री॒ वसु॑धिती दे॒वमिन्द्र॑मवर्धताम् । अया॑व्य॒न्याघा द्वेषा॑ᳪ᳭स्यान्या व॑क्ष॒द्वसु॒ वार्य्या॑णि॒ यज॑माना॒-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पुस्तके नास्ति तद्यथा । देवी उषासा नक्ता । उषाश्च नक्ता रात्रिः ये एते देव्यौ यज्ञे प्रयति प्रगच्छति प्रवर्तमाने सति इन्द्रम् आह्वेताम् आहूतवत्यौ ये च देव्यौ दैवीः विशः वसवो रुद्रा आदित्याः विश्वे देवा मरुत इत्यादिकाः प्रति प्रयासिष्टां गतवत्यौ स्वेन सम्भोगेन यद्वा दैव्यो वा एता विशो यत् पशव इति श्रुतेः । यज्ञाङ्गभुतान् पशून् प्रति अयासिष्टाम् अनुयाजेषु हि तयोर्भागः । कीदृश्यौ सुप्रीते साधुप्रीते सुधिते साधुहिते ते च वीताम् ॥ १४ ॥

य शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ १५ ॥

(१)देवी जोष्ट्री। देव्यौ जोषयित्र्यौ। इदानीन्देवताविकल्पः। द्यावापृथिव्याविति वाहो रात्रे इति वा । सस्यञ्च समा चेति कात्थक्यः ये देव्यौ जोषयित्र्यौ । वसुधिती वसुधान्यं याते वसुनो धारयित्र्यौ वा । ये च देवमिन्द्रम् अवर्द्धताम् अवर्द्धयताम् । अयाव्यन्याघा द्वेषांसि ययोश्च मध्ये अयावि । यु पृथग्भावे पृथक्करोति लकारव्यत्ययः । अन्या एका अघा अघानि पापानि द्वेषांसि च दौर्भाग्यानि आ अन्यावक्षत् वसु वार्याणि यजमानाय । अन्या एका आवक्षत् आवहति वसूनि वरणीयानि यजमानार्थम् । कथम्भूते शिक्षिते विदितवेद्ये तत्त्वज्ञे । ते च वसुवननाय वसुधानाय च वीतां पिबतान्त्वमपि हे होतर्यज ॥ १५ ॥

एकाधिकातिजगती । जोष्ट्री जुषेते ते जोष्ट्र्यौ प्रीतियुक्ते देवी देव्यौ वसुधिती वसुनो धनस्य धितिर्धारणं याभ्यां ते द्यावापृथिव्यौ अहोरात्रे वा सस्यं च समा चेति कात्थक्यः (निरु० ९, ४१)। ते इन्द्रं देवमवर्धतामवर्धयताम् तयोर्मध्ये अन्या एका अघा अघानि पापानि द्वेषांसि दौर्भाग्यानि च अयावि यु पृथग्भावे दूरीकरोति यौतेश्छिगा लकारव्यत्ययः। अन्या द्वितीया

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पुस्तके नास्ति तद्यथा । देवी जोष्ट्री । जोष्ट्री जोषयित्र्यौ प्रीते वसुधिती वसुनो धारयित्र्यौ देवी देव्यौ द्यावापृथिव्यौ अहोरात्रे वा इन्द्रं देवम् अवर्द्धताम् अवर्द्धयतां तयोर्मध्ये अन्या एका आघा अघानि पापानि द्वेषांसि दौर्भाग्यानि च अयावि यु पृथग्भावे पृथक् करोति लकारव्यत्ययः। अन्या द्वितीया यजमानाय वार्याणि वरणीयानि वसु वसूनि आवक्षत् आवहति । किम्भूते ते विदितवेद्ये तत्त्वज्ञे ते च वीतां पिबताम् ॥ १५ ॥

वार्याणि वरणीयानि भोगयोग्यानि वसु वसूनि धनानि आवक्षत् आवहति । कीदृश्यौ ते शिक्षिते विदितवेद्ये तत्त्वज्ञे । ते वीताम् ॥ १५ ॥

देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् । इषमूर्जमन्या वक्षत् सग्धिᳬ सपीतिमन्या नवेन पूर्वं दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती ऊर्जयमाने वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ १६ ॥

(१)देवी ऊर्जाहुती । अधस्तनप्रैषोक्त एव देवताविकल्पः । ये देव्यौ ऊर्जाहुती ऊर्जाह्वान्यौ दुघे दोग्ध्र्यौ अन्योऽन्यम् । अनयोरनुसम्भोगमिमाः सर्वाः प्रजाः अनुसम्भुञ्जत इति श्रुतिः । सुदुघे साधुदोहने ये च पयसा इन्द्रम् अवर्द्धतामवर्द्धयताम् । ययोश्च । इषमन्नम् ऊर्जश्च तदुपसेचनन्दध्यादि अन्या एका आवक्षत् आवहति यजमानाय । सग्धिं सपीतिमन्या अ-

---

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु० पुस्तके नास्ति तद्यथा। देवी उर्ज्जाहुती। अधस्तनप्रैषोक्तो देवताविकल्पः। ये देव्यौ उर्ज्जाहुती उर्ज्जाह्वान्यौ दुघे दोग्ध्र्यौ अन्योन्यम् अनयोरसंभोगमिमाः सर्वाः प्रजा अनुभुञ्जत इति श्रुतेः सुदुघे साधुदोहने सत्यौ पयसा इन्द्रमवर्द्धताम् ययोश्च अन्या एका इषमन्नमुर्ज्जे दध्यादि च आवक्षत् आवहति यजमानाय अन्या सग्धिं । सपीतिं चावक्षत् सामानां जग्धिं पुत्रादिभिः । समानां पीतिं पानं च देव्यौ दयमाने रक्षन्त्यौ कृपयन्त्यौ सत्यौ नवेन ऊर्ज्जा धान्येन पूर्वं पुरातनम् ऊर्ज्जाम् आधातां धारितवन्त्यौ पुराणेन ऊर्ज्जा नवमूर्ज्जम् अधाताम् अक्षयं कृतवत्यावित्यर्थः । कीदृश्यौ आहुती ऊर्ज्जयमाने स्वीकुर्वाणे तथा यजमानाय वीर्याणि वरणीयानि वसु वसूनि ऊर्ज्जयमाने शिक्षिते तत्त्वज्ञे ते च वीताम् ॥ १६ ॥

न्या अपरा च सग्धिं समानां जग्धिं पुत्रपौत्रादिभिः। सपी-तिं समानाम्पीतिं पानञ्च आवक्षत्। आवहति यजमानाय न वेन पूर्वं दयमाने पुराणेन नवमधाताम्। ये च देव्यौ नवेन ऊर्जान्धान्येन पूर्वं पुरातनम् ऊर्जन्धान्यम्। दयमाने दयतिः रूपदयाकर्मा। रक्षितवत्यौ सत्यौ अधाताम् पुराणेन च ऊर्जा धान्येन नवमूर्जन्धानम् अधाताम्। धारितवत्यौ। ये च ऊर्जा-हुती ऊर्जयमाने स्वीकुर्वाणे। वसूनि वरणीयानि यजमानाय। शिक्षिते विदितवेद्ये च वसुवननाय वसुधानाय च वीताम्पिबताम् त्वमपि हे होतर्यज ॥ १६ ॥

विकृतिः। अधस्तनमन्त्रोक्तो देवताविकल्पः। देवी देव्यौ पूर्व-प्रैषोक्ते पयसा दुग्धेनेन्द्रमवर्धताम् अवर्धयताम् छन्दस्युभयथेति (पा० ३, ४, ११७) शप आर्धधातुकत्वाण्णिचो लोपः। कीदृश्यौ ऊर्जाहुती ऊर्जा बलं तद्युक्तो आहुतिराह्वानं ययोस्ते। दुघे दुग्धस्ते दुघे दुहः कब्घश्चेति (पा० ३, २. ७० ) कप् घादेशश्च दोग्ध्रथो अनयोरनु सम्भोगमिमाः सर्वाः प्रजा अनुसम्भुञ्जत इति श्रुतिः। सुदुघे साधुद्रोहने। तयोर्मध्ये अन्या एका इषमन्नमूर्जं दध्यादि च वक्षत् वहति यजमानाय। अन्या द्वितीया सग्धिं सपीतिं च वक्षत् समाना ग्धिर्भोजनं सग्धिः ताम् समाना पीतिः सपीतिः पुत्रादिभिः सह पानभोजने वहति। ये दैव्यौ नवेनान्नेन पूर्वं पुराणमन्नमधाताम् पुराणेनान्नेन नवमन्नमधाताम् यजमानाय वार्याणि वसु वसूनि चाधाताम् अन्नं धनं चाक्षयं कृतवत्यावित्यर्थः कीदृश्यौ दयमाने रक्षन्त्यौ कृपयन्त्यौ वा। ऊर्जाहुती ऊर्जा युता आहुतिर्होमो ययोस्ते। ऊर्जे रसमूर्जयमाने वर्धयन्त्यौ। शिक्षिते तत्त्वज्ञे। ते वीतां पिबताम् ॥ १६ ॥

दे॒वा दै॒व्या होता॑रा दे॒वमिन्द्र॑मवर्धताम्। ह॒ताघ॑-श॒ᳪं॑सावाभा॑र्ष्टां॒ वसु॒ वार्या॑णि॒ यज॑मानाय शिक्षि॒तौ व॑सु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ १७ ॥

(१)देवा दैव्या । यौ देवौ दैव्यौ होतारौ । एकः पार्थिवोऽग्निः एकश्च मध्यमः । देवमिन्द्रमवर्द्धताम् यौ च हताघशंसाव भार्ष्टां वसु वार्याणि यजमानाय शिक्षितौ । अघं पापं ये शंसन्ति ते अघशंसा हता अघशंसा याभ्यान्तौ हताघशंसौ । आभार्ष्टाम् आहार्ष्टाम् हृतवन्तौ वसूनि वरणीयानि यजमानाय । शिक्षितौ अवगतार्थौ तौ च वसुवननाय वसुधानाय च वीतां पिवतां त्वमपि हे होतर्यज ॥ १७ ॥

अतिजगती । एकः पार्थिवोऽग्निः अन्यो मध्यमः । देवा देवौ दैव्या दैव्यौ होतारौ इन्द्रं देवमवर्धताम् यजमानाय वार्याणि वसु वसूनि च आभार्ष्टाम् आहार्ष्टमाहृतवन्तौ आङ्पूर्वाद्धरतेर्लुङ् हृस्य भः । कीदृशौ हताघशंसौ अघं पापं शंसतीच्छति अघशंसः पापी हतोऽघशंसो याभ्यां तौ पापिनिवर्त्तकौ । तौ वीताम् ॥ १७ ॥

दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीः पति॒मिन्द्र॑मवर्धयन् । अस्पृ॑क्ष॒द्भार॑ती॒ दिवं॑ रु॒द्रैर्य॒ज्ञ स॑र॒स्व॒तीडा॒ वसु॑मती गृ॒हान् वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु य॒ज ॥ १८ ॥

(१)देवीस्तिस्रः । आदरार्थोऽभ्यासः पतिन्देवानाम्पालयि-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवा दैव्या होतारा । एकः पार्थिवोऽग्निः एको मध्यमश्च दैव्यौ होतारौ देवौ इन्द्रं देवम् अवर्द्धताम् । किम्भूतौ हताघशंसौ अघं पापं शंसतीति अघशंसः हतोऽघशंसो याभ्यां तौ शिक्षितौ अवगतार्थौ यौ च यजमानाय वीर्याणि वसूनि आ अभार्ष्टाम् आहार्ष्टाम् आहृतवन्तौ तौ च वीताम् ॥ १७ ॥

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पुस्तके नास्ति तद्यथा । देवीः तिस्रः यास्तिस्रो देव्यः तास्तिस्रो देव्यः । आदरार्थोऽभ्यासः । पतिं देवानां पालयितारम्

तारम् इन्द्रमवर्द्धयन् । तासां मध्ये भारती भरत आदित्यः तस्य इयम्भारती दिवम् अक्षत् स्पृशति । रुद्रैर्यज्ञं सरस्वती सरस्वती च रुद्रैः सहिता यज्ञम् अस्पृक्षत् । इडा च वसुमती वसुभिः तद्वती गृहान् अस्पृक्षत् । गृहशब्देनात्रायं लोकोऽभिधीयते लक्षणया पृथिवीस्थानत्वादिडायाः । ताः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु त्वमपि हे होतर्यज ॥ १८ ॥

अतिजगती । तिस्रो देवीः देव्यः पतिं पालकमिन्द्रमवर्धयन् आदरार्थे पुनरुक्तिः । ता एवाह भारती दिवं स्वर्गमस्पृक्षत् स्पृशति भरतो रविस्तत्कान्तिर्भारती । सरस्वती रुद्रैः युता यज्ञमस्पृक्षत् । वसुमती वसुयुता इडा गृहानस्पृक्षत् गृहशब्देन भूलोकः । ता व्यन्तु ॥ १८ ॥

देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिबन्धुरो देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्तते मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिं स्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥ १९ ॥

(१)देव इन्द्रः । यज्ञो देवता देवः दानादिगुणयुक्तः यज्ञः-

---

इन्द्रमवर्द्धयन् तासां मध्ये भारती भरत आदित्यस्तस्य भाः दिवमस्पृक्षत् । स्पृशति सरस्वती रुद्रैः सहिता यज्ञमस्पृक्षत् इडा वसुमती वसुभिः सहिता गृहान् अस्पृक्षत् गृहशब्देनायं लोकोऽभिधीयते । पृथिवीस्थानत्वादिडायाः ताश्च व्यन्तु ॥ १८ ॥

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति । तद्यथा । देव इन्द्रो नराशꣳसः । नरा अस्मिन्नासीनाः शंसन्तीति नराशंसो यज्ञः इन्द्रं देवमवर्द्धयत् । कीदृशः । देवः दानाद्दीपनाद्वा इन्द्रः परमेश्वरः त्रिवरूथः । वरूथं गृहं त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य त्रिबन्धुरः । बन्धुरं सारथिस्थानं त्रीणि बन्धुराणि ऋग्यजुःसामलक्षणानि यस्य

इन्द्रः । इदि परमैश्वर्ये परमेश्वरः । नराशंसः नरा अस्मिन्नासीनाः शंसन्तीति नराशंसः । त्रिवरूथः । वरूथशब्दो गृहवचनः त्रीणि वरूथानि गृहाणि सदोहविर्धानाग्नीध्राणि यस्य स त्रिवरूथः । त्रिबन्धुरः बन्धुरशब्दः सारथिस्थानवचनः । त्रीणि बन्धुराणि सारथिस्थानानि ऋग्यजुःसामलक्षणानि यस्य स त्रिबन्धुरः । देवमिन्द्रमवर्द्धयत् । यश्च शतेन शितिपृष्ठानामाहितः । शतगुणो हि अग्निराधेयः तदभिप्रायमेतत् । सहस्रेण गवां प्रवर्तते । सहस्रेण गवां यष्टव्यमित्युक्तेः । यस्य चास्य मित्रावरुणा इत् मित्रावरुणावेव होत्रमर्हतः । बृहस्पतिश्च स्तोत्रमौद्गात्रमर्हति । अश्विनौ च आध्वर्यवमर्हतः । स वसुवननाय वसुधानाय च वेतु पिबतु त्वमपि हे होतर्यज ॥ १९ ॥

म्हीतिः । नरा अस्मिन्नासीनाः शंसन्ति नराशंसः यज्ञो देवः इन्द्रं देवमवर्धयत् । कीदृशो नराशंसः इन्द्रतीतीन्द्रः ऐश्वर्य्यवान् त्रिवरूथः वरूथं गृहम् त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य सः । त्रिबन्धुरः त्रीणि बन्धुराणि ऋग्यजुःसामलक्षणानि बन्धनानि यस्य स नराशंसः शितिपृष्ठानां शतेनाहितः सन् सहस्रेण गोसहस्रेण प्रवर्त्तते । शिति श्यामं पृष्ठं यासां ताः शितिपृष्ठा गावः । मित्रावरुणा इत् मित्रावरुणावेवास्य नराशंसस्य होत्रमर्हतः होतृकर्मणि योग्यौ भवत बृहस्पतिः स्तोत्रमौद्गात्रमर्हति अश्विना अश्विनौ अस्याध्वर्यवमर्हतः । स वेतु ॥ १९ ॥

दे॒वो दे॒वैर्वन॒स्पति॒र्हिर॑ण्यप॒र्णो मधु॑शाखः सुपिप्प॒-

---

यश्च शितिपृष्ठानां पशूनां शतेन आहितः सन् सहस्रेण प्रवर्त्तते सहस्रगवा यष्टव्यम् इत्युक्तेः । अस्य मित्रावरुणा इत् मित्रावरुणावेव होमर्हतः बृहस्पतिस्तोत्रम् औद्गात्रमर्हति अश्विनौ आध्वर्यवम् अर्हतः स वेतु ॥ १९ ॥

लो देवमिन्द्रमवर्धयत्। दिवमग्रेणास्पृक्षदान्तरिक्षं पृथिवीमदृꣳहीद् वसुवने वसुधेयस्य वेतु यज ॥ २० ॥

(२)देवो देवैः। यूप उच्यते यो देवो वनस्पतिः देवैरेव हिरण्यपर्णः देवाः सौवर्णानि पर्णानि यस्य स तथोक्तः। मधुशाखः मधुरसवती शाखा यस्य स मधुशाखः देवैरेव। सुपिप्पलः साधुफलो देवैरेव। देवमिन्द्रमवर्द्धयत् यश्च दिवम् अग्रेण अस्पृक्षत् स्पृशति। आ अन्तरिक्षम् स्पृक्षादित्यनुषङ्गः। मध्येनेति शेषः साकाङ्क्षत्वात्। पृथिवीमदृंहीत् पृथिवीम् उपरेणेति शेषः अदृंहीत् दृढामकरोत् स वनस्पतिः वसुवननाय वसुधानाय च वेतु पिबतु। त्वमपि हे होतर्यज ॥ २० ॥

अतिशक्वरी। यूप उच्यते वनस्पतिर्देवो देवैः सह इन्द्रमवर्धयत्। कीदृशः हिरण्यपर्णः हिरण्यमयानि पर्णानि यस्य। मधुशाखः मधुर्मधुरा रसवती शाखा यस्य। सुपिप्पलः शोभनानि पिप्पलानि फलानि यस्य। यो वनस्पतिरग्रेण दिवं स्वर्गमस्पृक्षत् स्पृशति स्पृशेर्लुङि शल इगुपधादनिटः क्स इति (पा० ३, १, ४५) क्सप्रत्ययः। अन्तरिक्षं मध्येनेति शेषः आ स्पृशति। पृथिवीमुपरेणेति शेषः अदृंहीत् दृढामकरोत्। स वेतु ॥ २० ॥

देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत्। स्वास-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति। तद्यथा। देवो देवैः। यूप उच्यते यो वनस्पतिर्देवः देवैः इन्द्रः अवर्द्धयत्। कीदृशः हिरण्यपर्णः सौवर्णानि पर्णानि यस्य मधुशाखः रसवती शाखा यस्य सुपिप्पलः साधुफलः यश्च अग्रेण दिवम् अस्पृक्षत् स्पृशति अन्तरिक्षं मध्येनेति शेषः। आ अस्पृक्षत् पृथिवीम् उपरेणेति शेषः। अदृंहीत् दृढामकरोत्। स वेतु ॥ २० ॥

स्थमिन्द्रेणासन्नमन्या बर्ही᳟ंष्यभ्यभूद्वसुवने वसुधेयं-स्य वेतु यज ॥ २१ ॥

(१)देवं बर्हिः । यद्देवं बर्हिः वारितीनाम् । वाः उदकम् इण् गतौ वारुदकमितिः स्थानं यस्य ता वारितय ओषधयः तासां मध्ये देवं वरिष्ठम् । यद्वा वारि जले इतिः दर्भरूपेणावस्थानं येषां ते वारितयः दर्भा । अत्र श्रुतिः । तदेताभ्याम्मुन्पुनातीत्युपक्रम्य । तस्मादु हैका आपो वीभत्साञ्चक्रिरे इति अभिधीयते । त इमे दर्भा इत्याह । वारितीनान्दर्भाणां सङ्घातभूतम् देवमिन्द्रमवर्द्ध-यत् । यच्च स्वासस्थम् साधु आस्थेयं देवमनुष्यैः । यत्र च इन्द्रेण आसन्नम् आस्थितम् यच्च अन्या अन्यानि हवींषि अभ्यभूत् अभिभवतीति कालव्यत्ययः । तत् वसुवननाय वसुधानाय च वेतु पिबतु त्वमपिहे होतः यज ॥ २१ ॥

आर्षी त्रिष्टुप् । बर्हिः अनुयाजदेव इन्द्रं देवमवर्धयत् अ-न्या अन्यानि बर्हींष्यभ्यभूत् अभिभवति तद्वेतु । कीदृशं बर्हिः वारितीनामोषधीनां मध्ये देवं दीप्यमानं श्रेष्ठम् वारि जले इ-तिर्गतिर्यासां ता वारितयो जलाश्रिता ओषधयः । स्वासस्थं सुखेनासनेन स्थीयते यत्र तत् स्वासस्थम् । इन्द्रेणासन्नमाश्रि-तम् ॥ २१ ॥

देवो अग्निः स्विष्टकृद् देवमिन्द्रमवर्धयत् । स्विष्टं

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु-द्रितपुस्तके नास्ति । तद्यथा । देवं बर्हिः । वाः उदकम् इतिः इण् गतौ गतिः उपस्थानं यासां ताः वारितयः ओषधयः तासां मध्ये देवं श्रेष्टम् ईदृशं बर्हिः इदं देवम् अवर्द्धयत् यच्च स्वासस्थं दे-वमनुष्यैः साधु आस्थेयम् इन्द्रेण आसन्नम् आस्थितं सत् अन्या अन्यानि बर्हींषि अभ्यभूत् अभिभवति तत् वेतु ॥ २१ ॥

कुर्वन् स्विष्टकृत् स्विष्टमद्य करोतु नो वसुवने वसु-
धेयस्य वेतु यज ॥ २२ ॥

(१) देवो अग्निः। स्विष्टकृत् शोभनमिष्टं कर्तव्यमिति यस्या यमाधिकारः देवं च इन्द्रमवर्द्धयत्। यश्च स्विष्टं कुर्वन् स्विष्टकृत-नामभूतः सः। स्विष्टं साधिष्ठम् अद्य अस्मिन्कर्माणि करोतु नोऽस्माकम् अपि च वसुवननाय वसुधानाय च वेतु पिबतु त्वमपि हे होतर्यज ॥ २२ ॥

आर्षी त्रिष्टुप्। स्विष्टकृद्देवः अग्निः इन्द्रं देवमवर्धयत् स नोऽस्माकं स्विष्टं साधु इष्टं करोतु वेतु च। कीदृशः स्विष्टं कुर्वन् सन् स्विष्टकृत् नाम शोभनमिष्टं कर्त्तव्यमिति तस्याधिकारः ॥ २२ ॥

अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राय छागम्। सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय छागेन। अघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत् पुरोडाशेन ॥ त्वामद्य ऋषे ॥ २३ ॥

(२)अग्निमद्य। व्याख्यातः प्रैषः ऐन्द्र एकः पशुरिति वि-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। देवो अग्निः। शोभनमिष्टं कर्तव्यमिति यस्याधिकारः स स्विष्टकृत् अग्निर्देवः इन्द्रं देवमवर्द्धयत् यश्च स्विष्टं कुर्वन् स्विष्टकृन्नामैवाभूत् सः। अद्य नोऽस्माकं स्विष्टं साधु इष्टं करोतु वसुवननाय वसुधानाय च वेतु हे होतस्त्वमपि यज ॥ २२ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठकमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। अग्निमद्य व्याख्यातः। प्रैषः ऐन्द्रः एकः पशुरिति शेषः ॥ २३ ॥

शेषः ॥ २३ ॥

त्वामद्य अयं प्रतीकः उभयत्रापि । ऐन्द्रापशुसम्बन्धी सूक्तावाकप्रैषः त्वामद्य ऋषे इत्ययं मन्त्र उभयत्रापि ऐन्द्रानुवाके वायोधसानुवाके च प्रतीकोक्तेः आदिमात्रेणोक्तः सकलो ज्ञेयः। अग्निमद्य एकाधिका प्राजापत्या जगती । सूपस्थाः ब्राह्मी उष्णिक् । त्वामद्य एकाधिका विकृतिः । व्याख्यातः प्रैषः ( २१, ५९—६१ ) ॥ २३ ॥

होता यक्षत्समिधानं महद्यशः सुसंमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम् । गायत्रीं छन्द इन्द्रियं त्र्यविं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥ २४ ॥

(१)होता यक्षत् । इन्द्राय वयोधसे । पशुसंस्कारश्चैन्द्रः तत्रैते प्रैषाः अतः प्रयाजदेवताऽविरोधेन यथैन्द्राः संपद्यन्ते तथा व्याख्यायन्ते । दैव्यो होता यजतु । समिधानमग्निम् । महच्च यसः अग्निसम्बन्धि । सुसमिद्धं चाग्निमेव । वरेण्यं वरणीयं चाग्निम् । इन्द्रं च वयोधसम् वयः अधातव्यमस्मिन्निति वयोधास्तं वयोधसम् वयसः आयुषो वा धारयितारम् । किं कुर्वन्

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मु० मुद्रित पु० नास्ति । तद्यथा । होता यक्षत् । इन्द्राय वयोधसे पशुः संस्कार्यश्चैन्द्रः । तत्रैते प्रयाजप्रैषाः अतः प्रयाजदेवताविरोधेन यथैन्द्राः सपद्यन्ते तथा व्याख्यायन्ते दैव्यो होता अग्निं वयोधसम् इन्द्रं च यजतु वय आधातव्यमस्मिन्निति वयोधाः तं वयस आयुषो धारयितारं वा अग्निसंबन्धि महत् यशश्च यजतु यद्वा यशः यशसा समिद्धं सु आदेशः । किंभूतमग्निं समिधानं दीप्यमानं समिद्धं दीप्तं वरेण्यं वरणीयं किं कुर्वन् होता यजतु गायत्रीं छन्दः इन्द्रियं वीर्यं त्र्यविं गां वय आयुश्च दधत् धारयन् इन्द्रे इत्यध्याहारः । प्रकरणात् प्रयाजदेवता च इन्द्रसहिता आज्यस्य स्वमंशं वेतु पिबतु हे मनुष्यहोतः त्वमपि यज ॥ २४ ॥

दैव्यो होता यजतु । गायत्री च छन्दः इन्द्रियम् वीर्यं च त्र्यविं च गां वयश्च आयुः दधत् धारयन् इन्द्रे इत्यध्याहारः प्रकरणात् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ २४ ॥

एकादशः वायोधसे पशौ प्रयाजप्रैषाः समित्तनूनपादाद्याप्रीदेवताः । अतिजगती । दैव्यो होता अग्निं वयोधसमिन्द्रञ्च यजतु वयः आयुर्दधाति वयोधाः तम् आयुषो दातारं धारयितारं वा । कीदृशमग्निं समिधानं दीप्यमानम् । महद्यशः सुपां सुलुगिति तृतीयैकवचनस्य सुआदेशः महता यशसा समिद्धं दीप्तम् । वरेण्यं वरणीयम् । किं कुर्वन् यजतु गायत्रीं छन्दः इन्द्रियं वीर्य्यम् त्र्यविं गाम् वयः आयुश्च दधत् स्थापयन् इन्द्रे इति शेषः । षण्मासात्मकः कालोऽविः त्रयोऽवयो यस्याः सा त्र्यविः सार्धसंवत्सरा गौः ताम् । प्रयाजदेवतेन्द्रयुता आज्यं वेतु । हे मनुष्यहोतः ! त्वमपि यज । एवमग्रेऽपि ॥ २४ ॥

होता यक्षत्तनूनपातमुद्भिदं यं गर्भमदितिर्दधे शुचिमिन्द्रं वयोधसम् । उष्णिहं छन्द इन्द्रियं दित्यवाहं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥ २५ ॥

(१)होता यक्षत्तनूनपातम् । दैव्यो होता यजतु तनूनपातम् उद्भिदम् उद्भेत्तारं यज्ञफलानाम् । यं च गर्भम् अदितिः दधे धारितवती । शुचिं पवित्रम् । इन्द्रं च यजतु वयोधसम् वय

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । होता यक्षत्तनूनपातम् । तनूनपातं वयोधसम् इन्द्रं च होता यजतु किंतनूनपातम् । उद्भिदं यज्ञफलानामुद्भेत्तारं शुचि पवित्रम् अदितिः यं गर्भं दधे धारितवती किं कुर्वन् यजतु उष्णिहं छन्दः इन्द्रियं दित्यवाहं गां वयश्च इन्द्रे दधत् प्रयज देवता सेन्द्रा वेतु ॥ २५ ॥

आयुर्धीयते यस्मिन् तं वा वयसो धारयितारं वा । किङ्कुर्वन्दैव्यो होता यजतु । उष्णिहं छन्दः इन्द्रियं वीर्यं च दित्यवाहं च गां वय आयुश्च इन्द्रे दधत् धास्यन् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ २५ ॥

एकाधिका जगती । होता तनूनपातं प्रयाजदेवं वयोधसमिन्द्रं च यजतु अदितिर्यं गर्भं दधे तम् इन्द्रमित्यर्थः । कीदृशं तनूनपातम् उद्भिदम् उद्भिनत्ति प्रकटयाति फलमित्युद्भित् तं यज्ञफलानामुद्भेत्तारम् । शुचिं पवित्रम् । किं कुर्वन् उष्णिहं छन्दः इन्द्रियम् दित्यवाहं गाम् वयश्च इन्द्रे दधत् । द्विवर्षा गौर्दित्यवाट् । स सेन्द्रो वेतु ॥२५॥

होता यक्षदीडेन्यमीडितं वृत्रहन्तममिडाभिरीड्यꣳ सहः सोममिन्द्रं वयोधसम् । अनुष्टुभं छन्द इन्द्रियं पञ्चाविं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥२६॥

(१)होता यक्षदीडेन्यम् । दैव्यो होता यजतु । ईडेन्यं स्तुत्यम् ईडतेरेन्यप्रत्ययः । ईडितम् ऋषिभिः स्तुतम् । वृत्रहन्तमम् अतिशयेन वृत्रस्य हन्तारम् । इडाभिः प्रयाजदेवताभिः ईड्यं स्तुत्यम् । इन्द्रविशेषणान्येतानि । सहः सोमं च यजतु । सहः सोमशब्दौ नैघण्टुकौ इन्द्रसम्बन्धात् पठ्येते । इन्द्रं च वयोधसं वयस आयुषो धारयितारम् । किंकुर्वन्यजतु । अनुष्टुभं च छन्द इन्द्रियम् वीर्यं च पञ्चाविं च गां वय आयुश्च इन्द्रे दधत् धार-

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति । तद्यथा । होता यक्षदीडेऽन्यम् । वयोधनमिन्द्रं सहः सोमं च यजतु सहःसोमशब्दौ नैघण्टुकौ इन्द्रसम्बन्धात्पठ्येते । किम्भूतमिन्द्रम् ईडेन्यं स्तुत्यम् । ईडतेरेन्यप्रत्ययः । ईडितम् ऋाषभिः स्तुतं वृत्रहन्तमम् अतिशयेन वृत्रस्य हन्तारम् । इडाभिः । प्रयाजदेवताभिः ईड्यं स्तुत्यं किंकुर्वन् यजतु अनुष्टुभं छन्दः । इन्द्रियं पञ्चाविणं वयश्च इन्द्रे दधत् ॥ २६ ॥

यन् । प्रयाजदेवता च इन्द्रसहिता वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ २६ ॥

व्यूहेन शक्वरी । होता इडाभिः प्रयाजदेवताभिः सह वयोधसमिन्द्रं यजतु । कीदृशमिन्द्रम् ईडेन्यम् ईडितुं योग्य ईडेन्यः ईडेरेन्यप्रत्ययः । ईडितमृषिभिः स्तुतम् । वृत्रहन्तमम् नाद् घस्येति ( पा० ८, २, १७ ) नुडागमः । ईड्यं सर्वैः स्तुत्यम् । सहः सोमं सहसा बलेन सोमवदाह्लादकम् । किं कुर्वन् अनुष्टुभं छन्दः इन्द्रियम् पञ्चाविं गाम् वयश्चेन्द्रे दधत् । पञ्चावयो यस्याः सा सार्धद्विवर्षा गौः स वेतु ॥ २६ ॥

होता यक्षत् सुबर्हिषं पूषण्वन्तममर्त्यꣳ सीदन्तं बर्हिषि प्रियेऽमृतेन्द्रं वयोधसम् । बृहतीं छन्द इन्द्रियं त्रिवत्सं गां वयो दधद् वेत्वाज्यस्य होतर्यज ॥२७॥

(१)होता यक्षत् । दैव्यो होता यजतु । सुबर्हिषं शोभनबर्हिष्कम् । पूषण्वन्तं पूष्णा संयुक्तम् अमर्त्यममरणधर्माणम् । सीदन्तं बर्हिषि प्रिये अवस्थानं कुर्वन्तं बर्हिष्यभिरुचिते अमृते इन्द्रं वयोधसम् । किंकुर्वन् यजतु । बृहतीं च छन्दः इन्द्रियं वीर्यं च त्रिवत्सं च गां वय आयुश्च इन्द्रे दधत् धारयन् । प्रयाजदेवता चेज्यमाना इन्द्रेण सह वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति । तद्यथा । होता यक्षत्सुबर्हिषम् । होता वयोधसमिन्द्रं यजतु किम्भूतं सुबर्हिषम् । शोभनबर्हिष्कं पूषण्वन्तं पूष्णा संयुक्तम् अमर्त्यम् अमरणधर्माणं प्रिये रुचिते अमृता अमृते बर्हिषि सीदन्तमवस्थानं कुर्वन्तं किं कुर्वन् बृहतीं छन्दः इन्द्रियं त्रिवत्सं गां वयश्च इन्द्रे दधत् नन्वत्र प्रयाजदेवताया अधिकरणता केवलमुपलभ्यते नतु देवतात्वमिति यश्चोदयेत्तं प्रत्याह भूतमेव बर्हिषो देवता त्वमित्यदोषः । तथा द्वारामपि ॥ २७ ॥

मनुष्यहोतर्यज । ननु प्रयाजदेवताया अत्राधिकरणभावः केवलमुपलभ्यते नतु देवतात्वमिति यश्चोदयेत् तम् प्रत्याह । इत्थंभूतमेव बर्हिषो देवतात्वमित्यदोषः । तथा द्वारामपि देवतात्वम् ॥ २७ ॥

शक्वरी । होता वयोधसमिन्द्रं यजतु । कीदृशम् सुबर्हिषं शोभनं बर्हिः प्रयाजदेवता यस्य तम् । पूषण्वन्तम् पूषास्यास्ति पूषण्वांस्तम् पूष्णा युक्तम् । अमर्त्यममरणधर्माणम् प्रिये रुचिते अमृता अमृते अनश्वरे बर्हिषि सीदन्तं तिष्ठन्तम् । किं कुर्वन् बृहतीं छन्दः इन्द्रियम् त्रिवत्सं गां वयश्चेन्द्रे दधत् । वत्सः संवत्सरः त्रयो वत्सा यस्य त्रिवत्सो गौः त्रिवर्षो वृषः । स वेतु ॥ २७ ॥

होता॑ यक्ष॒द्व्यच॑स्वतीः सुप्राय॒णा ऋ॑ता॒वृधो॒ द्वारो॑ दे॒वीर्हि॑र॒ण्ययी॑र्ब्र॒ह्माण॒मिन्द्रं॑ व॒यो॒ध॑स॒म् । प॒ङ्क्तिं छन्द॑ इ॒हेन्द्रि॒यं तु॑र्य॒वाह॒ं गां वयो॒ दध॒द् व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ २८ ॥

(१)होतायक्षद्व्यचस्वतीः । दैव्यो होता यजतु व्यचस्वतीर्व्यञ्जनवतीर्गमनवतीः । सुप्रायणाः साधुप्रगमनाः ऋतावृधः सत्यवृधो वा । द्वारः यज्ञगृहद्वारः द्वितीयबहुवचनान्तान्येतानि पदानि । देवीर्यज्ञफलदात्रीः हिरण्मयी अविनाशिनीः । तथा । ब्रह्माणं परिवृढम् इन्द्रं वयोधसम् आयुषो धारयितारं च यजतु पङ्क्तिं च छन्दः । इहेत्यभिनयदर्शनम् । इहास्मिन्निन्द्रे इन्द्रियं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । होता यक्षद् व्यचस्वतीः । ब्रह्माणं परिदृढं वयोधसम् इन्द्रं द्वारौ देवीश्च होता यजतु किम्भूता द्वारः व्यचस्वतीः व्यञ्जनवतीः गमनवतीः सुप्रायणाः साधुप्रगमनाः ऋतावृधः सत्यवृधः हिरण्ययीः हिरण्मयीः अविनीशिनीः किंकुर्वन् पङ्क्तिं छन्दः इन्द्रियं तुर्यवाहं गां वयश्च इह इन्द्रे दधत् ॥ २८ ॥

वीर्यं च तुर्यवाहं गां च आयुश्च दधत् धारयन् सेन्द्रा द्वारश्चेज्यमाना व्यन्तु पिबन्तु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ २८ ॥

अतिशक्करी । होता द्वारो देवीः ब्रह्माणं परिवृढं वयोधसमिन्द्रं च यजतु । कीदृशीर्द्वारः व्यचस्वतीः व्यचो व्यञ्जनं गमनावकाशो विद्यते यासु ताः । अत एव सुप्रायणाः शोभनं प्रकर्षेणायनं गमनं यासु ताः । ऋतावृधः सत्यस्य वर्धयित्रीः । हिरण्ययीः हिरण्मयीः दृढाः । किं कुर्वन् पङ्क्तिं छन्दः इन्द्रियम् तुर्यवाहं गाम् वयश्च इह इन्द्रे दधत् । सार्धत्रिवर्षो गोस्तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति॥२८॥

होता यक्षत् सुपेशसा सुशिल्पे बृहती उभे नक्तोषासा न दर्शते विश्वमिन्द्रं वयोधसम् । त्रिष्टुभं छन्द इहेन्द्रियं पष्ठवाहं गां वयो दधद् वीतामाज्यस्य होतर्यज ॥ २९ ॥

(१)होता यक्षत्सुपेशसा । दैव्यो होता यजतु सुपेशसा सुपेशसौ पेश इति रूपनाम । सुरूपे । सुशिल्पे । यद्वै प्रतिरूपं तच्छिल्पम् अन्योऽन्यं प्रतिरूपे । बृहती महत्यौ उभे नक्तोषासा न । समुच्चयार्थीयो नकारः उभे अपि नक्तोषासा । नक्ता च रात्रिः उषाश्च रात्रेरपरकालः । दर्शते दर्शनीये । विश्वं सर्वात्मकमिन्द्रं

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पुस्तके नास्ति । तद्यथा। होता यक्षत्सुपेशसा विश्वं । सर्वात्मकं वयोधसम् इन्द्रमुभे नक्तोषासा च होता यजतु नक्ता रात्रिः उषा रात्रेरपरः कालः नकारश्चार्थे कीदृश्योषासौ सुपेशसौ पेश इति रूपनाम सुरूपे सुशिल्पे यद्वै प्रतिरूपं तच्छिल्पम् अन्योऽन्यं प्रतिरूपे बृहती महत्यौ दर्शनीये किं कुर्वन् त्रिष्टुभं छन्दः इन्द्रियं पष्ठवाहं गां वयश्च इह इन्द्रे दधत् इज्यमाने सेन्द्रे नक्तोषासौ आज्यस्य वीतां पिबताम् ॥ २९ ॥

वयोधसम् आयुषो धारयितारश्च यजतु । किंकुर्वन् यजतु । त्रिष्टुभं च छन्दः इह इन्द्रे इन्द्रियं च वीर्यं पष्ठवाहं गां च वय आयुश्च दधत् धारयन् । नक्तोषासा सेन्द्रे चेज्यमाने वीतां पिबतामाज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ २९ ॥

अतिशक्करी । होता उभे नक्तोषासा नक्तोषसौ विश्वं सर्वात्मकं वयोधसमिन्द्रं च यजतु । नक्ता रात्रिः उषा रात्रेरपरभागः । नक्ताश्चार्थः । कीदृश्यौ नक्तोषसौ सुपेशसा सुपेशसौ पेशः रूपनाम शोभनं पेशो ययोस्ते सुरूपे । सुशिल्पे यद्वै प्रतिरूपं तच्छिल्पमिति श्रुतेः सुष्ठु शिल्पं ययोस्ते अन्योऽन्यं प्रतिरूपे । बृहती बृहत्यौ । दर्शते दर्शनीये दृशेरतच्प्रत्ययः । किं कुर्वन् त्रिष्टुभं छन्दः इन्द्रियम् पष्ठवाहं गाम् वयश्च इहेन्द्रे दधत् । ते वीतां पिबताम् ॥ २९ ॥

होता यक्षत् प्रचेतसा देवानामुत्तमं यशो होतारा दैव्या कवी सयुजेन्द्रं वयोधसम् । जगतीं छन्द इन्द्रियमनड्वाहं गां वयो दधद् वीतामाज्यस्य होतर्यज ॥ ३० ॥

(१.)होतायक्षत्प्रचेतसा । दैव्यो होता यजतु प्रचेतसा प्रकृष्टज्ञानौ । यौ च देवानामुत्तमं यशः । पुञ्जीकृतयशोरूपौ होतारौ दैव्यौ अयं चाग्निरसौ च मध्यमः । कवी क्रान्तदर्शनौ । सयुजा सहयोगिनौ इन्द्रं च वयोधसम् आयुषो धारयितारम् । किङ्कुर्वन्

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मु० मुद्रित पु० नास्ति । तद्यथा । होता यक्षत्प्रचेतसा । वयोधसमिन्द्रं दैव्यो होतारौ च होता यजतु अयं चाग्निरसौ च मध्यमः । किम्भूतौ प्रचेतसौ प्रकृष्टज्ञानौ देवानामुत्तमं यशः । पुञ्जीकृतयशोरूपौ कवी क्रान्तदर्शनौ सयुजौ सहयोगिनौ किं कुर्वन् जगतीं छन्दः इन्द्रियम् अनड्वाहं गां वयश्च इन्द्रे दधत् सेन्द्रौ तौ वीताम् ॥ ३० ॥

दैव्यो होता यजतु। जगतीञ्छन्दः इन्द्रियं वीर्यं च। अनड्वाहं च गां वयः आयुश्च इन्द्रे दधत् धारयन्। तौ च दैव्यो होतारौ सेन्द्रावीज्यमानौ वीतां पिबतामाज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३० ॥

एकाधिका शक्वरी। होता दैव्यौ होतारौ वयोधसमिन्द्रं च यजतु अयं चाग्निरसौ च मध्यम इति होतारौ। कीदृशौ प्रचेतसा प्रकृष्टं चेतो ययोस्तौ प्रचेतसौ। देवानामुत्तमं यशः पुञ्जीकृतदेवयशोरूपौ। कवी क्रान्तदर्शनौ। सयुजा सह युक्तस्तौ समानयोगौ। किं कुर्वन्। जगतीं छन्दः इन्द्रियम् अनड्वाहं गाम् वयश्च इन्द्रे दधत्। अनः शकटं वहतीत्यनड्वान् शकटक्षमो वृषः तौ वीताम्॥३०॥

होता यक्षत् पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम्। विराजं छन्द इहेन्द्रियं धेनुं गां न वयो दधद् व्यन्त्वाज्यस्य होतर्यज ॥ ३१ ॥

(१)होता यक्षत् पेशस्वतीः। दैव्यो होता यजतु पेशस्वतीः रूपसमृद्धाः तिस्रो देवीः हिरण्ययीः हिरण्यालङ्कृतशरीराः। भारतीः भरत आदित्यः तस्य भारतीः बहुवचनमिडासरस्वत्युपलक्षणार्थम्। बृहतीः प्रभावतः महत्यः आदित्येन्द्राग्निसंबन्धा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। होता यक्षत्पेशस्वतीः। वयोधसं पतिं पालयितव्यम् इन्द्रं तिस्रो देवीश्च होता यजतु किम्भूतास्तिस्रः पेशस्वतीः रूपसमृद्धाः। हिरण्ययीः हिरणमयीः हिरण्यालङ्कृतदेहाः बृहतीः प्रभावतः महीः महतीः आदित्येन्द्राग्निसम्बन्धात्। कास्ताः भारतीः। बहुवचनम् इडासरस्वत्युपलक्षणार्थम्। किं कुर्वन् विराजं छन्दः इन्द्रियं धेनुं गां वयश्च इह इन्द्रे दधत् नकारश्चार्थे सेन्द्राः ताश्च व्यन्तु ॥ ३१ ॥

त् । पतिम् पालयितारम् इन्द्रश्च वयोधसम् आयुषो धारयितारम् । यजतु । किं कुर्वन्यजतु विराजञ्छन्दः इहास्मिन्निन्द्रे इन्द्रियं वीर्यञ्च । धेनुङ्गां न नकारः समुच्चयार्थीयः । धेनुञ्च गां वय आयुश्च दधत् धारयन् । तिस्रो देव्यश्च सेन्द्रा इज्यमानाः व्यन्तु पिबन्तु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३१ ॥

एकाधिका शक्वरी । होता तिस्रो देवीः पतिं पालकं वयोधसमिन्द्रं च यजतु । कीदृशीस्तिस्रः पेशो रूपमस्ति यासां ताः रूपसमृद्धाः । हिरण्ययीः हिरण्यालङ्कृतदेहाः । बृहतीः प्रभावेन । महीः महतीः तेजसा आदित्येन्द्राग्निसम्बन्धात् । कास्ताः भारतीः बहुवचनमिडासरस्वत्युपलक्षणम् इडासरस्वतीभारत्यस्तिस्र इत्यर्थः । किं कुर्वन् । विराजं छन्दः इन्द्रियम् धेनुं दोग्ध्रीं गाम् वयश्चेहेन्द्रे दधत् । नकारश्चार्थः । सेन्द्रास्ता व्यन्तु ॥ ३१ ॥

होता॑ यक्षत् सु॒रेत॑सं॒ त्वष्टा॑रं पु॒ष्टि॒वर्ध॑नं रू॒पाणि॒ बिभ्र॑तं पृथ॒क् पुष्टि॒मिन्द्रं॑ वयो॒धस॑म् । द्वि॒पदं॒ छन्द॑ इन्द्रि॒यमु॒क्षाणं॒ गां न वयो॒ दध॑द्वे॒त्वाज्य॑स्य॒ होत॒र्यज॑ ॥ ३२ ॥

(१) होता यक्षत्सुरेतसम् । दैव्यो होता यजतु सुरेतसं त्वष्टारम् । शोभनं हि रेतस्त्वष्टुर्जगदुत्पत्तिबीजत्वात् । पुष्टिं वर्द्धयितारम् । रूपाणि बिभ्रतं पृथक्पुष्टिम् । जातिषु रूपाणि पुष्टिश्च पृथक् धारयन्तम् । इन्द्रश्च वयोधसम् आयुषो धारयितारं यजतु

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । होता यक्षत् सुरेतसम् । वयोधसमिन्द्रं तं त्वष्टारं च होता यजतु । किन्त्वष्टारं सुरेतसं शोभनं हि रेतस्त्वष्टुर्जगदुत्पत्तिबीजत्वात् पुष्टिवर्द्धनं पुष्टेर्वर्द्धयितारं पृथग्जातिषु रूपाणि पुष्टिं च बिभ्रतम् । किं कुर्वन् यजतु द्विपदं छन्दः इन्द्रियमुक्षाणं गां वयश्च इन्द्रं दधत् । नकारश्चार्थः । सेन्द्रस्त्वष्टा वेतु ॥ ३२ ॥

किं कुर्वन्यजतु द्विपदश्च छन्दः इन्द्रियं वीर्यम् उक्षाणङ्गां न नकारः समुच्चयार्थीयो भिन्नक्रमः। उक्षाणञ्च गाम् वय आयुश्च इन्द्रे दधत् धारयन्। त्वष्टा च सेन्द्रः इज्यमानः वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३२ ॥

एकाधिका शक्वरी। होता त्वष्टारं वयोधसमिन्द्रं च यजतु। कीदृशं त्वष्टारं सुरेतसं शोभनं रेतो यस्य तम् जगदुत्पादकत्वात्त्वष्टुः शोभनं रेतः। पुष्टिवर्धनं पुत्रादिपुष्टेर्वर्धयितारम्। पृथक् नानाजातिषु रूपाणि पुष्टिं च बिभ्रतम्। किं कुर्वन् द्विपदं छन्दः इन्द्रियम् उक्षाणं रेतः सेकक्षमं गां वृषम् वयश्चेन्द्रे दधत्। नश्चार्थः। सेन्द्रस्त्वष्टा वेतु ॥ ३२ ॥

होता यक्षद् वनस्पतिँ शमितारँ शतक्रतुँ हिरण्यपर्णमुक्थिनँ रशनां बिभ्रतं वशिं भगमिन्द्रं वयोधसम्। ककुभं छन्द इहेन्द्रियं वशां वेहतं गां वयो दधद् वेत्वाज्यस्य होतर्यज ॥ ३३ ॥

(१)होता यक्षद्वनस्पतिम्। दैव्यो होता यजतु वनस्पतिं शमितारं हविषः संस्कर्तारम् शतक्रतुं बहुकर्माणम्। हिरण्यपर्णम् सुवर्णमयपत्रम्। उक्थिनम्। वच परिभाषणे अस्य उक्थम् वचनवन्तं यज्ञवन्तं वा। रशनां बिभ्रतम् स्वरूपानुवादः। यूपे हि

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। होता यक्षद्वनस्पतिम्। वयोधसमिन्द्रं वनस्पतिं च होता यजतु किं वनस्पतिं शमितारं संस्कर्तारं हविषः शतक्रतुं बहुकर्माणं हिरण्यपर्णं सुवर्णमयपत्रम् उक्थिनम्। वच परिभाषणे। अस्य रूपम् उक्थः। वचनवन्तं यज्ञवन्तं वा रशनां बिभ्रतं स्वभावानुवादः यूपे हि पशुबन्धार्थं रज्जुर्बध्यते। वशिं कान्तं भगं भजनीयं किं कुर्वन् यजतु ककुभं छन्दः इन्द्रियं वशां वन्ध्यां वेहतं गर्भपातिनीं गां वयश्च इहेन्द्रे दधत्। सेन्द्रे वनस्पतिर्वेतु ॥३३॥

पशुबन्धनार्थं रज्जुर्बध्यते । वशिं कान्तम्भगम्भजनीयम् । इन्द्रश्च वयोधसमायुषो धारयितारं यजतु । किं कुर्वन् दैव्यो होता यजतु । ककुभश्च छन्दः इहेन्द्रे इन्द्रियं वीर्यञ्च वशां वन्ध्यां वेहतङ्गर्भघातिनीञ्च गां वय आयुश्च दधत् धारयन् । वनस्पतिश्च सेन्द्रे इज्यमानः वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३३ ॥

अत्यष्टिः । होता वनस्पतिं वयोधसमिन्द्रं च यजतु । कीदृशं वनस्पतिं शमितारं संस्कर्त्तारं हविषाम् । शतक्रतुं बहुकर्माणम् । हिरण्यपर्णं हिरण्मयानि पर्णानि यस्य तम् । उक्थिनम् उक्थानि शस्त्राणि शन्त्यस्य यज्ञवन्तं वा । रशनां रज्जुं बिभ्रतम् स्वभावानुवादः यूप हि पशुबन्धाय रज्जुर्बध्यते । वशिं कान्तम् । भगं भजनियम् । किं कुर्वन् ककुभं छन्दः इन्द्रियम् वशां बन्ध्यां वेहतं गर्भोपघातिनीं च गाम् वयश्च इह इन्द्रे दधत् । सेन्द्रो वनस्पतिर्वेतु॥३३॥

होता यक्षत् स्वाहाकृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इन्द्रियं बृहदृषभं गां वयो दधद् व्यन्त्वाज्यस्य होतर्यज ॥ ३४ ॥

(१)होता यक्षत्स्वाहाकृतीः । दैव्यो होता यजतु स्वाहाकृतीः प्रयाजदेवताः । अग्निश्च गृहपतिं पृथक् यजतु । वरुणश्च भेष-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । होता यक्षत्स्वाहाकृतीः । स्वाहाकृतीः प्रयाजदेवताः गृहपतिमग्निं पृथग् भेषजं वरुणं कविं क्रान्तदर्शनं क्षत्रं प्रहाराद् रक्षितारं वयोधसमिन्द्रं च होता यजतु किं कुर्वत् अतिच्छन्दसं छन्दः बृहत् इन्द्रियम ऋषभं गां वयश्च इन्द्रे दधत् । इज्यमानाः सेन्द्राः स्वाहाकृतयः आज्यस्य व्यन्तु हे मनुष्यहोतस्त्वमपि यज ॥ ३४ ॥

जम् । तथा कविं क्रान्तदर्शनं क्षत्रम्प्रहाराद्रक्षितारम् इन्द्रियञ्च वयोधसमायुषो धारयितारम् यजतु । किं कुर्वन्यजतु अतिछन्दसञ्च छन्दः इन्द्रियञ्च वीर्यं बृहत्महत् ऋषभञ्च गां वय आयुश्च इन्द्रे दधत् धारयन् । सेन्द्राश्च प्रयाजदेवता इज्यमाना व्यन्तु पिबन्तु आज्यस्य स्वमंशं त्वमपि हे मनुष्यहोतर्यज ॥ ३४ ॥

अतिशक्वरी । होता स्वाहाकृतीः प्रयाजदेवताः इन्द्रं च यजतु । कीदृशमिन्द्रम् अग्निमङ्गतीत्यग्निः अग्रे गन्तारम् । पृथक् प्रत्येकं यज्ञेषु गृहपतिं गृहस्य पालकम् । वरुणम् व्रियतेऽसौ वरुणस्तम् ऋत्विग्भि र्वरणीयम् । भेषजं रोगनाशकम् । कविं क्रान्तदर्शनम् । क्षत्रं क्षतात्प्रहारात्त्रातारम् । वयो वीर्य्यं बृहत् महत् ऋषभं पुष्टं गां वयश्चेन्द्रे दधत् । सेन्द्राः स्वाहाकृतयः आज्यं व्यन्तु । मनुष्यहोतस्त्वमपि यज ॥ ३४ ॥

देवं बर्हिर्वयोधसं देवमिन्द्रमवर्धयत् । गायत्र्या छन्दसेन्द्रियं चक्षुरिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ३५ ॥

(१)अथ वयोधसोऽनुयाजप्रैषाः । देवं बर्हिः यत् देवं द्योतनं बर्हिः । वयोधसमायुषो धारयितारं देवं दानादिगुणयुक्तम् इन्द्रम् अवर्द्धयत् किं कुर्वन् । गायत्र्या छन्दसा इन्द्रियं वीर्यञ्च क्षुश्च इन्द्रे वय आयुश्च दधत् धारयत् । तत् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ३५ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अथ वयोधसोऽनुयाजप्रैषाः । देवं बर्हिः यत् देवं द्योतनं बर्हिः वयोधसमिन्द्रं देवमवर्द्धयत् । तत् गायत्र्या छन्दसा चक्षुः इन्द्रियं वयश्च इन्द्रे दधत् सन् वसुवननाय वसुधानाय च वेतु पिबतु । हे मनुष्यहोतस्त्वं यज ॥ ३५ ॥

वयोधसे पशावेवैकादशानुयाजानां प्रैषाः बर्हिरादिदेवताः । एकाधिके आर्ष्यौ त्रिष्टुभौ द्वे । बर्हिः देवं वयोधसमिन्द्रं देवमवर्धयत् । कीदृशं बर्हिः गायत्र्या छन्दसा कृत्वा चक्षुरिन्द्रियं वयश्चेन्द्रे दधत् । तत् वसुवननाय वसुधानाय चाज्यं वेतु षष्ठीसप्तम्यौ चतुर्थ्यर्थे । हे मनुष्यहोतस्त्वमपि यज । एवमग्रेऽपि व्याख्येयम् ॥ ३५ ॥

देवीर्द्वारो वयोधसꣳ शुचिमिन्द्रमवर्धयन् । उष्णिहा छन्दसेन्द्रियं प्राणमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥ ३६ ॥

(१)देवीर्द्वारः । या देव्यः द्वारः वयोधसमायुषो धारयितारम् शुचिं पवित्रम् इन्द्रम् अवर्द्धयन् किं कुर्वन्त्यः । उष्णिहा छन्दसा इन्द्रियं वीर्यं प्राणञ्च इन्द्रं वय आयुश्च दधत् । दधत्य इति लिङ्गवचनव्यत्ययः धारयन्त्य इत्यर्थान्तरम् । ताः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु त्वमपि हे होतर्यज ॥ ३६ ॥

द्वारो देव्यः वयोधसं शुचिं पवित्रमिन्द्रमवर्धयन् । कीदृश्यो द्वारः उष्णिहा छन्दसा कृत्वा सह वा प्राणमिन्द्रियं प्राणेन्द्रियं वयश्चेन्द्रे दधत् दधत्यः लिङ्गवचनव्यत्ययः । ता व्यन्तु ॥ ३६ ॥

देवी उषासानक्ता देवमिन्द्रं वयोधसं देवी देवमवर्धताम् । अनुष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥ ३७ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवीर्द्वारः । याः द्वारो देव्यः शुचिं पवित्रं वयोधसमिन्द्रम् अवर्द्धयन् ताः उष्णिहा छन्दसा । प्राणमिन्द्रियं वयश्च इन्द्रे दधत् दधत्य इति लिङ्गवचनव्यत्ययः सत्यः व्यन्तु ॥ ३६ ॥

(१)देवी उषासा नक्ता। ये देव्यौ उषासा नक्ता उषाश्च रात्रेरपरकालः नक्तेति रात्रिनाम। देवमिन्द्रं वयोधसमायुषो धारयितारम्। देवी देव्यौ देवम् एको देवीशब्दो दीप्तिवचनोऽपरो दानादिगुणयुक्तवचनः देवशब्दोऽप्येवमेव। अवर्द्धताम् किं कुर्वन्त्यौ। अनुष्टुभा छन्दसा इन्द्रियं बलं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ। ते वसुवननाय वसुधानाय च वीतां पिवतामाज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ३७ ॥

द्वे ब्राह्म्यौ बृहत्यौ। उषासानक्तौ देवी देव्यौ वयोधसमिन्द्रं देवमवर्धताम् उषाश्च नक्तं च उषासानक्ता उषासोषस इति (पा० ६, ३, ३१) उषःशब्दस्य देवताद्वन्द्वे उषासा आदेशः विभक्तेराकारश्च। कीदृश्यौ ते देवी दीप्यमाने। कीदृशमिन्द्रं देवं दीप्यमानम्। एकौ देवीदेवशब्दौ दीप्तिवाचकौ अन्यौ सुरवाचकौ। अनुष्टुभा छन्दसा बलमिन्द्रियं वयश्च इन्द्रे दधत् दधत्यौ। दधदित्यव्ययम् लिङ्गवचनव्यत्ययो वा। ते वीताम् ॥ ३७ ॥

देवी जोष्ट्री वसुधिती देवमिन्द्रं वयोधसं देवी देवमवर्धताम्। बृहत्या छन्दसेन्द्रियꣳ श्रोत्रमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वीतां यज ॥ ३८ ॥

(२)देवी जोष्ट्री। ये देव्यौ जोष्ट्र्यौ जोषयित्र्यौ। वसुधिती

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रितपुस्तके नास्ति। तद्यथा। देवी उषासा नक्ता। ये देवी दीप्ते उषा नक्तं देव्यौ देवं दीप्तं वयोधसमिन्द्रं देवमवर्द्धताम्। एकौ देवीदेवशब्दौ दीप्तिवाचकौ अपरावमरवाचकौ ते अनुष्टुभा छन्दसा बलमिन्द्रियं वयश्च इन्द्रे दधत् दधत्यौ सत्यौ वीतामव्ययं दधच्छन्दः। नह्यस्य लिङ्गवचनव्यत्ययो दृश्यते। कारणेष्वपि सत्सु ॥ ३७ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई

वसुधात्र्यौ देवं दीप्तं वयोधसमायुषो धारयितारमिन्द्रम् देव्यौ देवम् अवर्द्धताम् । ते बृहत्या छन्दसा इन्द्रियं वीर्यं श्रोत्रं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ वसुवननाय च वीतां पिबतामाज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ३८ ॥

देवी देव्यौ दीप्यमाने देवी देव्यौ अनुयाजदेवते देवं दीप्तं वयोधसमिन्द्रं देवमवर्धताम् । देवीदेवशब्दौ पूर्ववत् । कीदृश्यौ जोष्ट्र्यौ जुषेते ते जोष्ट्र्यौ प्रीतियुक्ते जुषेस्तृच् । वसुधिती वसुनो धनस्य धारयित्र्यौ । बृहत्या छन्दसा श्रोत्रमिन्द्रियं वयश्च इन्द्रे दधत्यौ॥३८॥

देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रं वयोधसं देवी देवमवर्धताम् । पङ्क्त्या छन्दसेन्द्रियꣳ शुक्रमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वीतां यज ॥ ३९ ॥

(१)देवी ऊर्जाहुती । ये देवी दात्र्यौ ऊर्जाहुती ऊर्जाह्वान्यौ दुघे दोग्ध्र्यौ सुदुघे सुदोहने पयसा इन्द्रं वयोधसं देवी देव्यौ द्युते स्थाने देवं द्युस्थानम् अवर्द्धताम् । पङ्क्त्या छन्दसा इन्द्रियं वीर्यं शुक्रं च इन्द्रे वय आयुश्च दधत् धारयन्त्यौ वसुवननाय वसुधानाय च वीतां पिबतामाज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ३९ ॥

---

मुद्रित पु० नास्ति । तद्यथा । देवी जोष्ट्री । देव्यौ दीप्ते जोष्ट्र्यौ जोषयित्र्यौ वसुधिती वसुनो धात्र्यौ देव्यौ देवं दीप्तं वयोधसमिन्द्रं देवमवर्द्धताम् । बृहत्या छन्दसा इन्द्रियं श्रोत्रं वयश्च दधत् दधत्यौ सत्यौ वीताम् ॥ ३८ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवी ऊर्ज्जाहुती । देवी दात्र्यौ ऊर्ज्जाहुती ऊर्ज्जाह्वान्यौ दुघे दोग्ध्र्यौ सुदुघे सुदोहने देव्यौ पयसा वयोधसमिन्द्रं देवमवर्द्धतां ते च पङ्क्त्या छन्दसा इन्द्रियं शुक्रं वयश्च इन्द्रे दधत्यौ सत्यौ वीताम् ॥ ३९ ॥

शक्करी । देवी दात्र्यौ उर्जाह्वान्यौ दैव्यौ पयसा वयोधसं देवमिन्द्रमवर्धताम् । कीदृश्यौ दुघे दोग्ध्र्यौ । सुदुघे सुखेन दोग्धुं शक्ये । पङ्क्त्या छन्दसा शुक्रं वीर्य्यमिन्द्रियं वयः चेन्द्रे दधत्यौ ॥ ३९ ॥

देवा दैव्या होतारा देवमिन्द्रं वयोधसं देवौ देवमवर्धताम् । त्रिष्टुभा छन्दसेन्द्रियं त्विषिमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥ ४० ॥

(१) देवा दैव्या । यौ देवौ दातारौ दैव्यो होतारौ । अयं चाग्निरसौ च मध्यमः । देवं दातारमिन्द्रं वयोधसमायुषो धारयितारम् देवौ द्युस्थानौ देवं द्युस्थानम् अवर्द्धताम् । तौ त्रिष्टुभा छन्दसा इन्द्रियं वीर्यन्त्विषिं दीप्तिश्च इन्द्रे वयश्चायुः दधत् धारयन्तौ वसुवननाय वसुधानाय च वीतां पिबतामाज्यस्य स्वमंशं हे होतर्यज ॥ ४० ॥

अतिजगती । दैव्या दैव्यौ देवा देवौ दीप्तौ देवसम्बन्धिनौ होतारा होतारौ देवौ वयोधसं देवं दीप्तमिन्द्रं देवमवर्धताम् । त्रिष्टुभा छन्दसा त्विषिं कान्तिमिन्द्रियं त्वगिन्द्रियं वयश्चेन्द्रे दधतौ ॥ ४० ॥

देवीस्तिस्रस्तिस्रो देवीर्वयोधसं पितिमिन्द्रमवर्धयन् । जगत्या छन्दसेन्द्रियꣳशूषमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥ ४१ ॥

(२)देवीस्तिस्रः । याः तिस्रो देव्यः सरस्वतीडाभारत्यः ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवा दैव्या होतारा । देवौ दातारौ दैव्यौ होतारौ देवौ वयोधसमिन्द्रं देवमवर्द्धताम् त्रिष्टुभा छन्द्रसा इन्द्रियं त्विषिं वयश्च इन्द्रे दधत् दधतौ सन्तौ वीताम् ॥ ४० ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवीस्तिस्रः । तिस्रो देव्यः सरस्वतीडा

आदरार्थमभ्यासः । वयोधसमायुषो धारयितारम् पतिं पालयितव्यम् इन्द्रमवर्द्धयन् । ता जगत्या छन्दसा इन्द्रियं वीर्यम् । शूषम् शूषशब्दो बलवचनः । बलम् इन्द्रे वय आयुश्च दधत् दधत्यः वसुवननाय वसुधानाय च व्यन्तु पिबन्तु आज्यस्य स्वमंशं हे होतर्यज ॥ ४१ ॥

एकाधिका ब्राह्मी अनुष्टुप् । तिस्रो देव्यो भारतीडासरस्वत्यः पतिं पालकं वयोधसमिन्द्रमवर्धयन् अभ्यास आदरार्थः । कीदृश्यः जगत्या छन्दसा शूषं बलमिन्द्रियं वयश्चेन्द्रे दधत्यः ॥ ४१ ॥

देवो नराशꣳसो देवमिन्द्रं वयोधसं देवो देवमवर्धयत् । विराजा छन्दसेन्द्रियꣳ रूपमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वेतु यज ॥ ४२ ॥

(१)देवो नराशंसः । यो देवो द्युस्थानो नराशंसो यज्ञः देवं द्युस्थानम् इन्द्रम् वयोधसमायुषो धारयितारम् । देवो देवम् दानादिगुणयुक्त इत्युभयत्र । अवर्द्धयत् । स इदानीं विराजा छन्दसा इन्द्रियं वीर्यं रूपश्च इन्द्रं वयं आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशं हे होतर्य्यज ॥ ४२ ॥

अतिजगती । देवो दाता नराशंसो देवः देवं दीप्तं वयोधसमि-

---

भारती आदरार्थमभ्यासः । पतिं पालयितव्यं वयोधसमिन्द्रमवर्द्धयन् ताः जगत्या छन्दसा इन्द्रियं शूषं बलं वयश्च इन्द्रे दधत् दधत्यः सत्यः व्यन्तु ॥ ४१ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवो नराशꣳसः । देवो दाता नराशंसो यज्ञो देवः देवं द्योतनं वयोधसमिन्द्रं देवमवर्द्धयत् । सः द्विपदा छन्दसा इन्द्रियं भगं वयश्च इन्द्रे दधत् सन् वेतु ॥ ४२ ॥

न्द्रमवर्धयत् । कीदृशः विराजा छन्दसा रूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४२ ॥

देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धयत् । द्विपदा छन्दसेन्द्रियं भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ४३ ॥

देवो वनस्पतिः । यो देवो वनस्पतिर्यूपः देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् देवो देवम् दीप्त इत्युभयत्र । अवर्द्धयत् । स इदानीम् द्विपदा छन्दसा इन्द्रियं वीर्यं भगमैश्वर्यं च इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय च वसुधानाय च वेतु पिबतु त्वमपि हे होतर्यज ॥ ४३ ॥

अतिजगती । देवो दाता वनस्पतिर्यूपः देवं द्योतनं वयोधसमिन्द्रं देवमवर्धयत् । कीदृशः द्विपदा छन्दसा भगं सौभाग्यरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४३ ॥

देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धयत् । ककुभा छन्दसेन्द्रियं यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ४४ ॥

(१) देवं बर्हिः । यद्देवं श्रेष्ठम् बर्हिः । वारितीनाम् वार्भ्यः अद्भ्यः इतीनामुद्गतानाम् । ओषधीनामित्यर्थः । देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारयितारम् देवन्देवम् दानादिगुणयुक्त

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवं बर्हिः वारितीनां वार्भ्यः अद्भ्यः इतीनां उद्गतानाम् । ओषधीनां देवं श्रेष्ठं बर्हिर्देवं कर्तृ वयोधसं देवं दीप्तमिन्द्रं देवमवर्द्धयत् ककुभा छन्दसा इन्द्रियं यशः वयश्च इन्द्रे दधत् सन् वेतु ॥ ४४ ॥

इत्युभयत्र । अवर्द्धयत् । तत् ककुभा छन्दसा इन्द्रियं वीर्यं यशश्च इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ४४ ॥

ब्राह्मी बृहती । बर्हिः देवमिन्द्रमवर्धयत् । कीदृशमिन्द्रं देवं दीप्यमानम् वयोधसं वयसो दातारम् । कीदृशं बर्हिः वारितीनां वार्भ्यः सकाशात् इतिरुत्पत्तिर्यासां ता वारितय ओषधयस्तासां मध्ये देवं दीप्तं श्रेष्ठमित्यर्थः । ककुभा छन्दसा यशोरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४४ ॥

दे॒वो अ॒ग्निः स्वि॑ष्ट॒कृद्दे॒वमिन्द्रं॑ वयो॒धसं॑ दे॒वो दे॒वम॑वर्धयत् । अति॑च्छन्दसा॒ छन्द॑सेन्द्रि॒यं क्ष॒त्रमिन्द्रे॒ वयो॒ दध॒द्व॑सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ॥ ४५ ॥

(१.)देवो अग्निः । यो देवो द्युस्थानः अग्निः स्विष्टकृत् साधु इष्टं कर्तव्यमिति यस्यायमधिकारः । देवं द्युस्थानम् इन्द्रं वयोधसमायुषो धारायितारम् । देवो देवम् दीप्त इत्युभयत्र । अवर्द्धयत् अतिछन्दसा छन्दसा स इदानीम् इन्द्रियं वीर्यम् क्षत्रं क्षतात् त्राणम् इन्द्रे वय आयुश्च दधत् धारयन् वसुवननाय वसुधानाय च वेतु पिबतु आज्यस्य स्वमंशं त्वमपि हे होतर्यज ॥ ४५ ॥

ब्राह्मी बृहती । देवो दाता स्विष्टकृत् अग्निः देवो वयोधसं देवं दीप्तमिन्द्रं देवमवर्धयत् । कीदृशः अतिच्छदसा छन्दसा क्षत्रं क्षतात्त्राणरूपमिन्द्रं वयश्चेन्द्रे दधत् । स वसुवननाय च वेतु । हे होतः ! त्वमपि यज ॥ ४५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । देवो अग्निः । यो देवो दाता स्विष्टकृत् अग्निर्देवः वयोधसं देवं दीप्तमिन्द्रं देवमवर्द्धयत् स स्विष्टकृत् अतिछन्दसा छन्दसा इन्द्रियं क्षत्रं क्षतात् त्राणं वयश्च इन्द्रे दधत् सन् वसुवननाय वसुधानाय च वेतु पिबतु त्वमपि होतर्यज ॥ ४५ ॥

अ॒ग्निम॒द्य होता॑रमवृणीता॒यं यज॑मान॒: पच॒न् प॒क्तीः पच॑न् पु॒रोडाशं॑ ब॒ध्नन्निन्द्रा॑य व॒यो॒ध॒से छाग॑म् । सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभव॒दिन्द्रा॑य वयो॒ध॒से छाग॑॑न । अघ॒त्तं मेद॒स्तः प्रति॑ पच॒ताग्र॑भीदवी॑वृधत् पु॒रोडाशे॑न ॥ त्वाम॒द्य ऋषे॰ ॥ ४६ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
अष्टाविंशोऽध्यायः ।

---

(१) अग्निमद्येति व्याख्यातम् इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

इति उव्वटकृतौ मन्त्रभाष्येऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥

---

अग्निमद्य एकाधिका ब्राह्मी गायत्री । सूपस्थाः ब्राह्मयनुष्टुप् । एते व्याख्याते ( २३ क० ) ॥ त्वामद्य प्रतीकोक्तः सर्वोऽपि पाठ्यः एकाधिका विकृतिः अयमपि व्याख्यातः ( २३ क० ) इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अष्टाविंशोऽयमध्यायोऽगमत् सौत्रामणीभवः ॥
इति सौत्रामणीसम्बन्धिप्रयाजानुयाजप्रैषनिरूपणं
नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

(१) अत्र वाराणसी॰ लि॰ पु॰ संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु॰ नास्ति । तद्यथा । अग्निमद्येति व्याख्यातम् इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

इति मन्त्रभाष्येऽष्टाविंशोऽध्यायः ॥ २८ ॥

## ऊनत्रिंशोऽध्यायः ।

समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः । वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥ १ ॥

(१) एकादश त्रिष्टुभः आप्त्यो नराशंसा बृहदुक्थो वामदेव्यः । अश्वो वा समुद्रिरपश्यत् । अश्वस्तुतिः आश्वमेधिकं प्रागाग्नेयः कृष्णग्रीव इत्येतस्मात् हे भगवन्नग्ने समिद्धः संदीप्तः । अञ्जन् व्यक्तीकुर्वन् आज्ये हि सर्वासां देवतानां मनांस्योतानि ममेदं स्यात् ममेदं स्यादिति । घृतं मधुमत् मधु स्वादु । पिन्वमानः आत्मानं प्रति सिञ्चन् स्वेच्छया पिबन्नित्यर्थः । वाजी वेजनवान् चलनवान् वहन्वाजिनं हविः । हे जातवेदः । देवानां वक्षि वह प्रापय । प्रियम् आसधस्थं सहस्थानम् ॥ १ ॥

आश्वमेधिकोऽध्यायः ततोऽस्य प्रजापतिर्ऋषिः । आद्या एकादश त्रिष्टुभः आप्रीसंज्ञाः अश्वस्तुतयो वामदेवपुत्रेण बृहदुक्थेन समुद्रपुत्रेणाश्वेन वा दृष्टाः समित्तनूनपादिडादिदेवताकाः ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । समिद्धो अञ्जन् । एकादश त्रिष्टुभः आप्यो नाराशंसा बृहदुकथो वामदेव्योऽश्वो वा सामुद्रिरपश्यत् । अश्वस्तुतिः आश्वमेधिकं प्रागाग्नेयः कृष्णग्रीव इत्येतस्मात् । हे भगवन् हे अग्ने हे जातवेदः त्वं देवानां प्रियं सधस्थं सहस्थानम् आवक्षि आवह प्रापय किं त्वं समिद्धः संदीप्तः अञ्जन् जगत् व्यक्तीकुर्वन् मतीनां कृदरं प्रज्ञानानामुदरम् आज्यविशेषणम् आज्येन हि सर्वासां देवतानां मनांस्योतानि भवन्ति ममेदं स्यादिति तथा मधुमत् स्वादु ईदृशं घृतं पिन्वमानः आत्मानं प्रति सिञ्चन् स्वेच्छया पिबन्नित्यर्थः वाजी वेजनवान् चलनवान् वाजिनं हविः वहन् ॥ १ ॥

हे अग्ने! हे जातवेदः जातप्रज्ञान! त्वं देवानां सधस्थं सह तिष्ठन्ति यत्रेति सहस्थानं प्रति प्रियं प्रीतिमानक्षि आवह देवान् प्रीणयेत्यर्थः वहतेः शपो लुकि मध्यमैकवचने रूपम्। कीदृशस्त्वं समिद्धः दीप्तः मतीनां कुदरं बुद्धीनामुदरं गर्भमञ्जन् व्यक्तीकुर्वन् बुद्धिरहस्यं प्रकाशयन्नित्यर्थः। मधुमत् स्वादु घृतं पिन्वमानः देवेषु सिञ्चन्। वाजी वजति वाजी वज गतौ चलनवान्। वाजिनं हविः वहन् देवान् प्रापयन् सन् प्रीणय॥ १॥

घृतेनाञ्जन्त्सं पथो देवयानान् प्रजानन् वाज्यप्येतु देवान्। अनु त्वा सप्ते प्रदिशः सचन्ताᳬ स्वधामस्मै यजमानाय धेहि॥ २॥

(१) घृतेनाञ्जन्। प्रथमोऽर्द्धर्चः परोक्षकृतः। उत्तरः प्रत्यक्षकृतः। यतस्तयोरेकवाक्यता नोपपद्यते अतः पुरुषव्यत्ययः। घृतेन अञ्जन् समञ्जन्। पथः देवयानान्। हवींषि देवयानाः पन्थान उच्यन्ते। तैर्हि ते जीवन्ति। प्रजानन् अहं देवानां हविरिति जानन् वाजी अपि तु अभ्यागच्छतु देवान्। किञ्च। अनुसचन्ताम् अनुसेवन्ताम् त्वां हे सप्ते सरण। प्रदिशः दिगाश्रयाणि भूतानि। किञ्च स्वधामन्नम् अस्मै यजमानाय धेहि प्रयच्छ अत्र घृतशब्दस्तनूनपाच्छब्दपर्यायः॥ २॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। घृतेनाञ्जन् प्रथमोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः वाजी देवान् अप्येतु अभ्यागच्छतु कीदृशः घृतेन देवयानान् पथः अञ्जन् समञ्जन् हवींषि देवयानाः पन्थान उच्यन्ते तैर्हि ते जीवन्ति प्रजानन् प्रकृष्टज्ञानः अहं देवानां हविरिति जानन् किञ्च हे सप्ते सरण प्रदिशः दिगाश्रयाणि भूतानि त्वाम् अनुसचन्तां सेवन्ताम्। किञ्च अस्मै यजमानाय स्वधामन्नं धेहि प्रयच्छ अत्र तनूनपाच्छब्दपर्यायो घृतशब्दः॥ २॥

वाजी अश्वो देवानप्येतु । कीदृशः घृतेन देवयानान् पथः समञ्जन् देवा यायन्ते यैस्ते देवयानाः पन्थानो हवींष्युच्यन्ते । प्रजानन् देवानां हविरर्हमिति जानन् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह । हे सप्ते अश्व ! प्रदिशो दिगाश्रयाणि भूतानि त्वा त्वामनुसचन्ताम् षप् सम्बन्धे सपति कर्मणा सम्बध्यते स सप्तिः । किञ्च अस्मै यजमानाय स्वधामन्नं धेहि प्रयच्छ । अत्र घृतशब्दस्तनूनपाद्वाची ॥ २ ॥

ई॒ड्यश्चासि॒ वन्द्य॑श्च वाजिन्ना॒शुश्चा॑सि॒ मेध्य॑श्च सप्ते । अ॒ग्निष्ट्वा॑ दे॒वैर्वसु॑भिः स॒जोषाः॑ प्री॒तं वह्नि॑ वहतु जा॒तवे॑दाः ॥ ३ ॥

( १ ) ईड्यश्चासि । यस्त्वम् इड्यश्चासि स्तुत्यश्चासि । वन्द्यश्च । हे वाजिन् आशुश्च शीघ्रश्च मेध्यश्च यज्ञसंपादी च असि हे सप्ते । तं त्वाम् अग्निः देवैः वसुभिः सजोषाः समानजोषणः प्रीतम् आप्रीभिः प्रीतं वन्हि वोढारम् वहतु प्रापयतु जातवेदाः ॥ ३ ॥

हे वाजिन् ! हे सप्ते ! इड्यः स्तुत्योऽसि वन्द्यः नमनीयोऽसि आशुः शीघ्रः मेध्यः मेधायाश्वमेधाय योग्यः चकाराः समुच्चयार्थाः । किञ्च जातवेदाः अग्निः त्वा त्वां वहतु देवान् प्रापयतु । कीदृशोऽग्निः वसुभिः देवैः सजोषाः जोषसा प्रीत्या सहितः । कीदृशं त्वाम् प्रीतं तुष्टं वह्निं हविषो वोढारम् ॥ ३ ॥

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । इड्यश्च । हे वाजिन् हे सप्ते यः त्वमीड्यः स्तुत्योऽसि वन्द्यश्च आशुः शीघ्रः मेध्यः यज्ञसंपादी च असि तं त्वां जातवेदा अग्निर्वहतु प्रापयतु किमग्निः वसुभिर्देवः सजोषाः समानजोषणः । किं भूतं त्वां प्रीतं वह्निं वोढारम् ॥ ३ ॥

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥ ४ ॥

(१) स्तीर्णं बर्हिः । स्तीर्णमपि बर्हिः सुष्टरीम साधुस्तृणाम आजुषाणा विभक्तेर्डादेशः । सेवमानम् । ततस्तीर्यमाणम् उरु-बहु पृथु विस्तीर्णम् प्रथमानम् । पृथिव्यां वेद्याम् । देवेभिः देवैः युक्तम् । अदितिः सजोषा समानजोषणा सह । प्रीयमाना स्योनं सुखं कृण्वाना कुर्वाणा । सुविते सुगते स्वर्गे प्रजायां वा । दधातु स्थापयतु ॥ ४ ॥

वयं बर्हिः सुष्टरीम साधु स्तरीम स्तृणाम अदितिर्देवी स्तीर्णं तत् बर्हिः सुविते सु इते साधु गते स्वर्गलोके दधातु स्थापयतु । कीदृशी अदितिः सजोषाः जोषसा प्रीत्या युक्ता । स्योनं कृण्वाना सुखं कुर्वती । जुषाणा प्रीयमाणा । कीदृशं बर्हिः उरु बहु पृथु विस्तीर्णम् पृथिव्यां प्रथमानं विस्तार्य्यमाणम् देवेभिर्युक्तं देवैः सहितम् ॥ ४ ॥

एता उ वः सुभगा विश्वरूपा विपक्षोभिः श्रयमाणा उदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥ ५ ॥

---

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । स्तीर्णं बर्हिः । स्तीर्णमपि बर्हिः वयं सुष्टरीम साधु स्तृणाम जुषाणा विभक्तेर्डादेशः । सेवामानं तच्च स्तीर्यमाणं सजोषा समानजोषणा सहप्रीयमाणा स्योनं कृण्वाना सुखं कुर्वन्ती अदितिःसुविते सु इते सुगते स्वर्गलोके प्रजायां वा दधातु स्थापयतु । किं बर्हिः उरु बहु पृथु विस्तीर्णं पृथिव्यां प्रथमानं देवेभिर्युक्तम् ॥ ४ ॥

(१)एता उ वः एताश्च यज्ञगृहद्वारः हे ऋत्विग्यजमानाः वः युष्माकं सुभगाः विश्वरूपाः अनेकरूपाचित्रिताः । विपक्षोभिः श्रयमाणा उदातैः । पक्षोभिः उदातैः उर्ध्वमायातैः । सततमायातैः सततगमनैः विश्रयमाणा विस्तीर्यमाणाः । पक्षस्शब्दः सान्तः कपाटवचनः । ऋष्वाः महत्यः सतीः सत्यः कवषः कुषिता सछुषिराः । शुम्भमानाः आत्मानं शोभयन्त्यः । द्वारो देवीः दीप्तिमत्यः । सुप्रायणाः सुप्रगमनाः भवन्तु ॥ ५ ॥

हे ऋत्विग्यजमानाः ! वो युष्माकमेता द्वारो देवीः यज्ञगृहद्वारो देव्यः ईदृश्यो भवन्तु उ पादपूरणः । कीदृश्यः सुभगाः शोभनं भगं श्रीर्यासां ताः । विश्वरूपाः नानारूपाचित्राः । पक्षोभिः पक्षस्शब्दः सान्तः पक्षवाची पक्षैः पक्षप्रायैः कपाटैः विश्रयमाणाः विस्तार्य्यमाणाः । कीदृश्यैः पक्षोभिः उत् ऊर्ध्वम् आतैः अत्यन्तं विस्तार्य्यन्ते आताः अत सातत्यगमने ऊर्ध्वं प्रसृतैरित्यर्थः । पुनः कीदृश्यो द्वारः ऋष्वाः ऋषन्ति ऋष्वाः ऋष गतौ इतस्ततो गमनशीलाः महत्यः । सतीः सत्यः समीचीनाः । कवषः कु शब्दे कुवन्ति शब्दं कुर्वन्ति कवषः कुवतेरसुन्प्रत्ययः षत्वमार्षम् कपाटपिधानसमये शब्दं कुर्वाणाः सछुषिरा वा । शुम्भमानाः शोभमानाः । सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु सुगमनाः ॥ ५ ॥

अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि-

---

( १ ) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । एताः उ वः । हे ऋत्विग्यजमानाः वः युष्माकम् । एताः द्वारो देवीः यज्ञगृहद्वाराः एवं विधा भवन्तु किम्भूताः सुभगाः विश्वरूपाः अनेकरूपाः चित्रिताः उदातैः ऊर्ध्वमायतैः पक्षोभिः पक्षैः कपाटैः विश्रयमाणः विस्तीर्यमाणाः पक्षस् शब्दः सान्तः । ऋष्वाः महत्यः सतीः सत्यः कवषः कुषिताः सछुषिराः शुम्भमानाः आत्मानं शोभयन्त्यः सुप्रगमनाः ॥ ५ ॥

सं विदाने । उषसां वाᳬं सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥ ६ ॥

(१) अन्तरा मित्रावरुणा । ये अन्तरा मध्येन मित्रावरुणा चरन्ती । अयं लोको मित्रोऽसौ वरुण इति श्रुतिः द्यावापृथिव्योर्मध्येन सञ्चरन्त्यौ । मुखं यज्ञानामभिसंविदाने यज्ञानां मुखमग्निहोत्रं तस्य कालम् अभिसंविदाने प्रकथयन्त्यौ । उत्तिष्ठतामयमग्निहोत्रहोमकालः प्राप्त इतीव लक्ष्यते । ते उषासा द्विवचनोपदेशात्सहचरितत्वाच्च द्वितीया रात्रिः । नक्तोषासौ वां युवयोः हे दम्पतियजमानौ सुहिरण्ये साधुहिरण्यालङ्कारभूषिते । सुशिल्पे साध्वन्योऽन्यं प्रतिरूपे ऋतस्य यज्ञस्य यौनो इह सादयामि स्थापयामि ॥ ६ ॥

हे पत्नीयजमानौ ! वां युवयोर्ऋतस्यः यज्ञस्य योनौ इह उषासा उषसौ नक्तोषसौ सादयामि स्थापयामि द्विवचनात् सहचरित्वाच्च द्वितीया रात्रिः । कीदृश्यौ उषसा मित्रावरुणा मित्रावरुणौ अन्तरा द्यावापृथिव्योर्मध्ये सञ्चरन्ती सञ्चरन्त्यौ वर्त्तमाने अयं वै लोको मित्रोऽसौ वरुण इति श्रुतेर्मित्रवरुणशब्देन द्यावापृथिव्यावुच्येते । यज्ञानां मुखमग्निहोत्रहोमकालमभिसंविदाने कथयन्त्यौ उत्तिष्ठतायमग्निहोत्रहोमकाल इति प्रातर्विप्रा व-

---

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अन्तरा मित्रावरुणा । हे दम्पती यजमानौ वां युवयोर्ऋतस्य यज्ञस्य इह योनौ उषासा द्विवचनोपदेशात् सहचरितत्वाच्च द्वितीया रात्रिः नक्तोषासौ सादयामि स्थापयामि किम्भूते उषासौ मित्रावरुणा अन्तरा चरन्ती द्यावापृथिव्योर्मध्येन सञ्चरन्त्यौ अयं वै लोको मित्रोऽसौ वरुणः यज्ञानां मुखम् अग्निहोत्रहोमकालमभिसंविदाने कथयन्त्यौ उत्तिष्ठतायमग्निहोत्रहोमकालः संप्राप्तः सुहिरण्ये साधुहिरण्यालङ्कारविभूषिते सुशिल्पे साधु अन्योऽन्यं प्रतिरूपे ॥ ६ ॥

दन्ति तदुषस्युपचर्य्यते । सुहिरण्ये साधु हिरण्यं भूतं ययोस्ते सुशिल्पे अन्योऽन्यं प्रतिरूपे शिल्पं प्रतिरूपं भवतीति वच-नात् ॥ ६ ॥

**प्रथमा वांᳫं सरथिना सुवर्णा देवौ पश्यन्तौ भु-वनानि विश्वा । अपिप्रयं चोदना वां मिमाना होता-रा ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥**

(१) प्रथमा वाम् । यौ प्रथमौ होतारौ अयञ्चाग्निरसौ च मध्यमः। वां युवयोः हे दम्पती यजमानौ । सरथिना एकरथा-रूढौ सुवर्णा शोभनवर्णौ । देवौ दानादिगुणयुक्तौ पश्यन्तौ भुवनानि भूतजातानि । विश्वानि सर्वाणि मध्यस्थतया । अ-पिप्रयम् प्रीणातेरेतद्रूपम् । प्रीणितवानहमस्मि तौ चोदनासु-प्रमाणकं कर्म । वां युवयोः हे दम्पती यजमानौ मिमाना नि-र्मिमाना होतारौ ज्योतिः प्रदिशा दिशन्ता । आहवनीयाख्यं ज्योतिः यष्टव्यमिति प्रदिशा प्रदेशेन अभिनयेन दिशन्ता दर्श-यन्तौ । आशते इति वाच्यम् ॥ ७ ॥

हे यजमानौ ! वां युवयोः प्रथमा प्रथमौ मुख्यौ होतारा होतारौ अहमपिप्रयं प्रीणितवानस्मि प्रीणातेर्णिजन्तस्य लुङि उत्तमैकत्वे रूपम् अयं चाग्निरसौ च मध्यम इति होतारौ ।

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु-द्रित पु० नास्ति । तद्यथा । प्रथमा वाम् । हे यजमानौ वां युवयोः प्रथमौ होतारौ अयं चाग्निरसौ च मध्यमः तौ अपिप्रयं प्रीणि-तवानस्मि । प्रीणातेर्णिजन्तस्य लुङि उत्तमैकवचने रूपम् । किम्भूतौ सरथिनौ एकरथारूढौ सुवर्णा शोभनवर्णौ देवौ दानादिगुण-युक्तौ विश्वा सर्वाणि भुवनानि पश्यन्तौ मध्यस्थतया वां युवयोः चोदनाचोदनातिकर्माणि मिमानौ निर्मिमानौ प्रदिशा प्रदेशेनाभिन-येन ज्योतिः दिशन्तौ दर्शयन्तौ आहवनीयाख्यं ज्योतिर्यष्टव्यमिति ७॥

कीदृशौ सरथिना सरथिनौ समानो रथो ययोस्तौ एकरथारू-ढौ सुवर्णा सुवर्णौ शोभनो वर्णो द्युतिर्ययोस्तौ देवौ दीप्यमा-नौ दातारौ । विश्वा सर्वाणि भुवनानि पश्यन्तौ । वां युवयो-श्चोदना चोदनानि कर्माणि मिमाना निर्मिमाणौ । प्रदिशा प्र-देशेनाभिनयेन ज्योतिः दिशन्तौ आहवनीयाख्यं ज्योतिर्यष्टव्यमिति दर्शयन्तौ ॥ ७ ॥

आदित्यैर्नो भारती वष्टु यज्ञᳪ सरस्वती सह रुद्रैर्न आवीत् । इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥ ८ ॥

(१) आदित्यैर्नः । अत्र त्रयः पादाः परोक्षकृताः चतुर्थः पादः प्रत्यक्षकृतः । नचैवं सामञ्जस्यम् अतश्चतुर्थस्य पादस्य सन्नतिः । आदित्यैः सहिता नोऽस्माकं भारती वष्टु कामयतां यज्ञम् । सरस्वती च रुद्रैः सहिता नः अस्मान् आवीत् अवतु । इडा च उपहूता कृतोपाह्वाना वसुभिः सजोषा समानप्रीतिः नः आवीदित्यनुवर्तते । एवमनेन प्रकारेण यज्ञं नोऽस्माकं तिस्रो देव्यः अमृतेषु देवेषु धत्त दधत्विति पुरुषव्यत्ययः परोक्षीकृत्य स्तुताः ता इदानीं प्रत्यक्षकृताः स्तौति । यज्ञं नो देवीरमृतेषु धत्तेति ॥ ८ ॥

आदित्यैः युता भारती नोऽस्माकं यज्ञं वष्टु कामयताम् । सरस्वती रुद्रैः सह नोऽस्माकं यज्ञमावीत् अवतु । इडा चा-

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु-द्रित पु० नास्ति । तद्यथा । आदित्यैर्नः । अत्र त्रयः पादाः परो-क्षकृताः चतुर्थः प्रत्यक्षकृतः नचैवं सामञ्जस्यमतश्चतुर्थपादस्य स-न्नतिः । आदित्यैः सहिता भारती नोऽस्माकं यज्ञं वष्टु कामयतां सरस्वती च रुद्रैः सह नोऽस्मान् आवीत् उपहूता कृतोपहवा वसु-भिः सजोषाः समानप्रीतिः इडा नः अवत्विति पुरुषव्यत्ययः ॥ ८ ॥

वतु । कीदृशी उपह्वता कृतोपहवा वसुभिः देवैः सजोषाः प्रीतियुता । एवं परोक्षमभिधाय प्रत्यक्षमाह हे देवीः देव्यो भारतीसरस्वतीडाः ! नोऽस्माकं यज्ञममृतेषु देवेषु धत्त यूयं स्थापयत ॥ ८ ॥

त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः।त्वष्टेदं विश्वं भुवनं जजान बहोः कर्त्तारमिह यक्षि होतः ॥ ९ ॥

(१) त्वष्टा वीरम् । यः त्वष्टा वीरं पुत्रम् देवकामम् ऋणत्रयापाकरणसमर्थं जजान जनयति । यस्माच्च त्वष्टुः अर्वा अरणः आशुः शीघ्रः अश्वः जायते । यश्च त्वष्टा इदं विश्वं सर्वं भुवनं भूतजातं जजान जनयति । ते त्वष्टारं बहोः भूतग्रामस्य कर्तारम् इह यज्ञे यक्षि यज हे होतः ॥ ९ ॥

त्वष्टा वीरं पुत्रं जजान जनयति । कीदृशं वीरं देवकामं देवान् कामयते देवकामस्तम् यष्टारमृणत्रयापाकरणसमर्थमित्यर्थः । त्वष्टुः सकाशात् अश्वः जायते उत्पद्यते । कीदृशोऽश्वः अर्वा इयर्त्ति गच्छति अर्वा अन्येभ्योऽपि दृश्यन्त इति ( पा० ३, २, ७५ ) अर्तेर्वनिप् आशुः अश्नुते दिशो व्याप्नोति अश्नाति भक्षयति वा आशुः उण्प्रत्ययः । किञ्च त्वष्टा इदं विश्वं सर्वं भुवनं भूतजातं जजान उदपादयत् । हे होतः ! एवं बहोः कार्यस्य कर्त्तारं त्वष्टारमिह यज्ञे त्वं यक्षि यज यजतेः शपि लुप्ते रूपम् ॥ ९ ॥

अश्वो घृतेन त्मन्या समक्त उप देवाँ २॥ ऋतुशः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । त्वष्टा वीरम् । त्वष्टा देवकामं ऋणत्रयापाकरणसमर्थं वीरं पुत्रं जजान जनयति यस्माच्च त्वष्टुः अर्वं अरणः आशुः शीघ्रः अश्वः जायते यश्च त्वष्टा इदं विश्वं भुवनं जजान हे होतः बहोर्भूतग्रामस्य कर्तारं तं त्वष्टारम् इह यक्षि यज ॥ ९ ॥

पाथं एतु । वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥ १० ॥

(१)अश्वो घृतेन। यः अश्वः पत्नीभिः घृतेन त्मन्या आत्मना स्वयमेव समक्तः समुक्षितः सन्। उप एतु उपगच्छतु देवान् प्रति ऋतुशः ऋतावृतौ कालेकाले पाथः अन्नं भूत्वा। कथं देवलोकमजानन्नश्वो देवान् प्रति यायादित्यत आह। वनस्पतिः देवलोकं प्रजानन् अश्वस्य दर्शयत्विति शेषः। अग्निना च तन्मित्रेण हव्या हवींषि स्वदितानि मृष्टीकृतानि वक्षत् वहतु देवान् प्रति ॥ १० ॥

पाथ इत्यन्ननाम। अश्वः पाथः अश्वरूपं हविः ऋतुशः ऋतौ-ऋतौ यज्ञकाले त्मन्या आत्मन्या स्वयं देवान् उप एतु प्राप्नोतु। विभक्तेर्यादेशो मन्त्रेष्वाङ्यादेरात्मन इति ( पा० ६, ४, १४१ ) आलोपः। कीदृशोऽश्वः घृतेन समक्तः पत्नीभिः समुक्षितः। किञ्च वनस्पतिर्देवः हव्या हव्यानि वक्षत् वहतु देवान् प्रति। कीदृशो वनस्पतिः देवलोकं प्रजानन् विदन् अत एव वहतु। कीदृशानि हव्यानि अग्निना स्वदितानि आस्वादितानि आस्वाद्य मिष्टीकृतानि ॥ १० ॥

प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने। स्वाहाकृतेन हविषा पुरोगा याहि साध्या

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। अश्वो घृतेन पत्नीभिः घृतेन त्मना आत्मना स्वयमेव घृतेन समक्तः समुक्षितः सन् अश्वः ऋतुशः ऋतौ ऋतौ पाथः अन्नं भूत्वा देवान् उप एतु उपगच्छतु कथं देवलोकमजानन्नश्वो देवान् यायादित्यत आह वनस्पतिर्देवलोकं प्रजानन् अश्वस्य दर्शयत्विति शेषः अग्निना स्वदितानि मृष्टीकृतानि हव्या हवींषि वक्षत् वहतु देवान् प्रति ॥ १० ॥

ह॒विरं॑दन्तु दे॒वाः ॥ ११ ॥

(१)प्रजापतेस्तपसा । यस्त्वं प्रजापतेस्तपसा वावृधानः वर्द्धमानः सद्योजातः अरण्यात् शकासादुत्पन्नः दधिषे धारयसि यज्ञं हे अग्ने । तं त्वां ब्रवीमि स्वाहाकृतेन हविषा । स्वाहाकारोपलक्षितेन हविषा पुरोगाः पुरोगामी सन् । याहि साध्या साधु शब्दविभक्त्यर्थे ड्यादेशे टिलोपः । साधु हविः अदन्तु देवाः ॥ ११ ॥

हे अग्ने ! त्वं यज्ञं दधिषे धारयसि लडर्थे लिट् । कीदृशस्त्वम् प्रजापतेस्तपसा वावृधानः वर्धमानः । सद्यो जातःअरण्यादुत्पन्नः । किञ्च स्वाहाकृतेन स्वाहाकारमुक्त्वा हुतेन हविषा सह पुरोगाः पुरो गच्छीति अग्रगामी सन् याहि देवान् गच्छ त्वयि गते सति देवाः हविरदन्तु कीदृशं हविः साध्या साधु श्रेष्ठम् विभक्तेर्ड्यादेशे टिलोपे रूपम् ॥ ११ ॥

यद॑क्र॑न्दः प्र॒थ॒मं जाय॑मान उ॒द्यन् स॑मु॒द्रादु॒त वा॒ पुरी॑षात् । श्ये॒नस्य॑ प॒क्षा ह॑रि॒णस्य॑ बा॒हू उ॑पस्तु॒त्यं॒ म॒हि॑ जा॒तं ते॑ अर्वन् ॥ १२ ॥

(२)यदक्रन्दः । त्रयोदश त्रिष्टुभोऽश्वाभिष्टवो होतुः । यत्

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । प्रजापतेः । हे अग्ने त्वं प्रजापतेः तपसा वावृधानः वर्द्धमानः सन् सद्यो जातः अरण्याः सकाशादुत्पन्नः यज्ञं दधिषे धारयसि स्वाहाकृतेन स्वाहाकारेणोपलक्षितेन हविषा पुरोगाः पुरोगामी सन् याहि साध्या साधुशब्दस्य विभक्तेर्याडादेशे अन्तलोपः साधु हवि ः देवाः अदन्तु भक्षयन्तु ॥ ११ ॥

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । यदक्रन्दः । त्रयोदश त्रिष्टुभोऽश्वाभिष्टवो हेतुः हे अर्वन् त्वं यत् यदा प्रथमं जायमानः सन् तथा समुद्रात्

यदा अक्रन्दः ह्रेषाशब्दमकार्षीः। प्रथमञ्जायमानः यच्च उद्यन् उद्गच्छन् समुद्रात् अन्तरिक्षलोकात् पार्थिवाद्वा समुद्रात्। उत वा अपि च पुरीषात् अन्यस्माज्जलजसंघातात्पशोर्वा। उद्यन् अक्रन्दः तदा श्येनस्य पक्षौ शीघ्रतया अजैषीः हरिणस्य बाहू शीघ्रतया अजैषीः इति शेषः। उपस्तुत्यम् उपसङ्गम्य स्तुत्यं स्तवनीयमृषिभिः महि महत् जातमुत्पन्नं ते तव हे अर्वन् अरण अश्व ॥ १२ ॥

त्रयोदशाश्वस्तुतिरूपास्त्रिष्टुभो जमदग्निदीर्घतमोभ्यां दृष्टाः अस्वस्तुतौ विनियुक्ताः। हे अर्वन् अश्व ! यत् यदा तमक्रन्दः क्रन्दितवान् ह्रेषारवमकार्षीः तदा ते तव महि माहात्म्यम् उपस्तुत्यं स्तोतुं योग्यं जातम्। कथं स्तुत्यं तदाह श्येनस्य पक्षौ हरिणस्य बाहू अनेन क्रन्दनेन जिताविति शेषः श्येनपक्षौ शौर्य्येण हरिणबाहू वेगेनेत्यर्थः। कीदृशस्त्वम् समुद्रात् अन्तरिक्षात् उदधेर्वा प्रथमं जायमानः उत वा अथवा पुरीषात् पशोः सकाशात् उद्यन् उत्पद्यमानः ॥ १२ ॥

यमेन॑ द॒त्तं त्रि॒त एन॑मायुन॒गिन्द्र॑ एणं प्रथ॒मो अध्य॑तिष्ठत्। ग॒न्ध॒र्वो अ॑स्य रश॒नाम॑गृभ्ण॒ात्सू॒राद॑श्वं वस॒वो निर॑तष्ट ॥ १३ ॥

(२) यमेन दत्तम्। अत्र चतुर्थः पादः प्रथमं व्याख्यायते

---

अन्तरिक्षात् पार्थिवात् समुद्रात् वा उत वा अथवा पुरीषत् पशोः उद्यन् सन् अक्रन्दः ह्रेषाशब्दमकार्षीत् तदा श्येनस्य पक्षौ शीघ्रतया अजैषीः इति शेषः हरिणस्य बाहू च अजैषीः यद्वा श्येनस्य पक्षौ हरिणस्य बाहू ते जातौ ते तव महि माहात्म्यम् उपस्तुत्यम् ऋषिभिस्तव जातमुत्पन्नम् ॥ १२ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति। तद्यथा। यमेन दत्तम्। अत्र चतुर्थपादप्रभृतिव्या-

योग्यत्वात् । सूरादश्वं वसवो निरतष्ट हे वसवः यूयं सूरात् आदित्यमण्डलात् अश्वं निरतष्ट । तक्षतिः करोतिकर्मा निष्कृष्य कृतवन्तः । तं यमेन दत्तम् त्रितः त्रिस्थानो वायुः एवम् आयुनक् युक्तवान् । इन्द्रश्च एनं प्रथमः अध्यतिष्ठत् । गन्धर्वश्च विश्वावसुः अस्य रशनाम् अगृभ्णात् अगृह्णात् । य इत्थंभूतोऽश्वः तं वयं स्तुम इति वाक्यशेषः ॥ १३ ॥

वसवोऽष्टगणदेवाः सूरादादित्यमण्डलादश्वं निरतष्ट निष्कृष्टवन्तः तक्षतेर्लुङि मध्यमबहुवचनम् । ततः त्रितः त्रिस्थानो वायुः यमेन दत्तमेनमश्वम् आयुनक् युक्तवान् युजेर्लङ् संहितायामटो दीर्घः । इन्द्रश्चैनमश्वं प्रथमः अध्यतिष्ठत् आदावधिष्ठितवान् । गन्धर्वः विश्वावसुरस्याश्वस्य रसनामगृभ्णात् गृहीतवान् । ईदृशस्तं स्तुमः । एणमिति णत्वं छान्दसम् ॥ १३ ॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ १४ ॥

(१) असि यमः । भवासि च आदित्यः हे अर्वन् अरण

---

ख्या । हे वसवः यूयं सुरात् आदित्यमण्डलात् अश्वं निरतष्ट निष्कृष्य कृतवन्तः तक्षतिः करोतिकर्मा लुङि मध्यमबहुवचनं त्रितः त्रिस्थानो वायुः यमेन दत्तम् एनमश्वम् आयुनक् युक्तवान् युजेर्लङ् संहितायामटो दीर्घः इन्द्रश्च एनं प्रथमः अध्यतिष्ठन् गन्धर्वश्च विश्वावसुः अस्याश्वस्य रशनाम् अगृभ्णन् गृहीतवान् य ईदृशस्तं वयमिति वाक्यशेषः ॥ १३ ॥

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । असि यमः हे अर्वन् त्वं यमोऽसि भवसि आदित्यश्चासि गुह्येन व्रतेन गोप्येन कर्मणा त्रितः त्रिस्थानः इन्द्रो-

अश्व । भवसि च त्रितस्त्रिस्थान इन्द्रः गुह्येन गुप्तव्रतेन कर्मणा । भवसि च सोमेन समया मध्यतः विपृक्तः संपृक्तः एकीभूतः । एताभिर्देवताभिस्तव सायुज्यञ्जातमित्यभिप्रायः । किञ्च आहुः बुधाः ते तव । त्रीणि दिवि द्युलोके आदित्यस्यात्मनाऽवस्थितस्य बन्धनानि ऋग्यजुःसामलक्षणानि । मण्डलान्तरपुरुषार्चींषि ॥ १४ ॥

हे अर्वन् ! त्वं यमोऽसि आदित्यश्चासि गुह्येन गोप्येन व्रतेन कर्मणा त्रितः त्रिस्थान इन्द्रोऽसि । सोमेन समया सह विपृक्तः सम्पृक्तः एकीभूतोऽसि । एवं यमादिभिः सायुज्यं प्राप्तस्य तव दिवि नभसि आदित्यरूपेण स्थितस्य त्रीणि बन्धनानि बुधा आहुः । ऋग्यजुःसामरूपाणि मण्डलान्तरपुरुषार्चींषि त्रीणि बन्धनानि स्वरूपाणि । यदेनं मण्डलं तपति तन्महदुक्थमित्यादिश्रुतेः ॥ १४ ॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे । उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम् ॥ १५ ॥

(१) त्रीणि ते । त्रीणि ते आहुर्दिवि बन्धनानि इति व्या·

ऽसि सोमेन समया मध्यतः विपृक्तः संपृक्तः एकीभूतोऽसि एताभिर्देवताभिस्तव सायुज्यं सञ्जातमिति भावः किञ्च दिवि आदित्यात्मना स्थितस्य ते तव त्रीणि बन्धनानि ऋग्यजुःसामलक्षणानि मण्डलान्तरपुरुषार्चींषि बुधा आहुः ॥ १४ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । त्रीणि ते व्याख्यातम् अप्सु त्रीणि बन्धनानि कृषिर्वृष्टिर्बीजम् इति अन्तः समुद्रे अन्तरिक्षमध्ये त्रीणि बन्धनानि मेघो विद्युत्स्तनयित्नुरिति उत इव अपि च हे अर्वन् यत्र ते तव परमं जनित्रं जन्म वायुरूपेण आहुः वरुणः वरुणरूपः त्वं ततः कर्म मे मम छंत्सि छन्दतिरर्चतिकर्मा शंससि कथयसि ॥ १५ ॥

ख्यातम् । त्रीणि अप्सु बन्धनानि कृषिर्वृष्टिर्बीजमिति । त्रीण्यन्तःसमुद्रे समुद्रशब्देनान्तरिक्षमभिधीयते । अन्तरिक्षस्य मध्ये तव त्रीणि बन्धनानि । मेघो विद्युत् अशनिरिति उत इव अपि च । मे मम वरुणः छन्त्सि छन्दतिरर्चतिकर्मा शंसति कथयति हे अर्वन् अरण अश्व । यत्र ते तव आहुः परमञ्जनित्रं जन्म वायुरूपेण ॥ १५ ॥

हे अर्वन् ! यत्र ते तव परमं जनित्रं बुधा आहुः आदित्यरूपेण तत्र ते तव त्रीणि बन्धनानि पूर्वमन्त्रोक्तान्याहुः । अप्सु उदकेषु त्रीणि बन्धनानि आहुः कृषिर्वृष्टिर्बीजमिति । अन्तःसमुद्रे अन्तरिक्षमध्ये त्रीणि बन्धनानि आहुः मेघो विद्युत् स्तनयित्नुरिति । उतेव उतापि च वरुणः वरुणरूपः त्वं मे मां छन्त्सि प्रशंससि कर्मणि षष्ठी छन्दतिरर्चतिकर्मा अर्चनं प्रशंसनम् ॥ १५ ॥

इमा ते वाजिन्नवमार्जनानीमा शफानांꣳसनितुर्निधाना । अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥ १६ ॥

(१)इमा ते । इमानि ते तव हे वाजिन् अश्व । अवमार्जनानि यैस्तवावमार्जनङ्कृतन्तान्यवमार्जनानि नूतनवेतसकटप्रभृतीनि अहमपश्यम्पश्यामि । इमानि च शफानां खुराणां सनितुः स-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । इमा ते । हे वाजिन् ते तव इमानि अवमार्जनानि अहमपश्यं पश्यामि यैस्ते अवमार्जनं कृतं तान्यवमार्जनानि वेतसकटप्रभृतीनि इमा इमानि शफानां खुराणां सनितुः संभक्तुः पादवाससः निधानानि अपश्यम् अत्र ते तव भद्राः भन्दनीयाः स्तुत्याः रशनाः अहमपश्यं याः रशनाः ऋतस्य यज्ञस्य गोपाः गोपायितव्यान् पशून् अभिरक्षन्ति ॥ १६ ॥

म्भक्तुः पादवाससः निधाना निधानानि यत्र पादवासः प्रभृतीनि धीयन्ते तानि अहमपश्यम् । अपि च अत्र ते तव भद्रा भन्दनीयाः स्तुत्याः रशना अहमपश्यम् । ऋतस्य यज्ञस्य या रशना अभिरक्षन्ति गोपाः गोपायितव्यान्पशून् ॥ १६ ॥

हे वाजिन् ! ते तव इमा इमानि अवमार्जनानि अहमपश्यं पश्यामि अवमार्ज्यते यैस्तानि अवमार्जनानि वेतसकटादीनि । शफानां खुराणां सनितुः सम्भक्तुर्नियन्तुः पादवासस्य इमा इमानि निधाना निधानानि स्थानानि अपश्यम् । अत्र यज्ञे ते तव रशनाः मध्यबन्धनरज्जूः अपश्यम् । कीदृशी रशनाः भद्राः कल्याणरूपाः स्तुत्याः । गोपाः गोपायन्ति गोपाः रक्षणकर्त्र्यः । याः रशनाः ऋतस्यः ऋतं यज्ञमभिरक्षन्ति कर्मणि षष्ठी । निपातस्य चेति ( पा० ६, ३, १३६ ) अत्रपदस्य दीर्घ ॥ १६ ॥

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् । शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥ १७ ॥

(१)एतैरधस्तनैरश्वचरित्रैरश्वमभिष्टुत्य अथेदानीं भविष्यत्क-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । एतैरधस्तनैरश्वचरितैरश्वमभिष्टुत्येदानीं भविष्यत्कालकर्मणाभिष्टौति आत्मानं ते हे अश्व पशुसंमर्शनोत्तरकालं ते तव आत्मानं दिव्यम् अहं मनसा आरात् दूरे अजानां जानामि जानातेर्लङ्युत्तमैकवचनम् किम्भूतमात्मानम् अवः अधस्तात् प्रदेशात् दिवा दिवं प्रतिपतयन्तम् उत्पतयन्तं पतगमादित्यम् शिरश्च आदित्यरूपम् अहं तव अपश्यं पश्यामि किम्भूतं शिरः सुगेभिः सुगमनैः अरेणुभिरुपद्रवरहितैः पथिभिः मार्गैः जेहमानं गच्छत् पतत्रि उत्पतनशीलम् ॥ १७ ॥

मेभिरभिष्टौति । आत्मानन्ते । पशुसंशनोत्तरकालम् आत्मानन्ते तव दिव्यमहं मनसा आरात् दूरात् अजानाम् जानामि । जानातेरेतदनुदात्तत्वाद्रूपं लुङ्येकवचने । अवः अधस्तात् । प्रदेशात् । दिवा दिवं प्रति पतयन्तम् उत्पतयन्तम् पतङ्गम् आदित्यरूपिणम् । शिरश्चाहं तव अपश्यम् । पथिभिः मार्गैः सुगेभिः सुगमनैः अरेणुभिः उपद्रवरहितैः जेहमानङ्गच्छत् पतत्रि उत्पतनशीलम् ॥ १७ ॥

एवमश्वं स्तुत्वा भविष्यत्कर्मणा स्तौति । हे अश्व ! ते तवात्मानं मनसा आराद् दूरे अहमजानां जानामि जानातेर्लङ्युत्तमैकवचनम् । कीदृशमात्मानम् अवः अधस्तात् प्रदेशात् दिवा नभोमार्गेण पतङ्गं सूर्य्यं प्रति पतयन्तमुत्पतन्तम् पत ऐश्वर्य्यगत्योश्चुरादिरदन्तः । किञ्च ते शिरः सूर्य्यरूपं पश्यामि । कीदृशं शिरः पथिभिः नभोमार्गैः जेहमानं गच्छत् कीदृशैः पथिभिः सुगेभिः सुगैः सुखेन गम्यते येषु ते सुगास्तैः सुदुरोरधिकरण इति ( पा० ३, २, ४८ वा० ३ ) गमेर्डः अरेणुभिः नास्ति रेणुर्येषु ते अरेणवस्तैः उपद्रवरहितैरित्यर्थः । पुनः कीदृशं शिरः पतत्रि पतनशीलं गन्तृ ॥ १७ ॥

अत्रा॑ते रू॒पमु॑त्त॒मम॑पश्यं॒ जिगी॑षमाणमि॒ष आ प॒दे गोः । य॒दा ते॒ मर्तो॒ अनु॒ भोग॒मान॒डादिद् ग्रसि॑ष्ठ॒ ओष॑धीरजीगः ॥ १८ ॥

(१.)अत्राते । अत्र द्युलोके ते तव रूपमुत्तमम् अहमपश्यम्प

---

( १ ) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अत्राते । अत्र द्युलोके ते तव उत्तमं रूपमपश्यं पश्यामि कीदृशम् इषः अन्नानि जिगीषमाणं जेतुमिच्छन् गोः गन्तुर्मण्डलस्य पदं आस्थितम् एवं द्युलोकस्थितस्याहमुत्तमं रूपमपश्यम् अथ पुनः पृथिवीस्थितस्य ते तव यदा मर्त्यो मनुष्यः भो-

श्यामि कथम्भूतम् । जिगीषमाणं जेतुमिच्छति इषः अन्नानि आ आस्थितं पदे गोः गन्तुर्मण्डलस्य । एवं द्युलोकावस्थितस्य तवाहं रूपमपश्यम् । अथ पुनः पृथिवीस्थितस्य यदा ते तव मर्तो मनुष्यः भोगम् वाहनादिकम् अनु आनट् अनुव्याप्नोत् आत् इत् इति पादपूरणार्थौ तदा ग्रसिष्ठः ग्रसु अदने । ग्रसितृतमः अतिशयेन भक्षयिता सन् ओषधीः अजीगः गृह्णासि गिरसि वा । अन्यो हि वाहितश्चलितुमपि न शक्नोति त्वं वीर्यवत्तरोऽसीति भावः ॥ १८ ॥

हे अश्व ! अत्रास्मिन् गोः सूर्य्यस्य पदे मण्डले ते तवोत्तमं रूपमहम् आ अपश्यम् समन्तात् पश्यामि गौर्नादित्ये बलीवर्दे इत्यभिधानाद् गौरादित्यः । कीदृशं रूपम् इषः अन्नानि हवींषि जिगीषमाणं जेतुमिच्छत् जयतेः सन्नन्ताच्छानच् सन्लिटोर्जेरिति ( पा० ७, ३, ५७ ) गः । किञ्च मर्त्तः मनुष्यो यदा ते तव भोगमनु आनट् अनुव्याप्नोति हवीरूपं भोगं समर्पयति आत् इत् अनन्तरमेव त्वमोषधीः हवीरूपाः अजीगः गॄ निगरणे गिरसि भक्षयसि । कीदृशस्त्वम् ग्रसिष्ठः ग्रसते इति ग्रसिता अतिशयेन ग्रसिता ग्रसिष्ठः अत्यन्तं भक्षयिता इष्ठनि तृचो लुक् । गृणातेर्णिजन्तस्याजीगः ॥ १८ ॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ १९ ॥

---

गमनु आनट् वाहनरूपेण अनुव्याप्नोत् आत् इत् पादपूरणौ तदा ग्रसिष्ठः ग्रस अदने ग्रसितृतमः अतिशयेन भक्षयिता सन् ओषधीः अजीगः गृह्णासि गिरसि वा अन्योऽतिवाहितश्चालितुमपि न शक्नोति त्वं तु वीर्यवत्तरोऽसीति भावः ॥ १८ ॥

(१)अनु त्वा । अनु इति परभावमाचष्टे । हे अर्वन् यस्य सुकृतिनो गृहे त्वञ्चेष्टसे तस्य गृहे त्वामनुरथः त्वामनु मर्यो मनुष्यः त्वामनु भगः सौभाग्यं कनीनां कन्यकानाम् । तत्रैते पदार्था भवन्तीत्यर्थः किं च । व्रातासः पुरुषसङ्घा अपि तव सख्यं सखिभावमन्वीयुः । किमन्यद् बहु वदामः । अनुदेवामिरे वीर्यन्ते अनुममिरे अनुमितवन्तः देवा वीर्यं वीरकर्म ते तव । अचिन्त्यशक्तिस्त्वमसीत्यभिप्रायः ॥ १९ ॥

हे अर्वन् अश्व ! रथः त्वा त्वामनु वर्त्तत इति शेषः । मर्यः मनुष्यः त्वामनु । त्वामनु । कनीनां कन्यानां भगः सौभाग्यं त्वामनु । यत्र त्वम् तत्र रथादयः स्युरित्यर्थः । किञ्च व्रातासः व्राताः मनुष्यसङ्घाः तव सख्यं मैत्रीम् अन्वीयुः प्रापुः । किं बहुना देवाः तव वीर्य्यं सामर्थ्यमनु ममिरे अनुमितवन्तः ॥ १९ ॥

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् । देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥ २० ॥

(२)हिरण्यशृङ्गः । हिरण्यं शृङ्गस्थानीयमस्येति हिरण्यशृङ्गः ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । अनु त्वा । हे अर्वन् यस्य गृहे त्वं चेष्टसे तं त्वामनुरथः मर्त्यो मनुष्यः कनीनां कन्यानां भगः सौभाग्यं च त्वामनु एव तत्रैते पदार्था भवन्तीत्यर्थः किञ्च व्रातासः मनुष्यसंघाः तव सख्यं मैत्रीम् अन्वीयुः किञ्चान्यद् बहु वदामः देवाः ते तव वीर्यम् अनुममिरे अनुमितवन्तः अचिन्त्यशक्तिस्त्वमिति भावः ॥१९॥

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । हिरणगशृङ्गः योऽश्वः हिरण्यशृङ्गः हिरण्यं-शृङ्गस्थानीयं यस्य स यस्यास्याश्वस्य अयः लोहं हिरण्यं वा पा-

अयो अस्य पादाः यस्य चास्य अयः अय इति सर्वेषां रजतादीनामुपलक्षणम् पादा इत्यवयवानाम् । रजतादिविशिष्टा अवयवाः । मनोजवाः मनो वेगयुक्ताः । यस्माच्च अवरः कनिष्ठः इन्द्रः आसीत् अभवत् । वायुरूपेणाश्वस्यावस्थानात् । देवा इत् देवा अपि यस्यास्याश्वस्य हविरद्यं हविर्लक्षणमदनीयम् आगच्छन् । यश्च अर्वन्तम्प्रथमः अध्यातिष्ठत् स च इन्द्रः यस्य हविरद्यमागतम् तं वयं स्तुम इति शेषः ॥ २० ॥

यः प्रथमः मुख्यः अर्वन्तमश्वमध्यतिष्ठत् अधिष्ठितवान् सोऽपि इन्द्रः अवरः इन्द्रापेक्षया न्यून आसीत् कीदृश इन्द्रः हिरण्यशृङ्गः हिरण्यवत् शृङ्गं दीप्तिर्यस्य शृङ्गमिति ज्वलन्नामसु ( निघ० १, १७ ) पठितम् । अस्याश्वस्य पादा अयः लोहं हिरण्यं वा अयोरूपाः पादा इत्यर्थः कीदृशाः पादाः मनोजवाः मनोवत् जवो वेगो येषां ते । किञ्च देवा अस्याश्वस्य हविरद्यमायन् अन्नं योग्यमद्यं हविश्च तदद्यं च हविरद्यम् हविर्लक्षणं भक्ष्यं प्रति आयन् आगच्छन् इत् एवार्थे अप्यर्थे वा ॥ २० ॥

ई॒र्मान्ता॑सः॒ सिलि॑कमध्यमा॒सः॒ सꣳ शूर॑णासो दि॒व्यासो॒ अत्याः॑ । ह॒ꣳसा इ॑व श्रेणि॒शो यत॑न्ते॒ यदाक्षि॑षुर्दि॒व्यमज्म॑म॒श्वाः ॥ २१ ॥

(१)ईर्मान्तासः आदित्यस्य रथे येऽश्वा युक्तास्तद्द्वारेणाय-

---

दाः अयोरूपाः पादाः मनोजवाः मनोवद्वेगयुक्ताः इन्द्रः यस्मादवर आसीत् । वायुरूपेणाश्वस्यावस्थाना देवाः इत् देवा अपि अस्याश्वस्य हविरद्यं हविश्च तदद्यं च हविरद्यम् अद्यम् अदनीयं हविः आगच्छत् यः प्रथमः अर्वन्तम् अध्यतिष्ठत् स च इन्द्रः अस्य हविः आगतः तं वयं स्तुम इति शेषः ॥ २० ॥

( १ ) अत्र वारणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा। ईर्म्मान्तासः आदित्यस्य रथे ये अश्वा यु-

मश्वः स्तूयते । ईर्म ईरितः अन्तो येषान्ते ईर्मान्ता ईर्मान्ता एव ईर्मान्तासः तेषां हि सप्तानामश्वानां समीरितान्ताः विक्षिप्ताः प्रान्ताः विक्षिप्ता विरला इत्यर्थः । दृष्टान्ता वा ते हि पृथूरस्काः पृथुजघनाश्चेत्यर्थः । सिलिकमध्यमासः संलग्नमध्यमाः कृशोदरा इत्यर्थः । सप्तानामपि संश्लिष्टा उदरप्रदेशा निरुदरास्तेऽश्वा इत्यर्थः । तथापि हि स्तुतिरुपपद्यते एव संशूरणासः । संहिताः शूरणेन भगवतादित्येन दिव्यासः दिविजाः । अत्याः सततगमनाः ते हि सकृद्युक्ता ब्राह्मयं सहस्रयुगपर्यन्तमहर्वहन्ति। य इत्थम्भूता अश्वाः ते हंसा इव श्रेणिशो यतन्ते यथा हंसाः श्रेणीभूता एकया रीत्या प्रथमगमनाद्यान् कुर्वन्ति एवमश्वा अपीत्युपमार्थः । कदा इत्याह यदा यस्मिन्काले अक्षिषुः अशूङ् व्याप्तावित्यस्यैतद्रूपम् व्याप्नुवन्ति दिव्यं दिविभवम् अज्मम् अजनम आजिम् अश्वाः ॥ २१ ॥

सूर्य्याश्वरूपेणायमश्वः स्तूयते । यत् यदा अश्वाः सप्त रविरथस्थाः श्रेणिशः श्रेणीभूता हंसा इव संयतन्ते सम्यक् प्रयत्नं कुर्वन्ति

---

कास्तद्द्वारेणायमश्वः स्तूयते यत् यदा अश्वाः सप्तसंख्याकाः दिव्यं दिवि भवमज्मम् अजनं गमनं आजिं संग्रामं वा आक्षिषुः अशू व्याप्तौ लुङि रूपं व्याप्नुवन्ति तदा संयतन्ते सम उपसर्गस्य यतन्ते अनेन योगः यथा हंसाः श्रेणीभूता एकया रीत्या । गमनाय प्रयत्नं कुर्वन्ति एवमश्वा अपि किम्भूताः ईर्म्मान्तासः ईर्मः ईरितः अन्ते येषां ते ईर्मान्ता विक्षिप्तान्ताः विस्तृतप्रान्ताः पृथुजघनाः पृथूरस्का इत्यर्थः सिलिकमध्यमाः संश्लिष्टमध्यमाः संलग्नमध्यमाः कृशोदरा दरा इत्यर्थः शूरणासः शू शीघ्रं रणो रवो युद्धं वा येषां यद्वा शूरणेन आदित्येन संहिताः दिब्यासः दिव्याः अत्याः अन्तति इति अत्याः सततगमनाः ते हि सकृद्युक्ता ब्राह्मयं सहस्रयुगपर्यन्तम् अहर्वन्ति ॥ २१॥

तदा दिव्यं दिवि भवमज्मं गमनं संग्रामं वा आक्षिषुः व्याप्नुवन्ति अक्ष व्याप्तौ लुङि रूपम् । हंसा यथा गमनाय यतन्ते तथाश्वा अपि कीदृशा अश्वाः ईर्मान्तासः ईर्मान्ताः ईर्यते ईर्मः इर प्रेरणे मप्रत्ययः ईर्मः प्रेरितः अन्तः शरीरप्रान्तो येषां ते पृथुजघनोरस्का इत्यर्थः । सिलिकमध्यमासः सिलिकः श्लिष्टः संलग्नो मध्यमो मध्यप्रदेशो येषां ते शिलिकमध्यमाः कृशोदरा इत्यर्थः षिल संश्लेषे इकप्रत्ययः। शूरणासः शू शीघ्रं रणो रवो युद्धं वा येषां ते शूरणाः यद्वा शूरणो रविस्तदीयाः शूरणाः । दिव्यासः दिवि भवा दिव्याः । अत्याः अतन्ति सततं गच्छन्ति अत्याः सक्रद्युक्ता ब्रह्माहः पर्यन्तं रविरथं वहन्ति ॥ २१ ॥

तव॒ शरी॑रं पतयि॒ष्ण्व॑र्व॒न्तव॑ चि॒त्तं वात॑ इ॒व ध्र॒जीमा॑न् । तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥ २२ ॥

(१)तव शरीरम् । हे अर्वन् तव शरीरं पतयिष्णु उत्पतनशीलम् । तव चित्तञ्च वात इव ध्रजीमान् गतिमान् वेगवत् सूक्ष्मानर्थान्प्रति गच्छेदित्यर्थः । तव शृङ्गाणि शृङ्गाणीति ज्वलन्नामसु पठितम् । तवार्चींषि विष्ठिता विविधं स्थितानि पुरुत्रा बहुधा विद्युच्चन्द्रार्काग्न्यादिषु । अरण्येषु वनेषु जर्भुराणा जर्भुराणानि देदीप्यमानानि दावाग्निरूपेण चरन्ति ॥ २२ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । तव शरीरम् । हे अर्वन् तव शरीरं पतयिष्णु उत्पतनशीलं ध्रजीमान् गतिमान् वात इव तव चित्तं वेगवदित्यर्थः सूक्ष्मानर्थान् प्रतिगच्छेदित्यर्थः तव शृङ्गाणि ज्वलितानि दीप्तय इत्यर्थः शृङ्गाणीति ज्वलन्नामसु पठितम् अरण्येषु जर्भुराणानि देदीप्यमानानि दावाग्निरूपेण चरन्ति किम्भूतानि शृङ्गाणि पुरुत्रा बहुधा विद्युच्चन्द्राग्न्यादिषु विष्ठिता विविधं स्थितानि ॥ २२ ॥

हे अर्वन् ! तव शरीरं पतयिष्णु उत्पतनशीलम् । तव चित्तं ध्रजीमान् गतिमान् वात इव वेगवत् सूक्ष्मार्थान् गच्छतीत्यर्थः । तव शृङ्गाणि दीप्तयः अरण्येषु वनेषु दवाग्निरूपेण चरन्ति प्रसरन्ति कीदृशानि शृङ्गाणि पुरुत्रा बहुधा विष्ठिता विविधं स्थितानि विद्युच्चन्द्राकाग्निषु स्थितानि । जर्भुराणा जर्भुराणानि जृम्भ विकसने विकसितानि ॥ २२ ॥

**उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः । अजः पुरो नीयते नाभिरस्यानु पश्चात् कवयो यन्ति रेभाः ॥ २३ ॥**

(१) उप प्रागात् । उप प्र अगात् शसनं विशसनम् । वाजी वेजनवान् अर्वा अरणोऽश्वः देवद्रीचा देवान्प्रत्याश्रितेन मनसा दीध्यानः ध्यायन् हिरण्यगर्भपदम् । किञ्च अजः पुरो नीयते । तदुक्तम् कृष्णग्रीव आग्नेयो रराटे पुरस्तादिति । नाभिरस्य अश्वस्य । तदुक्तम् सौमापौष्णः श्यामो नाभ्यामिति । किञ्च अनुलग्नाः पश्चात् कवयः क्रान्तदर्शनाः यन्ति गच्छन्ति रेभाः स्तोतारः ॥ २३ ॥

अर्वा अश्वः शसनं विशसनस्थानमुपप्रागात् आगतः । कीदृशोऽर्वा वाजी वजति वाजी गमनशीलः अन्नवान् वा । देवद्रीचा

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति। तद्यथा उपप्रागात्। वाजी वेजनवान्। अर्वा अश्वः शसनं विशसनम् उपप्रागात् किम्भूतः देवद्रीचा देवान् प्रत्याश्रितेन मनसा दीध्यानः ध्यायन् हिरण्यगर्भपदं विश्वग्देवयोश्च टेरद्र्यञ्चताव-प्रत्यये इत्यद्र्यादेशः किञ्च अस्याश्वस्य पुरः अजः नीयते तदुक्तं कृष्णग्रीव आग्नेयो रराटे पुरस्तादिति अस्य नाभिः अजेनास्थीयते तदुक्तं सौमापौष्णः श्यामो नाभ्यामिति अस्य पश्चात् रेभाः रेभृ शब्दे रिभन्ते इति रेभाः स्तोतारः कवयः अनुयन्ति॥२३॥

मनसा दीध्यानः । देवान् प्रत्यञ्चति देवद्र्यङ् तेन विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यय इति ( पा० ६, ३, ९२ ) देवशब्दस्य टेरञ्चतौ परेऽद्र्यादेशः । दीधीते दीध्यानः दीधी दीप्तिदेवनयोः शानच्प्रत्ययः देवान् प्रति गतेन चित्तेन दीप्यमानः । किञ्च अस्याश्वस्य पुरोऽग्रे अजो नीयते स्थाप्यते । तदुक्तम् कृष्णग्रीव आग्नेयो रराटे पुरस्तादिति । अस्य नाभिः अजो नीयते नाभौ स्थाप्यते तदुक्तम् सामापौष्णः श्यामो नाभ्यामिति । अस्य पश्चात् कवयः ऋत्विजः अनुयन्ति अनुगच्छन्ति । कीदृशाः कवयः रेभाः रेभन्ते रेभाः रेभृ शब्दे स्तोतार इत्यर्थः ॥ २३ ॥

उप प्रागा॑त् प॒र॒मं यत्स॒धस्थ॒मर्वाँ॑२॥ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च । अ॒द्या दे॒वान् जुष्ट॑तमो॒ हि ग॒म्या अथा॑शास्ते दा॒शुषे॒ वार्या॑णि ॥ २४ ॥

( १ ) उपप्रागात् । एवमश्वमभिष्टुत्य अथेदानीं यजमानं कृतकृत्यतया सम्बोधयन्नाह । उपप्रागात्प्राप्तवान् परममुत्कृष्टम् यत् यस्मात् सधस्थं सहस्थानन्देवमनुष्याणाम् । अर्वान् अर्वा अश्वः नकार उपजनः । अच्छा पितरं मातरञ्च अच्छाभेराप्तुमिति शाकपूणिः । अभ्यगाच्च यस्मात् पितरं मातरञ्च द्यावापृथिव्यौ अश्वः । तस्माद्ब्रवीमि हे यजमान अद्या अद्य कृतकृत्यः सन् देवान् गम्याः गच्छेः जुष्टतमः सन् हिर्निश्चये । अथैवं गताय भवते दाशुषे दत्तवते हवींषि यजमानाय । आशास्ते

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । उपप्रागात् । एवमश्वमभिष्तुत्येदानीं यजमानं कृतकृत्यतया सम्बोधयन्नाह अर्वान् नकार उपजनः । अर्वाश्वः पितरं मातरं च द्यावापृथिव्यौ अच्छ अभियत् परमं सधस्थं सहस्थानं तत् उपप्रागात् प्राप तस्मात् ब्रवीमि हे यजमान अद्य जुष्टतमः प्रियतमः सन् हि निश्चितं देवान् गम्याः गच्छेः अथैवं गताय ते दाशुषे हवींषि दत्तवते वार्याणि वरणीयानि अश्व एव आशास्ते ॥२४॥

अश्व एव वार्याणि वरणीयानि ॥ २४ ॥

एवमश्वं स्तुत्वा यजमानमाह । अर्वान् अर्वाऽश्वः पितरं मातरं च अच्छ द्यावापृथिव्यौ अभि समीपे परममुत्कृष्टं यत् सधस्थं सहस्थानं तत् उपप्रागात् अर्वन्शब्दस्य नलोपाभावश्छान्दसः अश्वे एव देवलोकं गते हे यजमान ! जुष्टतमः प्रीततमः सन् अद्य त्वं देवान् गम्याः देवलोकं गच्छेः गमेराशीर्लिङि मध्यमैकवचने गम्या इति रूपम् अथैवं देवत्वं गताय दाशुषे हविर्दत्तवते तुभ्यं वार्याणि वरणीयानि भोग्यवस्तूनि हि नूनम् आशास्ते देवगणोऽश्वो वा ददात्वित्यर्थः ॥ २४ ॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः । आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥ २५

(१) समिद्धो अद्य । द्वादशाप्र्यस्त्रिष्टुभः भार्गवो जमदग्निरपश्यत् । यस्त्वं समिद्धः अद्यास्मिन्यजनीयेऽहनि । मनुषः मनुष्यस्य यजमानस्य । दुरोणे यज्ञगृहे देवो दानादियुक्तः । देवान्दानादियुक्तान् यजासि हे जातवेदः जातप्रज्ञान । तं त्वां प्रार्थयामि आच वह देवान्यज च । हे मित्रमहः मित्राणां पूजयितः । यस्त्वं चिकित्वान् चेतनावान्परिदृष्टकारी । अपि चैतदेव चित्रं यत्त्वमस्माकमस्मिन्कर्मणि वर्तेथाः । किं कारणं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० नास्ति । तद्यथा । समिद्धो अद्य । द्वादशान्याप्रिस्त्रिष्टुभो भार्गवो जमदग्निरपश्यत् । हे जातवेदः अद्य यजनीयेऽहनि मनुषो मनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे देवो दानादिगुणयुक्तः समिद्धः त्वं देवान् यजासि हे मित्रमहः मित्राणां पूजयितः स त्वं देवान् आवह च यज च यतः त्वं चिकित्वान् चेतनावान् परिदृष्टकारी दूतः कविः क्रान्तदर्शनः । प्रचेताः प्रवृद्धचेताश्चासि ॥ २५ ॥

यतो ब्रवीमि । त्वं दूतः देवानां कविः क्रान्तदर्शनश्चासि प्रचेताः प्रवृद्धचेताश्च ॥ २५ ॥

द्वादशाप्रीसंज्ञास्त्रिष्टुभो जमदग्निदृष्टाः समित्तनूनपादादयो देवताः हे जातवेदः जातज्ञान ! मनुषो मनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे अद्य त्वं देवान् यजसि । कीदृशस्त्वम् समिद्धः दीप्तः देवः दानादिगुणयुक्तः । हे मित्रमहः । मित्रान् यजमानान्महति पूजयति मित्रमहाः तत्सम्बुद्धौ हे मित्रमहः ! आवह च देवानावह यज चेत्यर्थः । यतः त्वमीदृशोऽसि कीदृशः चिकित्वान् चेतनावान् दूतः कविः क्रान्तदर्शी प्रचेताः प्रकृष्टं चेतो यस्य सोऽत एव यज ॥ २५ ॥

तनूनपात् पथ ऋतस्य यानान्मध्वा समञ्जन् स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥ २६ ॥

(१) तनूनपात्पथः । तनूनपाच्छब्देनाज्यमाभिधेयमग्निर्वा । हे तनूनपात् गवामपां वा पौत्र । पथः ऋतस्य यानान् ऋतस्य यज्ञस्य गमनान्पथः हवींषि । हविर्भिर्हि यज्ञो याति प्रवर्ततेऽतो यज्ञमार्गा हवींष्युच्यन्ते । मध्वा मधुरसेन समञ्जन्

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा तनूनपात्पथः । तनूनपाच्छब्द उदात्त आमन्त्रितः आज्यमभिधेयमग्निर्वा हे तनूनपात् गवां अपां च पौत्र हे सुजिह्व कल्याणजिह्व कल्याणी ह्यग्नेर्जिह्वा या नानादेवत्यानि हवींष्यभ्यवहरति नच किञ्चनोच्छेषयति ऋतस्य यज्ञस्य यानान् गमनान् पथः मार्गान् हवींषि हविर्भिर्यज्ञो याति प्रवर्तते अतो यज्ञगमनपन्थानो हवींषि तानि मध्वा मधुरसेन समञ्जन् संम्रक्षयन् स्वदय देवानां गोचय किञ्च नोऽस्माकं धीभिः बुद्धिभिः सहितानि मन्मानि मननानि उत अपि च यज्ञं ऋन्धन् समर्द्धयन् सन् अध्वरं देवत्रा कृणुहि देवान् प्रति गमय करोतिर्गत्यर्थः ॥ २६ ॥

भक्षयन्स्वदय देवेभ्यः रोचय । हे सुजिह्व कल्याणजिह्व । कल्याणी ह्यग्नेर्जिह्वा या नानादेवत्यानि हवींषि अभ्यवहरते न किञ्चनोच्छेषयति । किञ्च मन्मानि मननानि धीभिः बुद्धिभिः सहितानि उत अपि च यज्ञम् ऋन्धन् समर्द्धयन् देवत्रा च कृणुहि देवान्प्रति गमय । करोतिर्गमनार्थः अध्वरं नः अस्माकम् ॥ २६ ॥

तनूनामपां नपात् पौत्रोऽग्निः अद्भ्यो वृक्षाः जायन्ते तेभ्योऽग्निरित्यपां पौत्रत्वमग्नेः । हे तनूनपात् अग्ने ! हे सुजिह्व ! शोभना जिह्वा यस्य स सुजिह्वः नानादेवत्यानि हवींषि भक्षयन्नपि नोच्छिष्टानि करोतीति वह्नेः शोभनजिह्वत्वम् हे सुजिह्व ! ऋतस्य यानान् पथः स्वदय रोचय भक्षयेत्यर्थः । यायन्ते यैर्येषु वा ते यानास्तान् करणाधिकरणयोरिति ( पा० ३, ३, ११७ ) ल्युप्रत्ययः ऋतो यज्ञः तस्य गमनसाधनमार्गा हवींषि तान् भक्षयेत्यर्थः । हविर्भिर्यज्ञः प्रवर्त्तते इति यज्ञगमनपन्थानो हवींषि । किं कुर्वन् मध्वा समञ्जन् मधुरेण रसेन संम्रक्षयन् । किञ्च नोऽस्माकमध्वरं यज्ञं देवत्रा कृणुहि देवान् गमय करोतिर्गत्यर्थः । किं कुर्वन् धीभिः बुद्धिभिः सह मन्मानि ज्ञानानि उत अपि च यज्ञमृन्धन् समर्धयन् अस्माकं ज्ञानं यज्ञं च वर्धयन् यज्ञं देवलोकं नयेत्यर्थः ॥ २६ ॥

नराशꣳसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या ॥ २७ ॥

( १ ) नराशंसस्य । नरा अस्मिन्नासीनाः शंसन्तीति न-

---

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । नराशꣳसस्य । नराशंसो यज्ञः । प्रजापतिर्वा नरा अस्मिन्नासीनाः शंसन्तीति । अग्निर्वा नरैः प्रशस्यो भवतीति नराशंसस्य महिमानं महाभाग्यम् एषां देवानां मध्ये उपस्तोषाम उप-

राशंसो यज्ञः । प्रजापतिर्वाग्निर्वा । नरैः प्रशस्यो भवतीति नराशंसः तस्य महिमानं महाभाग्यम् एषां देवगणानां मध्ये उपस्तोषाम उपस्तुमः कथम्भूतस्य नराशंसस्य । यजतस्य यष्टव्यस्य यज्ञैराहुतिभिः । तस्य च महिमानमासाद्य ये देवाः सुक्रतवः सुकर्माणः । शुचयः निषिक्तपाप्मानः अणिमाद्यैश्वर्ययुक्ताः धियन्धाः प्रज्ञायाः कर्मणो वा धारयितारः स्वदन्ति भक्षयन्ति उभयानि हव्या हवींषि । सोमश्च इतराणि च हवींषि तान्त्राणि प्रयाज्यभागास्विष्टकृत्प्रभृतीनि आवापिकानि प्रधानान्युभयानीति ॥ २७ ॥

नरा अस्मिन्नाशंसन्तीति नराशंसोऽग्निः प्रजापतिर्वा नरैःप्रशस्यो भवतीति वा । नराशंसस्य प्रजापतेरग्नेर्वा महिमानं महाभाग्यमेषां देवानां मध्ये वयमुपस्तोषाम उपस्तुमः स्तौतेर्लेटि उत्तमैकवचने सिब्बहुलं लेटीति ( पा० ३, १, ३४ ) सिप्प्रत्यये रूपम् । कीदृशस्य नराशंसस्य यज्ञैः यजतस्य यजेरतचप्रत्ययः। एषां केषाम् ये देवाः उभयानि हव्या हवींषि सोमम् इतराणि च स्वदन्ति भक्षयन्ति । कीदृशाः देवाः सुक्रवतः शोभनः क्रतुः कर्म येषां ते । शुचयः शुद्धाः निष्पापाः । धियन्धाः धियं बुद्धिं कर्म वा दधतीति अलुगार्षः ॥ २७ ॥

आजुह्वा॑न ईड्यो॒ वन्द्य॒श्चाया॑ह्यग्ने वसु॑भिः स॒जोषा॑ः । त्वं दे॒वाना॑मसि यह्व होता॒ स ए॑नान् यक्षीषि॒तो यजी॑यान् ॥ २८ ॥

---

स्तुमः किम्भूतस्य नराशंसस्य यज्ञैः आहुतिभिः यज तस्य यष्टव्यस्य एषां केषां ये देवाः उभयानि हव्या हव्यानि सोममितराणि च स्वदन्ति भक्षयन्ति किन्देवाः सुक्रतवः सुकर्माणः शुचयः निक्षिप्तपाप्मानः अणिमाद्यैश्वर्ययुक्ता धियन्धाः धियं दधन्तीति प्रज्ञायाः कर्मणो वा धारयितारः ॥ २७ ॥

(१) आजुह्वानः । यस्त्वम् आजुह्वानः आहूयमानः सन् ईड्यः स्तुत्यः वन्द्यः नम्यश्च भवासि तं त्वां याह्यागच्छ हे अग्ने वसुभिः सजोषाः सहप्रीतिः । यश्च त्वा देवानां होतासि हे यह्व महन् स एतान्देवानाहूय यक्षि यज । इषितः प्रेषितः अधीष्टो वा । यजीयान् यष्टृतरः सन् ॥ २८ ॥

हे अग्ने ! त्वमायाहि आगच्छ । कीदृशस्त्वम् आजुह्वानः आह्वयते आह्वयति देवानित्याजुह्वानः ह्वयतेः शपः श्लुः ह्वः सम्प्रसारणमिति (पा० ६, १, ३२) अभ्यासस्य सम्प्रसारणं शानचि । ईड्यः स्तुत्यः । वन्द्यः नमनीयः । वसुभिः देवः सजोषाः समानप्रीतिः । किञ्च हे यह्व महन् ! यः त्वं देवानां होता अह्वाता असि स त्वमेनान् यक्षि यज । कीदृशस्त्वम् इषितः प्रेषितः अभीष्टो वा । यजीयान् यजतीति यष्टा अत्यन्तं यष्टा यजीयान् ईयसुनि तुरिष्ठेमयःस्विति (पा० ६, ४, १५४) तृचो लोपः ॥ २८ ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ २९ ॥

(२) प्राचीनं बर्हिः प्राचीनं प्रागग्रं वृज्यते प्रस्तीर्यते । किं

---

(१) अत्र वाराणसी० लि पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । आजुह्वानः । हे अग्ने आजुह्वानः आहूयमानः सन् त्वमायाहि किं त्वमीड्यः स्तुत्यः वन्द्यो नम्यश्च वसुभिः सजोषाः सहप्रीतिः हे यह्व हे महन् त्वं देवानां होतासि सः इषितः प्रेषितः अभीष्टो वा यजीयान् यष्टृतरः सन् एतान् देवान् यक्षि यज ॥ २८ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमुऽपु० नास्ति । तद्यथा प्राचीनं बर्हिः । अह्नामग्रे पूर्वाह्णे स हि यागकालः प्रशस्तः यत् प्राचीनं प्रागञ्चनं बर्हिः प्रागग्रं वृज्यते प्रस्तीर्यते किं स्वमनीषया नेत्याह प्रदिशा प्रदिक् शब्देन श्रुतिवाक्यमभिधीयते प्रागग्रं बर्हि-

स्वमनीषयानेत्याह। प्रदिशा। प्रादिकुशब्देन श्रुतिवाक्यमभिधीयते। प्रागग्रं बर्हिस्तृणातीति। पृथिव्या वस्तोरस्याः। अस्याः पृथिव्याः वेदेः वस्तोः वसनायाच्छादनाय। अग्रे अन्हाम्। पूर्वाह्णे दिवसानाम्। स हि यागकालः प्रशस्तः। तत् वृज्यमानं बर्हिः वि उ प्रथते विप्रथते विविधमाच्छादयति। उकारः पादपूरणः। वितरमतितराम् वरीयः वरतरमुरुतरं वा। किं कारणमपेक्ष्य व्युप्रथते इत्यत आह। देवेभ्यश्च अदितये च स्योनं सुखं कर्तुमिति शेषः॥ २९॥

अह्नां दिनानामग्रे पूर्वाह्णे बर्हिः प्राचीनं प्रागग्रं वृज्यते प्रस्तीर्यते प्रातर्यागकालस्य प्रशस्तत्वादह्नामग्रे इत्युक्तम्। किं स्वबुद्ध्या चेत्याह प्रदिशा प्रागग्रं बर्हिः स्तृणातीति श्रुतिवाक्येन प्रदिक्शब्देन श्रुतिवाक्यम् अस्याः पृथिव्या वेदेः वस्तोः वसितुमाच्छादयितुमित्यर्थः। तद्बर्हिः वृज्यमानं सत् विप्रथते विविधं विस्तीर्णं भवति। उकारः पादपूरणः। कीदृशं बर्हिः वितरं वरीयः अत्यन्तं वितरमतितराम् वरीयः अत्यन्तमुरु वरीयः प्रस्थस्फवरित्यादिना (पा० ६, ४, १५७) उरोर्वरादेशः। देवेभ्यः अदितये च स्योनं सुखकरम्॥ २९॥

**व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः। देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः॥ ३०॥**

(१) व्यचस्वतीः। यज्ञगृहद्वारोऽभिधेयाः। अत्र च प्रथमो-

---

स्तृणातीति किमर्थम्। अस्याः पृथिव्याः वेदेर्वस्तोः वसनाय आच्छादनाय तत् वृज्यमानं बर्हिः विप्रथते विविधमाच्छदयति उकारः पादपूरणः किम्भूतं वितरम् अतितरम् वरीयः उरुतरं किमर्थं विप्रथते इत्यत आह देवेभ्यः अदितये च स्योनं सुखं कर्तुमिति शेषः॥ २९॥

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति। तद्यथा। व्यचस्वतीः। यज्ञगृहद्वारोऽभिधेयाः अत्र प्रथमोऽर्धर्चो

ऽर्द्धर्चः परोक्षकृतो द्वितीयः प्रत्यक्षकृतः न च तयोरेकवाक्यतासंपद्यते अतः प्रथमस्य सन्नतिः । व्यचस्वतीः व्यञ्जनवत्यः गमनवत्यः । उर्विया उरुत्वेन विश्रयन्ताम् विवृता भवत । कथमिव । पतिभ्यो न जनयः शुम्भमानाः यथा मैथुन्ये धर्मे पतिभ्योऽर्थाय जनयः जाया आत्मानं शोभयन्त्यः । उरू विश्रयेयुः विवृता कुर्वन्ति यथा हि विवृता जाया उपसर्पन्ति पतिन्न तथा इति इतीदमुक्तं पतिभ्यो न जनयः एवं विवृताश्च भूत्वा हे देव्यः द्वारः बृहत्यः महत्यः । विश्वमिन्वाः विश्वमारेभिरे ताभिः विश्वामिन्वाः । यूयं देवेभ्यः ऋत्विग्यजमानेभ्यः भवत सुप्रायणाः सुप्रगमनाः ॥ ३० ॥

द्वारो देवीः देव्यो विश्रयन्तां विवृता भवन्तु । कीदृश्यो द्वारः उर्विया उरुत्वेन व्यचस्वतीः व्यञ्जनवत्यो गमनवत्यः कथमिव पतिभ्यो जनयो न जनय इव यथा जनयः जायाः पत्यर्थम् ऊरू विश्रयन्ति । एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे द्वारो देव्यः ! यूयं देवेभ्यो देवार्थं सुप्रायणाः सुप्रगमना भवत । कीदृश्यः बृहतीः बृहत्यः विश्वमिन्वाः विश्वमेति गच्छति यासु ताः एतेर्न्वक्प्रत्ययः अलुक्समासः । शोभमानाः । उर्विया इति द्वार्विशेषणं वा उरवो विशालाः इयाडियाजियारश्चेति विभक्तेरियाजादेशः चित्त्वादन्तोदात्तः ॥ ३० ॥

---

परोक्षकृतः । द्वितीयः प्रत्यक्षः अतः प्रथमस्य संनतिः हे द्वारो देव्यः व्यचस्वतीः व्यञ्जनवत्यः गमनवत्यः यूयम् उर्विया उरुत्वेन विश्रयन्तां विश्रयध्वम् । विवृता भवत कथमिव पतिभ्यः जनयो न जनय इव यथा शुम्भमानाः आत्मानं शोभयन्त्यः जनयो जायाः पत्यर्थम् ऊरू विश्रयेयुः विवृतौ कुर्वन्ति यथा हि विवृता जाया उपसर्पन्ति न तथा इतरा अत एवमुक्तं पतिभ्यो न जनय इति विवृताश्च भूत्वा बृहतीः बृहत्यः विश्वामिन्वाः विश्वमारेभिरे इति विश्वमिन्वाः ईदृशा यूयं देवेभ्यः ऋत्विग्यजमानेभ्यः सुप्रायणाः सुप्रगमनाः भवत ॥ ३० ॥

**आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियंꣳ शुक्रपिशं दधाने ॥ ३१ ॥**

(१)आसुष्वयन्ती। स्मयतेर्वा निरुपसर्गात् स्वपतेर्वा सूपगात्। सेस्मीयमाने परस्परं हसन्त्यौ साधु स्वपन्त्यौ वा। यजते यज्ञिये उपाके उपाक्रान्ते परस्परमेकदेशसबलीभूते । उषासानक्ता उषाश्च नक्ता रात्रिश्च । सदतान्नियोनौ । आसीदताम् निरनर्थक उपसर्गः। यद्वा निरिति सदतामित्याख्यातेन युज्यते । निषीदताम् । योनौ यज्ञगृहे कथंभूते। दिव्ये दिवि भवे योषणे प्रीतिमत्यौ स्त्रीरुपिण्यौ वा। बृहती बृहत्यौ महत्यौ सुरुक्मे सुरोचने। अधिश्रियं शुक्रपिशं दधाने। शुक्रपिशं शुक्लरूपं श्रियम् आधिदधाने स्थापयन्त्यौ ॥ ३१ ॥

आ नि एतयोः सदतामिति सम्बन्धः अधीत्यस्य दधाने इत्यनेन सम्बन्धः। उषासानक्ता अहोरात्रे देवते योनौ यज्ञगृहे आनिसदताम् सम्यक् उपविशताम् । कीदृश्यौ ते सुष्वयन्ती स्मयतेः स्वपतेर्वा सुपूर्वस्य रूपम् पूर्वपक्षे मकारस्य वकारश्छान्दसः उत्तरपक्षे पकारस्य यकारः परस्परं हसन्त्यौ साधु स्वपन्त्यौ वा । यजते यजनीये उपाके उप समीपमकतस्ते उपाके अक गतौ परस्परं समीप-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा।आ सुष्वयन्ती ।उषासा नक्ता उषाश्च नक्ता रात्रिश्च ते योनौ यज्ञगृहे आनिसदतां सीदतामित्यनेन सम्बन्धः किम्भूते सुष्वयन्ती स्मयतेर्वा निउपसर्गात् स्वपतेर्वा सूपसर्गात् सेस्मीयमाने परस्परं हसन्त्यौ साधु स्वपन्त्यौ वा यजते यज्ञिये उपाके आक्रान्ते परस्परम् एकदेशसबलीभूते दिव्ये दिवि भवे योषणे योषे स्त्रीरूपिण्यौ बृहती बृहत्यौ महत्यौ सुरुक्मे रोचने शुक्रं पिशं शुक्लरूपां कपिशां श्रियमं आधिदधाने स्थापयन्त्यौ ॥ ३१ ॥

स्थिते । दिव्ये दिवि भवे । योषणे योषे स्त्रीरूपिण्यौ । बृहती बृहत्यौ महत्यौ । सुरुक्मे शोभनं रुक्मं सुवर्णं ययोस्ते साभरणे इत्यर्थः । शुक्रपिशं शुक्लां कपिशां च श्रियं शोभामधिदधाने अधिकं धारयन्त्यौ । शुक्लमहः कपिशा रात्रिः ॥ ३१ ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ३२ ॥

(१)दैव्या होतारा । यौ दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमः प्रथमा आद्यौ सुवाचा । सुवाचौ नहि तौ पाठं विनाशयतः । मिमाना । निर्मिमाणौ यज्ञम् मनुषो मनुष्यस्य यजध्यै यजनाय प्रचोदयन्तौ च विदथेषु यज्ञेषु अन्यानृत्विजः स्वयं च कारू कर्तारौ । प्राचीनं पूर्वस्यां दिशि भवम् । आहवनीयाख्यं ज्योतिः यष्टव्यमिति प्रादिशा अभिनयेन श्रुतिवाक्येन वा । दिशन्ता । कथयन्तौ । आशास्तावस्मदीयं प्रसाधयेतामिति शेषः ॥ ३२ ॥

दैव्यौ होतारा ईदृशौ आसाते इति शेषः । कीदृशो प्रथमा आद्यौ । सुवाचा शोभना वाक् ययोस्तौ । मनुषो मनुष्यस्य यजध्यै यष्टुं यज्ञं मिमाना निर्मिमाणौ । तुमर्थे शध्यै प्रत्ययः । वि-

---

(१)अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । दैव्या होतारा । यौ एवंविधौ देव्यौ होतारौ आसाते तावस्मदीयं कर्म साधतामिति शेषः । अयं चाग्निरसौ च मध्यमः कीदृशौ प्रथमौ आद्यौ सुवाचौ शोभनवचनौ मनुषो मनुष्यस्य यजध्यै यजनाय यज्ञं मिमाना निर्मिमाणौ विदथेषु यज्ञेषु प्रचोदयन्ता ऋत्विजः प्रेरयन्तौ कारू कर्त्तारौ स्वयं प्राचीनं पूर्वस्यां दिशि भवं ज्योतिः आहवनीयाख्यं यष्टव्यमिति प्रदिशा अभिनयेन श्रुतिवाक्येन च दिशन्ता कथयन्तौ ॥ ३२ ॥

दथेषु यज्ञेषु प्रचोदयन्ता प्रचोदयन्तौ ऋत्विजः प्रेरयन्तौ। कारू कुरुतस्तौ कारू उणादयो बहुलमिति ( पा० ३, ३, १ ) उण् स्वयं कर्त्तारौ। प्राचीनं पूर्वदिशि भवं ज्योतिः आहवनीयाख्यं प्रदिशा अभिनयेन श्रुतिवाक्येन दिशन्ता यष्टव्यमिति कथयन्तौ। सर्वत्र विभक्तेराकारः ॥ ३२ ॥

आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विडा॒ मनु॒ष्वदि॒ह चे॒तय॑न्ती। ति॒स्रो दे॒वीर्ब॒र्हिरेदᳪ स्यो॒नᳪ सर॑स्वती॒ स्वप॑सः सदन्तु ॥ ३३ ॥

( १ ) आ नो यज्ञम्। आङ् उपसर्गः सदन्त्वित्याख्यातेन सम्बध्यते। आ एतु आगच्छतु नः अस्माकं यज्ञम् भारती भरत आदित्यस्तस्य भारती। तूयं क्षिप्रम् इडा च आगच्छतु। मनुष्वत् मनुष्यवत् इह चेतयन्ती परिदृष्टकारिणी। सरस्वती च। य इत्थम्भूतास्तिस्रोः देव्यः ताः बर्हिः आङ् उपसर्गः सदन्त्वित्याख्यातेन सम्बध्यते आसदन्तु आसीदन्तु इदं स्योनं सुखरूपम् स्वपसः अप इति कर्मनाम। साधुकर्मणः ॥ ३३ ॥

भारती इडा सरस्वती च नोऽस्माकं यज्ञं तूयं क्षिप्रमा एतु आगच्छतु। कीदृशी मनुष्वत् मनुष्यवदिह कर्मणि चेतयन्ती ज्ञापयन्ती कर्मज्ञानं बोधयन्ती इदं तिसृणां विशेषणम्। एतास्तिस्रो देवीः देव्यः स्योनं सुखरूपमिदं बर्हिः आसदन्तु आसी-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति। तद्यथा। आ नः। आकार एत्वित्यनेन संबध्यते भारती इडा सरस्वती च नोऽस्माकं यज्ञं तूयं क्षिप्रम् आ एतु आगच्छतु! कीदृशी मनुष्वत् मनुष्यवत् इह चेतयन्ती परिदृष्टकारिणीति तिसृणामपि विशेषणम् एतास्तिस्रो देव्यः स्योनं सुखरूपम् इदं बर्हिः आसदन्तु आसीदन्तु बर्हिः। आ इदमिति पदं किम्भूतास्तिस्रः स्वपसः अप इति कर्मनाम शोभनकर्माणः शोभनमपो यासां ताः ॥ ३३ ॥

दन्तु । कीदृश्यः स्वपसः शोभनमपः कर्म यासां ताः शुभकर्माणः अप इति ( निघ० २, १, १ ) कर्मनाम ॥ ३३ ॥

य इमे द्यावापृथिवी जनित्री रूपैरपिꣳशद्भुवनानि विश्वा । तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ ३४ ॥

( १ ) य इमे । यस्त्वष्टा इमे द्यावापृथिव्यो जनित्री जनयित्र्यौ सर्वभूतानाम् । रूपैः अपिंशत् सुचित्रिते अकरोत् । भुवनानि विश्वा । भूतजातानि च सर्वाणि रूपैरपिंशत् । आवृतान्यकरोत् तम् अद्यास्मिन्नहनि । हे होतः इषितः प्रेषित इति वा अधीष्ट इति वा । यजीयान् यष्टृतरः । देवं दानादिगुणयुक्तम् त्वष्टारम् इह यज्ञे यक्षि यज । विद्वान् स्वमाधिकारं जानानः ॥ ३४ ॥

हे होतः अद्य इषितः प्रेषितः सन् तं त्वष्टारं देवमिह यज्ञे यक्षि यज । कीदृशः त्वम् यजीयान् अत्यन्तं यष्टा तुरिष्ठेमेयःस्विति ( पा० ६, ४, १५४ ) ईयसुनि तृचो लोपः । विद्वान् स्वाधिकारज्ञः । तं कम् यः त्वष्टा इमे द्यावापृथिवी द्यावाभूमी रूपैः अपिंशदवयवैर्विचित्रे अकरोत् पिशः अवयवे तुदादिः लङि शे मुचादीनामिति ( पा० ७, १, ५९ ) नुम् । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि

---

( १ ) अत्र वारणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । य इमे । यः त्वष्टा जनित्री सर्वभूतानां जनयित्र्यौ इमे द्यावापृथिव्यौ रूपैः अपिंशत् । सुचित्रिते अकरोत् पिश अवयवे अस्य लुङि रूपम् । शे मुचादीनामिति नुम् विश्वा सर्वाणि भुवनानि भूतजातानि च यस्त्वष्टा रूपैः अपिंशत् आवृतान्यकरोत् हे होतः त्वमिषितः प्रेषितः सन् अद्य तं त्वष्टारं देवमिह यन्ति यज किं त्वं यजीयान् अतिशयेन यष्टा तुरिष्ठेमेयस्स्वति तृचो लोपः । यष्टृतमः विद्वान् स्वमधिकारं जानानः ॥ ३४ ॥

रूपैः अपिंशत् विविधरूपाण्यकरोत्। कीदृश्यौ द्यावापृथिव्यौ जनित्री जनयतस्ते जनित्र्यौ प्राण्युत्पादिके ॥ ३४ ॥

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ ३५ ॥

( १ ) उपावसृज। द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते सामर्थ्यात्। यजमान आह। वनस्पतिः यूपः शमिता देवः अग्निः शामित्रः स्वदन्तु मृष्टीकुर्वन्तु। हव्यं हविः मधुना मधुरसेन घृतेन त्वमपि हे अध्वर्यो उपावसृज (उत्पिष्टांयासुकमवदानम्?) अवसृज निक्षिप। त्मन्या आत्मना। आदरार्थं वचनं मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः॥ समञ्जन् संम्रक्षयन् देवानाम् पाथः अन्नम् ऋतुथा ऋतावृतौ च हवींषि अवसृज ॥ ३५ ॥

यजमानो वदति। हे होतः! त्मन्या आत्मन्या हवींषि ऋतुथा ऋतौ ऋतौ यज्ञकाले त्वमुपावसृज देहि। किं कुर्वन् देवानां पाथः हविः मधुना मधुररसेन घृतेन समञ्जन् संम्रक्षयन्। देवानामित्युक्तं तानाह वनस्पतिर्यूपः शमिता देवः अग्निः एते त्रयो हव्यं होता संसृज्य दत्तं स्वदन्तु भक्षयन्तु। आत्मन्शब्दस्य विभक्तेर्यादेशे मन्त्रेष्वाङ्यादेरात्मन इति (पा० ६, ४, १४१) आकारलोपः॥ ३५ ॥

---

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति। तद्यथा। उपावसृजः। द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते सामर्थ्यात्। यजमान आह वनस्पतिर्यूपः शमिता देवः अग्निः एते मधुना मधुरसेन घृतेन हव्यं हविः स्वदन्तु मृष्टीकुर्वन्तु हे अध्वर्यो त्वमपि हवींषि ऋतुथा ऋतावृतौ त्मन्या आत्मना आदरार्थं वचनं तृतीयैकवचनस्य यादेशे कृते मन्त्रेष्वाङ्यादेरात्मनः इति आलोपः उपावसृज निक्षिप किं कुर्वन् देवानां पाथः अन्नं समञ्जन् संम्रक्षयन्॥ ३५ ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ॥ ३६ ॥

(१)सद्यो जातः । योऽग्निः सद्यो जातः जायमानः सन् व्यमिमीत निरमिमीत यज्ञम् । यश्च देवानाम् अभवत् पुरोगाः अग्रतो गामी । तस्यास्य होतुः प्रदिशि प्राच्यां दिशि ऋतुथा ऋताव्रतौ आहवनीयात्मना व्यवस्थितस्य । वाचि आस्ये मुखे वाग्ग्रहणेन लक्षणया मुखमभिधीयते तदुक्तं वार्तिककारेण । "अभिधेयाविनीभावप्रतीतिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तिरिष्टा तु गौणतेति" । स्वाहाकृतम् स्वाहाकृत्युपलक्षितं हविः अदन्तु देवाः ॥ ३६ ॥

देवा हविरदन्तु भक्षयन्तु । कीदृशं हविः अस्याग्नेः वाचि वागिन्द्रियोपलक्षिते मुखे स्वाहाकृतं स्वाहाकारेण हुतम् । कीदृशस्यास्य होतुः देवानामाह्वातुः प्रदिशि पूर्वदिशि ऋतस्य ऋ गतौ आहवनीयात्मना स्थितस्य । अस्य कस्य योऽग्निः सद्यो जातः उत्पन्नः सन् यज्ञं व्यमिमीत विशेषेण निरमात् यश्च देवानां पुरोगाः अग्रगामी मुख्योऽभवत् पुरो गच्छति पुरोगाः विटि प्रत्यये विड्वनोरनुनासिकस्यादिति ( पा० ६, ४. ४१ ) मस्याकारः ॥ ३६ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । सद्यो जातः । योऽग्निः सद्यो जातः सन् अमिमीत निरमिमीत यश्च देवानां पुरोगः अग्रगामी अभवत् । सर्वकार्येषु तस्यास्य होतुः प्रदिशि प्राच्यां दिशि ऋतस्य गतस्य आहवनीयात्मना स्थितस्याग्नेः वाचि मुखे स्वाहाकृतं स्वाहाकृत्युपलक्षितं हविः देवाः अदन्तु वाग्ग्रहणेनात्र लक्षणया मुखमभिधीयते । तदुक्तं वार्त्तिककृता " अभिधेयाविनीभूतप्रतीतिर्लक्षणोच्यते लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति " ॥ ३६ ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भि-
रजायथाः ॥ ३७ ॥

(१)इत उत्तरमश्वरक्षिणा योद्धारः युद्धोपकरणानि च स्तूयन्ते प्रागाग्नेय इति श्रुतेः ॥ केतुं कृण्वन् । आग्नेयी गायत्री अनिरुक्ता केतुं प्रज्ञानं कृण्वन्कुर्वन् । अकेतवे न विद्यते केतु प्रज्ञानं यस्य तस्मै अकेतवे पेशः सुवर्णं रूपं वा मर्याः मर्यायेति विभक्तिव्यत्ययः । मर्याय मनुष्याय अपेशसे न विद्यते पेशः यस्य तस्मै अविद्यमानसुवर्णाय अविद्यमानरूपाय वा पेशः कुर्वन् । समुषद्भिरजायथाः हे अग्ने उषद्भिः । उष दाहे अग्निहोत्रादीनि कर्माणि कुर्वद्भिः । जायमानः सन् जन्मना जातेर्वा । वसतेर्वा कृतसंप्रसारणस्यैतद्रूपम् उषद्भिः अग्निं प्रति निवसद्भिः जायमानः सन् समजायथाः उत्पद्यसे ॥ ३७ ॥

अग्निदेवत्या गायत्री मधुच्छन्दोदृष्टा निरुक्ता । हे अग्ने । त्वमुषद्भिः कृत्वा अजायथाः उत्पन्नोऽसि जनेर्लङि रूपम् उष दाहे उषन्ति हविर्दहन्ति ते उषन्तोऽग्निहोमकर्तारो यजमानाः । कीदृशस्त्वम् अकेतवे अज्ञानाय मर्याः मर्याय मनुष्याय केतुं ज्ञानं कृण्वन् कुर्वन् विभक्तिव्यत्ययः । नास्ति पेशः सुवर्णं यस्य स अपेशाः तस्मै अपेशसे मर्याय पेशं सुवर्णं कुर्वन् ॥ ३७ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । इत उत्तरमश्वस्य रक्षणे योद्धॄन् स्तुत्योपकरणानि च स्तूयन्ते प्रागाग्नेय इति श्रुतेः । कतुं कृण्वन् आग्नेयीयं गायत्री अनिरुक्ता अकेतवे न विद्यते केतुः प्रज्ञानं यस्य तस्मै । मर्या मर्यायेति विभक्तिव्यत्ययः । मनुष्याय केतु प्रज्ञानं कुर्वन् अपेशसे अविद्यमानसुवर्णाय मर्याय पेशः सुवर्णं कुर्वन् हे अग्ने त्वम् उषद्भिः जायमानः सन् समजायथाः । उत्पद्यसे उष दाहे उषद्भिः अग्निहोत्रादिकर्माणि कुर्वद्भिः जायमानः वसतेर्वा कृतसंप्रसारणस्य रूपमग्निं प्रति निवसद्भिर्जायमानः अजायथाः ॥ ३७ ॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदा-मुपस्थे । अनाविद्धया तन्वा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ॥ ३८ ॥

(१) जीमूतस्येव । वर्म स्तूयते जीमूतो मेघः तस्येव भवति प्रतीकम् अनीकम् मुखमिति पर्यायः । यथा मेघस्य मुखं विद्यु-त्स्फुरितस्तनयित्नुधारानिकरैरसह्यं भवत्यन्तःसरणैः एवं ह-स्त्यश्वरथपदातिमुखं निशितास्त्रगम्भीरतूर्यनिनादशरधाराभि-रसह्यम्भवति एवं कस्मिन्काले कस्य वेत्यत आह । यद्वर्मी यदा वर्मास्य विद्यते इति वर्मी । याति गच्छति समदाम् । संमाद्य-न्ति सह वा माद्यन्ते आसु योद्धार इति समदः समद्''शब्दः संग्रामवचनः । समदां संग्रामाणम् उपस्थे उत्कण्ठे यत एवमतो ब्रवीमि । अनाविद्धया तन्वा जय त्वम् हे वर्मिन् अनाविद्धया अक्षतया अरिष्टया तन्वा त्वं जय । किञ्च स त्वा वर्मणो म-हिमा पिपर्त्तु पालयतु ॥ ३८ ॥

एवमग्निं स्तुत्वाश्वरक्षणे योधा युद्धोपकरणानि च स्तूयन्ते । भरद्वाजसुतपायुः संग्रामाङ्गानि प्रत्यृचं स्तौति त्रिष्टुब्भिः । वर्म

---

(१) अत्र वाराणसी० लि पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । जीमूतस्येव । वर्म स्तूयते त्रिष्टुभा जीमूतो मेघः यत् यदा वर्मी वर्मवान् समदां संग्रामाणाम् उपस्थे उत्सङ्गे याति सहमदं यान्ति येषु ताः संमदः संग्रामाः सह माद्यन्तीति समदः योधा वा तदा प्रतीकं सेनामुखं जीमूतस्य प्रतीकमिव भवति यथा मेघस्य मुखं विद्युत्स्तनयित्नुधारानिकरैरसह्यं भवति । एवं हस्त्य-श्वरथपदातिमुखम् अस्त्रतूर्यनादशरजालैरसह्यं भवति यदा वर्मी अग्रसरो भवति अतो ब्रवीमि । हे वर्मिन् अनाविद्धया अक्षतया अरिष्टया तन्वा त्वं जय । किञ्च सः वर्मणो महिमा त्वां पिपर्त्तु पालयतु ॥ ३८ ॥

स्तूयते यत् यदा वर्मी कवचवान् समदा संग्रामाणामुपस्थे उत्सङ्गे याति तदा प्रतीकं सेनामुखं जीमूतस्य मेघस्येव भवति। सह माद्यन्ति योधा यासु ताः समदः संग्रामाः मदेः क्विप्। मेघस्य मुखं विद्युत्स्तनयित्नुधाराभिर्यथासह्यम् एवं हस्त्यश्वरथपादात्यस्त्रजालतूर्यनादशरौघैः सेनामुखमसह्यं भवतीत्यर्थः। अतोऽहं ब्रवीमि हे वर्मिन्! अनाविद्धया अक्षतया तन्वा शरीरेण त्वं जय शत्रून् हत्वा जय प्राप्नुहि। किञ्च स वर्मणःमहिमा त्वा त्वां पिपर्तु पालयतु ॥ ३८ ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ ३९ ॥

(१)धन्वना गाः। धनुः स्तूयते त्रिष्टुभा धन्वना धनुषा गाः जयेम। धनुषा च आजिं मार्गं जयेम। धनुषा च तीव्राः पटवः उद्गूर्णायुधासः मदः संग्रामाञ्जयेम। धनुश्च शत्रोः अपकामं कृणोति अपनयति कामम्। कर्तृत्वाविवक्षात्र धनुषः। धनुषा च सर्वाः प्रदिशः जयेम ॥ ३९ ॥

धनुः स्तूयते। धन्वना धनुषा कृत्वा वयं गाः धेनूः जयेम। धन्वना आजिं मार्गं जयेम अजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गः। तीव्राः उग्राः समदः संग्रामान् धन्ववा जयेम। धनुः शत्रोरपकामं

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई पु० नास्ति। तद्यथा। धन्वना गाः धनुः स्तुतिः त्रिष्टुप् धन्वना धनुषा गाः जयेम धन्वना आजिं मार्गं जयेम धन्वना तीव्राः उद्गूर्णायुधाः समदः संग्रामान् जयेम धनुः शत्रोः काममपकृणोति अपनयति अपकामामित्येकं पदम्। यद्वा धनुः शत्रोरयं कामं कामाभावं करोतु। अत्र धनुषः कर्तृत्वं धन्वना सर्वाः प्रदिशश्च जयेम। ईदृग्धनुः प्रभावः ॥ ३९ ॥

मनोरथाभावं कृणोति करोति कामस्याभावोऽपकामम् अव्ययं विभक्तीत्यादिना ( पा० २, १, ६, ) अर्थाभावेऽव्ययीभावः । किञ्च धन्वना सर्वाः प्रदिशो जयेम । ईदृशो धनुः प्रभावः ॥ ३९ ॥

वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वन् ज्या इयꣳ समने पारयन्ती ॥ ४० ॥

(१) वक्ष्यन्तीवेत् । ज्या अभिधेया । त्रिष्टुप् । या ज्या वक्ष्यन्ती इव वचनोत्सुकेव । योषित् इच्छब्दः पादपूरणार्थः । आगनीगन्ति आगच्छन्ति अत्यर्थमागच्छति वा कर्णं धनुष्कर्णमूलम् या च प्रियमिव सखायमिषुम् परिषस्वजाना आलिङ्गन्ती । योषेव शिङ्क्ते । शिजि अव्यक्ते शब्दे । यथा मुग्धा योषित्कामुकरञ्जनार्थमव्यक्तं कूजितङ्करोति एवमियमव्यक्तं शब्दं करोति । प्रसारिता च अधि उपरि धनुषि निबद्धा । सेयञ्ज्या समने संग्रामे पारयन्ती विजयं कुर्वन्ती संग्रामान् तारयन्ती स्तूयते ऽस्माभिरिति शेषः ॥ ४० ॥

ज्या स्तूयते । इयं धन्वन् धन्वनि धनुषि अधिवितता उपरि विस्तारिता सती शिङ्क्ते अव्यक्तं शब्दं कुरुते शिजि अव्यक्ते

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । वक्ष्यन्ती ज्याभिधेया त्रिष्टुप् या ज्या वक्ष्यन्ती इव वचनोत्सुकेव इत् पादपूरणः कर्णम् आगनीगन्ति । अत्यर्थमागच्छति किम्भूता प्रियं सखायम् इषुं परिषस्वजाना आलिङ्गती इयं ज्या अधिधन्वम् अधि उपरि धनुषि वितता प्रसारिता सती योषा इव शिंक्ते शिजि अव्यक्ते शब्दे यथा विदग्धा योषित् कामुकरञ्जनायाव्यक्तं कूजितं करोति । एवमियमव्यक्तं शब्दं करोति । कीदृशी समने संग्रामे पारयन्ती विजयं कुर्वंती संग्रामानुत्तारयन्ती सास्माभिः स्तूयत इति शेषः ॥ ४० ॥

शब्दे अदादिः इदितो नुम् धातोरिति ( पा० ७, १, ५८ ) नुम् । का इव योषेव यथा योषा कामिनी कामुकरञ्जनायाव्यक्तं वदति एवमियमपि । कीदृशी ज्या समने संग्रामे पारयन्ती पार तीर कर्मसमाप्तौ अदन्तः संग्रामादुत्तारयन्ती विजयं कुर्वतीत्यर्थः । इयं का या ज्या कर्णमागनीगन्ति आकृष्टा सती योद्धुः कर्णं प्रत्यत्यर्थमागच्छति यङ्लुकि गमः रूपम् । कीदृशी उत्प्रेक्ष्यते वक्ष्यन्तीव वक्तुमिच्छन्तीव अन्याऽपि वक्तुमिच्छन् कर्णं प्रत्यागच्छति । प्रियं सखायमिष्टं मित्रं वाणरूपं परिषस्वजाना आलिङ्गन्ती स्वजेः शानचि शपः श्लौ सति द्वित्वम् । इत् पादपूरणार्थः ॥ ४० ॥

ते आचर॑न्ती सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृता॒मु॒पस्थे॑ । अप॒ शत्रू॑न् विध्यताꣳ संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रन्ती॑ अ॒मित्रा॑न् ॥ ४१ ॥

(१)ते आचरन्ती । धनुषः कोटी स्तूयेते । त्रिष्टुप् । ये इमे आर्त्नी आर्त्न्यौ धनुषः कोटी । समना इव समने इति बचन व्यत्ययः समान भर्तृगतमनस्के योषे इव यथा समानभर्तृगतमनस्के योषे पतिमागच्छन्त्यौ ते आचरन्ती आगच्छन्त्यौ धानुष्कम् । मातेव पुत्रं विभृतामुपस्थे । यथा माता उपस्थ उत्सङ्गे पुत्रं धारयति एवं बिभृतां धारयतां शरम् । अपशत्रून् विध्यताम् व्यध ताड-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । ते आचरन्ती । धनुषः कोटी स्तूयते त्रिष्टुप् ते इमे आर्त्नी आर्त्न्यौ धनुषः कोटी उपस्थे उत्सङ्गे माता पुत्रमिव शरं विभृतां धारयतां शत्रूनपविध्यतां च कीदृश्यौ आचरती आगच्छन्त्यौ धनुष्कं प्रति समना योषा इव वचनव्यत्ययः समानमनस्के समानभर्तृगतमनस्के योषे इव ते यथा कान्तमागच्छतः तथा संविदाने सुखमनुभवन्त्यौ अमित्रान् शत्रून् प्रति विष्फुरन्ती विस्फुरन्त्यौ ॥ ४१ ॥

ने । अपविध्यतां च शत्रून् संविदाने । सुखमनुभवन्त्यौ । विष्फुरन्ती अमित्रान् । अमित्रान् शत्रून् विष्फुरन्त्यौ ॥ ४१ ॥

मधुःकोटी स्तूयते । ते प्रसिद्धे इमे आर्त्नी आत्न्यौं धनुःकोटी उपस्थे उत्सङ्गे मध्यभागे विभृतां धारयतां शरमिति शेषः । तत्र दृष्टान्तः माता पुत्रमिव यथा जननी पुत्रमुत्सङ्गे बिभर्त्ति । शत्रून् अपविध्यतां ताडयतां च । कीदृश्यौ आत्न्यौं आचरन्ती चाचरन्त्यौ आगच्छन्त्यौ धानुष्कं प्रति तत्र दृष्टान्तः समना योषा इव वचनव्यत्ययः समना समानमेकपतिगतं मनो ययोस्ते समनसौ विभक्तेर्डादेशः समचित्ते योषा योषे स्त्रियौ यथा कान्तमागच्छतः । संविदाने संविदाते ते संविदाने समो गमीत्यादिना ( पा०१,३,२९ ) शानच् परस्परं सङ्केतं कुर्वाणे । अमित्रान् शत्रून् प्रति विष्फुरन्ती टङ्कारं कुर्वाणे ॥ ४१ ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ४२ ॥

(१)बह्वीनामपि ताम् इषुधिरभिधेयः । त्रिष्टुप् । यः बह्वीना-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । बह्वीनां पिता इषुधिरिति धेयः । त्रिष्टुप् बह्वीनाम् इषूणां पिता पालयिता तेन हि ताः पाल्यन्ते । अस्येषुधेः बहुः पुत्रः इषुकलापः पुत्रस्थानीयः महितेन इषुकलापेन त्रायते बहुवाहितं तदर्थं कुर्वन्तीति । यश्च इषुधिः समना संग्रामान् अवगत्य ज्ञात्वा चिश्चाकृणोति शब्दानुकरणम् स हि इषौ निष्क्रम्यमाणे चिश्चेति शब्दं करोति । स इषुधिः धनुष्केण पृष्ठे निनद्धो बद्धः प्रसूतोऽनुज्ञातश्च सन् सङ्काः सङ्काशं दधते अस्मिन् योधा इति सङ्कीर्यन्ते वास्मिन् योधा इति सङ्काः शत्रुशङ्कटं सर्वाः पृतनाश्च स्पर्धनीयतमाः संग्रामभक्तीः जयति विवक्षातः कारकाणि भवन्तीतिषुधेः कर्तृत्वम् ॥ ४२ ॥

मिषूणां पिता पालयिता । तेन सहिताः पाल्यन्ते सहिताः सन्निदधाति । यस्य चास्य बहुः इषुकलापः पुत्रः पुत्रस्थानीयः । महितेन इषुकलापेन त्रायते । बहु वा तदर्थं हितं कुर्वन्ति । चिश्चाकृणोति । शब्दानुकरणमेतत् इषुर्निष्क्रम्यमाणः चिश्चेत्येवं शब्दं करोति । समनावगत्य । संमना संग्रामान् अवगत्य ज्ञात्वा । स इषुधिः संकाः संकासं धत्ते अस्मिन् योधा इति संकाः संकीर्यन्ते अस्मिन्नरय इति संकाः शत्रुसंकटं वा । पृतनाश्च सर्वाः पृतनाः स्पर्द्धनीयतमाः संग्रामभक्तीः सर्वाः । पृष्ठे निनद्धः धानुष्कस्य पृष्ठे बद्धः प्रसूतः धानुष्केणाभ्यनुज्ञातः सन् जयति अत्र इषुधेः कर्तृत्वम् । विवक्षातः कारकाणि भवन्तीति वैयाकरणाः ॥ ४२ ॥

इषुधिः स्तूयते । ये इषुधिः तूणो बह्वीनामिषूणां पिता पालकः यतो वाणान् धरति । अस्येषुधेर्बहुः पुत्रः । वाणसमूहः पुत्रस्थानीयः पाल्यमानत्वात् । पुरून् बहून् त्रायते इति पुत्रः । स इषुधिः समना संग्रामान् अवगत्य ज्ञात्वा चिश्चाकृणोति चिश्चेति शब्दं करोति शब्दानुकरणमेतत् वाणे तूणान्निष्कम्यमाणे चिश्चेति शब्दो भवति । च पुनः स इषुधिर्धानुष्केन पृष्ठे निनद्धः बद्धोऽपि प्रसूतः अनुज्ञातः सन् सर्वाः पृतनाः जयति शत्रुसेनाः पराभवति । कीदृश्यः पृतनाः सङ्काः सङ्काः सचतेः सम्पूर्वाद्वा किरतेरिति ( निरु० ९, १४ ) यास्कोक्तेः सचतेः किरतेर्वा रूपम् सचन्ते सम्बध्यन्ते सङ्कीर्य्यन्ते वा योधा यासु ताः सङ्काः । विवक्षातः कारकाणि भवन्तीति वचनादिषुधेः कर्तृत्वम् ॥ ४२ ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनुयच्छन्ति रश्मयः ॥ ४३ ॥

(१)रथे तिष्ठन् । जगत्या अर्द्धेन सारथिः स्तूयतेऽर्द्धेन रश्मयः । सुसारथिः रथे तिष्ठन् नयति वाजिनः । प्रापयत्यश्वान् पुरः पुरतोऽवस्थितान् । यत्र यत्र कामयते । तं वयं स्तुम इति शेषः । अभीशूनाम् प्रग्रहाणां महिमानं महाभाग्यं पनायत पूजयत हे जनाः । ये मनः अश्वसंबन्धि चित्तम् पश्चात्सन्तः अनुयच्छन्ति अनुगम्य गृह्णन्ति रश्मयः यन्तारः ॥ ४३ ॥

अर्धेन सारथिरर्धेन रश्मयः स्तूयन्ते । जगती इयम् । सुषारथिः सुसारथिः शोभनः सारथिः यत्र यत्र प्रदेशे कामयते इच्छति मयात्र गन्तव्यमिति तत्र तत्र पुरो वर्त्तमानान् वाजिनः नयति प्रापयति । कीदृशः रथे तिष्ठन् । तं स्तुम इति शेषः । इदानीं रश्मयः स्तूयन्ते हे जनाः ! अभीशूनां रश्मीनां महिमानं महाभाग्यं यूयं पनायत स्तुत ! ये रश्मयः पश्चाद्वर्त्तमानाः सन्तः मनोऽश्वचित्तमनुयच्छन्ति अनुगम्य गृह्णन्ति वशवर्त्तिनं कुर्वन्तीत्यर्थः । पन स्तुतौ गुपूधूपेत्यादिना ( पा० ३, १, २८ ) आयप्रत्ययान्तात्पनेर्लोट् ॥ ४३ ॥

तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँ १॥ रनपव्ययन्तः ॥ ४४ ॥

(२) तीव्रान् घोषान् । अश्वाः स्तुयन्ते त्रिष्टुभा । तीव्रान्

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति । तद्यथा । रथे तिष्ठन् जगत्या अर्धेन सारथि : स्तूयते अर्धेन रश्मयः सुसारथिः रथे तिष्ठन् सन् पुरोऽग्रतोऽवस्थितान् वाजिनः यत्र यत्र कामयते तत्र तत्र नयति प्राप प्रापयति तं स्तुम इति शेषः हे जनाः अभिशूनां प्रग्रहाणां महिमानं पनायत महाभाग्यं पूजयन्तः रश्मयः पश्चात् सन्तो मनः अश्वचित्तम् अनुयच्छन्ति अनुगम्य गृह्णन्ति वशवर्त्तिनं कुर्वन्ति ॥ ४३ ॥

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु-

जयजयेत्युग्रान् घोषान् शब्दान् कृण्वते कुर्वन्ति । वृषपाणयः । वृषा अश्वाः पाणौ येषां संग्रहीतृप्रभृतीनां योक्तॄणां ते तथोक्ताः। युक्ताः श्वसन्तः अश्वाः रथेभिः रथैः । सह वा जयन्तः पूजयन्तः रथिनः ॥ तीव्रानेव घोषान् ह्रेषितादीन् कृण्वन्ति । अवक्रामन्तः प्रपदैः खुरैः अमित्रान् शत्रून् क्षिणन्ति क्षिण्वन्ति हिंसन्ति । अनपव्ययन्तः । व्यय क्षये । अपपूर्वादस्माच्छतृप्रत्ययः । अपव्ययन्तः नश्यन्तः न अपव्ययान्तोऽनपव्यन्तः न नश्यन्तः । अपरित्यजन्तो वा स्वामिनम् ॥ ४४ ॥

अश्वाः स्तूयन्ते । वृषाः अश्वाः पाणौ हस्ते येषां ते वृषपाणयोऽश्ववाराः तीव्रान् घोषान् जय जयेति शब्दान् कृण्वते कुर्वन्ति । अश्वा अपि रथेभिः रथैः सह वाजयन्तः गच्छन्तः सन्तस्तीव्रान् घोषान् ह्रेषाशब्दान् कुर्वन्ति शत्रून् क्षिणन्ति नाशयन्ति च । कीदृशाः अश्वाः प्रपदैः पादाग्रैः खुरैः अमित्रान् रिपून् अवक्रामन्तः आक्रामन्तः । अनपव्यन्तः व्यय क्षये अदन्तश्चुरादिः अपव्ययन्ति ते अपव्ययन्तः न अपव्ययन्तोऽनपव्ययन्तः अनश्यन्त । वज गतौ स्वार्थे णिच् वाजिनः ॥ ४४ ॥

रथवाहनꣳ हविरस्य नाम यत्रायुधं निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः ॥ ४५ ॥

---

द्रित पु० नास्ति । तद्यथा । तीव्रान् घोषान् । अश्वाः स्तूयन्ते त्रिष्टुभा वृषपाणयः वृषाः अश्वाः पाणौ येषां ते योक्तारः अश्ववाराः तीव्रान् घोषान् जय जये ति शब्दान् कृण्वते कुर्वन्ति अश्वाः रथेभिः रथैः सह वा जयन्तः पूजयन्तः अर्थात् रथिनः पूजयन्तः तीव्रान् घोषान् ह्रेषितानि कृण्वते प्रपदैः खुरैः अमित्रान् अवक्रामन्तः सन्तः शत्रुन् क्षिणन्ति क्षिण्वन्ति अनपव्ययन्तः व्यय क्षये अपपूर्वात् शतृप्रत्ययः न अपव्ययन्तो नश्यन्तः अपरित्यजन्तो वा स्वामिनम् ॥ ४४ ॥

(१)रथवाहणम् । रथस्तुतिः त्रिष्टुप् । यस्यास्यानसः रथवाहणं रथवोढ इति नाम । हविरिति नाम्नोऽर्द्धलोपः । हविर्द्धानमिति च द्वितीयं नाम । विमुच्य सयन्तृकं रथवाहणं करोति अनस्तत्कर्मेति कात्यायनः । तस्मादनस एव पौरोडाशेषु यजूꣳषि श्रुतिः । यत्र यस्मिन् आयुधं निहितं स्थापितम् । अस्य योद्धुः वर्म च संनहनम् । तत्रानसि रथम् शग्मं सुखम् उपसदेम उपसादयाम विश्वाहा सर्वदा वयम् सुमनस्यमानाः अनुकूलचित्ताः ॥ ४५ ॥

शकटद्वारा रथः स्तूयते । अस्यानसो रथवाहनं नाम रथं वहतीति रथवाहनम् वाजपेयेऽनसि रथस्यारोप्यमाणत्वात् । तथास्य हविः हविर्धानं नाम पृषोदरादित्वादुत्तरार्धलोपः । यत्रानसि अस्य योद्धुर्वर्म आयुधं च निहितं स्थापितम् तत्रानसि वयं रथमुपसदेम उपसादयामः । कीदृशं रथं शग्मं सुखकरम् । कीदृशा वयम् विश्वाहा सर्वदा सुमनस्यमानाः शोभनं मनो येषां ते सुमनसः असुमनसः सुमनसो भवन्ति सुमनस्यन्ते भृशादिभ्यो भुव्यच्वेरिति ( पा० ३, १, १२ ) क्यङ् ततः शानच् अनुकूलचित्ता इत्यर्थः । तत्रत्यस्य संहितायां निपातस्य चेति ( पा० ६, ३, १३६ ) दीर्घः ॥ ४५ ॥

स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः श-

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । रथवाहणम् । रथस्तुतिस्त्रिष्टुप् । अस्यानसः रथवाहणं नाम रथवोढ इति नाम हविरिति च नाम हविर्नाम्नोऽर्धलोपः । हविर्द्धानमिति द्वितीयं नाम विमुच्य संयत् । कं रथं वाहनं करोति अनस्तत्कर्मेति कात्यायनः तस्मादनस एव पौरोडाशे यजूंषीति श्रुतिः यत्रानसि अस्य योद्धुः आयुधं वर्म च निहितं तत्रानसि विश्वाहा सर्वदा सुमनस्यमानाः अनाकुलचित्ताः वयं शग्मं सुखं रथमुपसदेम उपसादयामः ॥ ४५ ॥

क्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्राः स-
तोवीरा उरवो व्रातसाहाः ॥ ४६ ॥

(१)स्वादु संसदः । रथगोपान् स्तौति त्रिष्टुप् स्वादु सुखकरं संसदः संसदनं येषान्ते स्वादुसंसदः रथगोप्तारः पितरः पातारः । वयोधाः अन्नस्यायुषो वा धारयितारः । कृच्छ्रेश्रितः क्लेशाश्रयिणः शक्तीवन्तः बलवन्त आयुधवन्तो वा । गभीराः गम्भीरप्रज्ञाना वा गम्भीरबला वा । चित्रसेनाः विचित्रसेनाः इषुबलाः इषुषु विशेषतो बलं येषान्ते तथोक्ताः । अमृध्राः अमृदवः उग्रशासनः सतोवीराः । सतः विद्यमानस्य बलस्य विविधमीरयितारो वा । पृथुजघनोरस्का वा । उरुमनसो वा व्रातसाहाः । व्राताः गणास्तेषामभिभवितारः । य इत्थम्भूताः पुरु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । स्वादुषꣳसदः रथगोपान् स्तौति त्रिष्टुप् च एवंविधाः पुरुषास्तेऽस्माकं रथगोप्तारो भवन्त्विति शेषः कीदृशाः स्वादुसंसदः स्वादुसुखकरं संसदः संसदनं येषां ते स्वादुसंसदः पितरः पातारः वयोधाः अन्नस्यायुषो वा धारयितारः कृच्छ्रेश्रितः क्लेशाश्रयिणः कृच्छ्रेश्रित इति एकं पदम् कृच्छ्रे कष्टे श्रीयन्ते इति कृच्छ्रेश्रितः सप्तम्या अलुक् दुःखे श्रयणयोग्याः दुःखनाशकत्वादिति वा शक्तीवन्तः शक्तिर्विद्यते येषां ते शक्तिवन्तः अश्वरश्मिमतीत्यादिना शक्तिशब्दस्य वकारे दीर्घः बलवन्तः आयुधवन्तो वा गम्भीराः गम्भीरबलाश्च चित्रसेनाः इषुबलाः इषुभिर्बलं येषां ते अमृध्राः अमृदवः उग्रशासनाः सतः शोभनस्य यजमानस्य अश्वमेधयाजिनः संबन्धिनो वीराः सतोवीरा इत्येकं पदं षष्ठ्या अलुक् यद्वा सतो विद्यमानस्य बलस्य विविधमीरयितारो वा उरवः पृथुजघनोरस्काः उरुमनसो वा व्रातसाहाः व्रतान् सहते इति व्रातसहाः पचाद्यच् अभिमाति पृतनेत्यादिना सहस्य दीर्घः व्राता गणास्तेषामभिभवितारः ॥ ४६ ॥

यास्तेऽस्माकं रथगोप्तारो भवन्त्विति शेषः ॥ ४६ ॥

रथगोपान् स्तौति । ईदृशा नरा अस्माकं रथं गोप्तारो भवन्त्विति शेषः । कीदृशाः स्वादुसंसदः स्वादु सुखं यथा तथा संसीदन्ति ते स्वादुसंसदः । पितरः पान्ति ते पितरः रक्षितारः । वयोधाः वयोऽन्नमायुर्वा दधति धारयन्ति वयोधाः । कृच्छ्रेश्रितः इत्येकं पदम् कृच्छ्रे कष्टे श्रीयन्ते सेवन्ते कृच्छ्रेश्रितः कर्मणि क्विप् अलुक् सप्तम्याः दुःखे सति आश्रयणयोग्याः दुःखनाशकत्वात् यद्वा सप्तमी द्वितीयार्थे कृच्छ्रं श्रयन्ति कृच्छ्रेश्रितः दुःखं प्राप्यापि स्वामिसेवनपराः । शक्तीवन्तः शक्तिः सामर्थ्यमायुधं वा अस्ति येषां ते । अश्वरश्मिमतीत्यादिप्रातिशाख्यसूत्रेण ( ३, ६, २ ) शक्तिशब्दस्य दीर्घः । गभीराः गम्भीरबला गम्भीरप्रज्ञाश्च । चित्रसेनाः चित्रा नानाविधा सेना येषां ते । इषुबलाः इषुभिर्बाणैर्बलं येषां ते । अमृध्राः मृध्राः मृदवो न भवन्त्यमृध्राः कठिनाङ्गा उग्रशासना वा । सतोवीराः इत्येकं पदम् सतोऽश्वमेधयाजिनो वीराः शूराः यद्वा सतो विद्यमानस्य बलस्य वीराः प्रेरकाः विविधमीरयन्तीति वीराः षष्ठ्या अलुक् । उरवः विशालाः पृथुजघनोरस्का इत्यर्थः । व्रातसाहाः व्रातान् शूरसमूहान् सहन्तेऽभिभवन्ति ते व्रातसहाः पचाद्यच् अभिमातिपृतनेत्यादिना ( प्रातिशा० ३, ६, २७ ) सूत्रेण सहतेरुपधादीर्घः ॥ ४६ ॥

**ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ ४७ ॥**

( १ ) ब्राह्मणासः । जगती लिङ्गोक्तदेवता । ऋतावृध

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । ब्राह्मणासः जगती लिङ्गोक्तदेवताः ऋतावृधः प्रभृति प्रत्यक्षकृतो मन्त्राः ब्राह्मणास इत्यादिपरोक्षकृतः अत एवं व्याख्यायते । हे ऋतावृधः सत्यवृधः देवाः इत्यध्याहारः रक्ष रक्षतेति

इत्यादिः प्रत्यक्षभूतो मन्त्रः ब्राह्मणास इत्यादिः परोक्षकृतः। अत एवं व्याख्यायते। हे ऋतावृधः सत्यवृधो वा यज्ञवृधो वा देवा। इत्यध्याहारः सामर्थ्यात् रक्ष। रक्षत इति वचनव्यत्ययः। माकिः। मा च कश्चन नः अस्माकम्। अघशंसः अघानि पापानि यः शंसति प्रकाशयति सोऽघशंस ईशत ईष्टे इति वचनव्यत्ययः। भवत्प्रसादाच्च। ब्राह्मणासः ब्राह्मणाः पितरः सोम्यासः सोमसम्पादिनः। पान्त्वित्यत्रान्वयः शिवे कल्याणकारिण्यौ द्यावापृथिवी च अनेहसा अनुपहिंसिन्यौ अनपराधिन्यौ वा पाताम्। पूषा च नः अस्मान् पातु दुरितात् अशुभात्॥ ४७॥

जगती लिङ्गोक्तदेवता। ब्राह्मणासः ब्राह्मणाः नोऽस्मान् पान्तु रक्षन्तु पात्वित्यस्यार्थवशाद्वचनव्यत्ययः कार्य्यः। पितरः च पान्तु। कीदृशाः सोम्यासः सोम्याः सोमसम्पादिनः सोमपानयोग्या वेत्युभयोर्विशेषणम्। द्यावापृथिवी द्यावाभूमी नः पाताम्। कीदृश्यौ शिवे कल्याणकारिण्यौ। अनेहसा अनेहसौ नास्ति एहोऽपराधो ययोस्ते अपराधनिवर्त्तिके। किञ्च पूषा सूर्य्यो नोऽस्मान् दुरितात् पातु। एवं परोक्षेणोक्त्वा प्रत्यक्षमाह हे ऋतावृधः। ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतवृधः देवाः संहितायामृतस्य दीर्घः रक्ष रक्षतास्मान् वचनव्यत्ययः। माकिः मा कश्चन अघशंसः पापी नोऽस्माकमीशत ऐश्वर्य्यं मा करोतु वयं दुष्टवशा मा भूमेत्यर्थः॥ अघं पापं शंसति वक्ति प्रकाशयति वाघशंसः दुष्टः। ईशतेति वचनव्यत्ययः॥ ४७॥

---

वचनव्यत्ययः। माकिः मा कश्चित् नोऽस्माकम् अघशंसः अघानि पापानि शंसति प्रकाशयतीत्यघशसः ईशत इष्टेति वचनव्ययः भवत्प्रसादाच्च सोम्यासः सोमसंपादिनः ब्राह्मणाः पितरः नोऽस्मान् दुरितात् अशुभात् पान्तु द्यावापृथिवी च नः पातां किम्भूते शिवे कल्याणकारिण्यौ अनेहसा अनुपहिंसिन्यौ अनपराधिन्यौ वा पूषा च नः दुरितात् पातु॥ ४७॥

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रा-स्मभ्यमिषवः शर्म यंसन् ॥ ४८ ॥

(१) सुपर्णं वस्ते । द्वाभ्यां त्रिष्टुबनुष्टुभ्यामिषुं स्तौति । या सुपर्णं वस्ते सुपर्णः पक्षी तद्विकारः सौपर्णमिति भवति । तत्र कृत्स्नवन्निगमः राजानमभिप्रेत्य । मृगो अस्या दन्तः य-स्याश्चास्या इषोः मृगो दन्तः फलम् मृगयतेर्मृगः । स हि वेध्य-म्मृगयते या च गोभिः सन्नद्धा । गोविकारैः श्लेष्मस्नायुभिः संनद्धा । पतति शत्रुबलं प्रति । प्रसूता प्रेरिता धनुष्मता सा इषुः यत्र नरः सञ्च विचन्द्रवन्ति । सगङ्गच्छन्ति च । विगच्छ-न्ति च तत्र अस्मभ्यम् इषवः इषुरिति सन्नतिः । शर्म शरणम् यंसन् यच्छत्विति सन्नतिः ॥ ४८ ॥

द्वाभ्यामिषुं स्तौति आद्या त्रिष्टुप् अन्यानुष्टुप् । या इषुः सु-पर्णं पक्षिपिच्छं वस्ते परिधत्ते वस परिधाने शोभनं पर्णं पिच्छं यस्य स सुपर्णः पक्षी तस्य विकारः सौपर्णम् । तत्र कृत्स्नवन्निगमा भवन्तीति ( निरु० २, ५ ) यास्कोक्तेः सुपर्णशब्देन तत्पिच्छं गृह्यते वाणपुच्छे पिच्छस्यारोप्यमाणत्वात् किञ्च अस्या इषोः दन्तः फलं मृगः मृगयतेऽन्विष्यति रिपून् हन्तुमिति मृगः

(१)अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । सुपर्णं वस्ते द्वाभ्यां त्रिष्टुबनष्टुब्भ्याम् इषुं स्तौ-ति या इषुः सुपर्णं वस्ते परिधत्ते सुपर्णः पक्षी तस्य विकारः सौपर्ण-मिति भवति तत्र कृत्स्नवन्निगमः वाजमभिप्रेत्य अस्याः इषोः मृगो दन्तः फलं मृगो मृगयते स हि वेध्यं मृगयते या च गोभिः गोविकारैः श्लेष्मस्नायुभिः संनद्धा प्रसूता धनुष्मता प्रचोदिता सती पतति शत्रुबलं प्रति सा इषुः यत्र नरः संद्रवन्ति विद्रवन्ति च तत्र अस्म-भ्यम् इषवः इषुरिति संनतिः शर्म शरणं यंसत् यच्छतु ददातु ॥४८॥

मृग मार्गणे चुरादिरदन्तः पचाद्यच् मृगो मृगयतेरिति ( निरु० ९, १९ ) यास्कः शल्यं हि वेध्यं मृगयते । किञ्च या इषुः गोभिः गोविकारैः स्नायुभिः सन्नद्धा बद्धा प्रसूता धनुष्मता प्रेरिता सती पतति शत्रुबलं प्रति गच्छति । किञ्च यत्र नरो योद्धारः सन्द्रवन्ति च सम्यक् गच्छन्ति विद्रवन्ति च विविधं प्रसरन्ति चौ समुच्चये तत्र रणे इषवः बाणाः अस्मभ्यं शर्म सुखं यंसन् यच्छन्तु यमु उपरमे लेटि तिप इलोपेऽडागमे सिब्बहुलं लेटीति ( पा० ३, १, ३४ ) सिबागमे यंसन्निति रूपम् सुखं ददतु ॥ ४८ ॥

ऋजीते परि॑वृङ्ग्धि नोऽश्मा॑ भवतु नस्त॒नूः । सोमो॒ अधि॑ब्रवीतु नोऽदि॑ति॒ः शर्म॑ यच्छतु ॥ ४९ ॥

( १ ) ऋजीते परि । हे ऋजीते ऋजुगामिनि । परिवृङ्ग्धि नः परिवर्जयास्मान् । अश्मा भवतु नस्तनूः अश्ममयी च भवतु नः अस्माकं तनूः शरीरम् । सोमश्च अधिब्रवीतु आधिक्येन वदतु नोऽस्माञ्जीवनाय । अदितिश्च शर्म शरणम् यच्छतु ददातु ॥ ४९ ॥

ऋजुः सरला इतिर्यस्याः सा ऋजीतिः टिलोप आर्षः । हे ऋजीते ऋजुगामिनि ! नोऽस्मान् परिवृङ्ग्धि परिवर्जय अस्मासु मा पतेत्यर्थः । किञ्च नोऽस्माकं तनूः शरीरम् अश्मा पाषाणतुल्यदृढा भवतु। सोमः नोऽस्मानधिब्रवीतु अधिकान् वदतु । अदितिः देवमाता शर्म सुखं यच्छतु ददातु ॥ ४९ ॥

आज॑ङ्घन्ति॒ सान्वे॑षां ज॒घना॒ँ२॥ उप॑जिघ्नते । अ-

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । ऋजीते हे ऋजीते ऋजुः इतिर्गमनं यस्याः सा ऋजीतिः तत्संबोधनं हे ऋजुगामिनि नोऽस्मान् परिवृङ्ग्धि परिवर्जय नोऽस्माकं तनूः अश्मा अश्ममयी भवतु सोमः नोऽस्मान् अधिब्रवीतु आधिक्येन वदतु अदितिश्च शर्म यच्छतु शरणं ददातु ॥ ४९ ॥

श्वांजनि प्रचेतसोऽश्वान् समत्सु चोदय ॥ ५० ॥

(१) आजङ्घन्ति । कशास्तुतिः । अनुष्टुप् येषामश्वानाम् आजङ्घन्ति अश्वारोहाः सानु सानूनि मांसोपचितान्यङ्गानि । येषामेषाश्च जघनान् जघनानि उपजिघ्नते उपनिघ्नन्ति । अश्वाजनि अश्वाञ्जनयतीत्यश्वाजनी तस्याः सम्बोधनं हे अश्वाजनि । प्रचेतसः परिदृष्टकारिणः प्रकृष्टज्ञानान्वा । अश्वान् समत्सु सङ्ग्रामेषु चोदय प्रेरय ॥ ५० ॥

अनुष्टुप् । कशा स्तूयते अज गतौ क्षेपणे च । अश्वाः अज्यन्ते क्षिप्यन्ते यया सा अश्वाजनी हे अश्वाजनि कशे ! समत्सु संग्रामेषु त्वमश्वान् चोदय प्रेरय जयाय कीदृशानश्वान् प्रचेतसः प्रकृष्टं शूरं चेतो मनो येषां ते । हे कशे ! यया त्वयाश्ववारा एषामश्वानां सानु सानूनि सानुतुल्यानि मांसोपचिताङ्गानि आजङ्घन्ति वचनव्यत्ययः आघ्नन्ति ताडयन्ति जघनान् कटिभागान् उपजिघ्नते निघ्नन्ति । तुरङ्गारोहा ययाश्वान् वशयन्ति सा त्वमश्वान् प्रेरयेत्यर्थः ॥ ५० ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांꣳसं परिपातु विश्वतः ॥ ५१ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । आजङ्घन्ति कशास्तुतिः अनुष्टुप् एषामश्वानां सानु सानूनि समुच्छ्रितानि मांसोपचितान्यङ्गानि आजङ्घन्ति आघ्नन्ति अश्ववाराः जघनान् जघनानि च उपजिघ्नते उपनिघ्नन्ति हे अश्वाजनि अश्वानामजनी अज गतौ क्षेपणे च क्षेपणी तस्याः संबोधनम् हे अश्वाजनि हे कशे प्रचेतसः परिदृश्यकारिणः प्रज्ञानान् अश्वान् समत्सु ग्रामेषु चोदय प्रेरय जयाय ॥ ५० ॥

(१) अहिरिव । हस्तघ्नः स्तूयते त्रिष्टुप् । हस्ते एव स्थितो हन्ति यः स हस्तघ्नः खेटकः प्रकोष्ठादित्राणं वा । यः हस्तघ्नः अहिरिव सर्प इव भोगैः । शरीरावयवैः । पर्येति परिवेष्टयति बाहुम् । ज्याया हेतिं परिबाधमानः । ज्याया आयुधात्परित्रायमाणः । स हस्तघ्नः विश्वा विश्वानि सर्वाणि वयुनानि विद्वान् प्रजानन् परिदृष्टकारी वा । पुमान् शूरो क्लीबो वा । पुमांसमक्लीबं परिपातु विश्वतः सर्वतः ॥ ५१ ॥

हस्तघ्नः स्तूयते । सप्त त्रिष्टुभः हस्ते स्थितो हन्ति हस्तघ्नः खेटकः यद्वा हस्त हन्ति प्राप्नोति हस्तघ्नः प्रकोष्ठत्राणम् पुमांसं विश्वतः सर्वतः परिपातुः रक्षतु । किम्भूतो हस्तघ्नः विश्वा विश्वानि सर्वाणि वयुनानि ज्ञानानि विद्वान् जानन् । तथा पुमान् पुंस्त्वयुक्तः शूर इत्यर्थः । यो हस्तघ्नो भोगैः स्वशरीरावयवैः कृत्वा बाहु पर्य्येति हस्तं वेष्टयति क इव अहिरिव यथाहिः सर्पो भोगैः स्वदेहैः हस्तादिकं वेष्टयति । कीदृशः ज्यायाः हेतिं वाणं शत्रुप्रेरितम् परिवाधमानः निवर्त्तयन् खेटकपक्षे तु ज्याया हेतिं प्रहारं निवारयन् ज्याघातस्य निवारकत्वात् ॥ ५१ ॥

वन॑स्पते वी॒ड्व॑ङ्गो॒ हि भू॒या अ॒स्मत्स॑खा प्र॒तर॑णः सु॒वीरः॑ । गोभिः॒ सन्न॑द्धो असि वी॒डय॑स्वास्था॒ता ते॑ जयतु॒ जेत्वा॑नि ॥ ५२ ॥

---

(१) अत्र वारणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अहिरिव हस्तघ्नः स्तूयते त्रिष्टुप् हस्ते स्थितो हन्ति हस्तघ्नः खेटकः प्रकोष्ठादित्राणं वा यः अहिः सर्प इव भोगैः शरीरावयवैः बाहु पर्येति परिवेष्टयति किम्भूतः ज्यायाः हन्ति इषुं परिबाधमानः वाणाद्रक्षन् स हस्तघ्नः विश्वा सर्वाणि वयुनानि प्रज्ञानानि विद्वान् विप्रजानन् परिदृष्टकारी पुमान् शूरः अक्लीबः पुमासम् अक्लीबं मां विश्वतः सर्वतः परिपातु ॥ ५१ ॥

(१) वनस्पते वीड्वङ्गः । रथदुन्दुभिदेवत्यावृचौ त्रिष्टुभौ ऐन्द्रावान्त्योऽर्द्धर्चः । हे वनस्पते वानस्पत्य रथ । कृत्स्नवन्निगमः । वीड्वङ्गो हि भूयाः । वीडुशब्दो दृढवचनः । दृढाङ्गो भव । अस्मत्सखा सन् । प्रतरणः प्रतरन्त्यनेन सङ्ग्रामानिति प्रतरणः सुवीरः साधुवीरः । यतश्च त्वम् गोभिः । श्लेष्मचर्मभिः सन्नद्धोऽसि अतस्त्वां ब्रवीमि । वीडयस्व संस्तम्भयस्वात्मानम् आस्थाता ते । संस्थाता च ते तव जयतु जेत्वानि जेतव्यानि॥५२॥

तिस्र ऋचो रथदेवताः । हे वनस्पते वनस्पतिविकार काष्ठमय रथ ! कृत्स्नवन्निगमः ( निरु० २, ५ ) त्वं वीड्वङ्गः दृढाङ्गो भूयाः भव वीडूनि अङ्गानि यस्य । कीदृशः अस्मत्सखा अस्माकं मित्रभूतः प्रतरणः प्रतरति संग्रामपारं गच्छति प्रतरणः । सुवीरः शोभनो वीरो रथी यत्र । किञ्च हे रथ ! यतः त्वं गोभिः गोविकारैश्चर्मभिः सन्नद्धः बद्धोऽसि अतो वीडयस्व आत्मानं स्तम्भय । किञ्च ते तवास्थाता आरोढा रथी जेत्वानि जेतव्यानि रिपुधनानि जयतु हि पादपूरणः ॥ ५२ ॥

दिवः पृथिव्याः पर्य्योज उद्भृतं वनस्पतिभ्यः पर्य्याभृतꣳ सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज ॥ ५३ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठमकः मुम्बईमु०पु० नास्ति । तद्यथा । वनस्पते रथदुन्दुभिदेवत्यौ तृचौ त्रिष्टुभौ इन्द्रदेवत्योऽर्धर्चः हे वनस्पते वानस्पत्य रथ कृत्स्नवन्निगमः वीड्वङ्गो भूयाः वीडुशब्दो दृढवचनः दृढाङ्गो भव अस्मत्सखा सन् प्रतरणः प्रतरन्त्यनेन संग्रामान् इति प्रतरणः सुवीरः साधुवीरः यतश्च त्वं गोभिः गोविकारैः श्लेष्मचर्मभिः संनद्धः असि अतः वीडयस्व सस्तम्भयस्व आत्मानं ते तव आस्थाता रथी जेत्वानि जेतव्यानि शत्रुधनानि जयतु हिः पादपूरणः ॥ ५२ ॥

(१) दिवः पृथिव्याः दिवः द्युलोकात् यत् ओजः परि सर्वतः उद्भृतम् । उद्धृतम् । यच्च पृथिव्याः पृथिवीलोकात् परि उद्भृतम् । यच्च वनस्पतिभ्यः । वनस्पतिशकाशात् परि सर्वतः आभृतम् आहृतम् सहः बलम् यच्च अपां सम्बन्धि ओज्मानम् ओजः परिमाणम् । तदेतच्चतुष्टयं रथभावमुपनीतम् । परिगोभिरावृतम् । परिसमन्तात् गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः आवृतमुपनिबद्धम् इन्द्रस्य वज्रम् । इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयं चेत्यभिधाय । रथेन च शरेण च राजन्यबन्धव इति श्रुतिः । तदभिप्रायमेतत् हविषा तमीदृशं रथं यज हे अध्वर्यो ॥ ५३ ॥

हे अध्वर्यो ! त्वं हविषा कृत्वा रथं यज । कीदृशं रथम् दिवः द्युलोकात् पृथिव्याः भूमेः सकाशात् पर्युद्भृतं समन्तादुद्धृतम् ओजः तेजः । तथा वनस्पतिभ्यो वृक्षेभ्यः पर्य्याभृतं समन्तादाहृतमानीतं सहः बलम् । तथा अपां जलानामोज्मानं तेजः सारभूतम् ओजः बलतेजसोरिति धातोः अन्येभ्योऽपि दृश्यन्ते इति ( पा० ३, २, ७५ ) मनिन् ओजयति बलिनं करोतीति ओज्मा तम् । द्यावाभूमिवृक्षजलानां तेजश्चतुष्टयेन निर्मितमित्यर्थः । तथा गोभिः किरणैः पर्यावृतं वेष्टितम् तेजोनिर्मितत्वात् यद्वा गोभिः चर्मभिर्वेष्टितम् । तथा इन्द्रस्य वज्रमिन्द्रवज्राज्जातमित्यर्थः इन्द्रो यदा वृत्राय वज्रं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । दिवः पृथिव्याः दिवः द्युलोकात् ओजः परि अद्भुतं सर्वतः उद्धृतं पृथिव्याः यत् ओजः परि अद्भुतं वनस्पतिभ्यः सकाशात् यत्सहः बलं पर्याभृतम् आहृतम् अपां संबन्धि यत्सहः पर्याहृतम् ओज्मानं परिमाणं तत्तेजश्चतुष्टयं रथभावमुपनीतं गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः परिसमन्तात् आवृतम् उपनिबद्धम् इन्द्रस्य वज्रम् इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयं चेत्यभिधाय रथेन च शरेण राजन्यबन्धव इति श्रुतिः तदभिप्रायमेतत् ईदृशं रथं हविषा यज । हे अध्वर्यो ॥ ५३ ॥

प्रजहार तदा वृत्रशरीरकाठिन्येन प्रतिहतं चतुर्धा जातम् यूपः स्फ्यः रथः शरश्चेति चतुःखण्डाः तत्र यूपस्फ्यौ विप्रैर्गृहीतौ रथशरौ नृपैरिति श्रुतिकथानुसन्धेया इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयमित्यभिधाय रथेन शरेण चेति राजन्यबन्धव इति श्रुतेः ( १, २, ४, १—२ ) ईदृशं रथं यजेत्यर्थः ॥५३॥

इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ । सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ ५४ ॥

( १ ) इन्द्रस्य वज्रः । यस्त्वम् इन्द्रस्य वज्रः असि मरुतां च अनीकं मुखमसि । मित्रस्य च गर्भोऽसि । वरुणस्य च नाभिरसि । सः त्वम् इमाम् नः अस्माकम् हव्यदातिं हविषो दानम् जुषाणः सेवमानः । हे देव रथ प्रतिहव्या गृभाय प्रतिगृभाय प्रतिगृहाण हव्या हवींषि ॥ ५४ ॥

हे रथ ! हे देव ! स त्वं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण । कीदृशः त्वम् इन्द्रस्य वज्रः वज्रोत्पन्नत्वात् । मरुतामनीकं मुखं मुख्यः देवानां जयप्रापकत्वात् । मित्रस्य देवस्य गर्भः गीर्य्यते गर्भः गृणातेर्भप्रत्ययः सूर्य्येण स्तूयमानः । वरुणस्य नाभिः नभ्यतेऽरिर्हिंस्यतेऽनेनेति नाभिः नभ हिंसायाम् इण्प्रत्ययः वरुणस्य हननसाधनम् । नोऽस्माकमिमां हव्यदातिं हविषो दानं जुषाणः सेवमानः । सेमामित्यत्र सोऽचि लोपे चेत्पादपूरणमिति (पा० ६, १. १३४ ) सन्धिः । गृभाय गृह्णातेर्हलः श्नः शानज्झावित्यनुवृत्तौ (पा० ३, १, ८३) छन्दसि शायजपीति ( पा० ३, १८४ ) हौ परे श्नाप्रत्ययस्य शायजादेशः हस्य भश्च ॥ ५४ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । इन्द्रस्य वज्रः हे देव हे रथ यः त्वम् इन्द्रस्य वज्रः मरुतां च अनीकं मुखं मित्रस्य गर्भः वरुणस्य नाभिरसि सः त्वं नोऽस्माकम् इमां हव्यदातिं हविषो दानं जुषाणः सेवमानः सन् हव्या हवींषि प्रतिगृभाय प्रतिगृहाण ॥ ५४ ॥

उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून् ॥ ५५ ॥

( १ ) उपश्वासय। उपशब्दय पृथिवीम् उत द्याम् अपि च उपशब्दय द्याम्। पुरुत्रा ते बहुधा च ते तव एकस्य सतः घोषं मनुतां मन्यन्ताम्। विष्ठितम् विविधं स्थितं स्थावरम् जगत् जङ्गमञ्च। यस्त्वमेवास्माभिः प्रार्थितः स त्वम् हे दुन्दुभे। सजूः समानप्रीतिः सन् इन्द्रेण सह देवैश्च। दूराद्दूरतरम् अपसेध अपगमय शत्रून् ॥ ५५ ॥

तिस्र ऋचो दुन्दुभिदेवत्याः। हे दुन्दुभे ! स त्वं पृथिवीमुत द्यामन्तरिक्षमपि उपश्वासय उपशब्दय श्वसिः शब्दार्थः विष्ठितं विविधं स्थितं जगत् स्थावरजङ्गमात्मकं विश्वम् पुरुत्रा बहुधा ते त्वां मनुतां जानातु दुन्दुभिर्नदतीति। स त्वं दूराद्दवीयः अतिदूरं शत्रूनपसेध अपनमय अत्यन्तं दूरं दवीयः स्थूलदूरेति ( पा० ६, ४, १५६ ) रेफलोपपूर्वगुणौ। कीदृशः त्वम् इन्द्रेण देवैश्च सजूः प्रीतियुक्तः ॥ ५५ ॥

आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिता बाधमानः। अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥ ५६ ॥

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० नास्ति। तद्यथा। उपश्वासयः। हे दुन्दुभे पृथिवीम् उत द्याम् उपश्वासय उपशब्दय विष्ठितं विविधं स्थितं स्थावरं जगत् जङ्गमं च ते तव एकस्य सतः घोषं पुरुत्रा बहुधा मरुतां मन्यतां यस्त्वमेवमस्माभिः प्रार्थितः स त्वम् इन्द्रेण देवैश्च सजूः समानप्रीतिः सन् दूराद्दवीयः दूराद् दूरतरं शत्रून् अपसेध अपगमय ॥ ५५ ॥

( १ ) आक्रन्दय । हे दुन्दुभे आक्रन्दय दीनान् शब्दान्कारय अहो पलायध्वं पिता मे हतो भ्राता मे हत इति । बलं शत्रुसेनाम् ओजो न आधाः ओजस्तेजः नः अस्माकम् आधाः आधेहि । किञ्च निष्टनिहि । निश्चितं शब्दं जयाय कुरु । दुरिता बाधमानः दुरितानि अपगमयन् । किञ्च । अपप्रोथ प्रोथतिर्नाशनार्थः । अपकृत्यापकृत्य प्रोथ नाशय । दुच्छुनाः दुष्टशुनः इव याः सेनः सुखवचनो वा शुनाशब्दः दुःसुखाः विसर्जनीयस्य दत्वम् । इतः सेनायाः । यतश्च त्वम् इन्द्रस्य मुष्टिरसि अतो ब्रवीमि । वीडयस्व दृढीकुरु आत्मानम् ॥ ५६ ॥

हे दुन्दुभे । त्वं बलं शत्रुसैन्यमाक्रन्दय रोदय पलायध्वं मदीयाः सर्वे हता इत्यादिदीनरवं कारयेत्यर्थः । नोऽस्माकमोजः तेजः आधाः अधेहि देहि । दुरिता दुरितानि पापानि बाधमानो निराकुर्वन् सन् निष्टनिहि शब्दं कुरु स्तन शब्दे चुरादिरदन्तः । किञ्च इतोऽस्मत्सेनायाः सकाशात् दुच्छुनाः दुच्छुनः दुष्टाश्च ते श्वानश्च दुच्छ्वानः तान् दुष्टान् शुनः श्वसदृशान् शत्रूनपप्रोथ नाशय प्रोथतिर्नाशनार्थः । यतः त्वमिन्द्रस्य मुष्टिः असि मुष्टिवदङ्गभूतोऽसि अतो वीडयस्व आत्मानमस्मान् दृढय ॥ ५६ ॥

आमूरज प्रत्यावर्त्तयेमाः केतुमद् दुन्दुभिर्वावदी-

---

( २ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मुद्रित पु० नास्ति तद्यथा । आक्रन्दय हे दुन्दुभे बलं शत्रुसेनाम् आक्रन्दय दीनान् शब्दान् कारय अहो पलायध्वं पिता मे हतो भ्राता मे हत इति ओजस्तेजः नोऽस्माकम् आधाः आधेहि किञ्च दुरिता दुरितानि बाधमानः अपगमयन् निष्टनिहि निश्चितं स्तनिहि शब्दं कुरु जयाय किञ्च इतः सेनायाः दुच्छुनाः दुष्टशुनः सुखवचनो वा शुनाशब्दः दुःसुखा विसर्जनीयस्य दत्वम् अपप्रोथ प्रोथतिर्नाशनार्थः अपकृत्य नाशय यतश्च त्वम् इन्द्रस्य मुष्टिरसि अतो वीडयस्व दृढीकुरु आत्मानम् ॥ ५६ ॥

ति । समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ५७ ॥

(१) आमूः । ऐन्द्री आअज । अज गतिक्षेपणयोः । आक्षिप । अमूः शत्रुसेनाः । प्रत्यावर्तय इमाः । प्रत्यावर्तय जितं जितमिति । इमाः अस्मदीयसेनाः किञ्च ॥ केतुमत् प्रज्ञातवान् दुन्दुभिः वावदीति । लोडर्थे लट् अत्यर्थं वदतु । जयप्रकाशकम् ॥ किञ्च समश्वपर्णाश्चरन्ति नो नरः । अत्रापि लोडर्थे लट् । संचरन्तु अश्वपर्णाः अश्वपतनाः नो नरः अस्मदीया मनुष्या संग्रामेण । हे इन्द्र अस्माकं रथिनः जयन्तु त्वत्प्रसादादिति शेषः ॥ ५७ ॥

हे इन्द्र ! अमूः शत्रुसेनाः त्वमा अज समन्तात्परिक्षिप अज गतिक्षेपणयोः । यतो दुन्दुभिः केतुमत् प्रज्ञावत् यथा वावदीति अत्यन्तं वदति अत इमाः अस्मत्सेनाः प्रत्यावर्त्तय जयं प्रापय्य प्रत्यानय । किञ्च नोऽस्माकं नरः योधाः सञ्चरन्ति कीदृशा नरः अश्वपर्णाः अश्वस्येव पर्णं पतनं येषां ते । किञ्च अस्माकं रथिनः रथस्थाः जयन्तु युद्धे जयं प्राप्नुवन्तु ॥ ५७ ॥

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्व-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई पु० नास्ति । तद्यथा । आ अमूः अर्धर्चे ऐन्द्र हे इन्द्र अमूः शत्रुसेना आ अज आक्षिप अज गतिक्षेपणयोः इमाः अस्मदीयसेनाः प्रत्यावर्तय जित जितमिति किञ्च दुन्दुभिः केतुमत् प्रज्ञावत् यथा वावदीति लोडर्थे लट् अत्यर्थं वदतु किञ्च अश्वपर्णाः अश्वपतनाः नोऽस्माकं नरो मनुष्याः संचरन्ति अत्रापि लोडर्थे लट् संचरन्तु हे इन्द्र अस्माकं रथिनः संग्रामं जयन्तु त्वत्प्रसादादित्यर्थः ॥ ५७ ॥

देव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः संᳬहितो-
ऽधोरामः सावित्रो वारुणः कृष्ण एकशितिपात्
पेत्वः ॥ ५८ ॥

(१) आग्नेयः कृष्णग्रीव इति श्रुतिः । आ अध्यायपरिसमा-
प्तेः । द्वयोरेकादशिन्योः पशुदेवतासबन्धविधात्री परतो द्वादश-
हविषो वेष्टेर्देवताः ॥ ५८ ॥

अश्वमेधे श्रुतिरस्ति द्वे त्वेवैते एकादशिन्यावालभेतेति ( १३, ५, १, ३ ) तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनोच्यन्ते तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रतिपादकानि न तु मन्त्राः। कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १, मेषी सारस्वती सरस्वतीदेवताका २, बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः ३, श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः ४, शिति श्यामं पृष्ठं यस्य स शितिपृष्ठः बार्हस्पत्यः बृहस्पतिदेवत्यः ५, शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः ६, अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः ७, कल्माषः कर्बुरो मारुतः मरुद्देवत्यः ८ संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः ९, अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः १०, एकः शितिः श्वेतः पादो यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः ११, एवमेकादश जाताः ॥ ५८ ॥

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सा-
वित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ
मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी
वारुणः पेत्वः ॥ ५९ ॥

(१) स्पष्टार्थः ॥ ५९ ॥

द्वितीयैकादशिनीपशुदेवानाह । रोहितो रक्तोऽञ्जिस्तिलको य-

स्य सोऽनड्वान् वृषभोऽनीकवतेऽग्नये आलभ्यः अनीकं मुखं सैन्यं वा यस्य सोऽनीकवान् तस्मै १, अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवतौ २, ३. रजतवर्णावभिर्ययोस्तौ रजतनाभी द्वौ पौष्णौ पूषदेवत्यौ ४, ५, पिशङ्गौ पीतौ तूपरौ निःश्रृङ्गौ वैश्वदेवौ विश्वदेवत्यौ ६, ७, कल्माषः कर्बुरो मारुतः ८, कृष्णः श्यामोऽजो मेषः आग्नेयः अग्निदेवत्यः ९, मेषी सारस्वती १०, पेत्वः वेगवान् वरुणदेवत्यः ११, एवमेकादश ॥ ५९ ॥

अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविँशाभ्यां वैराजाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय चरुः सवित्र औष्णिहाय त्रयस्त्रिँशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥ ६० ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायाम्
ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

(१) अत्र वाराणसी० लि पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति। तद्यथा। आग्नेयः कृष्णग्रीव इत्यादिश्रुतिः आ अध्यायपरिसमाप्तेः द्वयोरेकादशिन्योः पशुदेवतासंबन्धविधायिनी परतो द्वादशाह विषयो वेष्टेर्दैवताः ॥ ५८ ॥ ५९ ॥ ६० ॥

इति मन्त्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अग्नयेऽष्टाकपालः पुरोडाशः कार्यः कीदृशायाग्नये गायत्राय त्रिवृते स्तुताय रथान्तराय साम्ना स्तुताय त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः कीदृशेभ्यः जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपेभ्यः वैरूपसामस्तुतेभ्यः मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः कीदृशाभ्यामानुष्टुभाभ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् वैराजाभ्यां वैराजसामस्तुताभ्याम् बृहस्पतये चरुः कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्वराय शाक्वरसामस्तुताय सवित्रे द्वादशकपालः पुरोडाशः कीदृशाय सवित्रे औष्णिहाय उष्णिक्छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानाह प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः विष्णुपत्न्यै अदित्यै चरुरेव वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः ॥ ६० ॥

इति उव्वटकृतौ मन्त्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

अथाग्निषोमीयस्य पशुपुरोडाशमनुदिशामावेष्टीर्निर्वपतीत्युपक्रम्य तदाहुर्दशहविषमन्त्यामिष्टिं निर्वपेदिति श्रुत्या दशहविष्कावेष्टिसंज्ञेष्टिः कथिता तस्या देवता हवींषि चाह । इमान्यपि ब्राह्मणवाक्यानि न मन्त्राः । अग्नयेऽष्टाकपालः पुरोडाशः कार्यः अष्टसु कपालेषु संस्कृतोऽष्टाकपालः तद्धितार्थोत्तरपदसमाहारे चेति ( पा० २, १, ५१ ) समासः अष्टनः कपाले हवींषीति ( पा० ६, ३, ४६ वा०

२ ) अष्टन्शब्दस्य दीर्घः । कीदृशायाग्नये गायत्राय गायत्र्या स्तुताय त्रिवृते त्रिवृत्स्तोमेन स्तुताय राथन्तराय रथन्तरसाम्ना स्तुताय १, इन्द्राय एकादशकपालः पुरोडाशः समासः पूर्ववत् । कीदृशाय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय २, विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः। कीदृशेभ्यः जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपेभ्यः वैरूपसामस्तुतेभ्यः ३, मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः । कीदृशाभ्यामानुष्टुभाभ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम वैराजाभ्यां वैराजसामस्तुताभ्याम् ४, बृहस्पतये चरुः । कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्वराय शाक्वरसामस्तुताय ५, सवित्रे द्वादशकपालः पुरोडाशः । कीदृशाय सवित्रे औष्णिहाय उष्णिक्छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय ६, एवं छन्दःस्तोमसामसहितान् षट् देवानाभिधाय चतुरः केवलानाह प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्य्यः ७, विष्णुपत्न्यै अदित्यै चरुरेव ८, वैश्वानराय वैश्वानरगुणाविशिष्टायाग्नये द्वादशकपालः पुरोडाशः ९, अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्य्यः १०, दशहविषोऽवेष्टेर्देवताहवींष्यपि अश्वमेधोपयोगित्वादुक्तानि सन्दिग्धो अञ्जन्नाश्वमेधिकोऽध्याय इति कात्यायनोक्तेः ( अनुक्रमण्याम् ) ॥ ६० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
शिष्टाश्वमेधमन्त्रोक्तिर्गतोऽध्यायोऽङ्कदृग्मितः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ १ ॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ २ ॥

(१)इत उत्तरं पुरुषमेधः द्वावध्यायौ नारायणः पुरुषोऽपश्यत् देव सवितः । तिस्रः सावित्रीराहवनीये जुहोति । देव सवितः । तत्सवितुर्वरेण्यम् । विश्वानि देव सवितरिति । तत्र द्वे व्याख्याते ॥ १ ॥ २ ॥

इत उत्तरं पुरुषमेधः । द्वावध्यायौ नारायणः पुरुषोऽपश्यत । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति । सर्वभूतान्यतिक्रम्य स्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् ॥ आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति । तत्र देव सवितः ( ११, ७ ) तत्सवितुः ( ३, ३५ ) द्वे व्याख्याते ॥ १ ॥ २ ॥

विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥ ३ ॥

विश्वानि देव सवितरिति द्वे गायत्र्यौ विश्वानि सर्वाणि

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०

हे देव सवितः दुरितानि असत्यानि । परासुव पराञ्चि गमय । यच्च भद्रं भन्दनीयं तत् नः अस्माकम् आसुव आगमय ॥ ३ ॥

हे देव सवितः ! विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय । यद्भद्रं कल्याणं तन्नोऽस्मान् प्रति आसुव आगमय ॥३॥

विभक्तारंᳬ हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ॥ ४ ॥

(१)विभक्तारम् । कर्मानुरूपेण विभक्तारम् । हवामहे आह्वयामः । वसोः वासायितुः चित्रस्य चायनीयस्य राधसः धनस्य आयुषश्च । सवितारम् । नृचक्षसम् नृणां द्रष्टारम् । ये नरो यथा । द्रष्टव्यास्तांस्तथा पश्यति ॥ ४ ॥

वयं सवितारं हवामहे आह्वयामः किम्भूतं वसोः वासयितुश्चित्रस्य नानाविधस्य राधसः धनस्य विभक्तारं विभज्य दातारम् नृचक्षसं नृणां द्रष्टारं यथायोग्यम् ॥ ४ ॥

ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुँश्चलूमतिक्रुष्टाय

---

नास्ति । तद्यथा । इत उत्तरं पुरुषमेधो द्वावध्यायौ नारायणः पुरुषोऽपश्यत् देव सवितः द्वे सावित्र्यौ हे देव सवितः विश्वानि सर्वाणि दुरितानि असत्यानि पराशुव पराञ्चि गमय यच्च भद्रं भन्दनीयं तत् नः अस्माकम् आसुव आगमय ॥ १ ॥ २ ॥ ३ ॥

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । विभक्तारं वयं सवितारं हवामहे आह्वयामः किम्भूतं वसोः वासयितुः चित्रस्य चायनीयस्य राधसः अन्नस्य आयुषश्च विभक्तारं कर्मानुरूपेण नृचक्षसं नृणां द्रष्टारं ये यथा द्रष्टव्या मनुष्यास्तांस्तथा पश्यति ॥ ४ ॥

मागधम् ॥ ५ ॥

(१)अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः । ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत् संख्यान् पुरुषान् प्रकामोपाद्याय सदमित्यन्तानग्निष्ठे यूपे नियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति ॥ ब्रह्मणे ब्राह्मणम् तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति । एवमग्रे सर्वेषां यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम् । क्षत्राय राजन्यं क्षत्रियम् २, मरुद्भ्यो वैश्यम् ३, तपसे शूद्रम् ४, तमसे तस्करं स्तेनम् ५, नारकाय वीरहणं नष्टाग्निं शूरं वा ६, पाप्मने क्लीबं नपुंसकम् ७, आक्रयायै अयोगूमयसो गन्तारम् ८, कामाय पुंश्चलूं व्यभिचारिणीम् ९, अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा ॥१०॥५॥

नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥ ६ ॥

नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः ११, गीताय शैलूषं नटम् १२, धर्माय सभाचरं सभायां चरतीति तम् १३, नरिष्ठायै भीमलं भयङ्करम् १४, नर्माय रेभं शब्दकर्त्तारं वाचाटम् १५, हसाय कारिं करणविशिष्टम् १६, आनन्दाय स्त्रीषखं स्त्रियाः सखायम् १७, प्रमदे कुमारीपुत्रं कानीनम् १८, मेधायै रथकारं माहिष्येण करिण्यां जातम् १९, धैर्य्याय तक्षाणं सूत्रधारम् ॥ २० ॥ ६ ॥

---

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईसु०पु० नास्ति। तद्यथा । नामानि निघण्टुनिरुक्तव्याकरणेभ्योऽवगन्तव्यानि तान् वै मध्यमेऽहन्नालभत इत्युपक्रम्याष्टाचत्वारिꣳशतं मध्यमे यूप आलभते एकादशैकादशेतरेषु अष्टा उत्तमानालभते इत्याह पुरुषान्पशून् ५-२२

इत्युव्वटकृते मन्त्रभाष्ये त्रिंशोऽध्यायः ॥ ३० ॥

तपसे कौलालं मायायै कर्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुकारꣳ हेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥

तपसे कौलालं कुलालापत्यम् २१, मायायै कर्मारं लोहकारम् २२, रूपाय मणिकारं रत्नकर्त्तारम् २३, शुभे शुभाय वपं बीजवप्तारम् २४, शरव्यायै इषुकारं वाणकर्त्तारम् २५, हेत्यै धनुष्कारं चापकारिणम् २६, कर्मणे ज्याकारं प्रत्यञ्चनकर्त्तारम् २७, दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम् २८, मृत्यवे मृगयुं मृगग्राहम् २९, अन्तकाय श्वनिनं शुनो नेतारम् ॥ ७ ॥

नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥

नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोऽन्त्यजः पुल्कसस्तदपत्यम् ३१, ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२, पुरुषव्याघ्राय दुर्मदमुन्मत्तम् ३३, गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४, प्रयुग्भ्यः उन्मत्तम् ३५, सर्पदेवजनेभ्यः अप्रतिपदं प्रतिपद्यते जातानीति प्रतिपत् अतथाविधं विकलमित्यर्थः ३६, अयेभ्यः कितवं द्यूतकारम् ३७, ईर्यतायै अकितवमद्यूतकृतम् ३८, पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम् ३९, यातुधानेभ्यः कण्टकीकारीं कण्ठकी कर्म तत्कारिणीम् ४० ॥ ८ ॥

सन्धये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराद्ध्या एदिधिषुःपतिं निष्कृत्यै पे-

शस्कारीꣳ संज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं व-
र्णायानुरुधं बलायोपदाम् ॥ ९ ॥

सन्धये जारमुपपतिम् ४१, गेहाय उपपतिं व्यभिचारिणम् ४२, आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनूढम् ४३, निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम् ४४, आराध्यै दिधिषुः पतिम् ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः तत्पतिम् ४५, निष्कृत्यै पेशस्कारीं रूपकर्त्रीम् ४६, संज्ञानाय स्मरकारीं कामदीप्तिकरीम् ४७, प्रकामोद्याय तत्संज्ञाय देवाय उपसीदतीत्युपसत् समीपस्थितस्तम् ४८, एतानग्निष्टे नियुनक्ति ॥ अथ द्वितीये यूपे । वर्णाय अनुरुधम् अनुरुध्यतेऽनुसरतीत्यनुरुत् तम् १, बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम् ॥ ९ ॥

उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामꣳ स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम् ॥ १० ॥

उत्सादेभ्यः कुब्जं वक्राङ्गम् ३, प्रमुदे वामनं ह्रस्वाङ्गम् ४, द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम् ५, स्वप्नाय अन्धं नेत्रहीनम् ६, अधर्माय बधिरं कर्णेन्द्रियहीनम् ७, पवित्राय भिषजं वैद्यम् ८, प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तम् गणकम् ९, आशिक्षायै प्रश्निनं प्रश्नवन्तम् शकुनादिप्रष्टारमित्यर्थः १०, उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम् ११ ॥ अथ तृतीये यूपे । मर्यादायै प्रश्नविवाकं कृतान् प्रश्नान् यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् १ ॥ १० ॥

अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्ष्या-

यानुक्षत्तारम् ॥ ११ ॥

अर्मेभ्यो हस्तिपं गजपालकम् २, जवाय अश्वपं तुरगपालकम् ३, पुष्ट्यै गोपालं धेनुपालकम् ४, वीर्य्याय अविपालम् ५, तेजसे अजपालम् ६, इरायै कीनाशं कर्षुकम् कीनाशः कर्षुके यमे ७, कीलालाय सुराकारं मद्यकृतम् ८, भद्राय गृहपं गेहपालकम् ९, श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तम् धनकर्त्तारम् १०, आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम् ११ ॥ ११ ॥

भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम् ॥ १२ ॥

अथ चतुर्थे यूपे ! भायै दार्वाहारं काष्ठानामाहर्तारम् १, प्रभायै अग्न्येधम् अग्निमेधयतीति तमग्नेर्धकम् २, ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम् ३, वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्त्तारम् ४, देवलोकाय पेशितारम् पेश अवयवे पिंशतीति पेशिता तम् प्रतिमाद्यवयवकर्त्तारम् ५, मनुष्यलोकाय प्रकरितारम् कॄ विक्षेपे विक्षेप्तारम् ६, सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्त्तारम् ७, अवऋत्यै वधाय उपमन्थितारमुपमन्थनकर्तारम् ८, मेधाय वासःपल्पूलीम् वाससां प्रक्षालनकर्त्तारम् पल्पूल प्रक्षालनच्छेदनयोः ९, प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम् १० ॥ १२ ॥

ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥

क्षतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम् ॥ ११ ॥ अथ पञ्चमे यूपे । वैरहत्याय पिशुनं परवृत्तसूचकम् १, विविक्त्यै क्षत्तारं प्रतीहारम् २, औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम् ३, बलाय अनुचरं सेवकम् ४, भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम् ५, प्रियाय प्रियवादिनं मधुरभाषिणम् ६, अरिष्ट्यै अश्वसादम् अश्वारोहम् ७, स्वर्गाय लोकाय भागदुघम् भागं दुग्धे भागदुघस्तम् विभागप्रदम् ८, वर्षिष्ठाय नाकाय परिवेष्टारम् ९ ॥ १३ ॥

मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारꣳ शोकायाभिसर्त्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥

मन्यवे अयस्तापमयस्तपं लोहतापकम् १०, क्रोधाय निसरं नितरां सर्त्तारम् ११ ॥ अथ षष्ठे यूपे । योगाय योक्तारं योगकर्त्तारम् १, शोकाय अभिसर्त्तारं संमुखमागच्छन्तम् २, क्षेमाय विमोक्तारं विमोचनकरम् ३, उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति त्रिष्ठी तम् विद्यादिषु स्थितं शीलवन्तमित्यर्थः ४, वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्त्तारम् सक् छान्दसः ५, शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम् ६, निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७, यमाय असूम् न सूते सा असूः ताम् वन्ध्याम् ८ ॥ १४ ॥

यमाय यमसूमथर्वभ्योऽवतोकाꣳ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ॥ १५ ॥

यमाय यमसूं युग्मप्रसवित्रीम् ९, अथर्वभ्योऽवतोकां निरपत्या-

म् १०, संवत्सराय पर्य्यायिणीम् पर्य्यायोऽनुक्रमस्तद्वतीमनुक्रमज्ञाम् ११ अथ सप्तमे यूपे । परिवत्सराय अविजाताम् अप्रसूताम् १, इदावत्सराय अतीत्वरीमत्यन्तं कुलटाम् पुंश्चली कुलटेत्वरी २, इद्वत्सराय अतिष्कद्वरीम् अतिस्कन्दति स्रवति इत्यातिस्कद्वरी स्कन्देर्वन्नन्तात् ङीब्रेफौ ३, वत्सराय विजर्जरां शिथिलशरीराम् ४, संवत्सराय पलिक्नीं श्वेतकेशाम् ५, ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६, साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् ७ ॥ १५ ॥

सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय केवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳ सानुभ्यो जम्भकं पर्वतेभ्यः किम्पूरुषम् ॥ १६ ॥

सरोभ्यो धैवरं कैवर्त्तापत्यम् ८, उपस्थावराभ्यः दाशम् दाशृ दाने दातारम् दाशो धीवरो वा ९, वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम् १०, नड्वलाभ्यः शौष्कलं मत्स्यजीविनम् शुष्कला मत्स्यास्तैर्जीवति तम् ११ ॥ अथाष्टमे यूपे । पाराय मार्गारम् मृगादेरपत्यं मार्गारस्तम् १, अवाराय केवर्तम् २, तीर्थेभ्यः आन्दम् अदि बन्धने अन्दति आन्दस्तं बन्धनकर्त्तारम् ३. विषमेभ्यो मैनालम् अल् वारणे मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम् ४, स्वनेभ्यः पर्णकं भिल्लम् ५, गुहाभ्यः किरातम् ६, सानुभ्यः जम्भकं जभि नाशने जम्भयतीति तम् हिंसकम् ७, पर्वतेभ्यः किम्पूरुषं कुत्सितनरम् ८ ॥ १६ ॥

बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥ १७ ॥

बीभत्सायै पौल्कसं पुल्कसापत्यम् ९, वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् १०, तुलायै वाणिजं वणिगपत्यम् ११ ॥ अथ नवमे यूपे । पश्चादोषाय ग्लाविनं ग्लै हर्षक्षये अहृष्टम् १, विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् २, भूत्यै जागरणं जागरूकम् ३, अभूत्यै स्वपनं शयालुम् ४, आर्त्यै जनवादिनं जनान् वदति तम् ५, व्यृद्ध्यै अपगल्भम् ६, संशराय प्रच्छिदं प्रच्छेदनकर्त्तारम् ७ ॥ १७ ॥

अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्य्यं पाप्मने सैलगम् ॥ १८ ॥

अक्षराजाय कितवं धूर्त्तम् ८, कृताय आदिनवदर्शम् आदिनवो दोषस्तं पश्यति तथाभूतम् ९, त्रेतायै कल्पिनं कल्पकम् १०, द्वापराय अधिकल्पिनम् अधिकल्पनाकर्त्तारम् ११ ॥ अथ दशमे यूपे । आस्कन्दाय सभास्थाणुं सभायां स्थिरम् १, मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम् २, अन्तकाय गोघातं गवां हन्तारम् ३, क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तं भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत ४, दुष्कृताय चरकाचार्य्यं चरकाणां गुरुम् ५, पाप्मने सैलगं सीलगो दुष्टस्तदपत्यम् ६ ॥ १८ ॥

प्रतिश्रुत्काया अर्त्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥ १९ ॥

प्रतिश्रुत्कायै अर्त्तनं दुःखिनम् ७, घोषाय भषं जल्पकम् ८, अ-

न्ताय बहुवादिनम् ९, अनन्ताय मूकं वाग्विकलम् १०, शब्दाय आडम्बराघातम् आडम्बरमाहन्ति तम् कोलाहलकर्त्तारम् ११ ॥ अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्त्तारम् १, क्रोशाय तूणवध्मम् तूणवं वाद्यविशेषं धमति तथाभूतम् २, अवरस्पराय शङ्खध्मं शङ्खवादकम् ३, वनाय वनपं वनपालकम् ४, अन्यतोऽरण्याय दावपं वनवह्निपम् ५ ॥ १९ ॥

नर्मा॑य पुँश्च॒लूᳬं᳭ ह॒सा॑य॒ कारिं॒ यादसे शाब॒ल्यां ग्रा॑म॒ण्यं॑ ग॒णक॑म॒भिक्रो॒शकं॒ तान्महसे वी॒णावादं॑ पा॒णिघ्नं॑ तू॒णव॒ध्मं तान्नृ॒त्ताया॒नन्दा॑य तल॒वम् ॥ २० ॥

नर्माय पुंश्चलूं दुष्टां नारीम् ६, हसाय कारिं करणशीलम् ७, यादसे शाबल्याम् शबलः कर्बूरवर्णः तदपत्यभूतां स्त्रियम् ८, ग्रामण्यं ग्रामनेतारम् ९, गणकं ज्योतिर्विदम् १० अभिक्रोशकं निन्दकम् ११, तान् त्रीन्महसे जुष्टं नियुनज्मीति एकादशे यूपे आलभते ॥ एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्र्यै कृष्णं पिङ्गाक्षमित्यन्ताश्चतुर्दश ततोऽथैतानष्टौ विरूपानित्यष्टौ च मागधादींश्चतुरः एवं षड्विंशतिं द्वितीये यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत् । तानेवाह । वीणावादम् पाणिघ्नं हस्ततालवादकम् तूणवध्मम् तान् त्रीन् नृत्ताय आलभते ३, आनन्दाय तलवम् वा गतिगन्धनयोः गन्धनं हिंसा तलं हस्तादितलं वाति वाद्यमुखं हन्ति स तलवस्तम् वाद्यवादकम् ४ ॥ २० ॥

अ॒ग्नये॒ पीवा॑नं पृथि॒व्यै पी॑ठस॒र्पिणं॑ वा॒यवे॑ चा॒ण्डा॒लम॒न्तरि॑क्षाय वᳬं᳭श॒नर्त्तिनं॑ दि॒वे ख॑ल॒तिᳬं᳭ सूर्या॑य हर्य॒क्षं नक्ष॑त्रेभ्यः कि॒र्मि॒रं च॒न्द्रम॑से कि॒ला॒सम॒ह्ने शु॒क्लं पि॑ङ्गा॒क्षᳬं᳭ रात्र्यै॑ कृ॒ष्णं पि॑ङ्गा॒क्षम् ॥ २१ ॥

अग्नये पीवानं स्थूलम् ५, पृथिव्यै पीठसर्पिणं पीठनासनेन स-

पंति गच्छति पीठसर्पी तं पङ्गुम् ६, वायवे चाण्डालं चण्डालकर्माणम् ७, अन्तरिक्षाय वंशनर्त्तिनम् वंशेन नर्त्तनशीलम् ८, दिवे खलतिमलोमशिरस्कं खल्वाटमित्यर्थः सूर्य्याय हर्य्यक्षं हरितनेत्रम १०, नक्षत्रेभ्यः किर्मिरं कर्बूरवर्णम् ११, चन्द्रमसे किलासं सिध्मरोगवन्तम् १२, अह्ने शुक्लवर्णं पिङ्गाक्षम् १३, रात्र्यै कृष्णवर्णं पिङ्गाक्षम् ॥ १४ ॥ २१ ॥

अथैतानष्टौ विरूपानालभतेऽतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं च । अशूद्रा अब्राह्मणास्ते प्राजापत्याः । मागधः पुंश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
त्रिंशोऽध्यायः ॥ ३० ॥

---

तत एतान् वक्ष्यमाणानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते । तानाह । अतिदीर्घम् अतिह्रस्वम् अतिस्थूलम् अतिकृशम् अतिशुक्लम् अतिकृष्णम् अतिकुल्वं रोमरहितम् अतिलोमशं सर्वाङ्गव्यापिरोमाणम् । ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति । तेऽष्टावपि प्राजापत्याः प्रजापतिदेवताः अष्टा उत्तमानालभत इत्युपक्रम्य ते वै प्राजापत्या भवन्तीति (१३, ६, २, ७—८) श्रुतेः। अत्र जातिनियमात् पूर्वेषु जातेरनियमः। वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः । तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः ॥ सर्वेषां नियोगानन्तरं तान्नियुक्तान् पुरुषान् सहस्रशीर्षा पुरुष इति ( ३१, १–१६ ) षोडशर्चेनानुवाकेन दक्षिणत उपाविष्टो होतृवदभि-

ष्टौति । होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनम् ऋगन्तानां प्रणवेन सन्धानं च । यथा सहस्रशीर्षा पुरुषः—०ङ्गुलो३म् पुरुष एवेदᳬ रोहतो३म् । एवमभिष्टौति । तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि । ब्राह्मणादीनां पर्य्यग्निकरणानन्तरमिदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथास्वस्वदेवतोद्देशेन त्यागः । ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति । तत एकादशिनैः पशुभिः संज्ञपनादिप्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य सकृद्गृहीतमाज्यं गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्यः आहवनीये जुहोति ओम् ब्रह्मणे स्वाहा १, क्षत्राय स्वाहा २, मरुद्भ्यः ३, तपसे ४, तमसे ५, इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसंख्याकाभ्यः तावतीर्घृताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वान्ते यजमानः अयं ते योनिरिति मन्त्रेणात्मन्यग्नीन् समारोप्याद्भ्यः सम्भृत इति ( ३१, १७ ) षडृचेनानुवाकेन सूर्य्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा संन्यसेत् गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्नग्नी समारोप्यारण्यं व्रजेदिति शाङ्खायनोक्तेः । यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदसानीयान्ते सायमाहुती हुत्वारण्योरग्नी समारोप्योत्तरनारायणेनार्कमुपस्थाय देवयजनमादीप्य गृहं व्रजेत् गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्य्यात् । अयमपि पक्षोऽस्ति । तत् पुरुषमेधानन्तरं सन्न्यास एव ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
त्रिंशोऽध्याये प्रकथिताः पशवो नरमेधिके ॥ ३० ॥

---

## अथैकविंशोऽध्यायः ॥ २१ ॥

ओं नमः श्रीगणेशाम्बिकाभ्याम् ।

इमं मे। प्रथमेनानुवाकेनैष्टिकं हौत्रं प्रथमे वारुण्यौ गायत्रीत्रिष्टुभौ। वारुणस्य हविषो याज्यानुवाक्ये । हे वरुण त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु च अपरम् अद्य मृडय सुखय । कालविलम्बं मा कृथाः। यतः। अहम् अवस्युः आत्मनोऽवनं पालनमिच्छन् त्वाम्। आचके आचक इति कान्तिकर्मा कामये ॥ १ ॥

तत्त्वा यामि। व्याख्यातम् ॥ २ ॥

त्वं नः । अग्निवारुण्यौ अग्नीवरुणयोः स्विष्टकृतोर्याज्यानुवाक्ये त्रिष्टुभौ। हे अग्ने त्वं नोऽस्मान् प्रति वरुणस्य देवस्य हेडः क्रोधं अवयासिसीष्ठाः। यसु उपक्षये। अस्य अवपूर्वस्य ण्यन्तस्य लिङि रूपम् अवगमय। कीदृशस्त्वं विद्वान् यजिष्ठः यष्टृतमः वह्नितमः वोढृतमो हविषां शोशुचानः देदीप्यमानः। किञ्च अस्मत् अस्मत्तः विश्वा विश्वानि द्वेषांसि दौर्भाग्यानि प्रमुमुग्धि मुञ्च ॥ ३ ॥

स त्वं नः । हे अग्ने स त्वम् ऊती ऊत्या अवनेन नोऽस्माकम् अवमः अवितृतमः पालयितृतमो भव अस्या उषसः व्युष्टौ व्युष्टिकाले अस्मिन्नेवाहनीति भावः। नेदिष्ठः अन्तिकतमश्च भव। रराणः रममाणः। रा दाने हविर्ददद्वा नोऽस्माकं वरुणम्। अवयक्ष्व अवगत्य यज। अवपूर्वो यजिर्नाशनार्थः । इह तु धात्वन्तरयोगात् स्वार्थमेव वक्ति ततः मृडीकं सुखकरं हविः वीहि भक्षय नोऽस्माकं सुहवः स्वाह्वानः एधि भव ॥ ४ ॥

महीमू षु। आदित्यस्य चरोर्याज्यानुवाक्ये त्रिष्टुभौ । वयम् अवसे अवनाय तर्पणाय वा अदितिं हुवेम आह्वयाम। कीदृशी मही महतीम्। ऊसू पादपूरणौ । सुव्रतानां साधुव्रतानां मातरं निर्मात्रीम् ऋतस्य यज्ञस्य पत्नीं जायां पालयित्रीं वा। तुविक्षत्रां बहुक्षतत्राणाम्। अजरन्तीं जरारहिताम् उरूचीं बहुव्यञ्चनां सुशर्माणं कल्याणाश्रयां सुप्रणीतिं सुप्रणेत्रीम् ॥ ५ ॥

सुत्रामाणम्। दैवीं यज्ञमयीं नावं स्वस्तये वयम् आरुहेम । किम्भूतां पृथिवीं सुत्रामाणम्। लुप्तोपमानमेतत्। पृथिवीमिव सा-

धुपालयित्रीं द्यामनेहसम् द्यामिव वाहयित्रीं जीवनहेतुभूतां च सुशर्म्माणम् । अदितिम् अदीनां सुप्रणीतिं साधु प्रणेत्रीं स्वरित्रां साधुकेन्दुवालाम् । अरित्रशब्दः केन्दुवालवचनः । अनागसमनपराधाम् । अस्रवन्तीम् । उदकैरपूर्यमाणाम् । अनवच्छिन्नकर्म्मदायिनीमित्यर्थः ॥ ६ ॥

सुनावम् । गायत्री तद्ध सर्व एव यज्ञो नौः स्वर्ग्येति श्रुतेरुपकल्पना । कल्याणीं नावं स्वस्तये आरुहेयम् अस्रवन्तीम् । अनागसं सर्वेष्टदामित्यर्थः । शतारित्रां ऋग्यजुःसामाभिप्रायम् ॥ ७ ॥

आ नः । मैत्रावरुण्याः पयस्याया याज्यानुवाक्ये गायत्रीत्रिष्टुभौ । हे मित्रावरुणौ घृतैः अक्षारोदकैः नोऽस्माकं गव्यूतिं गवि पृथिव्याम् ऊतिमवनहेतुभूतं क्षेत्रं गोप्रचारम् । आ उक्षतं आसिञ्चतं किं च हे सुक्रतू सुकर्म्माणौ मध्वा मधुस्वादोदकेन रजांसि लोकान् आ उक्षतम् ॥ ८ ॥

प्र बाहवा । हे मित्रावरुणौ हे युवानौ नोऽस्माकं जीवसे चिरजीवनाय बाहवा बाहू प्रसिसृतम् । अन्तर्भावितण्यर्थः । प्रसारयतं बाहुप्रसारणं जीवनप्रतिपक्षनिराकरणायेत्यर्थः । ततः नोऽस्माकं गव्यूतिं क्षेत्रं घृतेन जलेन आ उक्षतं भवत्सिक्तक्षेत्रनिष्पन्नधान्यैर्यजिवनं मा मां जने जनपदे आ श्रवयतं प्रकथयतम् । इत्थमदात् इत्थमयाक्षीदिति । मे मम इमा हवा इमानि आह्वानानि श्रुतं शृणुतं श्रुत्वा च पूर्वोक्तं कुरुतमित्यर्थः ॥ ९ ॥

शं नः । वाजे वाजेऽवत वाजिनस्य । याज्यानुवाक्ये व्याख्याते ॥ १० ॥ ११ ॥

समिद्धो अग्निः । एकादश प्रयाजयाज्याः । अनराशंसाः इन्द्राय वयोधसे अनुष्टुभः समिधा प्रयाजदेवतया समिद्धः दीप्तः सुशमिद्धश्च प्रयाजघृतेन वरेण्यः वरणीयः सम्भजनीयः अग्निः गायत्री छन्दः त्र्यविः त्रयोऽवयोऽनुचरत्वेन यस्य स त्र्यविर्गौः । एते त्रयः इन्द्रे इन्द्रियं वीर्यं वयः सत्त्वमन्नं वा आयुर्वा दधुः निदधुः प्रयच्छन्तु ॥ १२ ॥

तनूनपात् शुचिव्रतः उज्ज्वलकर्मा तनूनाम् । अपान्नपात् नप्ता अग्निः गौर्वा तनुः तस्या नप्ता घृतं तनूपाः सरस्वती च उष्णिहा विभक्तिव्यत्ययः उष्णिक् छन्दः । दित्यं हविर्वहतीति दित्यवाट् गौः ।

एते चत्वारः इन्द्रियं वयश्च इन्द्रे दधुः ॥ १३ ॥

इडाभिः । इडाभिः प्रयाजदेवतया सह ईड्यः स्तोतव्यः अग्निः अमर्त्यः अमरणधर्मा सोमो देवश्च अनुष्टुप्छन्दः पञ्च अवयो यस्य स पञ्चाविर्गौः एते इन्द्रियं वयश्च इन्द्रे दधुः ॥ १४ ॥

सुबर्हिः शोभनं बर्हिः प्रयाजदेवतास्तीर्णं बर्हिर्यस्य स स्तीर्णबर्हिः अमर्त्यः पूषण्वान् पूष्णा युक्तः अग्निः बृहती छन्दः त्रयो वत्सा अनुचरा यस्य स त्रिवत्सो गौः एते इन्द्रियं वयश्च इन्द्रे दधुः ॥१५॥

दुरो देवीः । द्वारो देव्यः छान्दसं सम्प्रसारणं प्रयाजदेवताः महीः महत्यः दिशश्च ब्रह्मा देवः बृहस्पतिश्च पाङ्क्तिश्छन्दः । तुर्यवाट् गौ. एते इह यज्ञावयवे इन्द्रशरीरावयवे वा इन्द्रियं वयश्च दधुः ॥१६

उषे यह्वी । उषे इति द्विवचनसामर्थ्यात्सहचरितत्वाच्च द्वितीया रात्रिर्गृह्यते । उषाः रात्रिश्च कीदृश्यौ यह्वी महत्यौ सुपेशसा साधुरूपे अमर्त्याः विश्वेदेवाश्च त्रिष्टुप् छन्दः । पष्ठं भारं वहतीति पष्ठवाट् गौः एते इह इन्द्रयज्ञयोः इन्द्रियं वयश्च दधुः ॥ १७ ॥

दैव्या होतारा । दैव्यौ होतारौ अयं चाङ्गिरसौ च मध्यमः । कीदृशौ भिषजौ इन्द्रेण सयुजौ संयुक्तौ समानकार्यौ युजौ परस्परेणचावियुक्तौ जगतीच्छन्दः । अनः शकटं वहतीति अनड्वान् गौः । एते इन्द्रे इन्द्रियं वयश्च दधुः ॥ १८ ॥

तिस्र इडा । इडा सरस्वती भारतीति तिस्रो देव्यः मरुतः विशः इन्द्रस्य प्रजाः विराट् छन्दः । धेनुर्दोग्ध्री गौः नकारश्चार्थे एते इह इन्द्रे इन्द्रियं वयश्च दधुः ॥ १९ ॥

त्वष्टा तुरीयः अद्भुतः । अद्भुतो महान् तुरीयः तूर्णमापन्नः त्वष्टा पुष्टिवर्द्धनौ इन्द्राग्नी च द्विपदा छन्दः उक्षा सेक्ता गौश्च नश्चार्थे एते इन्द्रे इन्द्रियं वयश्च दधुः ॥ २० ॥

शमिता नः । शमयितेति प्राप्ते शमिता मन्त्रे इति छान्दसः प्रयोगः । नोऽस्माकं शमिता वनस्पतिः भगं धनं प्रसुवन् सविता च ककुप् छन्दः वशा वन्ध्या गौः वेहच्च वेहति त्यजति गर्भं सा वेहत् गौः इह इन्द्रे इन्द्रियं वयश्च दधुः ॥ २१ ॥

स्वाहा यज्ञम् । सुक्षत्रो वरुणः स्वाहा स्वाहाकृतिभिः यज्ञं भेषजं करत् करोतु अतिछन्दाः छन्दः बृहत् ऋषभश्च गौः इन्द्रे इन्द्रियं वयश्च दधुः ॥ २२ ॥

वसन्तेन। वपापुरोडाशपशूनां याज्यानुवाक्या अनुष्टुभः। वायोधसस्य यशोः। इन्द्रश्च वयोधा देवता। वसन्तेन ऋतुना सहिता वसवो देवाः त्रिवृता स्तोमेन स्तुताः सन्तः रथन्तरेण च पृष्ठेन सहायेन। इन्द्रे तेजसा सह हविर्वपाख्यं वयश्च दधुः। यद्वा वसन्तेन ऋतुना स्तुताः त्रिवृता स्तोमेन च स्तुताः रथन्तरेण पृष्ठेन च स्तुताः सन्तो वसवो देवाः स्वकीयेन तेजसा इन्द्रे हविर्वयश्च दधुः एवमुत्तरेष्वपि योज्यम्॥ २३॥

ग्रीष्मेण। ग्रीष्मेण ऋतुना सह रुद्राः देवाः पञ्चदशेन स्तोमेन स्तुताः सन्तः। पञ्चदशेनेति विभक्तिव्यत्ययः। बृहती पृष्ठेन सह इन्द्रे यशसा सह बलं हविर्वयश्च दधुः॥ २४॥

वर्षाभिः। ऋतुना सह आदित्या देवाः सप्तदशेन स्तोमेन स्तुताः सन्तः। द्वौ विभक्तिव्यत्ययौ वैरूपेण पृष्ठेन सह इन्द्रे विशा ओजसा च सहितं हविर्वयश्च दधुः॥ २५॥

शारदेन ऋतुना सह ऋभवो देवाः एकविंशेन स्तोमेन स्तुताः सन्तः विभक्तिव्यत्ययः। वैराजेन पृष्ठेन श्रिया च सह इन्द्रे श्रियं हविर्वयश्च दधुः॥ २६॥

हेमन्तेन ऋतुना सह मरुतो देवाः त्रिणवेन स्तोमेन स्तुताः सन्तः। शक्करीरिति योनिनिर्देशः। शाकरस्य विभक्तिव्यत्ययः। शाक्करेण पृष्ठेन सह इन्द्रे बलेन सह सहः हविः वयश्च दधुः॥ २७॥

शैशिरेण ऋतुना सह अमृता देवाः त्रयस्त्रिंशेन स्तोमेन स्तुताः सन्तः रेवतीरिति रैवतस्य योनिनिर्देशः। रैवतेन पृष्ठेन सह इन्द्रे सत्येन सह क्षत्रं हविः वयश्च दधुः॥ २८॥

होता यक्षत्। द्वादशाप्रियस्तनूनपान्नाराशंसयुक्ताः। प्रैषिकमश्विसरस्वतीन्द्रदैवत्यं दैव्यो होता समिधा प्रयाजदेवतया सह इडस्पदे इडा गौः तस्याः पदे आहवनीयः स्थाप्यते तदभिप्रायं गोः पदेऽवस्थितम् आहवनीयमग्निं तथा अश्विनौ इन्द्रं सरस्वतीं च यक्षत् यजतु अजो धूम्रो न। नकाराः समुच्चयार्थाः। प्रायः अजो धूम्रो मेषश्च गोधूमैः कुवलैश्च सहितः भेषजमत्र संपद्यते शष्पैः अङ्कुरितव्रीहिभिः सहितो रजः मधु च संपद्यते तेज इन्द्रियं च इन्द्रस्य यजमानस्य वा संपद्यते अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः सन्तः पयः सोमः। सोमामिति विभक्तिव्यत्ययः। परिस्रुता सह

घृतं मधु च व्यन्तु पिबन्तु हे मनुष्यहोतः त्वमपि आज्यस्य यज आज्यं देहि तेन वा यज ॥ २९ ॥

होतायक्षत्तनूनपात् । तनूनपातमिति विभक्तिव्यत्यः । अश्विनेन्द्रायेति व्यवहितं यत्पठ्यते तदिह कृतविभक्तिव्यत्ययं योज्यतेऽर्थसंबन्धात् । होता तनूनपातं प्रयाजदेवतां सरस्वतीम् अश्विनौ इन्द्रं च यजतु । अविर्मेषश्च । नश्चार्थौ मधुमता रसवता यथा यज्ञमार्गेण भरन् आत्मानं हरन् भेषजम् इन्द्राय यजमानाय वा करोति बदरैः उपवाकाभिः इन्द्रयवैः तोक्मभिः अङ्कुरितयवैः वीर्यं भेषजं करोति मेष एव इन्द्राय यजमानाय वा अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा हूज्यमानाः पयःप्रभृतीनि व्यन्तु । हे मनुष्यहोतः त्वमपि आज्यस्य यज ॥ ३० ॥

होता यक्षन्नराशंसं न । होता नराशंसं च यजतु । कीदृशं पतिम् अधिपतिं जगतः । यज्ञो हि नराशंसः स आहुतिपरिणामद्वारेण जगद्बिभर्त्ति सुरया सहितं नग्नहुं किण्वं च होता यजतु मेषः इन्द्रस्य भेषजं करोत्विति शेषः । सरस्वती इन्द्रस्य भेषजं करोत्विति शेषः । सरस्वती इन्द्रस्य भिषक् भवतु अश्विनोः रथो न रथश्च इन्द्रस्य भिषक् भवतु । किंभूतो रथः चन्द्रो चन्द्रं सुवर्णमस्यास्तीति सुवर्णखचितः । ननु अश्विनो रथस्य कथं भिषक्त्वं शृणु ।

आयुधं वाहनं वापि श्रुतौ यस्येह दृश्यते ॥
तमेव तत्स्तुतं विद्यात्तस्यात्मा बहुधा हि सः ।

इति वपा इन्द्रस्य वीर्यं कुर्वन्त्विति शेषः । वपा इति बहुवचनोपदेशात्त्रिपशुविषयः बदरैः उपवाकाभिः तोक्मभिः इन्द्रस्य भेषजं भवत्विति शेषः । अश्विसरस्वतीन्द्राः पयआदीनि व्यन्तु । हे होतराज्यस्य यज ॥ ३१ ॥

होता यक्षदिडेडितः । होता यजतु । इडा प्रयाजदेवतया ईडितः स्तुतः सन् । किं कुर्वन् आजुह्वानः सरस्वतीम् । सरस्वतीमाह्वयन् । अश्विनेन्द्रायेत्युपरिष्टात्प्रैषस्य पठ्यते तदेतद् पदद्वयमिह कृतविभक्तिव्यत्ययं सम्बध्यते । उक्तं च ।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ।
अर्थतो ह्यसमानानामानन्तर्यस्य कारणमिति ॥

अश्विनौ इन्द्रं च । किञ्च इन्द्रं बलेन वर्द्धयन् ऋषभेण गवा च

इन्द्रियमिन्द्रस्य वर्द्धयन् मधु मासरं च उपादायेति शेषः । यवैः कर्कन्धुभिर्लाजैश्च भेषजमिन्द्रस्य वर्द्धयन् अश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयः प्रभृतीनि व्यन्तु त्वमपि हे मनुष्यहोतराज्यस्य यज ॥ ३२ ॥

होता यक्षद् । बर्हिरूर्णम्म्रदाः होता यजतु प्रकृता देवताः । बर्हिश्च प्रयाजदेवता ऊर्णम्म्रदाः ऊर्णा म्रद इति प्राप्ते ऊर्णे म्रदा इति छान्दसो लिङ्गविपर्ययः । ऊर्णेव मृदुर्भिषग्भवतु इन्द्राय । भिषग्वैद्य उक्तः । नासत्या भिषजाश्विना । नासत्या नासिकाप्रभवावश्विनौ भिषजौ भवतामिन्द्रस्य । अश्वा वडवा शिशुमती धेनुश्च भिषगिन्द्रस्य भवतु । इत्थम्भूता हि सा दक्षिणापद्यते । कस्मात्पुनरेवमाशास्यते इत्यत आह यतः सरस्वती भिषक् स्वयमेव दुहे दोग्धि इन्द्राय भेषजम् । अतो यूयमपि भिषजौ भवथेति । आश्विसरस्वतीन्द्राश्च दैव्येन होत्रेज्यमानाः पयःप्रभृतीनि व्यन्तु त्वमपि हे मनुष्यहोतराज्यस्य यज ॥ ३३ ॥

होता यक्षद् दुरो दिशः । अत्र नकाराश्चार्थाः । होता दुरः द्वारः यजतु । छान्दसं संप्रसारणम् । किम्भूताः द्वारः दिशः कवष्यः । लुप्तोपमानमेतत् दिश इव सशुषिराः व्यचस्वतीश्च व्यञ्जनवत्यो गमनवत्यः अश्विभ्यां च या यज्ञगृहद्वारः अधिष्ठिता दिश इव बभूवुः । इन्द्रश्च या अधिष्ठाय रोदसी द्यावापृथिव्यौ दुघे । हकारस्य घकारः दुग्धवान् सरस्वती धेनुर्भूत्वा । अश्विनौ च या द्वारः अधिष्ठाय इन्द्राय भेषजं शुक्रं शुल्कं ज्योतिः इन्द्रियं च दुहे अश्वादयः पयआदीनि व्यन्तु हे होतस्त्वमपि यज ॥ ३४ ॥

होता यक्षत्सुपेशसा । होता सुपेशसा सुरूपे उषे यजतु । उषे इति द्विवचननिर्देशात् रात्रिश्चोषाश्च गृह्येते । यौ अश्विनौ सरस्वया सहितौ नक्तं रात्रौ दिवा अहनि च इन्द्रे त्विषिं दीप्तिं भेषजं च समञ्जाते संश्लेषयतः तौ च होता यजतु । यश्च श्येनः पत्ररूपः रजसा ज्योतिषा । रजःशब्दो ज्योतिर्वचनः । हृदा हृदयेन श्रिया च सह मासरमुपादाय इन्द्रे समनक्ति तं च होता यजतु । नकाराश्चार्थाः । दैव्येन होत्रेज्यमाना अश्वादयः पयआदीनि व्यन्तु होतर्यज ॥ ३५ ॥

होता यक्षद्दैव्या । दैव्यौ होतारौ अयं चाङ्गिरसौ च मध्यमः अ-

श्विनौ भिषजौ इन्द्रं च होता यजतु जागृवि स्वकार्यसिद्धावप्रमत्ता जागरणशीला । विभक्तिलोपश्छान्दसः । जागरणशीलावश्विनौ । अपरं जागृवि सरस्वती भिषक् दिवा नक्तं च भेषजैरोषधैः शूषं बलम् इन्द्रियं च सीसेन दुहे दोग्धि इन्द्रार्थं तां च दैव्यो होता यजतु अश्वादयः पयआदीनि व्यन्तु होतर्यज ॥ ३६ ॥

होता यक्षत्तिस्रो देवीः । नकारश्चकारार्थः । होता तिस्रो देवीर्वक्ष्यमाणा यजतु याः इन्द्रे भेषजं कुर्वन्ति त्रयः पशवः त्रिधातवः आश्विनो धूम्रः सारस्वतो मेषः ऐन्द्रः ऋषभः इति त्रयः पशवः प्रधानाङ्गोपयङ्भिः त्रिधातुः पशुः । अपसः अपश्विनः इति प्राप्ते छान्दसो विनो लोपः । अपः कर्म कर्मवन्तः अग्नयो वा त्रयस्त्रिधातवः रूपं हिरण्ययं हिरण्मयम् । इन्द्रे कुर्वन्ति तांश्च पशून् होता यजतु ये च अश्विनौ इडा भारती इन्द्रे हिरण्मयं रूपं कुर्वन्ति तांश्च यजतु । या सरस्वती वाचा त्रयीलक्षणया इन्द्राय महः महत्त्वं पूजाम् । इन्द्रियं च दुहे दोग्धि तां च होता यजतु । एवं दैव्येन होत्रा इज्यमाना अश्विसरस्वतीन्द्राः पयआदीनि व्यन्तु । हे होतः त्वम् आज्यस्य यज ॥ ३७ ॥

होता यक्षत्सुरेतसम् । होता त्वष्टारं यजतु । किम्भूतं सुरेतसं शोभनं रेतः उदकलक्षणं यस्य वृष्टिद्वारा । यद्वा पुंसां रेतसः कारणभूतम् ऋषभं वर्षितारं नर्यापसं नरेभ्यो हितं नर्यम् अपः कर्म यस्य स नर्यापाः तं तथा इन्द्रम् अश्विनौ सरस्वतीं भिषजं च यजतु नकाराश्चार्थाः । केन यजतु ओजः जूतिर्जवः इन्द्रियं च ओजआदिप्रदः रभसा सोद्यमो दक्षः भिषक् यो वृषः ईदृशेनो दकेन यजतु । सुरायां वृकलोमानि क्षिप्यन्ते इत्यतो वृकेन याग उच्यते । तथा श्रिया सह पशो भेषजं मासरम् । उपादाय सुरया च यज । श्रीर्यशः इन्द्रे यजमाने वा ते इज्यमानाः पयः आदीनि व्यन्तु हे होतर्यज ॥ ३८ ॥

होता यक्षद्वनस्पतिम् । शतक्रतुं बहुकर्माणं शमितारं वनस्पतिं होता यजतु । भीमं भयानकं मन्युं क्रोधात्मानं राजानम् । आरण्यानां पशूनां स्वामिनं व्याघ्रं च यजतु । नकारश्चार्थे । नमसा हविषा अश्विनौ च यजतु या सरस्वती भिषक् इन्द्राय भीमं क्रोधम् । इन्द्रियं च दुहे दोग्धि तां च दैव्यो होता यजतु । ते इज्यमा-

नाः पयआदीनि व्यन्तु। हे मनुष्यहोतस्त्वमपि आज्यस्य यज ॥३९॥

होता यक्षदग्निँस्वाहा। होता अग्निं प्रयाजदेवताम्। आहवनीयं वा यजतु। स्वाहा सु आह शोभनमाह यजमानः आज्यस्य स्तोकानां सु आह। स्तोका विप्लुषः मेदसां च या सम्बद्धानां पृथक् पृथक् शोभनमाह श्च्यमाणाश्च याः आज्येनाभिघार्यन्ते तदभिप्रायमेतत्। अश्विभ्यां छागं शोभनमाह। छागमेषऋषभशब्दाः पशुवचनाः। सरस्वत्यै च मेषं सु आह इन्द्राय ऋषभं सु आह। किंभूतम् ऋषभम्। इन्द्रियात्मकं सामानाधिकरण्यात्सम्बन्धः। अग्निं च भेषजं सु आह आज्यभागौ सु आहेत्यर्थः। नकारश्चार्थे। इन्द्रियम्। इन्द्रियात्मकं सोमं सु आह इन्द्रं सुत्रामाणं सवितारं वरुणं भिषजां पतिं पशुपुरोडाशदेवताः। सु आह। प्रियं पाथः अन्नं भेषजं च पशुदेवतानां वनस्पतिं सु आह। देवा आज्यपाः प्रयाजानुयाजा वै देवा आज्यपाः शोभनमाह यजमानः देवा आज्यपाः इज्यमाना देवता उत्तमे प्रयाजे संमर्यन्ते इत्यतो विभक्तिव्यत्ययोऽत्र न कृतः। श्रुतिस्तु। देवा ह वा ऊचुर्हन्त विजितमेवानुसर्वं यज्ञँसँस्थापयेत्युपक्रम्य तत उत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञँसँस्थापयन्त्वित्याह। अतः स्वाहकाराः समाप्तिवचनाः समाप्तिवचनत्वाच्च स्वाहाकाराणां देवतापदस्य चतुर्थ्या भवितव्येति स्वाहा देवेभ्यः आज्यपेभ्य इत्ययं प्रकारः। जुषाणः सेवमानोऽग्निः भेषजम्। औषधमिन्द्रस्य यजमानस्य वा करोतु अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयःप्रभृतीनि व्यन्तु हे मनुष्य होतः त्वमपि आज्यस्य यज ॥ ४० ॥

होता यक्षदश्विनौ। छागस्य त्रयो वपानां प्रैषाः यथालिङ्गम्। दैव्यो होता अश्विनौ यजतु इज्यमानौ च तौ अश्विनौ छागस्य वपाया मेदसः हविः जुषेताम्। स्नेहप्रकृतिर्मेदः। हे होतः त्वं च यज। होता यजतु सरस्वतीं सा च इज्यमाना मेषस्य वपाया मेदसो हविः जुषताम्। होता इन्द्रं यजतु स च इज्यमानः ऋषभस्य वपाया मेदसो हविर्जुषताम् ॥ ४१ ॥

होता यक्षदश्विनौ सरस्वतीम्। ग्रहाणां प्रैषः। अश्विनौ सरस्वतीं च सुत्रामाणमिन्द्रं च दैव्यो होता यजतु। एवं होतारमुक्त्वाथाध्वर्यूनाह हे अध्वर्यवः ये इमे सोमा वो युष्माकं वर्त्तन्ते। कीदृ-

शाः सुरामाणः सुरमणीयाः सुरावन्तो वा सुरामया वा छागैर्मेषैः ऋषभैश्च सुताः अभिषुताः समर्थीकृताः । नकाराः सर्वे समुच्चयार्थाः शष्पैः तोक्मभिः लाजैश्च महस्वन्तः महाभाग्ययुक्ताः महातर्पणीयाः मासरेण परिष्कृताः अलङ्कृताः । सम्पर्युपेभ्यः करोतौ भूषणे इति सुट् । शुक्राः शोचिष्मतः पयस्वन्तः पयसा संयुक्ताः अमृताः अमृतकल्पाः प्रस्थिताः होमाभिमुखीकृताः मधुश्चुतः मधुस्रवाः मधुक्षरणाः तान् ईदृशान् सोमान् अश्विनौ सरस्वती सुत्रामा वृत्रहा इन्द्रश्च जुषन्तां जुषित्वा च सोम्यं सोममयं मधु पिबन्तु मदन्तु तृप्यन्तु व्यन्तु भक्षयन्तु । हे मनुष्यहोतः यज ॥ ४२ ॥

होता यक्षदश्विनौ छागस्य हविषः । प्रैषः होता अश्विनौ यजतु यौ छागस्य हविषः आत्ताम् । अद् भक्षणे । अभक्षयताम् । अद्य अस्मिन् द्यवि मेद उद्भृतम् । उदरमध्यतो वपालक्षणं मेदः उद्धृतं तदपि यौ आत्ताम् । द्व्यग्रहोर्भः छन्दसीति भः । कथम् उद्धृतं द्वेषोभ्यः असुररक्षोभ्यः यज्ञद्वेष्टृभ्यो वा पुरा पूर्वं पौरुषेय्या गृभः पुरुषार्थं गृह्यत इति पौरुषेयी गृप् तस्याः पूर्वमिडाया इत्यर्थः । नहि वपाया यागे इडा विद्यते । यावेवं वपाहविषः आत्तां ताविदानीं नूनं निश्चयेन घस्तां भक्षयताम् । अङ्गानां स्वमंशमिति शेषः । विशेषणैर्विशेष्यस्याध्याहारः । किम्भूतानामङ्गानां घासे अज्राणां घासे घासे यान्यजराणि स्युः घासे यैरजरितं यवसप्रथमानां यवसानामन्नानां यानि प्रथमानि संस्कृतत्वात् । एतद्वै परममन्नाद्यं यन्मांसमिति श्रुतिः । सुमत्क्षराणां सुमत्स्वयामित्यर्थः । स्वयमेव यानि क्षरन्ति शतरुद्रियाणां बहुश्रुतीनाम् । रुद्र इति हि स्तोतृनामसु पठितम् । रुद्रस्य स्तोतुरिमा रुद्रियाः स्तुतयः शतं रुद्रिया येषाम् । अग्निष्वात्तानाम् । अग्निना साधुपाकार्थमास्वादितानाम् । अग्निना सुशृतानामित्यर्थः । पीवोपवसनानां पीवःशब्दः स्थूलवचनः सान्तः । उपवसने पीव इति प्रातिशाख्यसूत्रेण उपवसने परे पीवःशब्दस्य विसर्गलोपः । पीवेभिः स्थूलैः उपोषितं यैः पीवसां स्थूलानाम् । उपवसनं समीपस्थितिर्येषामिति वा । किञ्च पार्श्वतः अवत्तानां श्रोणितोऽवत्तानां शितामतो ऽवत्तानां शितामशब्देन यकृद्वा शिताम योनिर्वा शिताम मेदो वा शिताम इति व्याख्याभेदाः । उत्सादतः उत्सादनप्रदेशात् छेदनप्रदेशादवत्तानाम् । एवमङ्गादङ्गा-

तू अवत्तानाम् । अवदानानामंशं घस्तामिति एवं क्षितावदानौ अश्विनौ करतः कुरुतां तृप्तिमिति शेषः । हविश्च जुषेताम् । पुनर्वचनमादरार्थम् । हे मनुष्यहोतः त्वमपि यज ॥ ४३ ॥

होता यक्षत्सरस्वतीं मेषस्य । होता सरस्वतीं यजतु या हविष आवयत् आङ्पूर्वस्य वेतेः खादनार्थस्य लेटि भूतार्थाभिधायित एतद्रूपम् । घसत् करत् लोडर्थे लेट् जुषतामेकवचनम् ॥ ४४ ॥

होता यक्षदिन्द्रमृषभस्य । तुल्यव्याख्यानम् ॥ ४५ ॥

होता यक्षद्वनस्पतिमभि । वनस्पतिप्रैषः । वनस्पतिं यूपं होता यजतु हि यस्मात् यूपः अभ्यधित । स्थाघ्वोरिच्चेति दधातेर्लुङीत्वम् । अभिधारितवान् पशुधारणद्वारा यज्ञमिति शेषः । कया रशनया किम्भूतया पिष्टतमया सुरूपतमया पिष्टशब्दो रूपवाची रभिष्ठया आलब्धतमया अतिशयेन नियमनकारिण्या प्रार्थयामि च वनस्पतिं यत्र देशे अश्विनोः छागस्य हविषश्च प्रिया प्रियाणि धामानि स्थानानि यत्र च सरस्वत्याः इन्द्रस्य एताः पशुदेवताः अथाज्यभागौ अग्नेः सोमस्य । अथ पशुपुरोडाशदेवताः यत्र इन्द्रस्य सुत्राम्णः सवितुः वरुणस्य यत्र वनस्पतेः प्रियाणि पाथांसि पाथःशब्दोऽन्नवचनः । वनस्पतिः पशोरेवाङ्गम् । अथ प्रयाजानुयाजाः यत्र देवानाम् । आज्यपानाम् । अथ स्विष्टकृत् अग्नेर्होतुर्यत्र स्थानानि वनस्पतिर्देवः तत्र तेषु स्थानेषु तान् पशून् प्रस्तुत्येव प्रस्तुत्य च उपस्तुत्येव अतिशयार्थे पुनर्वचनम् । उपावस्रक्षत् उपावसृजतु वनस्पतिर्देवः रभीयस्र इव कृत्वी । रभ राभस्ये सरभसांश्च पशून् कृत्वा एवं करत् करोतु हविश्च जुषतां हे मनुष्यहोतः त्वमपि यज॥४६

होता यक्षदग्निᳬस्विष्टकृतम् । स्विष्टकृत्प्रैषः दैव्यो होता अग्निं स्विष्टकृतं यजतु । कथमित्यत आह योऽग्निः अश्विनोः छागस्य हविषः प्रियाणि धामानि जन्मानि अवदानानीत्यर्थः । अयाट् अयाक्षीत् इष्टवान् एवमग्रेऽपि सरस्वत्याः इन्द्रस्य सुत्राम्णः सवितुः वरुणस्येति पशुपुरोडाशदेवताः वनस्पतेः प्रियाणि पाथांस्यन्नानि अयाट् वनस्पतिः प्रधानाङ्गदेवानामाज्यपानाम् । प्रयाजानुयाजा आज्यपाः । अग्नेर्होतुः स्विष्टकृतः स्वयमेव प्रियाणि धामानि यक्षत् इष्टवान् स्वं महिमानं स्वां विभूतिं यक्षत् । किञ्च आयजतामेज्या इषः । आ इज्याः आभियष्टव्याः यागार्हाः इषः प्रजाः आयजतम् ।

आयजन्तामिति वचनव्यत्ययः । इषा अन्नेन तासां स्थितिरुत्पत्तिश्चेति इषः प्रजा उक्ताः । यागशीला यागार्हाश्च प्रजा भवन्त्वित्यर्थः । स जातवेदाः अध्वरा अध्वरान् कृणोतु करोतु हविर्जुषतां च । हे मनुष्यहोतर्यज ॥ ४७ ॥

देवं बर्हिः । एकादशानुयाजप्रैषाः अश्विसरस्वतीन्द्रदेवत्याः । व्यवहितपदप्रायाः । शोभना देवा यस्य तत्सुदेवम् । ईदृशं यत् देवं बर्हिः अनुयाजदेवता तेन बर्हिषा सह सरस्वती अश्विनौ च तेजः चक्षुरिन्द्रियं च इन्द्रे अक्ष्योः अक्ष्णोः दधुः नकारश्चार्थः । एवमग्नेऽपि वसुवने वसुवननाय धनलाभाय वसुधेयस्य वसुनिधानाय च अश्विसरस्वतीन्द्राः पिबन्तु त्वमपि यज ॥ ४८ ॥

देवीर्द्वारः । या यज्ञगृहद्वारो देव्यः ताभिः अश्विना भिषजौ सरस्वती च प्राणमिन्द्रियं वीर्यं च नसि नासिकायाम् इन्द्रे दधुः । द्वारः द्वार्भिरिति विभक्तिव्यत्ययः । वसुवने इति व्याख्यातम् ॥ ४९ ॥

देवी उषासौ । नक्तोषासाविति प्राप्ते छान्दसः प्रातिपदिकलोपः । यौ देव्यौ नक्तोषासौ ताभ्यां नक्तोषासाभ्यां सुत्रामा शोभनत्राणौ अश्विनौ सरस्वती च बलं वाचमिन्द्रियं च आस्ये इन्द्रे दधुः वसु० ॥५०॥

देवी जोष्ट्री । ये जोषयित्र्यौ देव्यौ द्यावापृथिव्यौ अहोरात्रे वा शस्यं च समा चेति कात्थक्यः । ताभ्यां जोष्ट्रीभ्यां सरस्वती अश्विनौ च इन्द्रमवर्द्धयन् कथमवर्द्धयन् यशः श्रोत्रमिन्द्रियं च कर्णयोः दधुः वसु० ॥ ५१ ॥

देवी ऊर्ज्जाहुती । जोष्ट्र्योस्तुल्यदेवताविकल्पः । ये देव्यौ ऊर्जाह्वान्यौ दुघे दुग्धे सुदुघा सुदोहने । उपरितनार्द्धर्चे आहुतीशब्दः श्रूयते स इह कृतविभक्तिव्यत्ययः क्रियते कृतपूर्वसवर्णा तृतीयैव । ताभ्याम् । ऊर्ज्जाहुतीभ्यां सरस्वती अश्विनौ भिषजौ च अवतः अवन्ति । वचनव्यत्ययः । इन्द्रमिति शेषः । कथं कृत्वा शुक्रं शुक्लं ज्योतिः पयोलक्षणमिन्द्रियं च स्तनयोः इन्द्रे धत्तः दधुः । विभक्तिव्यत्ययः । वसु० ॥ ५२ ॥

देवा देवानाम् । यौ देवानां होतारौ देवौ ताभ्यां होतृभ्यां वषट्कारैश्च अश्विनौ भिषजौ सरस्वती च इन्द्रम् इन्द्रे इति विभक्तिव्यत्ययः । त्विषिं दीप्तिं मतिम् । इन्द्रियं च हृदये दधुः वसु० ॥५३॥

देवीस्तिस्रः । यास्तिस्रो देव्यः सरस्वतीडाभारत्यः । तिस्रो

देवीः। अत्र विभक्तिव्यत्ययोऽध्याहारश्च वाक्यवशात् । तिसृभिर्देवीभिः सरस्वतीडाभारतीभिः अश्विनौ सरस्वती च शूषं बलमिन्द्रियं च मध्ये नाभ्याम् । इन्द्राय विभक्तिव्यत्ययः इन्द्रे दधुः वसु० ॥ ५४ ॥

देव इन्द्रः। इदि परमैश्वर्ये। इन्द्रः परमैश्वर्यवान् यः देवो नराशंसः। नरा अस्मिन् आसीनाः शंसन्तीति त्रिवरूथः त्रिगृहः सदोहविर्द्धानाग्नीध्रैः त्रिलोक्या वा त्रिगृहः। यस्य च रथः सरस्वत्या अश्विभ्यां च ईयते ऊह्यते नीयते स यज्ञः रेतः अमृतं रूपं च जनित्रं जन्म इन्द्रियाणि च इन्द्राय इन्द्रे इन्द्रस्य वा । विभक्तिव्यत्ययः। दधातु। कीदृशो यज्ञः त्वष्टा त्वक्षतिः करोत्यर्थः जगतः कर्त्ता वसु० ॥ ५५ ॥

देवो देवैः। यो देवो वनस्पतिः यूपः देवैः हिरण्यपर्णः यस्य देवा हिरण्मयानि पर्णानि। रूपकोऽत्रालङ्कारः। यश्च अश्विभ्यां सरस्वत्या च। सुपिप्पलः सुफलः । अश्विनौ सरस्वती च यस्य वनस्पतेः फलानीत्यर्थः । यः इन्द्राय इन्द्रार्थे मधु मधुराणि फलानि पच्यते फलति स वनस्पतिर्नोऽस्माकम्। ओजः भामं क्रोधम्। इन्द्रियाणि च दधत् दधातु। नौ चार्थौ। कीदृशः जूतिः वेगवान्। जूतिर्जवतेः। ऋषभः पूज्यः ऋषभशब्दः पूजावचनः। न इति अस्मदो द्वयोश्चेति बहुवचनम्। वसु० ॥ ५६ ॥

देवं बर्हिः। यस्मात् वारितीनाम्। उदकवतीनां वारिप्रभवाणां वा वरतराणां वा ओषधीनां सम्बन्धि देवं दीप्यमानं बर्हिः ऊर्णम्रदाः। ऊर्णेव मृदु हे इन्द्र तस्मात् ते तव सदः स्थानं स्योनं सुखरूपम्। किञ्च हे इन्द्र तस्मिन् सदसि ईशायै ईशनाय ऐश्वर्याय आश्विसरस्वत्यः बर्हिषा मन्युं क्रोधं राजानं त्वाम् । इन्द्रियं च दधुः । यद्वा । हे इन्द्र तव ईशनाय मन्युं राजानं दीप्यमानम् । इन्द्रियम् अश्विसरस्वत्यः बर्हिषा दधुः। वसु० ॥ ५७ ॥

देवो अग्निः। यो देवो अग्निः स्विष्टकृत् शोभनमिष्टं कर्त्तव्यमित्ययमधिकारो यस्य सः देवान् यक्षत् इष्टवान्। कथं यथायथं यथास्वं यो यथा यष्टव्यः तथेत्यर्थः। एवं सामान्यत उक्त्वा विशेषमाह होतारौ अयं चाग्निरसौ च मध्यमो वायुः होतृमैत्रावरुणौ वा इन्द्रं च अश्विनौ च वाचा कृत्वा वाचं सरस्वतीम् । अग्निं सोमं च य-

क्षदिति सम्बन्धः । स्विष्टकृच्च स्विष्टः शोभनमिष्टः इन्द्रः सुनाम च-इष्टः सविता इष्टः वरुणो भिषक् इष्टः आज्यपाः देवाः प्रयाजानुयाजा इष्टाः अग्निः अग्निना स्विष्टः । अथेदानीं होता स्विष्टकृत् ददातु । ददात्यर्थे दधातिः नकाराश्चार्थाः । वसु० ॥ ५८ ॥

अग्निमद्य । सूक्तवाकप्रैषः अयं यजमानः अद्य होतारमग्निम् । अवृणीत वृतवान् । किं कुर्वन् पक्तीः पक्तव्यानि वस्तूनि पचन् इति सामान्यवचनम् । अथ विशेषः पुरोडाशान् पचन् अश्विभ्याम् । अश्विनोरर्थे छागं बध्नन् यूपे इति शेषः । सरस्वत्यै मेषं च इन्द्राय ऋषभं च बध्नन् । अन्यच्च अश्विभ्यां सरस्वत्यै इन्द्राय सुत्राम्णे सुन्वन् अग्निं होतारमवृणीतेति सम्बन्धः ॥ ५९ ॥

सूपस्था अद्य । साधु यज्ञमुपतिष्ठते । इति सूपस्थाः । अद्य वनस्पतिर्देवः अश्विभ्यां छागेन सरस्वत्यै मेषेण इन्द्राय ऋषभेण सूपस्था अभवत् । कथमेवमवगम्यत इत्यत आह अश्विप्रभृतयः तान् छागादीन् मेदस्तः वपायामारभ्य अक्षन् भक्षितवन्तः पचता पचतानि । पचतेः भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् । भूतेऽपि दृश्यन्त इति वचनाद् भूते द्रष्टव्यः । विभक्तेराकारः । पक्वानि अवदानानि प्रति अगृभीषत प्रतिगृहीतवन्तः पुरोडाशैः अवीवृधन्त च । किञ्च अश्विनौ सरस्वती इन्द्रश्च सुत्रामा सुरासोमान् अपुः पीतवन्तः सोमाश्च तान् सुरामयान् सोमान् ॥ ६० ॥

त्वामद्य । दैव्या होता अग्निरुच्यते । हे ऋषे मन्त्राणां द्रष्टः हे आर्षेय यजमानार्षेयैर्व्रियत इत्येवं सम्बोध्यते । हे ऋषीणां ऋत्विजां नपात् पुत्र अयं यजमानः बहुभ्यः सङ्गतेभ्यो देवेभ्यः त्वामेव अद्य आ अवृणीत वृतवान् । किमर्थम् । एष मे मह्यं देवेषु वारि वरणीयं वसु धनम् आयक्ष्यते आदास्यति दातुं समर्थ इति हे देव ता तानि या यानि दानानि देवा अदुः दत्तवन्तः तानि अस्मै यजमानाय दातव्यानि तानि अस्मै आशास्व च इच्छ आगुरस्व च । गुरी उद्यमने । उद्यच्छ च दानाय । आकारचकारौ भिन्नक्रमौ । हे होतः त्वम् इषितः प्रेषितोऽसि भद्रवाच्याय भन्दनीयाय वचनीयं भद्रं वचनं त्वां ब्रूया इति । अथ मानुषो होता सूक्तवाकाय साधुवचनाय प्रेषितः । कथं सूक्ता सूक्तानि साधुवचनानि ब्रूहि वदेति ॥ ६१ ॥

इति समाप्ता सौत्रामणी ।

इति मन्त्रभाष्ये एकविंशोऽध्यायः ॥ २१ ॥

## अथ द्वाविंशोऽध्यायः ॥ २२ ॥

अथाश्वमेधश्चतुर्भिरध्यायैः । तं च प्रजापतिरपश्यत् । तेजोऽसि । सौवर्णं निष्कं प्रतिमुञ्चन् वाचयति । त्वं तेजः असि शुक्रं चाग्नेः । अग्निर्ह वा अपोऽभिदध्यावित्युपक्रम्य तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवदिति श्रुतिः । अमृतं च अग्निप्रभवत्वात् दानेनामृतत्वप्रदानाच्च हिरण्यदा अमृतत्वं भजन्त इत्युक्तेः । आयुष्पा आयुषो गोपायिता अतः प्रार्थये मे मम आयुः पाहि यज्ञसमाप्त्यर्थमायुः प्रार्थ्यते । रशनामादत्ते देवस्य त्वेति व्याख्यातम् ॥ १ ॥

इमामगृभ्णन् । त्रिष्टुप् रशनादेवत्या । विदथेषु यज्ञेषु ये कव्या कवयः विश्वस्रष्टारो वा आद्ये ये सर्गे प्रजापतिप्रभृतयः एते सृष्टियज्ञादसृजन्तेति ऋतस्य यज्ञस्य पूर्वे प्रथमे आयुषि यज्ञारम्भे इत्यर्थः । या इमां रशनाम् दर्भमयीम् अगृभ्णन् गृहीतवन्तः सा रशना नोऽस्माकम् अस्मिन् सुते यज्ञे आबभूव आभूता उत्पन्ना । कीदृशी ऋतस्य सामन् संमनने यज्ञप्रारम्भे सरं यज्ञप्रसरम् आरती शब्दायमाना ॥ २ ॥

बध्नात्यश्वम् । अभिधा असि । हे अश्व यः त्वमभिधा अभिधातव्योऽसि भुवनमाश्रयश्चासि यन्ता यमनेन कर्त्ता चासि धर्त्ता धारयिता चासि स त्वमेवंप्रभावः स्वाहाकृतः साधुहुतः सन् सप्रथसं सर्वतः तिर्यगूर्ध्वमधश्च सता ऐश्वर्येण पृथुं वैश्वानरमग्निं गच्छ ॥ ३ ॥

स्वगा त्वा । हे अश्व देवेभ्यः प्रजापतये च त्वां स्वगा करोमि स्वगाशब्दो डाजन्तः । स्वयं गामिनमित्यर्थः । ब्रह्माणमामन्त्रयते । ब्रह्मन्नश्वम् हे ब्रह्मन् देवेभ्योऽर्थाय प्रजापतये च अश्वं भंत्स्यामि बध्नातेरूपम् । अश्वस्य बन्धनं करिष्यामि तेन बन्धेन अहं राध्यासं राधिं प्राप्नुयाम् । राधिः कर्मसमाप्तिः । ब्रह्मा प्रसौति तं बधान यमिच्छसि तमश्वं बधान तस्य बन्धनं कुरु । किमर्थं देवेभ्यः प्रजापतये च । तेन बन्धेन राध्नुहि यज्ञसमाप्तिं प्राप्नुहीत्यर्थः ॥ ४ ॥

प्रोक्षत्यश्वम् प्रजापतये जुष्टम् । प्रजापतेर्वल्लभं त्वां प्रोक्षामीति । ऋजवः प्रोक्षणमन्त्राः । यजमानं वाचयति । यो अर्वन्तम् । गायत्री ।

अर्थेनाश्वस्तुतिः यः पुरुषः अर्वन्तम् । अर्वन्शब्दोऽश्ववचनः । जिघांसति हन्तुमिच्छति वरुणः तम् । अभ्यमीति हिनस्ति । अम् हिंसायाम् । तुरुस्तुशम्यमः सार्वधातुके इति ईकारप्रत्ययः लटि । मृतं श्वानं चतुरक्षं हत्वाधस्पदमश्वस्योपप्लावयाति । यद्यपि शुनश्चतुर्नेत्रता नास्ति तथापि यस्य नेत्रसमीपे पुण्ड्रे स्तः स चतुरक्ष उच्यते तं हत्वाऽश्वपादेषु मुञ्चति । परो मर्तः । योऽश्वं जिघांसति स मर्त्तो मनुष्यः परः पराभूतः अधस्पदं नीतः श्वा च परः पराकृतः ॥ ५ ॥

दशाश्वस्तोकीया जुहोति । अग्नये स्वाहेति ऋजवो होममन्त्राः ॥६॥

अश्वस्य रूपाणि जुहोति । हिङ्काराय स्वाहेति । एकोनपञ्चाशत् अश्वस्य चेष्टितानि क्रियाश्चात्राभिधीयन्ते ॥ ७ ॥

विवृत्ताय दीप्यमानाय । वृत् दीप्तौ । यते स्वाहा एतीति यन् तस्मै । स्पष्टमन्यत् ॥ ८ ॥

अथ सावित्रीणामिष्टीनां तत्सवितुरित्यादिकाः षट् याज्यानुवाक्याः सावित्र्यः । आद्या व्याख्याता ॥ ९ ॥

हिरण्यपाणिमहं सवितारमुपह्वये आह्वयामि । किमर्थम् । ऊतये अवनाय । किम्भूतं हिरण्यपाणिं हिरण्मयौ पाणी यस्य तं यतः सः सविता चेत्ता सर्वार्थदृक् महती च देवता पदं स्थानं च ज्ञानकर्म्मसमुच्चयकारिणम् ॥ १० ॥

देवस्य चततः । चेततः विजानतः सवितुर्देवस्य महीं महतीं सुमतिं कल्याणीं मतिं प्रहवामहे प्रार्थयामः । किम्भूतां मतिं सत्यराधसम् । अनश्वरधनां सत्यसाधयित्रीं वा ॥ ११ ॥

सुष्टुतिम् । सवितुर्देवाय देवस्येति विभक्तिव्यत्ययः । सुष्टुतिं शोभनां स्तुतिं रातिं दानं च प्र ईमहे याचामः । किम्भूतस्य सवितुः सुमतीवृधः शोभनां मतिं वर्द्धयतीति सुमतीवृत् तस्य सुमतीविदे मतीविद इति विभक्तिव्यत्ययः । मतिं सर्वेषां वेत्तीति दीर्घः संहितायाम् ॥ १२ ॥

रातिं सत्पतिम् । रा दाने । रातिनिमित्तत्वाद्रातिशब्देन सवितैवोक्तः । रातिं दानरूपम् । यद्वा राति ददातीति रातिः ऊतियूतीति कर्त्रर्थे तिप्रत्ययः । सत्पतिं सतां पालयितारं सवितारं उपह्वये आह्वयामि महे पूजयामि च किमर्थं देववीतये देवतर्पणाय । किंस-

वितारम् । आसवम् । आभिमुख्येन सौति प्रसौति कर्मण्यनुजानातीति आसवः तम् ॥ १३ ॥

देवस्य सवितुः । आशवम् । आज्ञारूपं विश्वदेव्यं सर्वेभ्यो हितं सवितुर्देवस्य मतिं धिया स्वकीयया प्रज्ञया भगं भजनीयं धनं मनामहे याचामः । द्विकर्मा चायं धातुः तेन मतिशब्दे भगशब्दे च द्वितीया ॥ १४ ॥

अग्निँ स्तोमेन । तिस्र आग्नेय्यो गायत्र्यः । हे अध्वर्यो अग्निं स्तोमेन स्तुत्या बोधय अवगतार्थं कुरु । किं कुर्वन् समिधानः संदीपयन् । किम्भूतमग्निम् । अमर्त्यम् । अमरणधर्म्माणं स च बोधितः सन् नोऽस्माकं हवींषि देवेषु दधत् दधातु धारयतु स ह्यस्याधिकार इति ॥ १५ ॥

स हव्यवाट् । य एवंविधः सोऽग्निः धिया प्रज्ञया समृण्वति सङ्गच्छते देवैः सह हविषा तर्पणाय । कीदृशः हव्यवाट् हविषां वोढा अमर्त्यः उशिक् मेधावी दूतः देवानां चनोहितः । चन इत्यन्ननाम । चनसे हितः हविर्भूतस्यान्नस्य भक्षणार्थं निहितः ॥ १६ ॥

अग्निं दूतम् । हव्यवाहं हविषां वोढारं देवानां दूतं यमग्निं पुरोदधे पुरतः स्थापयामि तमुपगम्य ब्रुवे ब्रवीमि । किं ब्रवीमि इह यज्ञगृहे यागाय देवान् आसादयात् आसादय ॥ १७ ॥

अजीजनो हि । पावमानी । सौमी कृतिरनुष्टुप् । हे पवमान सोम हि यस्मात् त्वं सूर्यम् अजीजनः जनितवानसि जनयसि वा । शक्मना कर्मणा पयः अपः विधारे विधारयसि । केन हेतुना गोजीरया । जीवेयुरिति गोभिर्हि यज्ञस्तायते प्राणिनश्च जीवन्ति । किं कुर्वन् पुरन्ध्या पुरं बहु दधातीति पुरन्धिः तया बहुधारयित्र्या धारया रंहमाणः गच्छन् दशापवित्रात् द्रोणकलशं प्रति तस्मात् त्वां स्तुम इति शेषः ॥ १८ ॥

अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतः विभूर्मात्रा । अश्व उच्यते । त्वं मात्रा मातुः सकाशात् विभूरसि विभवसि । पित्रा पितुः प्रभूरसि प्रभवसि । इयं वै माताऽसौ द्यौः पितेति श्रुतिः । अथाश्वं नामक्रियाभिः स्तौति । अश्वः महाशनः त्वमसि हयोऽसि । हि गतौ । तस्य हयः । अत्योऽसि अत सातत्यगमने । मयोऽसि मय इति सुखनाम । सुखरूपोऽसि । अर्वासि ऋ गतौ अस्य अर्वा ।

सप्तिरसि सरणोऽसि वाजी वेजनवानसि वृषा सेक्तासि नृमणाः नृणां मनुष्याणां मनो यत्र स नृमणाः असि ययुर्नामासि ययुः एवं नामासि ययुर्यानशीलः अनेकगतिसूचनार्थं पुनः पुनर्गत्युक्तिः । शिशुः एवंनामासि शिशुः शंसनीयो भवति अपारमार्थिको वा नामशब्दः । यस्त्वमीदृशः तं त्वां ब्रवीमि आदित्यानां देवानां पत्वा पतनं मार्गम् । अन्विहि येन यथा आदित्याः पतन्ति गच्छन्ति तमनुगच्छ । रक्षिणोऽस्यादिशति देवा आशापलाः हे दिक्पालाः देवाः देवेभ्यः मेधाय यज्ञाय प्रोक्षितमेतमश्वं रक्षत । चतस्रो धृतीर्जुहोति इह रन्तिः । अथाश्व उच्यते । इह रमणम् । इह रमताम् । इह धृतिः इह स्वधृतिः साधुधृतिः इह यज्ञे अश्व तव क्रीडादय इत्यर्थः॥१९॥

औदूग्रभणानि जुहोति । काय स्वाहा प्रजापतये कस्मै प्रजापतये कतमस्मै प्राजापत्याय स्वाहाधिमाधीताय । पूर्वे स्वाहाकारान्तास्तिस्र आहुतयः प्राजापत्याः । आधिमाध्यानं चतुर्थी चात्र कर्त्तव्या । आधये स्वाहा आधीताय स्वाहा मनः मनसे इति विभक्तिव्यत्ययः । प्रजापतये स्वाहा चित्तं विज्ञाताय चित्तायेति विभक्तिव्यत्ययः । आदित्यै मह्यै । मह पूजायाम् । पूज्यायै अदित्यै सुमृडीकायै । मृड सुखने । सुखयित्र्यै सरस्वत्यै पावकायै पावयित्र्यै बृहत्यै महत्यै पूष्णे प्रपथ्याय । प्रगतः पन्थाः प्रपन्थाः तत्र भवः प्रपथ्यः तस्मै नरन्धिषाय नरान् दधातीति नरन्धिषः तस्मै त्वष्ट्रे तुरीपाय तूर्णं पाति रक्षतीति तुरीपः पुरुरूपाय बहुरूपाय विष्णवे निभूयपाय नीचैर्भूत्वा यः पाति स निभूयपः । शिपिविष्टाय शिपिं पशुं यज्ञस्य वेष्टयति साधुकरोति स शिपिविष्टः ॥ २० ॥

विश्वो देवस्येति व्याख्यातम् ॥ २१ ॥

आ ब्रह्मन् । हे ब्रह्मन् राष्ट्रे ब्राह्मणः ब्रह्मवर्चसी यज्ञाजपति । आ ब्रह्मन् । हे ब्रह्मन् राष्ट्रे ईदृशः आजायतां कीदृशः ध्ययनशीलः आजायतां राजन्यः राष्ट्रे ईदृशः आजायतां कीदृशः शूरः इषव्यः इषुणा विध्यतीति इषव्यः इषौ कुशलो वा अतिव्याधी अतिद्विषन्तं विध्यतीति महारथश्च धेनुर्दोग्ध्री राष्ट्रे आजायतामिति सर्वत्र सबन्धः । अनड्वान् वोढा सप्तिरश्वः आशुः शीघ्रः योषा स्त्री पुरन्धिः पुरं शरीरं रूपादि गुणसंयुतं दधातीति पुरन्धिः । रथेष्ठाः रथे तिष्ठतीति रथेष्ठाः । युयुत्सुः पुरुषो जिष्णुः जयनशील आजायताम् । युवा आ अस्येति पदच्छेदः । अस्य यज-

मानस्य सभेयो युवा वीरः पुत्रः आजायतां गुणचरित्रैः सभामर्हतीति सभेयः। किञ्च नोऽस्माकं राष्ट्रे पर्जन्यो निकामे वर्षतु प्रार्थनायामवश्यं भवतीति निकामः। अभ्यासो वीप्सार्थः। अस्माकमोषधयः फलवत्योऽतिशयेन फलयुक्ताः पच्यन्ताम्। नः योगक्षेमः कल्पतां क्लृप्तो भवतु। योगो द्रव्यादीनां संयोगः। क्षेमस्तेषामेव परिपालनं योगश्च क्षेमश्चेति द्वन्द्वः तत्र नपुंसकलिङ्गता स्यात् द्विवचनं वा तत्र छान्दसो विसर्गो द्रष्टव्यः॥ २२॥

आज्यसक्तुधानालाजानामेकैकं जुहोति। प्राणाय स्वाहेति प्रतिमन्त्रं सर्वरात्रमावर्त्तम्॥ २३॥

व्युष्ट्या इति। व्युष्टायां स्वर्गायेत्युदिते प्राणाय स्वाहा इत्यारभ्य द्वादशभिः कण्डिकासंमितैरनुवाकैर्देवता उक्ताः आज्यादिहविर्भिरेते सर्वे एव यागाः महतो यज्ञस्य लोककालाग्न्यादिवपुषोऽवयविनोऽवयवभूताः। यथा देवदत्तस्यावयवाः शिरःपाण्यादयोऽवयवभूताः। सोऽयमश्वमेधः प्रजापतेरवयविनोऽवयवभूतः प्रजापतिश्चात्मनः। सोऽयमात्मा शाखाप्रशाखागतः स्तूयते हूयते च ज्ञानकर्मसमुच्चयकारिभिर्यजमानैः। एकस्मै स्वाहा द्वाभ्यां स्वाहेति प्रकारप्रदर्शनम्। त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहेति आ एकशतात्। रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत्प्रीणातीति श्रुतिः॥ २४-३४॥

इति मन्त्रभाष्ये द्वाविंशोऽध्यायः॥ २२॥

---

## अथ त्रयोविंशोऽध्यायः॥ २३॥

---

हिरण्यगर्भः सम। महिम्नः पुरोरुक् व्याख्यातम्॥ १॥

उपयामगृहीतोऽसि। प्रजापतये जुष्टमभिरुचितं त्वां गृह्णामि। सादयति एष ते तव योनिः स्थानं सूर्यस्ते तव महिमा महाभाग्यं शक्तिः दीपस्येव प्रभा। जुहोति। यस्ते ऽहन्। यः ते तव अहनि संवत्सरे च महिमा संबभूव संभूतः उत्पन्नः अहनि संवत्सरे च निमित्तभूते सर्वाण्येव भूतानि संपद्यन्ते। निमित्तसप्तम्यश्चैताः चर्मणि द्वीपिनं हन्तीतिवत्। यः ते वायौ अन्तरिक्षे च महिमा संभूतः यः

ते सूर्ये दिवि च महिमा संभूतः तस्मै ते तव महिम्ने प्रजापतयेच देवेभ्यश्च स्वाहा ॥ २ ॥

द्वितीयं गृह्णाति तस्य पुरोरुक् । यः प्राणतः । त्रिष्टुप् । कायी प्राजापत्या वा । यः कः प्रजापतिः प्राणतः प्राणनं कुर्वतः निमिषतः निमेषणं कुर्वतः क्रियावत इत्यर्थः । ईदृशस्य जगतः एक इत् एक एव महित्वा स्वकीयेन महाभाग्येन राजा बभूव यश्च अस्य द्विपदः चतुष्पदश्च प्राणिजातस्य ईशे इष्टे तस्मै कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः विदधातिर्दानकर्म्मा । हविरिति विभक्तिव्यत्ययः ॥ ३ ॥

उपयामगृहीतोऽसि । प्रजापतये जुष्टं त्वां गृह्णामि । सादयति एष ते योनिः चन्द्रमाः ते महिमा । जुहोति । यस्ते रात्रौ संवत्सरे पृथिव्यामग्नौ नक्षत्रेषु चन्द्रमसि च महिमा संबभूव तस्मै ते तव महिम्ने प्रजापतये देवेभ्यश्च स्वाहा ॥ ४ ॥

अश्वं युनक्ति युञ्जन्ति ब्रध्नम् । गायत्री । अश्वोऽत्रादित्यवत् स्तूयते । उत्तरोऽर्धर्चः प्रथमं व्याख्यायते । यस्य भासा दिवि रोचना रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि रोचन्ते दीप्यन्ते तं ब्रध्नं परिवृढम् आदित्यं रथे युञ्जन्ति कीदृशम् अरुषम् अरोषणं चरन्तं वैदिककर्मसिध्यर्थं गच्छन्तं के युञ्जन्ति परितस्थुषः विभक्तिव्यत्ययः । सर्वतः स्थिता ऋत्विग्यजमानाः ॥ ५ ॥

इतरांश्च युनक्ति । युञ्जन्त्यस्य । गायत्री । हरी हरणौ वेगवन्तौ अश्वौ रथे युञ्जन्ति । कीदृशौ अस्याश्वमेधिकस्याश्वस्य काम्या काम्यौ कामसंपादिनौ । न ह्येको रथं वोढुं शक्तः । विपक्षसा । विविधाः पक्षसः पक्षाः ययोस्तौ विपक्षसौ विविधपक्षावस्थितौ यद्वा विरिति शकुनिनाम वेतेर्गतिकर्मणः । वेः शकुनेरिव पक्षौ य योस्तौ । शोणा शोणौ । शोणशब्दोऽत्र वर्णवचनः । रक्तो वर्णः धूम्रभासः शोण इत्युच्यते धृष्णू प्रसहता नृवाहसा नृणां मनुष्याणां वोढारौ ॥६॥

अपो यात्वावगाढेषु वाचयति । यद्वातः । बृहती अश्वदेवत्या । यत् यस्मात् वातः वातवेगोऽश्वः अपः प्रति अगनीगन् अत्यर्थं गतः । प्रियां च इन्द्रस्य तन्वं शरीरम् अगनीगन् अतो ब्रवीमि एतमश्वं हे स्तोतः अध्वर्यो अनेन पथा येन गतः । पुनरश्वमावर्त्तयासि आनय नोऽस्माकम् ॥ ७ ॥

आगतमश्वं महिषी वावाता परिवृक्ताज्येनाभ्यञ्जयन्ति वसवस्त्वेति प्रति मन्त्रम्। वसवः त्वा अञ्जन्तु निगदव्याख्यातम्। सौवर्णान् मणीन् एकशतमश्वकेशरपुच्छेषु प्रवयन्ति पत्न्यः। भूर्भुवः स्वः। व्याख्यातम् अश्वाय रात्रिहुतशेषं प्रयच्छति। लाजीन् शाचीन् योऽयं लाजीनां समूहो लाजीनित्युक्तः। योऽयं सक्तूनां समूहः शाचीनित्युक्तः। सक्तवो ह्यतितरां शच्या कर्मणा निष्पाद्यन्ते इति शाचीनित्युक्ताः। यश्चायं यव्ये यवमयः समूह उक्तो धानाः यश्च गव्ये गोविकारसमूह उक्तो गव्ये इति। हे देवाः एतत् अन्नमद्धि अन्नं भक्षयत हे प्रजापते एतदन्नम् अद्धि येभ्योऽश्वः प्रोक्षितः तद्देवत्वात् एतद्देवत्योऽश्व इति ॥ ८ ॥

ब्रह्मा पृच्छति होतारं यूयमभितः कश्वित्। चतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नरूपाः। कः पुनः एकाकी असहायश्चरति गच्छति कः उस्वित्। उपादपूरणः। को विनष्टः सन् पुनर्जायते किं पुनर्हिमस्य शीतस्य भेषजं किं महत् आवपनम्। आ उप्यते निक्षिप्यते ऽस्मिन्निति आवपनम् ॥ ९ ॥

होता प्रत्याह। सूर्यः एकाकी चरति भूमिरयं लोकः स्पष्टमन्यत् ॥ १० ॥

होता ब्रह्माणं पृच्छति कास्विदासीत् का पुनः पूर्वचितिः आसीत् किं पुनः बृहत् महत् वयः पक्षी। पुनरासीत् पिलिप्पिला का च पिशङ्गिला ॥ ११ ॥

ब्रह्मा प्रश्नान्व्याकरोति। द्यौरासीत् पूर्वचितिः। आसीद्युग्रहणेनात्र वृष्टिर्लक्ष्यते। वृष्टिः पूर्वाचितिः पूर्वं चिन्त्यत इति पूर्वचितिः। सा हि पूर्वं सर्वैः प्राणिभिश्चिन्त्यते। अश्वो बृहद्वयः। अश्वशब्देनाश्वमेधो लक्ष्यते वयसा इव हि अनेनाश्वमेधेन स्वर्गलोकमारोहन्ति अवतीत्याविः पृथिव्युच्यते। सा पिलिप्पिला वृष्ट्या हि पृथिवी क्लिद्यमाना पिलिप्पिला भवति। श्रीरिति श्रुत्या पृथिव्युक्तैव। रात्रिः पिशङ्गिला पिशामिति रूपनाम। रात्रिर्हि सर्वाणि रूपाणि गिलति अदृश्यानि करोति ॥ १२ ॥

प्रोक्षत्यश्वं कण्डिकाचतुष्टयेन। वायुष्ट्वा वायुः पचतैः पाकैः त्वाम्। अवतु वायुना हि अग्निसंयोगात् द्रव्याणि पच्यन्ते असिता ग्रीवा यस्य धूमसंयोगात् स असितग्रीवो वह्निः छागैः त्वामवतु

कृष्णग्रीवादिभिः पर्यायैः अश्वाङ्गेष्वालभ्यमानेषु अश्वायोपकुर्वन्ति । अदृष्टेनोपकारेण न्यग्रोधः चमसैः अवतु सोमसम्बन्धेन शल्मलिः स्वकीयया वृद्ध्या त्वामवतु स्यः सः एषः राथ्यः रथे साधुः वृषा-सेक्ता चतुर्भिः पद्भिः पादैः आ इत् अगन् आगन् चतुर्ग्रहणं किं त-स्मादश्वस्त्रिभिस्तिष्ठति अथ सर्वैः पड्भिः सममायुत इति श्रु-तिः । ब्रह्मा परिवृढः अकृष्णश्च न विद्यते कृष्णमस्येत्यकृष्णः चन्द्र-माः स च नोऽस्माकमश्वमवतु । अग्नये नमः अग्निं नमस्करो-म्यविघ्नाय ॥ १३ ॥

सᳪंशितः । तिस्रोऽनुष्टुब्विराट्त्रिष्टुभः । प्रोक्षणे एव अश्वदे-वत्याः । संपूर्वः श्यतिः शोभने वर्त्तते । रथो यथा रश्मिना संशितो दर्शनीयोः भवति । हयोऽश्वो यथा रश्मिना संशितः एवमयमप्सु-जाः अप्सु जातः अप्सुजा वा अश्व इति श्रुतिः । अप्सु अद्भिः सं-शितः । किम्भूतोऽप्सुजाः ब्रह्मा बिभर्त्तीति ब्रह्मा परिवृढो वा । सो-मपुरोगमः सोमसंस्कारं पुरस्कृत्य स्वर्गलोकं गच्छतीति सो-मपुरोगमः । सोमसंस्कारार्थो हि पशवः स यत्पशुमालभते रस-मेवास्मिन्नेत्तद्धातीति श्रुतिः ॥ १४ ॥

किञ्च । स्वयं वाजिन् । हे वाजिन् स्वयमेव तन्वं शरीरं कल्प-यस्व स्वाराज्यं तवास्तीत्यर्थः । अथ स्वयमेव यजस्व । न तेऽन्यो यष्टास्तीति भावः । स्वयं च जुषस्व । अभिरुचितं स्थानं कुरुष्व । कथमिति चेत् ते तव महिमा अन्येन महिम्ना न संनशे संनश्यते न व्याप्यते नशिरदर्शनार्थः । वेदे तु व्याप्त्यर्थो हि भवति ॥ १५ ॥

न वै । यत् संज्ञप्यसे एतत् त्वं न म्रियसे नच रिष्यसि विन-श्यसि विशस्यमानः । वै उ पादपूरणौ । किमिति यतः सुगेभिः सा-धुगमनैः देवयानैः पथिभिः देवान् इत् प्रति एषि गच्छसि । किञ्च सुकृतः साधुकारिणः यत्र आसते यत्र च ते ययुः गताः सविता देवानाम् अग्निः पशुः आसीत् तेन ते अयजन्त सोऽग्निः तत्र साध-नभावमुपगतः सन् एतं पृथ्वीलोकम् अयजन्त यस्मिन् लोके अग्निः अपः पिब । वायुः पशुः सूर्यः पशुः व्याख्यातमन्यत् ॥ १७ ॥

परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः । स्पष्टा मन्त्राः । वाचयति पत्नीर्नयन् । अम्बे । अनुष्टुप् । अश्वस्य स्तुतिः । पत्न्यः प-रस्परमामन्त्रयते । हे अम्बे । आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बाले-

ऽम्बिके पूर्वे इति अम्बे इत्यस्य प्रकृतिभावः। हे अम्बिके हे अम्बालिके कश्चन मां न नयति अश्वं प्रति न प्रापयति मद्गमनेन च अश्वकः कुत्सितोऽश्वोऽश्वकः । अकुत्सितोऽपि ईर्ष्यया कुत्स्यते। काम्पील-वासिनीं सुभद्रिकाम् । कुत्सिता सुभद्रा सुभद्रिका इयमपीर्ष्यया कुत्स्यते तां परिगृह्य ससस्ति शेते। सस् स्वप्ने ह्वादिः। मया न गम्यते चेदश्वोऽन्यां गृहीत्वा शेते इति मया गम्यते नतु कश्चिन्नय-तीत्यर्थः। काम्पीलनगरे हि सुभगाः सुरूपा विदग्धा विनीताश्च स्त्रियो भवन्ति ॥ १८ ॥

पत्न्यः तिस्त्रिः परियन्ति अश्वम् । गणानां त्वा । स्त्रीगणानां मध्ये युगपत् गणपतिं त्वां हवामहे आह्वयामः । एवमेव प्रियाणां मनुष्याणां मध्ये प्रियपतिं भर्त्तारं त्वां हवामहे । एवमेव निधीनां मध्ये निधिपतिं त्वां हवामहे। किमिति हे वसो अश्व मम पतिस्त्वं भूयाः इति । महिषी अश्वमुपसंविशति । आहमजानि। हे अश्व अहं गर्भधं गर्भस्य धारयितृ रेतः आ आकृष्य अजानि क्षिपामि अज गतिक्षेपणयोः। त्वं च गर्भधं रेतः आकृष्य अजासि क्षिपसि ॥ १९॥

ता उभौ। यौ आवाम् कृतसंकेतौ त्वं चाहं च तौ उभौ च-तुरः पदः पादान् द्वौ तावकौ द्वौ मामकौ संप्रसारयाव । एवं हि संवेशप्रकार इति भावः । अधीवासेन प्रच्छादयति । स्वर्गे लोके एष वै स्वर्गो लोको यत्र पशुं संज्ञपयन्ति प्रोर्णुवाथाम्' । आच्छादनं कुरुतमित्यध्वर्युराह अश्वशिश्नमुपस्थे कुरुते । वृषा वाजी वृषा सेक्ता रेतोधा। रेतसो धारयिता वाजी अश्वः रेतो दधातु ॥ २०॥

उत्सक्थ्याः गायत्र्याऽश्वं यजमानोऽभिमन्त्रयते हे वृषन् सेक्तः उद्गते सक्थिनी यस्याः सा उत्सक्थी तस्या महिष्याः अवगुदम् अवाचीनं गुदं रेतो धेहि सिञ्च । कथमिति चेत् अञ्जिम् अनक्ति व्यनक्ति पुंस्त्वमिति अञ्जिः पुंप्रजननमुक्तं तं संचारय योऽञ्जिः स्त्रीणां जीवभोजनः यस्मिन्सति स्त्रियो जीवन्ति भोगांश्च लभन्ते। जीवयती-ति जीवः भोजयतीति भोजनः जीवश्चासौ भोजनश्च ॥ २१॥

इत उत्तरं दशानुष्टुभोऽभिमेथिन्यो द्वितीयोपरिष्टाद्बृहती। अत्र यो यत्र भण्यते स तत्र देवतात्वमुपगच्छति। अध्वर्युः कुमारीमभि-मेथति। यकासकौ। अव्ययसर्वनाम्नामकच् प्राक् टेः। अकच्प्रत्य-योऽत्र कुत्सायाम् । अङ्गुल्या प्रदर्शयन्नाह या असौ शकुन्तिका।

अल्पे कन्प्रत्ययः अल्पीयसी पक्षिणीव । आहलक् इति प्रकारवचनम् हले हले इति ब्रुवती वञ्चति त्वरितं गच्छति चपलेत्यर्थः । तस्याः गभे पसः आहन्ति । गभे इत्याद्यन्तविपर्ययः । पस इति पसतेः स्पृशतिकर्मणः । हन्तिर्गत्यर्थः । भगे शिश्नम् आगच्छति अन्तर्भूतण्यर्थो वा भगे शिश्नमाहन्ति आगमयति प्रवेशयतीत्यर्थः । अथ तदाधारका योनिः निगल्गलीति नितरां गल्गलीति अत्यर्थं शुक्रं मुञ्चति । यद्वा शब्दानुकरणम् । निगल्गलीति गिरतेर्वा । निगिरति शिश्नं योनिः रेतः सम्भृता ॥ २२ ॥

अध्वर्युं प्रत्याह कुमारी । यकोऽसकौ । यः असौ शकुन्तक इव आहलक् इति तं शकुन्तकं विवक्षतः असाधुवक्तुमिच्छतः ते तव मुखमिव पश्यामि अतः हे अध्वर्यो त्वं नोऽस्मान् मा अभिभाषथाः ॥ २३ ॥

ब्रह्मा महिषीमभिमेथति । माता च ते । हे महिषि यदा तव माता तव पिता च वृक्षस्य वार्क्ष्यस्येति तद्धितलोपः । वृक्षविकारस्य मञ्चकस्य अग्रम् उपरितनभागं रोहतः मैथुनार्थमेकपर्यङ्कमारोहत इत्यश्लीलाभिप्रायं वचनम् । तदा प्रतिलामि । तिल स्नेहने स्निह्यास्यहमनेन कर्मणेति वदन् ते तव पिता गभे भगे मुष्टिं मुष्ट्याकारं शिश्नम् । अतंसयत् अक्षिपत् एवं तवोत्पत्तिः ॥ २४ ॥

महिषी प्रत्याह । माता च ते । हे ब्रह्मन् ते माता पिता च वृक्षस्य पर्यङ्कस्य अग्रे यदा क्रीडतः तदा त्वमुत्पन्नः तुल्योत्पत्तिरावयोः । यश्चोभयोर्दोषो न तमेकश्चोदयितुमर्हति । एवमपि सति यदसाधु वदितुमिच्छत इव ते मुखं लक्षये तत् त्वं बहु मा वदः ॥ २५ ॥

उद्गाता वावातामभिमेथति । ऊर्ध्वामेनाम् । कश्चित्पुरुषमाह । एनां वावाताम् । ऊर्ध्वाम् । उच्छ्रापय उच्छ्रितां कुरु । कथमिव गिरौ भारं हरन्निव । यथा गिरौ भारं मध्ये निगृह्य हरेत् एवमेनां मध्ये निगृह्य ऊर्ध्वामुच्छ्रापय । अथ यथार्थे । तथा उच्छ्रापय यथा अस्याः मध्यं योनिप्रदेशः एधतां वृद्धिं यायात् । अथैनां निगृह्णीयाः शीते वाते पुनन् पावा खली च । पावा हि धान्यं वाते शुद्धं कुर्वन् ग्रहणमोक्षौ झटिति करोति तथेत्यर्थः ॥ २६ ॥

वावाता उद्गातारं प्रत्याह ऊर्ध्वमेनं भवतोऽप्येतदेव एनमुद्गातारम् । ऊर्ध्वम् उच्छ्रयतात् उच्छ्रय अत्र स्त्री पुरुषायते । गिरौ भारं हरन्निव । अथैवं क्रियमाणस्यास्य मध्यं प्रजननम् । एजतु चलतु अथैनं निगृहीष्व शीते वाते पुनन् इव ॥ २७ ॥

होता परिवृक्तामभिमेथति । यदस्याः । यत् यदा अंहुभेद्याः । अल्पयोनेः । अंहुः हन्तव्यः भेद्यप्रदेशः प्रजननं यस्याः सा अंहुभेदी ईदृश्याः अस्याः । परिवृक्तायाः कृधु ह्रस्वं कृध्विवति ह्रस्वनाम स्थूलं च शिश्नम् । उपातसत् उपसङ्गच्छेत् । अथ तदा अल्पत्वाद्योनेः स्थूलत्वाच्च पुंप्रजननस्य मुष्कौ वृषणौ इत् एवम् अस्याः प्रजननस्योपरि एजतः कम्पेते । कथमिव गोशफे गोष्पदे उदकपूर्णे शकुलौ मत्स्याविव ॥ २८ ॥

परिवृक्ता प्रत्याह यद्देवासः । होतृप्रमुखान् सर्वानेव ऋत्विजः परिवदति । यदा एते देवासः शिश्नदेवाः शिश्नैर्दीव्यन्तीति । शिश्नक्रीडिनः ललामगुम् । ललाममिति सुखनाम । ललामं सुखं कर्तुं गच्छतीति ललामगुः शिश्नम् । यद्वा ललामं पौण्ड्रमभिधीयते तद्गच्छति प्राप्नोतीति शिश्नं योनिं प्रविशत्पौण्ड्रं भवति प्रविष्टमिमं प्रविश्य विष्टभ्य वा विष्टभ्य च आविषुः आलिङ्गनचुम्बनादिभिर्निगृह्णीयुर्नारीम् अथ तदा नारीसक्थ्ना देदिश्यते सक्थिक्तेन कुटिलगमनेन अतिदिश्यते लक्ष्यते नहि तस्याः किञ्चिदव्यासं भवति पुरुषेणान्यत्र सक्थ्न इति भावः । कथमिव अक्षिभुवः सत्यस्य यथा द्विप्रकारं सत्यम् । आक्षिप्रभवम् । अनक्षिप्रभवं च यथा आक्षिप्रभवं प्रत्यक्षम् । आक्षिभिर्गृह्यते तत्र सर्वं व्याप्तं स्यात् । अनक्षिप्रभवं श्रोत्रग्राह्यं तत्तु सापेक्षं वक्तुराप्ततामपेक्षते । अतो विशिनष्टि सत्यस्याक्षिभुवो यथा । अवितथात्वं तथेति ॥ २९ ॥

क्षत्ता पालागलीमभिमेथयति । यद्धारिणः । यदा हरिणो मृगः यवं सस्यम् अत्ति भक्षयति अथ तदा क्षेत्री पशु पशुमिति प्राप्ते विभक्तिलोपः । पशुं पुष्टं न मन्यते किन्तु अन्यथैवावगच्छति मम क्षेत्रं भक्षितमिति यथा एवं शूद्रा यत् यस्य भर्तुः जाया यदा अर्यजारा । अर्यः वैश्यः जारो यस्याः सा अर्यजारा भवेत् तदा स शूद्रः क्षेत्री पोषाय न धनायति न वाञ्छति पुष्टेयतां धनमिव मन्यते परस्योपभोग्यत्वात् ॥ ३० ॥

पालागली प्रत्याह । यद्धरिणो यवम् । अस्ति न पुष्टं बहु मन्यते क्षेत्रीति यदुक्तं भवतोऽप्येतदेवमिति सोल्लुण्ठनमाह । इयांस्तु विशेषः । शूद्रः यत् अर्यायै अर्याया वैश्याया जारः तदा क्षेत्री वैश्यः आत्मनः पोषं नानुमन्यते न हि सा तस्य पोष्या निकृष्टश्च शूद्रः उत्कृष्टा वैश्येति । समाप्तमश्लीलभाषणम् ॥ ३१ ॥

ऋत्विजो यजमानश्च सुरभिमतीम् । ऋचमन्ततोऽन्वाहुर्वाचमेव पुनते । दधिक्राव्णः । अनुष्टुप् । अश्वदेवत्या दधत् क्रामतीति दधिक्रावा अश्वः तस्य संस्कारार्थमश्लीलभाषणमकारिषम् । अकार्ष्म कृतवन्तः । वचनव्यत्ययः । किम्भूतस्य दधिक्राव्णः । जिष्णोः जेतुः अश्वस्य अशनव्यापिनः वाजिनः । ओविजी भयचलनयोः । वेजनवतः वेगवतः तत्र नोऽस्माकं मुखा मुखानि सुरभीणि । निकारलोपश्छान्दसः । करत् करोतु यज्ञम् । इत्यध्याहारः । अश्लीलभाषणेन हि दुर्गन्धीन मुखानि भवन्ति पापहेतुत्वात् । किञ्च नोऽस्माकमायूंषि प्रतारिषत् प्रवर्द्धयतु च बहुवचनं बालयौवनवृद्धवयोऽपेक्षम् ॥ ३२ ॥

तिस्रः पत्न्योऽसिपथान्कल्पयन्ति । गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह बृहती उष्णिहा सह ककुप् च सूचीभिः त्वां शम्यन्तु शमनम् अङ्गानामवभेदने वर्त्मदर्शनं तत्सूचीभिः क्रियते तेन यथा असिः प्रवर्त्तते ॥ ३३ ॥

द्विपदाः । याः द्विपदाः याः चतुष्पदाः त्रिपदाः षट्पदाश्च याः विच्छन्दाः विगतः छन्दो याभ्यः विषमाक्षराः विषमपदाः छन्दोलक्षणेनानभिसंबद्धाः याश्च सच्छन्दाः अन्यूनातिरिक्ताक्षराः छन्दोजातयः ताः सर्वाः सूचीभिः त्वां शम्यन्तु ॥ ३४ ॥

महानाम्न्यः । महानाम्न्यः ऋचः शक्वर्य इति भण्यन्ते रेवत्यः ऋचः रैवतं हि तासु साम भवति विश्वाः सर्वाः आशाः दिशः प्रभूवरीः प्रभूततमाः मैघीः मेघभवा विद्युतः याश्च वाचः ताः सर्वाः सूचीभिः त्वां शम्यन्तु शमनेन हविः कुर्वन्तु ॥ ३५ ॥

नार्यस्ते । तव यजमानस्य पत्न्यो नार्यः नृणामपत्यानि नार्यः मनीषया मनस इच्छया पर्यालोचनेन लोम रोमाणि विचिन्वन्तु पृथक् कुर्वन्तु देवानां पत्नीभूता दिशः सूचीभिः त्वां शम्यन्तु ॥३६॥

रजता हरिणी सीसा । रजतसुवर्णसीसमय्यः सूच्यः युजः संहयोजनाः कर्मभिः सीमालक्षणैः युज्यन्ते ताः वाजिनो वेजनवतोऽश्वस्य त्वचि रोमसु सिमाः । सिमाशब्दः सीमपर्यायो मर्यादावचनः सीमाः कुर्वाणाः शम्यन्तु हविः कुर्वन्तु किं भूताः शम्यन्तीः हविः कुर्वाणाः अश्वम् ॥ ३७ ॥

कुविदङ्गेति व्याख्यातम् ॥ ३८ ॥

अश्वं विशास्ति अनुवाकेन षडृचेन । तत्राद्या गायत्री पञ्चानुष्टुभः । कस्त्वा । कः प्रजापतिः त्वाम् । आच्छ्यति छो छेदने आच्छिनत्ति । कः त्वां विशास्ति त्वचा वियोजयति कश्च ते तव गात्राणि शरीराणि शम्यति शमनेन हविः करोति कविर्मेधावी कः ते शमिता । उपादपूरणः । यद्वा प्रश्नरूपोऽयं मन्त्रः कः मनुष्यः त्वाम् आच्छ्यति न कश्चिदपीति भावः । एवमग्रेऽपि ॥ ३९ ॥

यस्मिन् पक्षे कः प्रजापतिरिति व्याख्यातं तस्मिन्पक्षे प्रतार्यते ऋतुथा ऋतावृतौ काले काले ते तव पर्वाणि विशासतु त्वां शम्यन्तु च शमनेन हविः कुर्वन्तु अथ यदा तु कः मनुष्यः त्वां विशयितुं समर्थ इति पूर्वऋचो व्याख्यानं तदा ऋतवो देवास्ते शमितार इति व्याख्येयम् ॥ ४० ॥

अर्धमासाः । हे अश्व अर्धमासाः मासाश्च शम्यन्तः शमनेन हविर्भावमापादयन्तः ते तव परूंषि पर्वाणि आच्छ्यन्तु आच्छिन्दन्तु । किञ्च अहोरात्राणि मरुतश्च ते तव विलिष्टं दुश्लिष्टं सूदयन्तु । षूद क्षरणे पठ्यते इह तु सन्धानार्थः वाक्ययोगात् संन्दधतु ॥ ४१ ॥

दैव्या अध्वर्यवः । अश्विप्रभृतयः त्वाम् । आच्छ्यन्तु विशासतु च । चकारो भिन्नक्रमः । किञ्च ते तव गात्राणि गात्रेषु पर्वशः सिमाः मर्यादाः कृण्वन्तु कुर्वन्तु किंसिमाः शम्यन्तीः ॥ ४२ ॥

द्यौस्ते । द्यौः पृथिवी अन्तरिक्षं वायुश्च ते तव छिद्रं पृणातु पूरयतु सूर्यस्तु नक्षत्रैः सह ते तव साधुया साधुलोकं कृणोतु । साधुया द्वितीयार्थे छान्दसः ॥ ४३ ॥

शं ते । हे अश्व ते तव परेभ्यः अवरेभ्यश्च गात्रेभ्यः शम् अस्तु अस्थभ्योऽस्थिभ्यो मज्जभ्यश्च शम् । अस्तु तव तन्वै शरीराय षष्ठ्यर्थे चतुर्थी । तन्वाः शम् अस्तु । उपादपूरणः ॥ ४४ ॥

इत उत्तरं ब्रह्मोद्यमष्टादशर्चम् । ब्रह्मोद्यं नाम उत्तरप्रत्युत्तरैः परस्परं सम्वादः तत्र आद्याश्चतस्रोऽनुष्टुभः । कास्विदासीदित्याद्याश्चतस्रश्च त्रिष्टुभोऽन्या दश । होताध्वर्युं पृच्छति कः स्विदेकाकी । तं प्रत्याह सूर्यं एकाकी । अग्रे व्याख्याते ॥ ४५ ॥ ४६ ॥

अध्वर्युर्होतारं पृच्छति किंस्वित् किञ्च सूर्यसमं ज्योतिः समुद्रसमं सरः किं पृथिव्यै पृथिव्याः सकाशात् वर्षीयः महत्तरं किं कस्य मात्रापरिमाणं न विद्यते ॥ ४७ ॥

तं प्रत्याह । ब्रह्म सूर्यसमं ज्योतिः । ब्रह्म त्रयीलक्षणं परं वा । द्यौः समुद्रसमं सरः पृथिव्यै इन्द्रो वर्षीयान्महत्तरः गोस्तु मात्रा नास्ति गवा हि यज्ञो धार्यते सा जगतः कारणं भवतीति भावः पृथिवी वा गौः ॥ ४८ ॥

ब्रह्मोद्‌गातारं पृच्छति । पृच्छामि त्वा हे देवसख उद्‌गातः त्वां चितये ज्ञानाय पृच्छामि । चिती संज्ञाने । यदि त्वम् अत्र पृष्टः सन् मनसा प्रश्नविवेचनाय जगन्थ सूक्ष्मार्थान् जानासि । प्रश्नमाह विष्णुर्यज्ञः येषु त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु आ इष्टः यज्ञे रूपम् । तेषु विश्वं भुवनं भूतजातम् । आविवेश आविष्टम् । उत नेति प्रश्ने प्लुतः ॥ ४९ ॥

प्रत्याह । अपि तेषु । येषु । त्रिषु पदेषु गार्हपत्यादिषु भुवनमाविवेश तेषु अहमस्मि । अपिशब्दात् त्वं च यत्पुनरुक्तं त्वया यदि त्वमत्र मनसा जगन्थेति । अत्र ब्रूमः । पृथिवीम् । उत अपि द्याम् । अस्य दिवः पृष्ठं च सद्यस्तत्क्षणमेव एकेनाङ्गेन मनसा पर्येमि परिगच्छामि किमुत भूतजातान्याविष्टानीति ॥ ५० ॥

उद्गाता ब्रह्माणं पृच्छति । केषु केषु अन्तर्मध्ये पुरुष आविवेश आविष्टः कानि च अन्तर्मध्ये पुरुषे अर्पितानि हे ब्रह्मन् एतत्त्वाम् । उपवल्हामसि । वल्ह प्राधान्ये इह त्वाह्वानपूर्वे संहर्षे वर्त्तते । उपपूर्वः उपसंगम्याहूय बाहू उत्क्षिप्य पृच्छामः अत्र प्रश्ने नोऽस्माकं किंस्वित् प्रतिवोचासि प्रतिब्रवीषि ॥ ५१ ॥

प्रत्याह । पञ्चस्वन्तः पञ्चसु मध्ये पुरुषः आविवेश पञ्च प्राणाः किञ्च तानि प्राणाधीनानि करणानि अन्तः पुरुषेऽर्पितानि प्राणानामात्मनश्च परस्परापेक्षासिद्धिः नचात्मानमन्तरेण प्राणाः ख्यायन्ते न प्राणानन्तरेणात्मेति च श्रुतिः त्वाम् एतत्प्रतिमन्वानः प्रतिजा-

नानः। अत्र प्रश्नोत्तरे अस्मि अवस्थितः त्वं च मायया बुद्ध्या मत्तः उत्तरः उद्गततरो न भवसि ॥ ५२ ॥

होताध्वर्युं पृच्छति। कास्विदासीत् ॥ ५३ ॥

प्रत्याह। द्यौरासीत् व्याख्याता ॥ ५४ ॥

अध्वर्युर्होतारं पृच्छति। का ईमरे। ईमिति चकारार्थे। अरे इत्यामन्त्रितविषयः। उभावपि निपातौ । अरे होतः का च पिशङ्गिला का च कुरु पिशङ्गिला कश्च आस्कन्दम् अर्षति कश्च पन्थां पन्थानं विसर्पति ॥ ५५ ॥

प्रत्याह। अजारे अरे अध्वर्यो अजा पिशङ्गिला अजा नित्या रात्रिः। सा हि पिशं रूपं गिलति भक्षयति। स हि तस्याः स्वभावः श्वावित् सेधा कुरु पिशङ्गिलां कृत्वा कृत्वा उपलभ्योपलभ्य पिशं रूपं गिलति खादति सा कुरु पिशङ्गिला सा हि किल शतं मूलानां श्वो भक्षणाय स्वकुक्षौ स्थापयति शतं च भक्षयति कुक्षिणं स हि तस्याः स्वभावः । शशः आस्कन्दम् आस्कन्द्यास्कन्द्य मूत्रयन् अर्षति गच्छति स हि तस्य स्वभावः । अहिः स्वकीयं पन्थानं विसर्पति विकुर्वन् गच्छति ॥ ५६ ॥

ब्रह्मोद्गातारं पृच्छति कत्यस्य । अस्य यज्ञस्य कति विष्ठाः कतिप्रकारमन्नं विशेषेण तिष्ठति यज्ञो यासु ता विष्ठाः अन्नानि कति चाक्षराणि कति होमाः समिद्धः समिधः कतिधा यज्ञस्य विदथा वेदनेन हेतुना त्वां पृच्छं पृच्छामि। अत्र यज्ञे कति होतारः ऋतुशः ऋतुयाजान् यजन्ति ॥ ५७ ॥

प्रत्याह। षडस्य रससंख्ययोपजिहीर्षुः प्रश्नं व्याकरोति। षट् अस्य यज्ञस्य विष्ठाः सर्वान्नानां षट्रसात्मकत्वात् शतम् अक्षराणि छन्दसामुद्धारेणोपसंजिहीर्षुराह चतुर्दशछन्दांसि । गायत्रीप्रभृतीनि चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि अतिधृतिस्तु षट्सप्तत्या भवति। एतैः प्रायशो यज्ञस्तायते । तत्र गायत्री चातिधृतिश्च शतमेकम् उष्णिक् धृतिश्च शतमेकम् अनुष्टुप् । अत्यष्टिशतमेकम्। एवमन्येष्वपि छन्दस्सु आरोहावरोहाभ्यां शतमेवेत्यभिप्रायेण शतमक्षराणीत्युक्तम् । अशीतिर्होमाः । एकविंशतिरश्वमेधे यूपाः तत्र अग्निष्ठे अश्वतूपरगोमृगान्नियुनक्ति इतरेषु षोडश षोडश पशून्। तत्र विंशतियूपैश्चतस्रोऽशीतयो भवन्ति तदभिप्रायमेतत्। कतिधा

समिद्ध इति यदुक्तम् । अत्र ब्रूमः । ह स्फुटं तिस्रः समिधः याभिः समिद्भिः संदीप्तो यज्ञः तास्तिस्रः अश्वतूपरगोमृगाः प्राजापत्याः पशवः यज्ञस्य विदथा आवेदनेन ते प्रब्रवीमि । सप्त होतारो वषट्कर्त्तारः ऋतुशः ऋतुयागेषु यजन्ति ॥ ५८ ॥

उद्गाता ब्रह्माणं पृच्छति को अस्य । अस्य भुवनस्य नाभिं कः वेद जानाति । द्यावापृथिवी अन्तरिक्षं च को वेद । बृहतो महतः सूर्यस्य जनित्रं जन्म को वेद । चन्द्रमसम् । विभक्तिव्यत्ययः । चद्रमसो यतोजाः । यतो जन्म तच्च को वेद ॥ ५९ ॥

प्रत्याह । वेदाहम् । अस्य भुवनस्य नाभिं नहनं बन्धनं परं ब्रह्म अहं वेद जानामि द्यावापृथिवी अन्तरिक्षं च ब्रह्मणो विकारभूतं वेद बृहतः सूर्यस्य जन्म परमात्मनः अथो अपि च चन्द्रमसो जन्म परमात्मनः यज्ञाद्वेति च वेद ॥ ६० ॥

अध्वर्युं यजमानः पृच्छति । पृच्छामि त्वा । पृथिव्याःपरम् अन्तं त्वां पृच्छामि । यत्र भुवनस्य नाभिः तं च पृच्छामि । वृष्णः सेक्तुरश्वस्य रेतः पृच्छामि वाचः परमं व्योम व्यवस्थानं पृच्छामि ॥६१॥

प्रत्याह इयं वेदिः । पृथिव्याः परः अन्तः इयं वेदिः । सर्वपृथ्वीरूपा वेदिरित्यर्थः । अयं यज्ञो भुवनस्य नाभिः नहनं यज्ञाद्धि प्रजाः प्रजायन्त इति श्रुतेः । अयं सोमश्चन्द्रमा लता सोमो वा वृष्णोऽश्वस्य रेतः । अयं ब्रह्मा ऋत्विक् वाचः परमं व्योम स्थानं त्रिवेदसंयोगात् ब्रह्मोद्यं समाप्तम् ॥ ६२ ॥

सुभूः स्वयम्भूः महिम्नः पुरोऽनुवाक्या अनुष्टुप् प्राजापत्या । सुभूः साधु भवनः स्वयम्भूः स्वेच्छया गृहीतशरीरः प्रथमः अनादिनिधनः पुरुषः महति अर्णवे महतोऽर्णवस्य अन्तर्मध्ये ऋत्वियं प्राप्तकालं गर्भं दधे । ह इति निपातः पुराकल्पद्योतनार्थः । यतो गर्भात् प्रजापतिः अनन्योपमः जातः ॥ ६३ ॥

प्रैषः । होता यक्षत् । सोमस्य महिम्नो ग्रहस्य संबन्धिनं प्रजापतिं देव्यो होता यजतु । स च प्रजापतिरीज्यमानः सन् जुषतां प्रीत्या परिगृह्णातु सोमं पिबतु च हे होतः त्वमपि यज ॥ ६४ ॥

प्रजापते न । इयं याज्या व्याख्यातो मन्त्रः ॥ ६५ ॥

इति मन्त्रभाष्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

